# सारस्वती सुषमा

काशिकराजकीयसंस्कृतमहाविद्यालयमुखपत्रिका

[ त्रैमासिकी ]

ज्येष्ठपूर्णिमा २०१०

अष्टमवर्षे प्रथमोऽङ्कः

# सारस्वती सुषमा

## काशिकराजकीयसंस्कृतमहाविद्यालयमुखपत्रिका

[ त्रैमासिकी ]



प्रधानसम्पादकः

श्रीत्रिभुवनप्रसाद उपाध्यायः

एम० ए०, व्याकरणाचार्य

---

सहायकसम्पादकः

श्रीव्रजवल्लभद्विवेदो दर्शनाचार्यः




वार्षिकम्
७॥)

प्रत्यङ्कम्
१।।।=)

# विषय-सूची


| | | |
|---|---|---|
| भागवृत्तिसंकलनम् | —श्रीयुधिष्ठिरमीमांसकः। | १ |
| गर्भे गुणदोषसंक्रमणविमर्शः | —श्रीरघुनाथशर्मा व्याकरणाचार्यः। | १७ |
| बार्हस्पत्यम् | —श्रीमदनन्तशास्त्रिफडके पुराणाध्यापकः। | ४१ |
| समासवृत्तिविचारः | —श्रीकृष्णशास्त्रिमोकाटे व्याकरणाचार्यः। | ४६ |
| उत्तरप्रदेशे संस्कृतशिक्षायाः प्रगतिः | —श्रीरामनरेशमिश्रः एम० ए०, साहित्याचार्यः। | ५५ |
| विद्वद्गोष्ठ्या विशिष्टः कार्यक्रमः | | ५७ |


## विविधम्


| | | |
|---|---|---|
| अन्यतमस्य कर्पूरमञ्जरीश्लोकस्य समीक्षा | —श्रीशान्तिभिक्षुः, साहित्याचार्यः। | ६८ |
| अन्यतमस्य फिट्सूत्रस्य समीक्षा | —श्रीशान्तिभिक्षुः साहित्याचार्यः। | ७० |
| महाभाष्यपाठद्वयविमर्शः | —श्रीरामशंकरभट्टाचार्यः। | ७२ |
| ब्राह्मणारण्यकोपनिषदः | —श्रीव्रजवल्लभद्विवेदः। | ७३ |
| विश्वकथासाहित्ये पञ्चतन्त्रस्य स्थानम् | —श्रीव्रजवल्लभद्विवेदः। | ७४ |


## सम्पादकीयम्


| | |
|---|---|
| अष्टमवर्षप्रवेशः | ७६ |
| वेधशालानिर्माणे प्रगतिः | ७७ |
| सरस्वतीभवनग्रन्थानां बृहत्सूची | ८० |
| संस्कृतपरीक्षाणां लोकप्रियता | ८१ |
| संस्कृतविश्वपरिषदः प्रचारकार्यम् | ८१ |


## ग्रन्थाः


काण्वसंहिताभाष्यसंग्रहः ( वेदः ) आनन्दबोधभट्टोपाध्यायप्रणीतः। डा० सुभद्रझा-व्रजवल्लभद्विवेदाभ्यां सम्पादितः। ९७–१२०

प्रत्यङ्गिरासूक्तम् ( पिप्पलादशाखीयम् ) ( वेदः ) वासुदेवद्विवेदविरचितव्याख्यानसहितम्। डा० सुभद्रझा-व्रजवल्लभद्विवेदाभ्यां सम्पादितम्। २५–३२

बीजगणितावतंसः ( गणितज्यौतिषम् ) नारायणपण्डितविरचितः। श्रीचन्द्रभानुपाण्डेयेन ज्यौतिषाचार्येण सम्पादितः। १–८

# सारस्वती सुषमा

## काशिकराजकीयसंस्कृतमहाविद्यालयपत्रिका

८ वर्षः } ज्येष्ठः २०१० { १ अङ्कः

# भागवृत्तिसंकलनम्

श्रीयुधिष्ठिरमीमांसक, प्राच्यविद्याप्रतिष्ठानम्, मोतीझील, काशी ।

## किञ्चित् प्रास्ताविकम्

पाणिनीयव्याकरणवाङ्मये सर्वास्वुपलब्धासु वृत्तिषु काशिकाया एव प्राधान्यमित्यत्र नास्ति कश्चिद् विवादावसरः । काशिकाया अनन्तरं भागवृत्तेः स्थानं वर्तते । इयं भागवृत्तिर्यद्यपि सम्प्रति नोपलभ्यते तथापि कोशव्याकरणादिविविधविषयकेषु ग्रन्थेष्वस्याः प्राचुर्येणोद्धरणाना-मुपलम्भात् स्पष्टमवगम्यते यत् कस्मिंश्चित् कालेऽस्या व्याकरणवाङ्मये महती प्रतिष्ठा प्रामाणिकता चासीदिति । अस्याः सम्पुष्टिः पुरुषोत्तमदेवविरचितभाषावृत्तेरधोलिखितपद्येनापि भवति—

काशिकाभागवृत्त्योश्चेत् सिद्धान्तं बोद्धुमस्ति धीः[1] ।
तदा विचिन्त्यतां[2] भ्रातर्भाषावृत्तिरियं मम[3] ॥ इति ।

सत्यप्येवमस्याः सम्प्रत्यनुपलम्भो महदाश्चर्यं जनयति । विक्रमार्कस्य सप्तदशशताब्द्या उत्तरार्धे वर्तमानस्य[4] महाविदुषः कवीन्द्राचार्यस्य [5]पुस्तकालयसूचीपत्रेऽस्या वृत्तेरुल्लेखदर्शनात्

---

१ 'व्याख्यातुं मतमस्ति धीः' इति पाठान्तरम् । २ 'तदा विलोक्यताम्' इति पाठान्तरम् ।
३ भाषावृत्तिः [ ७।४।६८ ] । ४ द्रष्टव्योऽस्मद्विरचितः 'संस्कृत व्याकरणशास्त्र का इतिहास' नामा ग्रन्थ, पृ० ३३९, टि० २ । ५ पृ० ३ ।

सिद्धान्तकौमुद्यां[1] शब्दकौस्तुभे[2] चास्या असकृदुद्धरणानामुपलम्भाद् विक्रमस्य सप्तदशशताब्दी यावदस्याः कोशग्रन्थाः (हस्तलेखाः) सुप्राप्या आसन्निति निश्चीयते। अतः सम्भाव्यते, कृते प्रयत्ने सम्प्रत्यप्यस्या हस्तलेखा आसाद्येरन्निति।

अस्माभिर्भागवृत्तेरुपयोगिता विज्ञायानेकेभ्यो मुद्रितहस्तलिखितग्रन्थेभ्योऽस्या उद्धरणानि सङ्कलितानि। एतेनोद्धरणसङ्कलनकार्येण न केवल वैयाकरणानामेव ज्ञानवृद्धिर्भविष्यति, अपि तु पुरातत्त्वविदामपि महान् लाभो भविष्यतीति निश्चितमेव।

## भागवृत्ते रचयिता

पुरुषोत्तमदेवविरचितभाषावृत्तेर्व्याख्यात्रा सृष्टिधराचार्येण पूर्वनिर्दिष्टश्लोकव्याख्याने— "वलभीनगरस्य राज्ञः श्रीधरसेनस्याज्ञया भर्तृहरिणा भागवृत्तिर्विरचिता"[3] इत्युक्तम्। कातन्त्रपरिशिष्टकृता श्रीपतिदत्तेन—"विमलमतिनामकेन केनचिद् विदुषेयं भागवृत्तिर्विरचिता"[4] इत्युक्तम्।

सत्यप्येवं प्रमाणद्वैधे न वयमत्र कञ्चन विरोधं पश्यामः। अयं भागवृत्तिकारो भर्तृहरिस्तत्रभवतो वेदविदामलङ्कारभूतात् प्रमाणितशब्दशास्त्राद्[5] वाक्यपदीयमहाभाष्यव्याख्यातुः प्रसिद्धाद् भर्तृहरेरन्य एव। यथा हि शाकुन्तलनाटकस्य कर्तुर्महाकवेः कालिदासाद् भिन्नो रघुवंशादीनां विरचयिता समुद्रगुप्तस्य सभ्यो महाकविर्हरिषेणोऽपि तादृशकाव्यनैपुण्यात् कालिदासनाम्ना प्रसिद्धिं गतस्तथा[6] भागवृत्तेः कर्ता विमलमतिरपि स्वस्यासाधारणव्याकरणवैदुष्याद् भर्तृहरिनाम्ना प्रथितोऽभूदिति वयमनुमिनुमः।

अपि च साहित्यग्रन्थेषु यथा त्रयः कालिदासाः[7] प्रसिद्धास्तथा वैयाकरणवाङ्मयेऽपि त्रयो भर्तृहरयो बभूवुः। तत्र प्रथमः—वाक्यपदीयस्य कर्ता महाभाष्यस्य व्याख्याताऽन्येषां च बहूनां

---

१ सिद्धान्तकौमुदी—पृ० ३६६। २ शब्दकौस्तुभ. [४।१।१०]।

३ भागवृत्तिर्भर्तृहरिणा श्रीधरसेननरेन्द्रादिष्टा विरचिता। [भाषावृत्तिविवृतिः ८।४।६८]

४ तथा च भागवृत्तिकृता विमलमतिनाप्येष निपातितः। [कातन्त्रपरिशिष्ट सन्धिप्रकरणम्]

५ द्रष्टव्यम्—यस्त्वयं वेदविदामलङ्कारभूतो वेदाङ्गत्वात् प्रमाणितशब्दशास्त्रः सर्वज्ञम्मन्य उपमीयते तेन (भर्तृहरिणा) कथमेतत् प्रयुक्तम्। [गणरत्नमहोदधिः-पृ० १२३]

६ द्रष्टव्यं कृष्णचरितस्य राजकविवर्णनम्। [श्लोका. १५–१६, २३–२६। पृ० ५–७]

७ एकोऽपि जीयते हन्त कालिदासो न केनचित्। शृङ्गारे ललितोद्गारे कालिदासत्रयी किमु॥ [राजशेखरः]

ग्रन्थाना विरचयिता पदवाक्यप्रमाणज्ञो भगवान् भर्तृहरिः[१] । द्वितीयः—भट्टिकाव्यस्य विरचयिता महाकविर्भर्तृहरिः[२] । तृतीयः—भागवृत्तेः कर्ता विमलमतिनामा महावैयाकरणो भर्तृहरिः। एषु प्रथमस्य भर्तृहरिरिति मुख्य नाम, अपरयोस्त्वौपमिकम् । तत्राद्यो भर्तृहरिर्विक्रमस्य चतुर्थशताब्द्या ततः पूर्वतनो वाऽऽसीदिति सुनिश्चितम्[३] । वय तु विक्रमस्य प्रथमशताब्द्यामाद्यो भर्तृहरिर्बभूवेति स्वीकुर्मः । भट्टिकाव्यस्य रचना वलभ्यास्तृतीयस्य श्रीधरसेनस्य राज्यकाले ( विक्रमार्कस्य ६६० संवत्सरात् ६७७ सवत्सरपर्यन्तम् ) बभूव । भागवृत्ते रचना चतुर्थस्य श्रीधरसेनस्य राज्ये ( विक्रमार्कस्य ७०२ सवत्सरात् ७०५ सवत्सरपर्यन्तम् ) अभूत् । एतच्च सर्वमस्माभिरन्यत्र विस्तरेणोपपादितमिति[४] नात्र पुनः पिष्टपेषणं क्रियते ।

## भागवृत्तिनाम्नः कारणम्

अस्या वृत्तेः प्रागष्टाध्याय्या यावत्यो वृत्तयो निष्पन्नास्तास्वष्टाध्याय्याः सर्वाणि सूत्राणि तत्क्रममनुरुध्यैव यथास्थान व्याख्यातान्यासन् । अस्यामेव वृत्तौ सर्वप्रथम लौकिकवैदिकसूत्राणि द्वेधा कृत्वाष्टाध्याय्याः क्रममुल्लङ्घ्य पृथक् पृथग् व्याख्यातानि[५] । अत एवास्याः "भागवृत्ति" इत्यन्वर्था सज्ञाऽभूत्, तत्प्रतिपक्षभूतायाः काशिकायाश्चैकवृत्तिरिति[६] ।

---

१ एतस्य विषये विस्तरेणास्मद्विरचिते 'सस्कृत व्याकरणशास्त्र का इतिहास'-नाम्नि ग्रन्थे [ पृ० २५६–२७९ ] द्रष्टव्यम् ।

२ भट्टिकाव्यस्य जयमङ्गलाव्याख्याकार विहायान्ये सर्वेऽपि व्याख्याकृतो भट्टिकाव्यं भर्तृहरिविरचितमिति मन्यन्ते । तथैव पञ्चपाद्युणादिवृत्तिकार श्वेतवनवासी [ पृ०८३, १२६ ], हरिनामामृतवृत्तिकारश्च [ सू० १४६३ ] ।

३ 'सस्कृत व्याकरणशास्त्र का इतिहास'-नामा ग्रन्थो द्रष्टव्य. [ पृ० २५८–२६४ ] ।

४ ओरियण्टल कालेज मेगजीन, लाहौर [ नवम्बर १९४० ] ।

५ 'अत एव भाषावृत्तौ भाषाभागे भागवृत्तिकृद् भाषावृत्तिकारश्च क्कसुकानजुविधानलक्षण न लक्षितवान्' इति गोयीचन्द्र । [ द्र० ओरियण्टल कान्फ्रेन्स बनारस लेखसंग्रह भाग २, पृ० २७८ ]
'अथवैतन्न वक्तव्य छान्दसत्वात । अत एव भागवृत्तौ भाषाभागे नास्त्येतत ।'
[ सक्षिप्तसारटीका-सन्धि० १९० ]

६ अनार्ष इत्येकवृत्तावुपयुक्तम् [ भाषावृत्ति. १।१।१६ ] । अस्या विवृतौ–'एकवृत्ताविति काशिकायां वृत्तावित्यर्थः' "सा हि द्वयोर्विवरणकर्त्री' इति सृष्टिधराचार्य. ।

## भागवृत्तेर्वैशिष्ट्यम्

इयमेवैका सर्वप्राचीनैतादृशी वृत्तिर्वर्तते या महाभाष्यमेकान्ततया प्रमाणीकृत्य पदानां साधुत्वमसाधुत्वं वाऽऽचष्टे। अत एवात्र कानिचिदलौकिकान्यपि पदान्यन्वाख्यायन्ते। तद्यथा—

भागवृत्तिकारस्त्वाह—"अनभ्यासग्रहणस्य तु न किञ्चित् प्रयोजनमुक्तम्। ततश्चोत्तरार्थमपि तन्न भवतीति भाष्यकारस्याभिप्रायो लक्ष्यते। तेनात्र भवितव्यमेव द्विर्वचनेनेति।" [पदमञ्जर्यां भा० २. पृ० ४२६]

तदेव भागवृत्तिकारमते लोलूयतेः सनि 'लुलोलूयिषते' इति रूपं भवति। लोलूयतेः सनि पुनर्द्वित्वं नान्ये केचन वैयाकरणाः स्वीकुर्वते। अपि च यत्र यत्र काशिकावृत्तिर्महाभाष्यानुक्तं महाभाष्यविरुद्धं वा यद्यन्मतं व्याकरणान्तरेभ्यः संगृह्णाति, तत्र सर्वत्रैवेयं महाभाष्यैकशरणा भागवृत्तिर्नामनिर्देशपुरःसरं तत्तन्मतं प्रत्याचष्टे। एतेन विस्पष्टं प्रतीयते यद् भागवृत्तेः रचना काशिकावृत्तेः प्रत्याख्यानायैवाभूदिति।

## भागवृत्तेर्व्याख्याता श्रीधरः

भागवृत्तेरेकस्यैव व्याख्यातुः श्रीधरस्य नाम सम्प्रति विदितमस्ति। एतस्यापि च नाम केवलं 'दैव'ग्रन्थस्य लीलाशुकमुनिविरचितायां पुरुषकारनामिकायां टीकायामेवोपलभ्यते[1]।

अथ श्रीधरः कं वंशं देशं कालं च स्वजनुषालञ्चकारेति न किञ्चिद् विज्ञायते। दैवपुरुषकारटीकातः केवलमेतावत् प्रतीयते यदयं श्रीधरस्तन्त्रप्रदीपसंज्ञकाया न्यासव्याख्यायाः कर्तुर्मैत्रेयरक्षितात् पूर्वतन आसीदिति[2]। तन्त्रप्रदीपस्यानुमानिकः कालः ११४० वैक्रमाब्दात् ११६५ वैक्रमाब्दपर्यन्तमासीदित्यस्माभिः स्वीये 'संस्कृत व्याकरणशास्त्र का इतिहास'-नाम्नि ग्रन्थे प्रतिपादितम्[3]। अतः श्रीधरो विक्रमार्कस्य द्वादशशताब्द्या उत्तरार्धात् पूर्वभावीत्येव सामान्येन वक्तुं शक्यते।

---

१ भागवृत्तौ तु 'षीकृ सेके' इत्यधिकमपि पठ्यते। तच्च 'षीकृ सेचने' इति श्रीधरो व्याकरोत् 'एतानष्टौ वर्जयित्वा' इति चाधिक्यमेव मुक्तकण्ठमुक्तवान् [पृ० १६]।

२ दैवम् [पृ० ६६]।

३ पृ० २८३।

# भागवृत्तेरुद्धरणानां संकलनम्

अस्माभिः संस्कृतव्याकरणेतिहासलेखनाय तत्कालपर्यन्तं मुद्रितानि सर्वाणि, बहूनि च हस्तलिखितानि व्याकरणविषयकाणि, शतशोऽन्यविषयकाणि च पुस्तकान्यक्षरशः पठितानि। तस्मिन्नेव काले भागवृत्तेर्यत्किञ्चिदुद्धरणं यत्र क्वचिदुपलब्धं तत्सर्वं संगृहीतम्। तदेव महता प्रयत्नेन १७० सप्तत्युत्तरशतसंख्याकानि भागवृत्तेरुद्धरणान्यत्र संकलय्य प्रकाश्यन्ते। एतैरुद्धरणैः रष्टाध्याय्याः ११७ सप्तदशोत्तरशतसूत्राणि व्याख्यातानि भवन्ति।

भागवृत्तेः प्रकाश्यमानान्युद्धरणान्यधोलिखितेभ्यो मुद्रितेभ्यः—

१ महाभाष्यप्रदीपः ( कैयटस्य )
२ नानार्थार्णवसंक्षेपः ( केशवस्य )
३ पदमञ्जरी
४ भाषावृत्तिः
५ अमरटीकासर्वस्वम्
६ दुर्घटवृत्तिः
७ दैवम् ( पुरुषकारव्याख्यासहितम् )
८ परिभाषावृत्तिः ( सीरदेवस्य )
९ उणादिवृत्तिः ( श्वेतवनवासिनः )
१० उणादिवृत्तिः ( उज्ज्वलदत्तस्य )
११ धातुवृत्तिः ( सायणस्य )
१२ संक्षिप्तसारः ( क्रमदीश्वरप्रणीतः, तस्य जुमरनन्दीप्रणीता वृत्तिश्च )
१३ संक्षिप्तसारटीका
१४ कातन्त्रपरिशिष्टम् ( श्रीपतिदत्तस्य )
१५ कातन्त्रपञ्जिका ( त्रिलोचनस्य )
१६ हरिनामामृतव्याकरणम्
१७ सिद्धान्तकौमुदी
१८ शब्दकौस्तुभः
१९ प्रदीपोद्योतः ( नागेशस्य )
२० व्याकरणसिद्धान्तसुधानिधिः

अमुद्रितेभ्यश्च—

२१ तन्त्रप्रदीपः
२२ अमरटीका ( अज्ञातकर्तृका )
२३ अमरटीका ( रायमुकुटस्य )
२४ शब्दसाम्राज्यम्
२५ चर्करीतरहस्यम्
२६ संक्षिप्तसारपरिशिष्टम्

इति षड्विंशतिग्रन्थेभ्यः संगृहीतानि।

अस्मिन् संकलने संक्षिप्तसारहरिनामामृतव्याकरणस्थानि भागवृत्तेरुद्धरणान्यस्मन्मित्रेण श्रीमता पण्डितरामशङ्करभट्टाचार्येण संगृह्यास्मभ्यं प्रत्तानि। अयं महानुभावः सर्वदैवानुसन्धानकार्येऽस्माकं महता कष्टेन साहाय्यं विदधातीति कृत्वा विशेषतो धन्यवादमर्हतीति।

# अथ भागवृत्तिसंकलनम्

## १–ईदूदेद्द्विवचनं प्रगृह्यम् । ( १।१।११ )

( १ ) ( 'मणीव' इत्यादौ प्रगृह्यसञ्ज्ञाप्रतिषेध इति जयादित्यमतम् । ) "इवार्थे वकारोऽयम्" इति भागवृत्तिः[1] । [ आल इण्डिया ओरियण्टल कान्फ्रेन्स अधिवेशन १२ बनारस, भाग २, पृष्ठ २७८, टि० उद्धृतः ] ।

## २–अदसो मात् । ( १।१।१२ ) (?)

( २ ) "अन्तरङ्गपरिभाषाया निरपवादत्वादसिद्धपरिभाषायास्तु नाजानन्तर्य इति सापवादत्वादुभयोरावश्यकत्वात्" इति भागवृत्तिकाराः । [ महाभा० नवा० ( बम्बई स० ) पृ० २३६ अनु० २[2] ]

( ३ ) "अन्तरङ्गपरिभाषाया निरपवादत्वादसिद्धपरिभाषायास्तु नाजानन्तर्य इति सापवादत्वादुभयोरावश्यकता । विप्रतिषेधसूत्रस्थ भाष्य त्वभ्युच्चयपरमेव" इति भागवृत्तिकाराः । [ शब्दकौ० नवा० पृ० २६० ] ।

( इमावुद्धृतावशौ 'अचः परस्मिन् पूर्वविधौ' [ १।१।५७ ] इति सूत्रस्थौ स्यातामित्यपि सभाव्यते )

( ४ ) अत एव भागवृत्तौ भाषाभागे नास्त्येतत् ।[3] [ सक्षिप्तसारटीका–सन्धि० १६०]

## ३–ओत् । ( १।१।१५ )

( ५ ) गौर्वाहीकौ गौर्वाहीकमिति वृद्धयात्वे न स्याताम् । उच्यते—"पदसस्कारपक्षे वाहीकाद्यर्थानपेक्षया वृद्धयात्वे भविष्यतः" इति भाष्यभागवृत्ती । [ दुर्घटवृत्तिः–पृ० ३ ]

## ४–सर्वादीनि सर्वनामानि । ( १।१।२७ )

( ६ ) 'बाधकान्येव निपातनानि' इति सर्वादि [ १।१।२७ ] सूत्रे [ भाष्ये ] व्याख्यातम् । अत एव तत्रैव सूत्रे [ १ । १ । २७ ] भागवृत्तिः—"पुरातनमुनेर्मुनिताम्' [ किरात०

---

१ द्रष्टव्या भाषावृत्ति.—इवार्थे वकारोऽयमित्यन्ये [ १।१।११ ] ।

२ महाभाष्यसम्पादकेन पण्डितशिवदत्तेनोपर्युक्तः पाठोऽत्रैव सूत्रे [ १।१।१२ ] शब्दकौस्तुभनाम्नोद्धृत. । प्रकृतसूत्रस्य कौस्तुभे नाय समग्रो ग्रन्थ उपलभ्यते । 'मूत्वमीत्व' इत्यारभ्य 'अभ्युच्चयमात्र तत्' इत्यंशः प्रकृतसूत्रस्थकौस्तुभे [ पृष्ठ १६४ ] दृश्यते, शिष्टम् 'अच परस्मिन् पूर्वविधौ' [ १।१।५७ ] सूत्रस्थकौस्तुभग्रन्थेन सह संवदति । [ शब्दकौ० पृ० २९० ] ।

३ अत्र 'अणोऽप्रगृह्यस्यानुनासिकः' [ ८।४।५७ ] इति सूत्रस्थं भागवृत्त्युद्धरणमपि द्रष्टव्यम् ।

६ । १६ ] इति, 'पुरातनीर्नदीः' [ माघ० १२ । ६० ] इति च प्रमादपाठावेतौ, गतानुगतिकतया कवयः प्रयुञ्जते, न तेषां लक्षणं चक्षुः।" इति । [ परिभाषावृत्तिः–पृ० १३६-१३७ ]

( ७ ) "'पुरातनमुने.' [ किरात० ६।१६ ] इत्यादयः कालदुष्टा एवापशब्दाः।" इति भागवृत्तिः । [ दुर्घटवृत्तिः–पृ० ८२ ]

### ५–न बहुव्रीहौ । ( १।१।२९ )

( ८ ) 'कोऽल्पादौ' इत्यधिकारीयः क एव भवति, मत्कपितृक इति भवति । अग्[1] इत्येक इति । अप्रधानार्थत्वे सर्वनामकार्यप्रतिषेधो भवति, अग्[1] अत्र न प्रतिषिध्यतेऽतः सोऽग्[1] भवत्येव इत्येके वदन्ति । गोनर्दीय एनमाह[2] इति भागवृत्तिकृता उक्तम् ।

[ संक्षिप्तसारटीका–सुबन्त० ३०० ]

### ६–इग्यणः सम्प्रसारणम् । ( १।१।४५ )

( ९ ) भागवृत्तिकारस्त्वाह—"नित्यशब्दानामन्वाख्यानमात्रमिदमिति ततो नेतरेतराश्रयदोषः । यदुक्तं भाष्ये—'सर्वाणीतरेतराश्रयाणि [ एकत्वेन ] परिहृतानि, सिद्धं तु नित्यशब्दत्वादिति' [ महाभा० १।१।४५ ] इति ।" [ परिभाषावृत्ति.–पृ० १० ]

### ७–अचः परस्मिन् पूर्वविधौ । ( १।१।५७ ) (?)

( 'अदसो मात्' [ १।१।१२ ] सूत्रे 'विप्रतिषेधे परं कार्यम्' [ १।४।२ ] सूत्रे च उद्धृता. पाठा एतत्सूत्रस्थाः स्युरित्यपि संभाव्यते ) ।

### ८–द्विर्वचनेऽचि । ( १।१।५९ )

(१०) भाष्यभागवृत्त्योस्त्वेतदर्थं नजित्यनुवृत्तौ–"द्विर्वचननिमित्तेऽचि द्विर्वचन एव कर्तव्येऽयजादेशो न भवति । कृते द्विर्वचने यथास्वमयडादेशो[3] भवति" इति सूत्रार्थः ।

[ दुर्घटवृत्तिः–पृ० ४ ]

### ९–तपरस्तत्कालस्य । ( १।१।७० )

(११) ( गम्लृशब्दस्य ) अन्ये तु ङसिङसो गमुरिति[4], ङौ गमलि, सुटि–गमा गमलौ गमलः गमलम् गमलौ इति वदन्ति, तदसत् । यत. "तपर. स्वरूपस्यैव ग्राहको भवति न

---

१ पाणिनीयमतानुसारम् 'अकच्' इत्यर्थ. ।

२ गोनर्दीयस्त्वाह – अकच्स्वरौ तु कर्तव्यौ प्रत्यङ्गं मुक्तसंशयौ । [ महाभा० १।१। ९]

३ 'यथास्वमादेशो भवति', 'यथास्वमियङादयो भवन्ति' इति वा युक्त पाठ. स्यात् ।

४ गमुल् इति शुद्धः पाठ. स्यात् ।

त्वन्यवर्णस्य" इति भागवृत्तिकृता तपरस्तत्कालस्येत्यत्रायमर्थो व्यवस्थापितः[1] ।

[ संक्षिप्तसारटीका–सन्धि० ७२ ]

### १०–येन विधिस्तदन्तस्य । ( १।१।७२ )

( १२ ) तथा च येनविधिसूत्रे [ १ । १ । ७२ ] भागवृत्तिकृतोक्तम्—"इको यणचि [६ । १ । ७७] इतीकाऽचावयवेनावयविनः समुदायस्य सन्निधापितत्वादिगन्तस्याचादौ यणादेश इति वर्णविधिरेव न स्यात् तिष्ठतु दध्यशान त्वं शाकेन" इति । [परिभाषावृत्ति–पृ० ९६]

### ११–गाङ्कुटादिभ्योऽञ्णिन्ङित् । ( १।२।१ )

( १३ ) कथम् 'उद्वेजिता वृष्टिभिराश्रयन्ते' इति कुमारसम्भव. [ १ । ४ ] । उच्यते—"ण्यन्तान्नात्' इति भागवृत्ति. । [ दुर्घटवृत्ति.–पृ० ७ ]

### १२–गोस्त्रियोरुपसर्जनस्य । ( १।२।४८ )

( १४ ) "गोकुलमित्यत्र स्वग्रहणानुवृत्त्या[2] व्यपदेशिवद्भावाच्चोपसर्जनह्रस्वत्वं प्राप्नोति, तत्र तदन्तग्रहणसामर्थ्याद् व्यपदेशिवद्भावो न भवति" इति भागवृत्तिकृता 'गोस्त्रियोरुपसर्जनस्य' [ १ । २ । ४८ ] इत्यत्र समाहितम् । [ परिभाषावृत्तिः–पृ० १०६ ]

### १ –सरूपाणामेकशेष एकविभक्तौ । ( १।२।६४ )

(१५) अनुगङ्गं वाराणसी तद्वदत्यन्तायतेत्यर्थ इति केचित् । तथा च "अनुगङ्गमेतत् सत्रम्" इत्येकशेषसूत्रे [ १।२।६४ ] भागवृत्तिकार. प्रयुङ्क्ते । नेति वयम् ।

[ पदमञ्जरी–भा० १, पृ० ३५८ ]

---

१ अयमभिप्राय.–'ऋत उत्' [ ६।१।१११ ], 'ऋतो ङिसर्वनामस्थानयो.' [ ७।३।११० ] इत्यादिषु ऋकारस्य तपरकरणात् सत्यपि ऋकारऌकारयो. सावर्ण्ये ऌकारस्य ग्रहणं न सम्भवति, तपरस्तत्कालस्येत्यत्र स्वरूपग्रहणानुवृत्तेरिति भागवृत्त्यभिप्रायः। ये तु तपरस्तत्कालस्येत्यत्र स्वरूपग्रहणं नानुवर्तयन्ति ते सवर्णमात्रस्य ग्रहणमिच्छन्ति । तन्मते ऋकारग्रहणेन ऌकारस्यापि ग्रहणाल्लत्वं भवति । वयं तु भागवृत्तिकारमतमेव युक्तमिति पश्याम । सिद्धान्तकौमुदीकृता तु सर्वत्र लत्वमुक्तम् [ द्र० ऌकारान्तप्रकरणम् ]। बालमनोरमाकारस्तु–'एवंजातीयकानां प्रयोगो न भाष्यसम्मत इत्याहुः' इत्युक्तवान् ।

२ 'येनविधिस्तदन्तस्य' [ १ । १ । ७२ ] इत्यत्र 'स्वं रूपम्' [ १ । १ । ६८ ] इत्यत स्वपदस्यानुवृत्तिं मत्वा दोषमुद्भावयतीति भाव । स्वग्रहणानुवृत्तिश्च न सर्वेषां सम्मता इति सीरदेव. । [ परिभाषावृत्ति.–पृ० १०९ ]

१४ ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री । ( १।२।७३ )
अनेकशफेष्विति वक्तव्यम् । ( १।२।७३ वा० )

(१६) ग्राम्यपशुसङ्घेऽनेकशफेऽतरुणे स्त्रीलिङ्ग शिष्यते । 'स्त्रीपुंसयोः' [ संक्षिप्तसार० समास० ४०८ ] इत्यादिना पुंस एकशेषे प्राप्तेऽप्राप्ते च विधानम् । एतद् भागवृत्तिकारप्रभृतीनां मतम् । [ संक्षिप्तसारटीका-समास० ४१४ ]

१५-प्रतिषेधे ह्सादीनामुपसंख्यानम् । ( १।३।१५ वा० )

( १७ ) अत्रादिशब्दः प्रकारे सादृश्ये च । यदुक्तं भागवृत्तिकृता—"प्रकारस्तु शब्दक्रियत्वात्" इति । [ दुर्घटवृत्तिः-पृ० १४ ]

१६-हरतेर्गतिताच्छील्ये[1] । ( १।३।२१ वा० )

( १८ ) "गतताच्छील्ये" इति तु भागवृत्तिः[2] । [ दुर्घटवृत्तिः-पृ० १६ ]

१७-शप उपलम्भने । ( १।३।२१ वा० )

( १९ ) भागवृत्तौ तु-"उपलम्भनं प्रकाशनमित्युक्तम्" इति ।
[ दुर्घटवृत्तिः-पृ० १५ ]

( २० ) भागवृत्तिकारस्तु "उपलम्भनं प्रकाशनम्, देवदत्ताय शपते किञ्चित् प्रकाशयतीत्यर्थः । [3]वाचा शरीरस्य स्पर्शनमित्यदः कस्यचित् काव्यम् ।"
[ धातुवृत्तिः-पृ० २०४ (शपधातौ) ]

( २१ ) भागवृत्तिकारः पुनराह—"शपेरुपलम्भने प्रकाशने कथने वर्तमानादात्मनेपदं भवति । देवदत्ताय शपते । देवदत्तं यत्किञ्चित् कथयतीत्यर्थः । [3]वाचा शरीरस्पर्शनमुपलम्भनमित्यदः कस्यचित् काव्यम्" इति । [ पुरुषकार०-पृ० ६४ ]

---

१ अयं पाठः काशिकासमतः । भाष्ये तु भागवृत्तिवत् "गतताच्छील्ये" इत्येवोपलभ्यते ।
२ "हरतेर्गतताच्छील्ये, गतविधप्रकारास्तुल्यार्था इति भर्तृहरि" इति भाषावृत्ति [ पृ० ३२ ] । अत्र भाषावृत्तिसम्पादकेन भर्तृहरिरित्यस्यार्थः-"भागवृत्तिग्रन्थस्य रचयिता" इति टिप्पण्यामुक्तं तदयुक्तम् । यतो ह्यत्रैव वार्त्तिके दुर्घटवृत्तौ [ पृ० १६ ] भर्तृहरिभागवृत्त्योर्विभिन्नः पाठ उद्धृतः । तथा हि—'गतताच्छील्ये इति भागवृत्तिः । गतविधप्रकारास्तुल्यार्था इति भर्तृहरिः." इति । अयं भर्तृहरिर्महाभाष्यव्याख्यातेति संभाव्यते ।
३ "वाचा शरीरस्पर्शनमुपलम्भनम्" इति काशिका [ १।३।२१ ] ।

## १८–आङो यमहनः । ( १।३।२८ )

( २२ ) कथम्–'आजघ्ने विषमविलोचनस्य वक्षः' [ किरात० १७।६३ ] इति ? भागवृत्तौ तु "नैतत्राय साधुरिति, [1]'आयोधे' इति पाठान्तरमुक्तम् ।"

[ धातुवृत्तिः–पृ० २१७ ( हनधातौ ) ] ।

( २३ ) 'गाण्डीवी कनकशिलानिभ भुजाभ्यामाजघ्ने विषमविलोचनस्य वक्षः' [ किरात० १७।६३ ] इत्यसाधुरिति भागवृत्तिः । [ संक्षिप्तसारवृत्तिः–तिङन्त० १२४ ]

( २४ ) "आपीडे विषमविलोचनस्य वक्षः" इति पाठो भागवृत्तिकृता व्यवस्थितः ।

[ संक्षिप्तसारटीका–तिङन्त० १२४ ]

( २५ ) कथ तर्हि–'आजघ्ने विषमविलोचनस्य वक्षः' इति भारविः [ १७।६३ ], 'आहध्व मा रघूत्तमम्' इति भट्टिश्च [?] । "प्रमाद एवायम्" इति भागवृत्तिः ।

[ सिद्धान्तकौ० पृ० ३६६ ]

( २६) कथम् 'आजघ्ने विषमविलोचनस्य वक्षः' इति भारविः [ १७।६३ ], अकर्मकानुवृत्तेः ? उच्यते—'वक्षसा' इत्यध्याहार्यः । अयमर्थः—विषमलोचनस्य वक्षसा स्व वक्ष आजघ्ने । वाणनद्याः (?) प्रतिमुखं यथा स्यात् तथा भुजाभ्यामुपेत्य । अथवा विषमलोचनस्य भुजाभ्या स्व वक्ष आजघ्ने । अथवा विषमलोचनस्येति सामीप्ये षष्ठी । स्व वक्ष आजघ्ने आस्फोटितवान् । यद्वा प्रतिमुखमिति विभक्त्यर्थेऽव्ययीभावः । विषमविलोचनस्य वक्ष एत्य आजघ्ने, प्रकृतत्वाद् वक्ष एव । एव च 'आङो यमहनः' [ १।३।२८ ] इति तङ् । पूर्वव्याख्यायाम् 'स्वाङ्गकर्मकाच्च' [ वा० १।३।२८ ] इत्यनेनात्मनेपदम्[2] इति भागवृत्तिः । [ दुर्घटवृत्तिः–पृ० १६ ]

---

१ 'आपेदे' इति पाठान्तर मैसूरमुद्रितधातुवृत्तौ । [ भा० ३, पृ० ९ ] ।

२ अत्रेदमवधेयम्—धातुवृत्तौ सिद्धान्तकौमुद्यां च 'आजघ्ने'इत्यस्य भागवृत्तिमुखेन स्पष्टमपशब्दत्वमुक्तम् । संक्षिप्तसारटीकायामपि 'आपीडे'इति पाठो भागवृत्तिमुखेन व्यवस्थापितः । अतस्तत्राऽपि 'आजघ्ने' इत्यस्य भागवृत्तिकृन्मतेऽसाधुत्वं स्पष्टमेव । दुर्घटवृत्तौ तु तस्यैव 'आजघ्ने' इति पदस्य भागवृत्तिमुखेन साधुत्वं प्रतिपादितमिति महद्विपरीतत्वं लक्ष्यते । कदाचिदत्र दुर्घटवृत्तिपाठो भ्रष्ट. स्यात् । धातुवृत्तौ–'आयोधे', 'आपेदे' इति पाठद्वयस्य दर्शनादत्र भागवृत्तेरपि पाठो भ्रष्ट इति प्रतीयते ।

मल्लिनाथेन प्रकृतपदव्याख्यायाम—"अत्रात्मनेपदं विचार्यम्, 'आङो यमहन.' इत्यत्राकर्मकाधिकारात् 'स्वाङ्गकर्मकाच्च' इति वक्तव्यत्वात् । पूर्वैरेव दूषितत्वात् ' ।" इत्याद्युक्तम् । अत्र 'पूर्वै.'-पदेन क उच्यन्ते ? किं भागवृत्तिकारस्यापि तत्र सग्रहः संभवति ?

## १९–आङ उद्गमने। ( १।३।४० )

( २७ ) कथं 'नभः समाक्रामति नष्टवर्त्मना स्थित्वैकचक्रेण रथेन भास्करः' [ ? ] इति। उच्यते–"अपशब्द एवायम्" इति भागवृत्तिः। [ दुर्घटवृत्तिः–पृ० १७ ]

( २८ ) "नभः समाक्रामति कृष्णवर्त्मना स्थितैकचक्रेण रथेन भास्करः' इत्यसाधुरिति" भागवृत्तिः। [ सक्षिप्तसारवृत्तिः–तिङन्त० ४१ ]

## २०–अकर्मकाच्च। ( १।३।४५ )

( २९ ) कथं 'सर्मविष्याव एकस्यामभिजानामि मतिरि' इति भट्टिः [ ६।१३८ ], 'अभिजानासि देवदत्त कश्मीरेषु वत्स्यामः' [ महाभा० १। १। ४४ ] इति [ च ] जानातेरकर्मकत्वादनेन तङ्प्रसङ्गात्। उच्यते–"व्यवस्थितविभाषाविज्ञानाज्ज्ञानोपसर्जनवृत्त्या जानातेरज्ञानार्थत्वात्, तस्य भाष्यकारवचनाद्वा अभिजानासीति" इत्युक्तवान् भागवृत्ति [ कार ]ः।

[ दुर्घटवृत्तिः–पृ० १८ ]

## २१–उपाद्यमः स्वकरणे। ( १।३।५६ )

( ३० ) कथम् 'उपायस्त महास्त्राणि' [ १५।२१ ], तथा 'उपायसत नाऽऽसवम्' [ ८।३३ ], 'शस्त्राण्युपायंसत जित्वराणि'। [ १। १६ ], 'नोपायध्व भय सीताम् [ ७।१०१] इति भट्टिः, स्वकरणं पाणिग्रहणमिति व्याख्यानात्। उच्यते—"कर्तरि[1] इत्यनुवृत्तेः स्वकरणमात्यन्तिकस्वीकारः" इति रक्षितो भागवृत्तिः[2] [ च ]। [ दुर्घटवृत्तिः–पृ० १८ ]

( ३१ ) "विवाहे वाच्य इति जयादित्यव्याख्यानेऽसन्तोषात् 'हस्तेकृत्य[3] महास्त्राणि' इति प्रमाणोपदर्शनाय भट्टिप्रयोगो दर्शितः। भागवृत्तिकृतोऽपि एतदेव मतम्।"

[ संक्षिप्तसारटीका–कृदन्त० ४७७ ]

---

साहित्यदर्पणकारोऽप्याह–"'आङो यमहनः', 'स्वाङ्गकर्मकाच्च' इत्यनुशासनबलादाङ्पूर्वस्य हन स्वाङ्गकर्मकस्यैवात्मनेपदं नियमितम्। इह तु तल्लङ्घितमिति व्याकरणलक्षणहीनत्वाच्च्युतसंस्कारत्वम्" इति। [ सप्तमपरिच्छेदे–पृ० ३९६ ]

१ 'उत्तरार्थं तर्हि कर्तृग्रहणं कर्तव्यम्' [ १। ३। १४ ] इति भाष्यवचनात 'कर्तरि' इति पदमनुवर्तते। 'कर्तृस्थे' इति तु दुर्घटवृत्तिसम्पादकस्य संशोधनम्।

२ 'रक्षितभागवृत्ती' इति सम्पादकस्य संशोधनम्।

३ अत्र उपपूर्वाद् यमेरात्मनेपदप्रकरणात् 'उपायंस्त' इति पाठः शुद्धः स्यात्। भट्टिकाव्येऽपि [ १५।२१ ] तथैव पाठो दृश्यते।

## २२-पूर्ववत् सनः। ( १।३।६२ )

( ३२ ) अत्र च सन्नन्तस्याप्यवयवद्वारानुदात्तेत्त्वादात्मनेपदम्। तद्द्वारा हि समुदाय एव गवादाविव लिङ्गमासज्यते। गुपादीना त्रिमुनिसमतेन नित्यसन्नन्तत्वेन केवलेपु गोपत इत्यादेस्तत्फलस्याभावाज्जुगुप्सादेश्च समुदायस्यानुपदेशात्। न च नित्यसन्नन्तत्वे वृत्त्युक्त गोपायनीत्यादि न सिद्ध्येत्, यथासभव प्रकृत्यन्तरात् स्वार्थणिजादिना तत्सिद्धेः। व्यक्त चैतत् 'पूर्ववत् सनः' इत्यत्र भागवृत्तौ। [ दैवस्य पुरुपकारव्याख्यायाम्-पृ० ८६ ]

## २३-णेरणौ यत्कर्म णौ चेत्स कर्तानाध्याने। ( १।३।६७ )

( ३३ ) इह तर्हि आरोहन्ति हस्तिन हस्तिपगाः, तानारोहयति हस्तीति। कि पुनरत्र नेष्यते ? वृत्तिकृता नेष्यते, भागवृत्तिकारेण त्विष्यते[1]। [ पदमञ्जरी-भा० १ पृ० २५१ ]

( ३४ ) एव च 'आरुह्यते[2] ( ?, आरोहयते ) हस्ती स्वयमेव' इति ये कर्मवद्भावं प्रदर्शयन्ति[3] ते न्याय भाष्य च बाधमाना अवधीरणीयाः[4]। [ भाष्यप्रदीपे १।३।६७ ]

( ३५ ) प्रदर्शयन्त इति भागवृत्तिकाराः। [ भा०प्र०विवरणे १।३।६७ ]

---

१ तान् आरोहयते हस्तीति भागवृत्तिकारस्य मते कर्मवद्भावेनात्मनेपद भवतीत्यर्थं। कर्मवद्भावस्त्वन्यकर्मण्युत्पन्नेऽपि भवत्येव। 'आरोहयते' इत्यत्र 'यक्चिणो. प्रतिषेधे हेतुमण्णिश्रि इत्यादिना यकः प्रतिषेधात् केवलमात्मनेपदमेव भवति।

२ आरुह्यते इत्यपपाठ., णिजन्तात्कर्मवद्भावे यको निषेधात्।

३ भाष्यविवरणे 'प्रदर्शयन्ते' इति प्रतीकमुपादत्ते नागेश।

४ यत्तु कैयटेन भागवृत्तिकारमतस्य प्रत्याख्यानमुक्तं तच्चिन्त्यम्। भागवृत्तिकारो हि रुहि कर्मस्थक्रियकं मन्यते। णेरणाविति सूत्र तु कर्तृस्थक्रियार्थ कर्तृस्थभावकार्थ चेति भाष्यकारः प्रतिजानीते। अत एव भागवृत्तिकार 'आरोहयते हस्ती स्वयमेव' इत्यत्र कर्मवद्भावेनात्मनेपदमाह। यत्तु कैयटेनात्र 'रुहिर्गतिविशेषवचनः' इत्युपरितन [ ८।१।५६ ] भाष्यवचनमुपन्यस्य रुहिः कर्तृक्रियक इत्युक्त तदपि नैकान्तम्। यतो ह्यत्र सूत्रे भाष्यकारो रुहि कर्मक्रियमेव मन्यते। अत एव च स 'आरोहयते' इत्यत्र विचारं प्रक्रम्य कर्मवद्भावेन तस्य सिद्धिं मन्यमानः 'दर्शयते' इत्युदाहरणान्तरमुदाजहार। भर्तृहरिरपि 'न्यग्भावनं न्यग्भवनं रुहौ शुद्धे प्रतीयते' इत्यनेन 'आरोहन्ति हस्तिनं हस्तिपगाः' इत्यत्र न्यग्भवनं कर्म कर्मणि हस्तिन्येवेति स्पष्टं प्रतिपादयति। तदेव भाष्यकारभर्तृहरिभागवृत्तिकाराणां समानमतमित्युक्त भवति। यत्तु 'रुहिर्गतिविशेषवचनः' इति स्थानान्तरीय भाष्यकारवचन तन्न्यग्भावनकर्मपरमिति न कश्चित् तत्र विरोधः। अयं भावः- 'आरोहन्ति हस्तिनं हस्तिपगा.' इत्यत्र द्वे कर्मणी-न्यग्भावनं न्यग्भवनं च। तत्र न्यग्भावनं

२४–[ व्याङ्परिभ्यो रमः । ( १।३।८३ ) ]

२५– उपाच्च । ( १।३।८४ )

२६– विभाषाऽकर्मकात् । ( १।३।८५ )

( ३६ ) पूर्वसूत्रादेव रम इत्यस्यानुवृत्तौ[1] प्राप्ताया यदत्र रमतेरुपादानं तज्जयादित्य-चन्द्रव्यवस्थितस्यार्थान्तरस्यापि सूचनमिहैव यथा स्यादित्येवमर्थम् । तन्मतानुसारेणायमर्थो भवति –उपादुत्तराद् रमतेः कर्तर्यात्मनेपद न भवति, तस्मादेवाकर्मकाद्वा भवति । देवदत्त-मुपरमतीति सकर्मकान्नित्य निषेधः । यावद् भुक्तमुपरमति, उपरमत इत्यकर्मकात् पाक्षिकम् । अकर्मकस्यैवास्य धातोरन्तर्भावितण्यर्थत्वात् सकर्मकत्वम्, देवदत्तमुपरमयतीत्यर्थः । एतत् सन्दिग्ध स्मृतेरदर्शनादिति भागवृत्तिकृताऽभिधाय प्रथम एव पक्षोऽङ्गीकृतः ।

[ संक्षिप्तसारवृत्तिटीका–तिङन्त० १४२-१४३ ]

२७–निगरणचलनार्थेभ्यश्च । ( १।३।८७ )

( ३७ ) कथ 'शिरः कम्पयते युवा' अनेन परस्मैपदित्वात् । उच्यते—"चिन्त्यम्" इति भागवृत्तिः । [ दुर्घटवृत्तिः–पृ० २१ ]

२८– विप्रतिषेधे परं कार्यम् । ( १।४।२ ) (?)

( ३८ ) "यत्तु विप्रतिषेधसूत्रे [ १।४।२ ] पूर्वपरिभाषा [2]गतार्थेति भाष्यम् । तदभ्यु-च्चयमात्रम्" इति भागवृत्तिकैयटलघुविवरणकारादयः । [ व्या०सिद्धान्तसुधानिधिः–पृ० ४३२]

( ३९ ) "विप्रतिषेधसूत्रस्थ भाष्य त्वभ्युच्चयपरमेव" इति भागवृत्तिकाराः ।

[ शब्दकौस्तुभः–१।१।५६, पृ० २६० ]

( ४० ) इय च [3]परिभाषा बहिरङ्गपरिभाषयैव सर्वकार्यस्य सिद्धत्वाद् भागवृत्तिकृता नाभ्युपगम्यते । [ परिभाषावृत्तिः–पृ० ४६ ]

---

कर्तृस्थम्, न्यग्भवन तु कर्मस्थम् । यदा तु न्यग्भवन कर्म अभिप्रेत तदा ण्यन्तात्कर्मवद्भावे कर्मस्थक्रियत्वादात्मनेपद भवत्येवेति भाष्यकारभागवृत्तिकारयोर्मतमित्युक्तं भवति ।

१ 'पर्याङ्विपरिभ्यो रम, उपाद् रम., अकर्मकाद्वा' [ संक्षिप्तसार०–तिङन्त० १४१, १४२, १४३ ] इति सूत्रपाठे 'उपाद् रमः' इति सूत्रे पूर्वसूत्राद् रमधातुरनुवर्तत एवेत्यर्थः ।

२ अर्थतोऽनुवादः । पूर्वा परिभाषा = अन्तरङ्गं च बलीयो भवतीत्येषा । तथा च भाष्यम्–'उभे तर्हि कर्तव्ये ? नेत्याह, अनयैव सिद्धम्' इति [ १।४।२, पृ० ३०५ ] ।

३ 'अन्तरङ्गबहिरङ्गयोरन्तरङ्गं बलवत्' इत्येषेति भावः । अत्राह सीरदेव.–"तन्मते 'वृक्ष इह'

[ इम उद्धृतांशाः 'अचः परस्मिन् पूर्वविधौ' [ १।१।५७ ] इति सूत्रस्थाः स्युरित्यपि सम्भाव्यते । ]

### २९–यू स्त्र्याख्यौ नदी । ( १।४।३ )

( ४१ ) "इदूतोरेवयं संज्ञा" इति भागवृत्तिः । [ भाषावृत्तिः–पृ० ४३ ]

### ३०–यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् । ( १।४।१३ )

( ४२ ) यदुक्तं यस्मात्प्रत्ययविधिसूत्रे [ १।४।१३ ] भागवृत्तिकृता–"समासान्तो विधिरनित्य इति नैषा परिभाषा, भाष्ये [1]ज्ञापकाभावात्" इति । [ परिभाषावृत्तिः–पृ० ११८ ]

### ३१–ध्रुवमपायेऽपादानम् । ( १।४।२४ ) (?)

( ४३ ) कथ 'शब्दे सोऽपि वियुज्यते' इति लक्षणम् (?) । "अहो चित्रा प्रयोगस्थितिः" इति भागवृत्तिः । [ दुर्घटवृत्तिः–पृ० २४ ]

### ३२–ऊर्यादिच्विडाचश्च । ( १।४।६१ )

( ४४ ) "वारुणीमदविशङ्कमथाविश्चक्षुषोऽभवदसाविव रागः' इति माघे [ १०।१६ ] व्यवहितप्रयोगः [2]प्रमादजः"इति [3]भागवृत्तिः । [ उज्ज्वलदत्तस्य–उ० वृ०–पृ० ६६ ]

### ३३–समर्थः पदविधिः । ( २।१।१ ) (?)

( ४५ ) कथम् 'असूर्यं पश्या राजदारा.' 'अश्राद्धभोजी' इत्यादौ नञ्समासः ? क्रियया नञ्सम्बन्धादसामर्थ्यात् । उच्यते–"सुटः स्त्रीपुंसयोरिति वक्तव्ये सुडनपुंसकस्येति [ वचन ] ज्ञापकम्" इति भागवृत्तिः । [ दुर्घटवृत्तिः–पृ० २८ ]

---

इत्यादावचोरानन्तर्यें यद्यपि बहिरङ्गपरिभाषा नास्ति तथापि पदसंस्कारपक्षे दोषाप्रतिक्षेपो व्याख्येयः" इति । [ परिभाषावृत्तिः–पृ० ४६ ]

1 भागवृत्तिकारस्यैतद् वचन भाष्यानालोचनपरम् । यतो हि द्वित्रिभ्यां [ ५।४।११५ ] सूत्रभाष्ये– 'एवं तर्हि ज्ञापयत्याचार्यो विभाषा समासान्तो भवतीति' इति स्पष्टं ज्ञापकमुच्यते । सीरदेवस्त्वत्र प्रतिविधत्ते—"' ' 'तदयुक्तम् । ननु लाघवार्थं समासान्तनिर्देशो न कृतोऽन्यथा 'मूर्द्धसु' इति गौरवं स्यात् । यद्येवं 'मूर्धपाद्दत्सु'इति कुर्यात् । एवं च समासान्तक्रमो न लङ्घितो भवतीति ज्ञापितम्"इति । [ परिभाषावृत्ति –पृ० ११८ ]

2 'उपसर्गप्रतिरूपकत्वात् समाधानीय इत्युपाध्यायसर्वस्वम्' इत्युज्ज्वलदत्तः । [उ० वृ०–पृ० ९६]

3 आविस्शब्द ऊर्यादिगणे पठ्यत इति हेतोरयं भागवृत्तिपाठ एतत्सूत्रस्थ एवेति संभाव्यते ।

### ३४-तृतीया तत्कृतार्थेन गुणवचनेन । ( २।१।३० )

( ४६ ) "अक्ष्णा काणः, [1]अक्षिकाणः" इति तु भागवृत्तिः ।

[ सक्षिप्तसारवृत्तिः–समास० १५ ]

( ४७ ) अत्र टीकाकारः–"भागवृत्तिरित्युक्त जयादित्यस्यास्वरससूचनार्थम् ।"

[ सक्षिप्तसारटीका–समास० १५ ]

( ४८ ) तृतीयार्थकृत इति किम् ? "अक्ष्णा काणः, अक्षिकाणः" इति भागवृत्तिः ।

[ हरिनामामृतम्–सू० १७४७ ]

( ४९ ) भागवृत्तिमते अक्षिकाणः शब्दः सुसाधुः । [व्याकरणदर्शनेर इतिहास–पृ० २१८]

### ३५-अर्धं नपुंसकम् । ( २।२।२ )

( ५० ) "अर्धं नपुंसकमेव समप्रविभागे वर्तते नान्यलिङ्गम्" इति भागवृत्त्यादि ।

[ टीकासर्वस्वम्–भा० १, पृ० ६० ]

### ३६-प्राप्तापन्ने च द्वितीयया । ( २।२।४ )

( ५१ ) कथं प्राप्ता जीविका प्राप्तजीविका ? असामानाधिकरण्येऽपुंवद्भावात् । उच्यते– 'प्राप्तापन्ने चेत्यविभक्तिकाकारप्रश्लेपादकारश्च पूर्वपदस्यानुविधीयते" इति भागवृत्तिः ।

[ दुर्घटवृत्तिः–पृ० ३४ ]

### ३७-नञ् । ( २।२।६ ) (?)

(५२) कथम् ' 'अनेकेषां' नानास्थान' इति न्यास. [?] उत्तरपदार्थप्रधानत्वान्नञ्-समासस्य । ' ' अत एव भागवृत्तिकृता–"अनेकेषामिति [3]जैनेन्द्रोक्त कालदुष्टा [4]एवापशब्दाः" इति । [ दुर्घटवृत्तिः–पृ० ३४ ]

---

१ काशिकादिवृत्तिषु तु 'तत्कृतेनेति किम् ? अक्ष्णा काण.' इति समासाभाव एव प्रदर्शित ।

२ 'प्रयोजकं चित्तमनेकेषाम्' [ ४।५ ] योगदर्शनमत्रानुसन्धेयम् ।

३ जयमङ्गलोक्तमिति पाठान्तरम् । तन्नायुक्तम्, पूर्वत्र तस्यानुपादानात् । कोऽयं न्यासः, कश्च जिनेन्द्र इति न ज्ञायते । जिनेन्द्रबुद्धिविरचिते काशिकाविवरणात्मके न्यासे नैतद्वचनमस्माभिरुपलब्धम् । पूज्यपादापरनाम्ना देवनन्दिनाऽपि पाणिनीयव्याकरणे शब्दावतारनामा न्यासो व्यरचीति श्रूयते [संस्कृत व्याकरणशास्त्र का इतिहास पृ० ३२३] । देवनन्दिविरचितं व्याकरण च जैनेन्द्रनाम्ना प्रसिद्धम् । अत. संभाव्यते जैनेन्द्रपदेन तस्यैव निर्देशः स्यात्, न्यासशब्देन च शब्दावतारन्यासस्य । जैनेन्द्रन्यासो माधवीयधातुवृत्त्यादिष्वनेकेषु ग्रन्थेषूद्धृतो वर्तते ।

४ भाष्यकृता त्वेकवचनं समर्थितम्, न बहुवचन निवारितम् । अत्रैकशेषेण बहुवचनं भविष्यति।

## ३८–कर्मणि द्वितीया। ( २।३।२ )

## समयानिकषाहायोगेषूपसंख्यानम्। ( २।३।२ वा० )

( ५३ ) कथ 'हा पितः क्वासि हे सुभ्रु' इति भट्टिः [ ६।११ ], 'हा तात हा अम्ब' [ अ० ६, पृ० १५७ ] इति मालतीवाक्यम्? हायोगेष्वपि दृश्यते इति द्वितीयासंभवात्। उच्यते– भागवृत्तिकृत्त्वाह—'शोच्यशोचकसम्बन्धे षष्ठ्यपवादो द्वितीया। सबोधने तूप-पदविभक्तेः कारकविभक्तिर्बलीयसीति प्रथमा'' इति। [ दुर्घटवृत्तिः–पृ० ४० ]

## ३९–गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि। ( २।३।१२ ) (१)

( ५४ ) "कृते षष्ठी वा'' इति भागवृत्तिः। ग्रामस्य गन्ता ग्रामाय गन्ता। वनस्य गमन वनाय। [ संक्षिप्तसारवृत्तिः–कारक० १०१ ]

( ५५ ) षष्ठ्या निर्दिष्टायामुत्सर्गसिद्धा कर्मणि द्वितीयैव भवतीत्यर्थः। सामान्येनैव कृति षष्ठी न भवतीति जयादित्यमतम्। "कृति षष्ठी वा'' इति भागवृत्तिः।

[ संक्षिप्तसारटीका–कारक० १०१ ]

( ५६ ) अत्र कृति षष्ठी च न स्यादित्येके—व्रज गन्ता व्रजाय गन्ता। षष्ठी चेति चन्द्रगोमी। षष्ठी [१]एवेति भागवृत्तिः। [ हरिनामामृतम्–सू० ६८३ ]

[ 'प्रेसीडेंसी कालेज कलकत्ता'-प्राध्यापकेन एस पी भट्टाचार्येण 'दि भागवृत्ति एण्ड इट्स आथर'-नाम्नि स्वकीये लेखे ( ओरियण्टल कान्फ्रेंस बनारस ) प्रकृतसूत्रस्थमिताक्षरावृत्तेः 'भगवन्मते तु सूत्रस्य प्रत्याख्यानाद् ग्रामस्य गन्तेत्येव भवितव्यम्' इति पाठस्य 'भागवृत्ति-कृन्मते ''गन्तेत्येव भवितव्यम्' इति संशोधनमुपन्यस्तम्, तच्चिन्त्यम्, मिताक्षराया भगवच्छब्देन भाष्यकारः पतञ्जलिरभिप्रेतः। तेनैव चैतत्सूत्रं प्रत्याख्यातम्, न भागवृत्तिकृता। ]

( सावशेषम् )

---

विशेषविचारो वाक्यपदीयतृतीयकाण्डे ५९२ तमे पृष्ठे [ काशी संस्क० ] द्रष्टव्य।

रक्षितस्त्वाह—अध्यारोपितबहुत्वाद् बहुवचनम्। यथा–'द्युद्भ्यो लुङि' [ १।३।९१ ] 'वृद्भ्यः स्यसनो.' [ १।३।९२ ] इति। [ दुर्घटवृत्तिः–पृ० ३४ ]

संक्षिप्तसारे 'कृति षष्ठी वेति भागवृत्ति' [ कारक० १०१ ] इति सूत्रस्य दर्शनात् तन्मते विकल्प एवेष्यत इति स्पष्टम। तथैव च व्याख्यातृभिर्व्याख्यातम्। हरिनामामृते तु 'षष्ठी एव' इत्येवकारो निर्दिश्यते, तेन कस्य प्रतिषेध इति न स्पष्टं ज्ञायते। पाणिनीयसूत्रानुसार [२।३।१२] द्वितीयाचतुर्थ्यौ त्ववश्यं भवत इति स्पष्टम्, नहि तयोः 'एव'-शब्देन प्रतिषेधः कर्तुं शक्य.।

# गर्भे गुणदोषसंक्रमणविमर्शः

श्रीरघुनाथशर्मा, राजकीयसंस्कृतमहाविद्यालय, काशी ।

या देवी सर्वभूतेषु मातृरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥

एतस्मात् किमिवेन्द्रजालमपरं यद् गर्भवासस्थितं
रेतश्चेतति हस्तमस्तकपदप्रोद्भूतनानाङ्कुरम् ।
पर्यायेण शिशुत्वयौवनजरावेषैरनेकैर्वृतं
पश्यत्यत्ति शृणोति जिघ्रति पुनर्गच्छत्यथाऽऽगच्छति ॥

अथातो गर्भे गुणदोषसंक्रमं विमृशामः । तत्त्वतो हि विज्ञाते तस्मिन् तत्तदुपादानपरिवर्जनयोर्यत्नः फलेग्रहिः स्यात् । तत्र गर्भे मातापित्रोरन्येषां वा गुणदोषसंक्रान्तिविमर्शात्प्राग् जीवस्य कथं परलोकादागमः कथं च गर्भरूपतासंपत्तिपुरस्सरं जन्मेति संप्रधारणमावश्यकम् । निर्णीते ह्यस्मिन्नर्थे बहुविधा गुणदोषसंक्रान्तिस्तत्प्रतिक्रिया च निर्धारिता भविष्यतीति । तत्र छान्दोग्ये पञ्चमाध्यायस्य नवमखण्डे पञ्चाग्निविद्या श्रूयते । तत्र सोमे तदनुरूपेण कर्मजेन देहेन स्थितस्य जीवस्य क्षीणे पुण्ये तच्छरीरविलये पञ्चभूतमात्रासंपरिष्वक्तस्य पर्जन्याश्रितस्य वृष्टिद्वारा व्रीहियवाद्यन्नसंश्रयः, ततो भुक्ते तस्मिन् पितृदेहे रेतोरूपेण स्थितिः, ततः पित्रोः परस्परसमागमे रेतस्सेके मातृकुक्षौ गर्भरूपेण स्थितिः पञ्चमीति । नरकलोकेऽपि यामीर्यातना अनुभूय कर्मान्ते यमलोकादवरुह्य वृष्ट्यादिद्वारैव गर्भरूपताप्राप्तिरवबोध्या । प्रपञ्चितं चैतद् यथाक्रमम्—'तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम्' [ वे० सू० ३।१।१ ] इत्यादिसूत्रभाष्ये, 'संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात्' [ वे० सू० ३।१।१३ ] इत्यादिसूत्रकदम्बकभाष्ये चेति तत एव द्रष्टव्यम् ।

आयुर्वेदेऽपि पञ्चभूतसंसृष्टस्यैव जीवस्य शुक्रे प्रवेशोऽभिहितः । तथा हि चरके—

भूतैश्चतुर्भिः सहितः सुसूक्ष्मैर्मनोजवो देहमुपैति देहात् ।
कर्मात्मकत्वान्न तु तस्य दृश्यं दिव्यं विना दर्शनमस्ति रूपम् ॥

[ शारीर० २।३१ ]

चक्रदत्तीये च शारीरस्थाने द्वितीयाध्याये ३६ श्लोकव्याख्यावसरे—"यद्यपि शुक्ररजसी

कारणे तथापि यदैवातिवाहिक सूक्ष्मभूतरूप शरीरं प्राप्नुतः, तदैव ते शरीर जनयतो नान्यदा" इत्युक्तम् । श्रीमद्भागवतेऽपि—

कर्मणा दैवनेत्रेण जन्तुर्देहोपपत्तये ।
स्त्रियाः प्रविष्ट उदर पुंसो रेतःकणाश्रयः ॥ [ भाग० ३।३१।१ ]

इत्युक्तम् । व्याख्यात च श्रीधरेण—"कर्मणा पूर्वकृतेन । दैवमीश्वरस्तदेव नेतृ प्रवर्तक यस्य । प्रविष्टो भवतीति" इति । 'नेतृ' इति नेत्रपदस्य व्याख्यानम् । एवमेव तत्रैवाग्रेऽपि—

भगवानपि विश्वात्मा भक्तानामभयङ्करः ।
आविवेशांशभावेन मन आनकदुन्दुभेः ॥
स बिभ्रत्पौरुष धाम भ्राजमानो यथा रविः ।
दुरासदोऽतिदुर्धर्षो भूताना संबभूव ह ॥
ततो जगन्मङ्गलमच्युतांशं समाहितं शूरसुतेन देवी ।
दधार सर्वात्मकमात्मभूतं काष्ठा यथानन्दकर मनस्तः ॥

[ भाग० १०।२।१६-१८ ]

इत्थं जीवस्य शुक्र एव स्थितिः सिद्धा, न तु शुक्रससर्ग विना रजसि । स्त्रीणा तु शुक्रेऽपि न जीवस्य स्थितिः । तदाह वृद्धवाग्भट्टः—

योषितोऽपि स्रवन्त्येव शुक्र पुंसा समागमे ।
तन्न गर्भस्य किञ्चित्तु करोतीति न चिन्त्यते ॥ इति ।

पुराणेष्वपि केवलेन शुक्रेणैव स्कन्दस्य शरवणे, अगस्त्यस्य कुम्भे, शुक्रस्यारणौ, सत्यवत्या मत्स्यराजस्य च मीनदेहे जन्म स्मर्यते । न तु क्वचिदपि केवलरजसा मनुष्यदेहोत्पत्तिः श्रूयते स्मर्यते वा । यद्यपि केवलरजसाप्यायुर्वेदे गर्भसभवोऽभिधीयते, तथा हि—

यदा नार्यावुपेयाता वृषस्यन्त्यौ कथञ्चन ।
मुञ्चन्त्यौ शुक्रमन्योन्यमनस्थिस्तत्र जायते ॥
ऋतुस्नाता तु या नारी स्वप्ने मैथुनमावहेत् ।
आर्तवं वायुरादाय गर्भ कुक्षौ करोति हि ॥
मासि मासि विवर्धेत गर्भिण्या गर्भलक्षणम् ।
कलल जायते तस्या वर्जितं पैतृकैर्गुणैः ॥

[ सुश्रुते शारीरस्थाने २।४७-४९ ]

पैतृकैर्गुणैः स्नाय्वस्थिमज्जाभिः। डल्हणस्तु पूर्वपद्येऽनस्थिरित्यस्याल्पकोमलास्थिरित्यर्थमाह, नञ ईषदर्थे प्रयोगमाश्रित्य। जैज्झटाचार्येण चैते श्लोकाः प्रक्षिप्तत्वादुपेक्षिता इति स एवाह। प्रक्षिप्तत्वाभावस्वीकारेऽपि नैतावता केवलरजसा गर्भसंभवः सिद्ध्यति, कललावस्थाया अल्पकोमलास्थ्यवस्थाया वात्र वर्णितत्वात्। कललावस्था तु गर्भस्य शुक्रशोणितसंप्रयोगानन्तरमेकरात्रेण भवति। अस्थिजन्म तु त्रिभिर्मासैः। चतुर्थादिमासोद्भवा गर्भावस्थास्तु नैवात्र सन्ति सप्तधातुत्वक्चूडाद्युद्भवरूपा। अतो गर्भाभास एवायं न तु गर्भः।

अहोरात्रादिविभागेन मासभेदेन च गर्भावस्था उपनिषत्सु पुराणेष्वायुर्वेदे च प्रदर्शिता अत्र सङ्क्षेपेण प्रदर्श्यन्ते, यतः केवलरजस्संभवस्य मांसपिण्डस्य गर्भाभासत्वं प्रसेत्स्यति। तत्र गर्भोपनिषदि—

"ऋतुकाले संप्रयोगादेकरात्रोषितं कललं भवति। सप्तरात्रोषितं बुद्बुदं भवति। अर्धमासाभ्यन्तरे पिण्डो भवति। मासाभ्यन्तरे कठिनो भवति। मासद्वयेन शिरः संपद्यते। मासत्रयेण पादप्रदेशो भवति। अथ चतुर्थे मासे गुल्फजठरकटिप्रदेशा भवन्ति। पञ्चमे मासे पृष्ठवंशो भवति। षष्ठे मासे मुखनासिकाक्षिश्रोत्राणि भवन्ति। सप्तमे मासे जीवेन संयुक्तो भवति। अष्टमे मासे सर्वलक्षणसंपूर्णो भवति। अथ नवमे मासि सर्वलक्षणज्ञानकरणसंपूर्णो भवति। पूर्वजातिं स्मरति। शुभाशुभं च कर्म विन्दति॥" इति।

सुश्रुते शारीरस्थाने द्वितीयाध्याये—

"तत्र प्रथमे मासि कललं जायते (गर्भाकारं शुक्रशोणितमात्रं कललमित्युच्यते)। द्वितीये शीतोष्मानिलैरभिप्रपच्यमानानां महाभूतानां संघातो घनः संजायते (शीतोष्मानिलैः= कफपित्तवातैः)। यदि पिण्डः (वर्तुलाकारः) पुमान्, स्त्री चेत् पेशी (दीर्घाकृतिः), नपुंसकं चेदर्बुदमिति (अर्बुदमर्द्धपिण्डाकृतिः। भोजराजस्तु—"चतुरस्रा भवेत्पेशी वृत्तः पिण्डो घनः स्मृतः। शाल्मलीमुकुलाकारमर्बुदं परिचक्षते॥" इत्याह)। तृतीये हस्तपादशिरसां पञ्च पिण्डका निर्वर्तन्ते, अङ्गप्रत्यङ्गविभागश्च सूक्ष्मो भवति। चतुर्थे सर्वाङ्गप्रत्यङ्गविभागः प्रव्यक्तो भवति। गर्भहृदयप्रव्यक्तिभावाच्चेतनाधातुरभिव्यक्तो भवति। कस्मात्? तत्स्थानत्वात् (हृदयस्थानत्वात्)। तस्माद् गर्भश्चतुर्थे मास्यभिप्रायमिन्द्रियार्थेषु करोति। द्विहृदया च नारी दौर्हृदिनीमाचक्षते। पञ्चमे मनः प्रतिबुद्धतरं भवति। षष्ठे बुद्धिः। सप्तमे सर्वाङ्गप्रत्यङ्गप्रविभागः प्रव्यक्ततरः। अष्टमेऽस्थिरीभवत्योजः। तत्र जातश्चेन्न जीवेन्निरोजस्त्वात्। नवमदशमैकादशद्वादशानामन्यतमस्मिन् जायते। अतोऽन्यथा विकारी भवति॥" इति।

तत्र यद्यपि सुश्रुते शारीरस्थाने तृतीयाध्याये गर्भाङ्गप्रत्यङ्गाना क्रमेणोत्पत्तिः प्रत्याख्याता, युगपदेव च सर्वाङ्गप्रत्यङ्गप्रव्यक्तिः सिद्धान्तिता, तथा हि—

"गर्भस्य खलु सभवतः शिरः सभवतीत्याह शौनकः, शिरोमूलत्वात्प्रधानेन्द्रियाणाम्। हृदयमिति कृतवीर्यः, बुद्धेर्मनसश्च स्थानत्वात्। नाभिरिति पाराशर्यः, ततो हि वर्द्धते देहो देहिनः। पाणिपादमिति मार्कण्डेयः, तन्मूलत्वाच्चेष्टाया गर्भस्य। मध्यशरीरमिति सुभूतिर्गौतमः, तन्निवद्धत्वात्सर्वगात्रसभवस्य। तत्तु न सम्यक्, सर्वाण्यङ्गप्रत्यङ्गानि युगपत्सभवन्तीत्याह धन्वन्तरिः। गर्भस्य सूक्ष्मत्वान्नोपलभ्यन्ते वशाङ्कुरवच्चूतफलवच्च ॥" इति।

तथापि क्रमेणोत्पत्त्यभावेऽपि प्रव्यक्तिः क्रमेणैव कालभेदेन भवतीति न क्रमवादयौगपद्यवादयोः परस्परव्याघातः।

कलल त्वेकरात्रेण पञ्चरात्रेण बुद्बुदम्।
दशाहेन तु कर्कन्धू पेश्यण्ड वा ततः परम् ॥
मासेन तु शिरो द्वाभ्या बाह्वङ्घ्र्याद्यङ्गविग्रहः।
नखलोमास्थिचर्माणि लिङ्गच्छिद्रोद्भवास्त्रिभिः ॥
चतुर्भिर्धातवः सप्त पञ्चभिः क्षुत्तृडुद्भवः।
षड्भिर्जरायुणा वीतः कुक्षौ भ्राम्यति दक्षिणे ॥

[ भाग० ३।३१।२–४ ]

यद्यप्यत्र पूर्वोपदर्शितप्रमाणेष्वङ्गप्रत्यङ्गानामभिव्यक्तौ कालभेददर्शनेन विरोधः प्रतीयते तथापि बीजादङ्कुरोद्गमकालस्यानियतत्वमिवाङ्गाभिव्यक्तावप्यनियतकालत्व सभवीति न विरोधः।

पितृप्राप्तव्याङ्गजातस्याप्राप्त्या चास्य केवलरजस्सभवस्यापूर्णगर्भत्वम्। तथा हि— "एतच्छरीर षाट्कौशिकमिति गीयते। तत्र त्रीणि लोमलोहितमासानि मातृतः, पितृतस्तु त्रीणि स्नाय्वस्थिमज्जान इति षट्कोशाः" इत्याह वाचस्पतिमिश्रः 'सूक्ष्मा मातापितृजाः' इति साख्यकारिकाव्याख्यावसरे। अत्र लोमपद लोमाश्रयत्वगुपलक्षकम्। अन्यथात्र वक्ष्यमाणेन लोम्ना सुश्रुतोक्तपितृजत्वेन विरोधः स्यात्। इद चोपलक्षणम्, गर्भे कठिनस्य सारभागस्य च पितृजत्व कोमलस्य तु मातृजत्वमित्येतस्यार्थस्यात्र विवक्षितत्वात्। तेन लोमशुक्रादीनामपि पितृजत्व सिद्ध्यति, अतो नैषा पितृजत्वप्रतिपादकवक्ष्यमाणशास्त्रान्तरविरोधः।

अत्र गर्भस्य मातापितृजत्वविमर्शप्रस्तावे गर्भजनकसामग्रीविमर्शोऽत्यन्तमुपयुज्यते, सामग्रीगुणदोषयोर्गर्भे सक्रमसभवेन प्रधानस्य निबन्धविषयस्यारादुपकारकत्वात्। तत्र चरके

मातापित्रादीनां तृणारणिमणिन्यायेन प्रत्येककारणत्वं भारद्वाजमतेन निराकृत्य कूटागाररथादिन्यायेन मातापित्रादिमेलकस्य कारणत्वमात्रेयमतेन समर्थितम्—"नेति भगवानात्रेयः, सर्वेभ्य एभ्यो भावेभ्यः समुदितेभ्यो गर्भोऽभिनिर्वर्तते ।" [ शारीर० ३।११ ] इति । तत्र गर्भो मातृजः, पितृजः, आत्मजः, सात्म्यजः, रसजः, सत्त्वज इति कृत्वा कारणषट्कप्रभवः । तत्र गर्भस्य मातृजत्वं तत्रैव—

"मातृजश्चायं गर्भः । नहि मातुर्विना गर्भोत्पत्तिः स्यात् । न च जन्म जरायुजानाम् । यानि खल्वस्य गर्भस्य मातृजानि यानि चास्य मातृतः संभवतः संभवन्ति तान्यनुव्याख्यास्यामः । तद्यथा—त्वक् च लोहितं च मांसं च मेदश्च नाभिश्च हृदयं च क्लोम च यकृच्च प्लीहा च वृक्कौ च बस्तिश्च पुरीषाधानं चामाशयश्च पक्वाशयश्चोत्तरगुदं चाधरगुदं च क्षुद्रान्त्रं च स्थूलान्त्रं च वपा च वपावहनं चेति मातृजानि ॥" [ शारीर० ३।१२ ] इति ।

पितृजत्वं च—

"पितृजश्चायं गर्भः । नहि पितुर्ऋते गर्भोत्पत्तिः स्यात् । न च जन्म जरायुजानाम् । यानि खल्वस्य गर्भस्य पितृजानि यानि चास्य गर्भस्य संभवतः संभवन्ति तान्यनुव्याख्यास्यामः । तद्यथा—केशश्मश्रुनखलोमदन्तास्थिशिरास्नायुधमन्यः शुक्रमिति पितृजानि ॥" [शारीर० ३।१३]

आत्मजत्वं च—

"आत्मजश्चायं गर्भः । गर्भात्मा ह्यन्तरात्मा यः, तं जीव इत्याचक्षते शाश्वतमरुजमजरममरमक्षयमभेद्यमच्छेद्यमलोड्यं विश्वरूपं विश्वकर्माणमव्यक्तमनादिमनिधनमक्षरमपि । स गर्भाशयमनुप्रविश्य शुक्रशोणिताभ्यां संयोगमेत्य गर्भत्वेन जनयत्यात्मनाऽऽत्मानम् । आत्मसंज्ञा हि गर्भे, तस्य पुनरात्मनो जन्म अनादित्वान्नोपपद्यते । तस्मादजात एवायमजातं गर्भं जनयति ॥" [ शारीर० ३।१४ ] इत्यादि ।

अयं भावः—यथा बालस्य युवत्वाद्यवस्था अजाता जन्यन्ते तथा नित्यत्वेनाजात एवात्मा षड्धातुकगर्भस्वरूपेणात्मानं जनयति । तथा च गर्भस्य चैतन्यं धर्माधर्महेतुक्रियानुष्ठानं चात्मजमेव न तु भूतसंघातोत्थम्, अचेतनस्य चेतनानुपादानत्वादिति ।

ननु यद्यात्मा गर्भरूपेणात्मानं जनयति तदा वशित्वादिगुणयुक्तमेव जनयेत्, किमित्यनिष्टयोनिषु जनयति दुःखिनमसमर्थं चेत्याशङ्क्याग्रे समाहितम्—

"न खलु गर्भस्य न मातुर्न पितुर्नात्मनः सर्वभावेषु यथेष्टकारित्वमस्ति । ते किञ्चित् स्ववशात् कुर्वन्ति, किञ्चित् कर्मवशात् । क्वचिच्चैषां करणशक्तिर्भवति, क्वचिन्न भवति । यत्र

सत्त्वादिकरणसंपत् तत्र यथाबलमेव यथेष्टकारित्वम्, अतोऽन्यथा विपर्ययः। न च करणदोषाद कारणमात्मा संभवति गर्भजनने। दृष्ट च इष्टा योनिरैश्वर्यं मोक्षश्चात्मविद्भिरात्मायत्तम्। नह्यन्यः सुखदुःखयो. कर्ता। न चान्यतो भूतसंघाद्गर्भो जायते जायमानः, न चाङ्कुरोत्पत्तिरबीजात् ॥"

[ शारीर० ३।१५ ] इति।

अय भावः—यथा मातापितरौ स्ववशौ मैथुन गर्भकारण सात्म्यरससेवादिक चाचरतः, गर्भस्य जीवाधिष्ठानादौ तु कर्माधीनत्वेन परवशौ, तथाऽऽत्मापि गर्भस्य चैतन्ये तथा धर्माधर्म-हेतुकक्रियानुष्ठाने स्ववशः, इष्टानिष्टयोन्यादिगमने तु धर्माधर्मपराधीन एव। दृष्टं च सत्त्वादि-करणसंपदाऽऽत्मविद्भिरिष्टयोन्यादिगमनमप्यात्माधीनमिति। अपि च—

"यानि खल्वस्य गर्भस्यात्मजानि यानि चास्यात्मतः संभवतः सभवन्ति तान्यनुव्याख्यास्यामः। तद्यथा–तासु तासु योनिषूत्पत्तिरायुरात्मज्ञान मन इन्द्रियाणि प्राणापानौ प्रेरण धारणमाकृतिस्वर-वर्णविशेषाः सुखदुःखे इच्छाद्वेषौ चेतना धृतिर्बुद्धिः स्मृतिरहङ्कारः प्रयत्नश्चेत्यात्मजानि ॥"

[ शारीर० ३।१६ ]

अत्र प्रेरण धारण चेन्द्रियाणामेव। अत्र यद्यपि तत्तद्देवादिपश्वादियोनिगमनादिक धर्मा-धर्मजन्य तथापि धर्माधर्मयोरप्यात्मजन्यत्वेन तत्राप्यात्मैव मूलकारणमुच्यते। आत्मज्ञान-प्राणापानप्रेरणादौ तु मनःकरण आत्मैवाव्यवधानेन कारणम्।

सात्म्यजत्वं च तत्रैव—

"सात्म्यजश्चाय गर्भः। नह्यसात्म्यसेवित्वमन्तरेण स्त्रीपुंसयोर्वन्ध्यत्वमस्ति। गर्भेषु वाप्य-निष्टो भावः। यावत्खल्वसात्म्यसेविना स्त्रीपुरुषाणा त्रयो दोषाः प्रकुपिताः शरीरमुपसर्पन्तो न शुक्रशोणितगर्भाशयोपघातायोपपद्यन्ते तावत्समर्था गर्भजननाय भवन्ति। सात्म्यसेविना पुनः स्त्रीपुरुषाणामनुपहतशुक्रशोणितगर्भाशयानामृतुकाले संनिपतिताना जीवस्यानवक्रमणाद्गर्भा न प्रादुर्भवन्ति। नहि केवल सात्म्यज एवाय गर्भः, समुदायोऽत्र कारणमुच्यते। यानि खल्वस्य गर्भस्य सात्म्यजानि, यानि चास्य सात्म्यतः सभवतः सभवन्ति तान्यनुव्याख्यास्यामः। तद्यथा–आरोग्यमनालस्यमलोलुपत्वमिन्द्रियप्रसादः स्वरवर्णबीजसंपत् प्रहर्षभूयस्त्व चेति सात्म्यजानि ॥"

[ शारीर० ३।१७ ]

अत्र सात्म्यं स्वस्वप्रकृत्यनुकूलान्नपानादिसेवनम्। रसजत्वमपि तत्रैव—

"रसजश्चाय गर्भः। नहि रसादृते मातुः प्राणयात्रापि स्यात्, किं पुनर्गर्भजन्म। न चैवाऽसम्यगुपयुज्यमाना रसा गर्भमभिनिर्वर्तयन्ति। न च केवल सम्यगुपयोगादेव रसाना

गर्भाभिनिर्वृत्तिर्भवति । समुदायोऽप्यत्र कारणमुच्यते । यानि तु खल्वस्य गर्भस्य रसजानि यानि चास्य रसतः सभवतः सभवन्ति तान्यनुव्याख्यास्याम. । तद्यथा—शरीरस्याभिनिर्वृत्तिरभिवृद्धि. प्राणानुबन्धस्तृप्तिः पुष्टिरुत्साहश्चेति रसजानि ॥" [ शारीर० ३।१८ ]

समुदायोऽप्यत्र कारणमित्यनेन सम्यग्रससेविनामपत्यसभवे धर्मादयोऽपि कारणमिति दर्शयति । अभिनिर्वृत्तिरङ्गप्रत्यङ्गप्रव्यक्तता । प्राणानुबन्धो बलानुबन्ध. । पुष्टिरुपचयः स्थौल्यम् । वृद्धिस्तु दैर्घ्येण शरीरस्य वृद्धिः ।

सत्त्वजत्वमपि—

"अस्ति खल्वपि सत्त्वमौपपादुकम् । यज्जीव स्पृक्शरीरेणाभिसबध्नाति, यस्मिन्नपगमनपुरस्कृते शीलमस्य व्यावर्तते, भक्तिर्विपर्यस्यते, सर्वेन्द्रियाण्युपतप्यन्ते, बलं हीयते, व्याधय आप्याय्यन्ते, यस्माद्धीनः प्राणाञ्जहाति, यदिन्द्रियाणामभिग्राहक च मन इत्यभिधीयते, तत्त्रिविधमाख्यायते—शुद्ध राजस तामसमिति । येनास्य खलु मनोभूयिष्ठ तेन द्वितीयायामाजातौ सप्रयोगो भवति । यदा तु तेनैव शुद्धेन सयुज्यते तदा जातेरतिक्रान्ताया अपि स्मरति । स्मार्त हि ज्ञानमात्मनस्तस्यैव मनसोऽनुबन्धादनुवर्तते । यस्यानुवृत्तिं पुरस्कृत्य पुरुषो जातिस्मर इत्युच्यते । इति सत्त्वमुक्तम् । यानि खल्वस्य गर्भस्य सत्त्वजानि यानि चास्य सत्त्वतः सभवतः सभवन्ति तान्यनुव्याख्यास्यामः । तद्यथा—भक्तिः शील शौच द्वेषः स्मृतिर्मोहस्त्यागो मात्सर्य शौर्य भय क्रोधस्तन्द्रोत्साहस्तैक्ष्ण्य मार्दव गाम्भीर्यमनवस्थितत्वमित्येवमादयश्चान्ये । ते सत्त्वविकाराः, यानुत्तरकाल सत्त्वभेदमधिकृत्योपदेक्ष्यामः । इति सत्त्वजानि । नानाविधानि खलु सत्त्वानि, तान्येकपुरुषे भवन्ति, न च भवन्त्येककालम्, एक तु प्रायोवृत्त्याऽऽह ॥" [ शारीर० ३।१६ ]

अय भावः—सत्त्व मनो गर्भ प्रत्यौपपादुक साधनमस्ति । यतो मनो जीवमात्मान स्पृक्शरीरेण ( स्पर्शवता शरीरेण स्थूलदेहेन ) अभिसबध्नाति । तस्मान्मन उपपादुक साधनमस्तीति योजना । एव मन्यते—यदि मनोऽत्रात्मनः शरीरसबन्धे न स्वीक्रियते तदा व्यापकत्वादात्मनः सर्वत्रैवोपलब्ध्या भवितव्यम्, न च भवति । तस्माद्यत्रैव स्पर्शवति शरीरे मनः प्रतिबद्ध भवति तत्रैवाय सुखाद्युपलभते । 'स्पृक्' इति विशेषणेन शरीरस्य मूत्रनखकेशादौ मनोगमनाभावादात्मनोऽनुपलब्धि दर्शयति । औपपादुकमित्यस्यात्मन सुखदुःखाद्युपलब्ध्युपपादकमित्यर्थः । यद्यप्युपपद्यत इति व्युत्पत्त्योपपादुकमिति भवति, 'लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ्' [ ३।२।१५४ ] इति पाणिनिसूत्रात् , तथाप्युपपद्यत इत्यस्यान्तर्भावितण्यर्थत्वमाश्रित्य प्रकृतार्थसगतिः । उपपादुकमेवौपपादुकम् । स्वार्थे प्रज्ञादित्वादण् । अपगमनपुरस्कृते इत्यस्य देहान्तर-

गमनाभिमुखे इत्यर्थः। भक्तिर्विपर्यस्यते। अत्र भक्तिरिच्छेति चक्रदत्तः। धातूनामनेकार्थत्वाल्लक्षणया वा। इच्छा विपरीता विरुद्धार्थविषया भवतीत्यर्थः। यस्माद्धीन इति मनसा त्यक्तः। येनास्य खलु मनोभूयिष्ठमिति। येन यथाभूतेन सात्त्विकेन राजसेन तामसेन वा मनसा मनोभूयिष्ठमित्यर्थः। अत्र गुणभूयिष्ठत्वे गुणिभूयिष्ठत्वोपचारः। द्वितीयायामाजातावित्यस्य द्वितीयजन्मनीत्यर्थः। पूर्वजन्मनि यादृश मनः सत्त्वाद्यन्यतमगुणभूयिष्ठ तादृशमेव जन्मान्तरे प्रायो भवतीति भावः। यदा तु तेनैव शुद्धेन सयुज्यत इति। विशुद्धसत्त्वगुणेन मनसेत्यर्थः। अय भावः—योनियन्त्रपीडायामपि ह्युद्भूतेन तमसा विप्लुत मनो नातिक्रान्तजन्मगत स्मरति, यस्तूद्भूतसत्त्वस्तमसा नाभिभूयते स स्मरत्येवातिक्रान्तजन्मानुभूतमपीति। आत्मनः स्मृतिरूप ज्ञान मनस्सबन्धादेव भवति। मनसः स्मृतिकारणत्वमाश्रित्यैव पुरुषो पूर्वजन्मानुभूत स्मरन् जातिस्मर इत्युच्यते। यद्यप्यत्र सत्त्वस्य गर्भजनकत्व साक्षान्नोक्तम्, तथापि सत्त्वस्य यदुपपादकत्व गर्भ प्रति तेनैव सत्त्वस्य गर्भजनकत्वं प्रतिज्ञात भवति। तेन गर्भे सत्त्वजभावभक्तिशीलादिकथनमुपपन्नमेव। गर्भकारणस्यापि सत्त्वस्योपपादुकभावयोपपादकत्वेन प्रयोजकत्वेन रूपेण यत्कारणत्वमुक्त तद् गर्भकारणत्वातिरिक्तस्य देहाद् देहान्तरगमनरूपमनोधर्मस्य प्रतिपादनार्थम्। भक्तिशीलादयो गर्भे सत्त्वविकारा. सत्त्वजा मनोजन्मान इत्यर्थः। नानाविधानि खलु सत्त्वानि मनासि सात्त्विकराजसतामसवृत्तिभेदेन। तान्येकपुरुषे युगपन्न भवन्ति कालभेदेन तु भवन्तीत्यर्थः। तद्यथैक एव पुरुषः कदाचिद् धर्मक्रियाया सात्त्विको भवति, कदाचित्कामचिन्ताया राजस., कदाचिन्मोहे तमोमय इति। अय सात्त्विक इत्यादिव्यपदेशस्तु सात्त्विकादिवृत्तिबाहुल्येन। तदुक्तम्—"यद्गुण चाभीक्ष्ण पुरुषमनुवर्तते सत्त्व तद्गुणमेवोपदिशन्ति बाहुल्यानुशयात्" [ सु० अ० ८ ] इति। एव गर्भस्य समुदायप्रभवत्व चरके वर्णितम्। सुश्रुतमपि वर्णनाविशेषोपलब्ध्योपन्यस्यते समासेन—

"गर्भस्य केशश्मश्रुलोमास्थिनखदन्तशिरास्नायुधमनीरेतःप्रभृतीनि स्थिराणि पितृजानि। मासशोणितमेदोमज्जहृन्नाभियकृत्प्लीहगुदप्रभृतीनि मृदूनि मातृजानि। शरीरोपचयो बल वर्णः स्थितिर्हानिश्च रसजानि। इन्द्रियाणि ज्ञान विज्ञानमायुः सुखदुःखादिक चात्मजानि। सत्त्वजान्युत्तरत्र वक्ष्यामः। वीर्यमारोग्य बलवर्णौ मेधा च सात्म्यजानि ॥" [ सु० शा० अ० ३ ] इति।

इत्थ शुक्राभावे केवलरजसो गर्भकारणत्वाभावः, केवलशुक्रस्य तु बीजवैशिष्ट्येन कारणान्तरसनिधानेन च सर्वावस्थासपन्नमनुष्यदेहोत्पादकत्व पुराणादिप्रसिद्धम्, पुशुक्र एव जीवस्थितिश्चेति श्रुतिस्मृतिपुराणयुक्तीराश्रित्य साधितम्। अथाधुना प्रकारान्तरेणापि गर्भस्य

समुदायप्रभवत्व प्रकृतोपयोगित्वेन सगत्या चायुर्वेदपद्धत्या प्रदर्श्यते । तत्र ऋतुक्षेत्राम्बुबीजाना मेलकस्य गर्भ प्रति कारणत्वमुक्त सुश्रुते । तद्यथा—

ध्रुव चतुर्णा सान्निध्याद्गर्भ. स्याद्विधिपूर्वक ।
ऋतुक्षेत्राम्बुबीजाना सामग्र्यादङ्कुरो यथा ॥
एव जाता रूपवन्तः सत्त्ववन्तश्चिरायुष. ।
भवन्त्यृणस्य मोक्तारः सत्पुत्रा. पुत्रिणो हिता. ॥
[शारीर० ३।३३-३४]

अत्र गर्भपक्षे ऋतुः स्त्रीणा रजस्समयः । क्षेत्र गर्भाशयः । अम्बु आहारपाकजो रस इति केचित् । अन्ये तु शोणितमपि, अम्बुसादृश्यात् । बीज गर्भोपादानं शुक्रशोणितमिति केचित् । अन्ये तु शुक्रमेव, "मा ते क्षेत्रे परबीजान्यवाप्सुः" इत्यादिश्रुतौ, 'क्षेत्रभूता स्मृता नारी बीजभूतः स्मृत. पुमान् । क्षेत्रबीजसमायोगात् सभवः सर्वदेहिनाम् ॥" इति प्रबद्धके मनुस्मृतौ बीजवापपदे च लौकिकवापपदस्यावयविनि बीजपदस्य शुक्र एव प्रयोगात् । युक्त चैतत् । बीजपदस्य हि शुक्रे वापकर्मत्वेनाङ्कुरसब्रह्मचारिगर्भाकाराधारत्वेन च गौणः प्रयोगः । शक्त्या प्रयोगस्त्वनभिव्यक्ताङ्कुराकाराधारव्रीहियवादिबीज एव । तदुभयमपि स्त्रीरजसि नोपपद्यते, अनुप्यमानत्वात् प्रागुक्तप्रमाणैर्गर्भाकारानाधारत्वाद् सूपावच्छुक्रगताकाराभिव्यञ्जकत्वाच्च । प्रागुक्तरीत्या पुरुषबीजे विद्यमाना एव हि स्त्रीपुरुषाकारा सूपास्थानया मात्राऽभिव्यज्यन्ते । "न कारणात् स्वाद्विभिदे कुमार. प्रवर्तितो दीप इव प्रदीपात्" इति हि रघु० । सत्कार्यवादसिद्धान्तस्यैव साङ्ख्ये वेदान्त आयुर्वेदे चाभ्युपगमाद् युक्तत्वाच्च । यद्यपि मातुर्मुखाद्याकारोऽपि पुत्रे कन्याया च दृश्यते तथापि तन्न विरुध्यते । अस्ति हि शुक्रे पितुः स्वीयाकारो मनुष्यसामान्याकारश्च । अस्ति च रजसि स्त्रियाः स्वीयो विशेषाकारो मनुष्यसामान्याकारश्च । विशेषस्य सामान्याभावेऽभावात् । सूपायाश्च न गर्भेऽविद्यमानाकाराधायकत्वम् , किन्तु तत्र विद्यमानाकारव्यञ्जकत्वमेव स्वाकार द्वारीकृत्य । अन्यथा सत्कार्यवादसिद्धान्तभङ्गः स्यात् । सूपायाश्च व्यङ्ग्याकारसमानाकारत्वमेव । तत्र शुक्राधिक्ये तद्बलवत्त्वे वा पितुराकारविशेषपरिग्रहो गर्भस्य, शोणिताधिक्ये तद्बलवत्त्वे वा मातुराकारविशेषपरिग्रहो गर्भस्येति कल्पनात् । सूपारूपत्व च स्त्रिया उक्त काश्यपसंहितायाम् । तद्यथा —

"जातौ जातौ खलु स्वभाव एवाकृतिभेदन्निर्वर्तयिता भवति । स्वभावतो ह्यस्य वायुपरमाणवः सयोगविभागचेष्टाधिकारा आकुञ्चनप्रसारणकोष्ठाङ्गप्रत्यङ्गधातुचेतनास्रोतासि विभ-

जन्ति। समत्यके ( मधूच्छिष्टबिम्बे ) धातुरिव निषिक्तः पुरुषः पुरुषमभिनिर्वर्तयति, गौर्गा-मश्वोऽश्वमेवमादि। नृणामपि तु मन्ये गर्भनिर्वृत्तिः। तत्र द्वयोर्दम्पत्योः स्वभावात् स्वकर्म-परिणामाद्वा प्रजाभिवृद्धिर्भवति। तौ धन्यौ। अन्यथा भिषजितव्यौ" इति।

[ जातिसूत्रीयशारीराध्याये ३ ]

चरके पतञ्जलिरपि—

"जरायुजानामण्डजाना च प्राणिनामेते या या गर्भकरा भावा योनिमापद्यन्ते तस्या तस्या योनौ तथा तथारूपा भवन्ति। तद्यथा कनकरजतताम्रत्रपुसीसकान्यासिच्यमानानि तेषु तेषु मधूच्छिष्टसिक्थकेषु। ते यदा मनुष्यबिम्बमापद्यन्ते तदा मनुष्यविग्रहेण जायन्ते। तस्मात्समुदायात्मकः सन् गर्भो मनुष्यादिविग्रहेण जायते। मनुष्यश्च मनुष्यप्रभव उच्यते, तद्योनित्वात्" इति।

अत्र काश्यपसूत्रे जातिपदेन जन्म गृह्यते। स्वभावो दम्पत्योराकारविशेषरूपोऽसाधारणो धर्मः, स्वस्य भावोऽसाधारणो धर्मः स्वभाव इत्यर्थस्वीकारात्। आकृतिभेदनिर्वर्तयिता गर्भाकारविशेषजनको भवतीत्यर्थः। इद च स्वभाव एव सर्वत्र कारण न तौ धर्माधर्माविति वादिना मतमाश्रित्य। अग्रे च सर्वमदृष्टाधीनमित्याश्रित्य स्वकर्मपरिणामाद्वेत्युक्तम्।

आपस्तम्बधर्मसूत्रे तु स्त्रिया दधिधानीरूपत्वमुक्तम्। तद्यथा—

"दधिधानीसधर्मा स्त्री भवति। यो हि दधिधान्यामप्रयतं पय आतञ्च्य मन्थति न तेन धर्मकृत्य क्रियेत, एवमशुचिशुक्र यन्निर्वर्तते न तेन सप्रयोगो विद्यते" इति।

[ प्रायश्चित्तप्रकरणे १३–१४ ]

व्याख्यातं च—"यो हि पुरुषो दधिधान्या स्थाल्यामप्रयत श्वाद्युपहत पय आतञ्च्य तक्राद्यातञ्चनेन सस्कृत्य मन्थति न तेन तदुत्पन्नेन घृतादिना धर्मकृत्यं यागादि क्रियते, एव पतितसम्बन्धेनाशुचिशुक्र स्त्रिया निषिक्त शोणितेनाक्त यन्निर्वर्तते येन रूपेण निष्पद्यते न तेन सह सयोगो विद्यते शिष्टानाम्" इति।

तत्र यद्यपि पूर्व जीवः सामान्यात्मना शुक्र एव स्थितस्तस्य शोणितसंयोगे तु शुक्रशोणितयोर्द्वयोरपि तथापि ते शुक्रशोणिते न केवले गर्भ जनयतः, किन्तु ऋतुकालापेक्षे धर्माधर्मापेक्षे चेत्यग्रिमे काश्यपसूत्रे दर्शितम्—

"यथा च पुष्पमध्ये फलमभिनिर्वृत्त सुसूक्ष्ममस्ति न चोपलभ्यते, यथा चाग्निर्दारुषु सर्वगतः प्रयत्नाभावान्नोपलभ्यते तथा स्त्रीपुंसयोः शोणितशुक्रे कालावेक्षे स्वकर्मावेक्षे च भवतः।

षोडशवर्षयोर्हि शोणितशुक्रयोर्मध्ये प्रभवतः । अर्वागपि यदाहारविशेषादारोग्याच्च पूर्णे भवतः । इति परिषत्" इति ।

ऋतुकालस्य शास्त्रतो नियतस्य गर्भे नियमेनापेक्षामधिकृत्यैव कालव्युत्क्रमे गर्भविक्रिया कालभेदेनापत्यभेदोऽप्यग्रिमसूत्राभ्या प्रतिपादितौ । तद्यथा—

"रजस्वलायाश्चेत्प्रथमेऽहनि गर्भ आपद्येत त वातगर्भमित्याचक्षते विफल वातपुष्पमिवो द्भिदादीनाम् । द्वितीयेऽहनि चेत्स्रसते च्यवते वा । तृतीयेऽहनि सूतिकासने म्रियते न वा दीर्घायुर्भवति हीनाङ्गश्च जायते । अत ऊर्ध्वमृतुर्द्वादशाह ब्राह्मणीनाम्, एकादशाह क्षत्रियाणाम्, दशाह वैश्यानाम्, नवरात्रमितरासाम् । ऋतुर्बीजकालमवेक्षत इत्याहुर्महर्षयः । अत ऊर्ध्वमकालजमाहुः । अकाल हीन दुर्बलमस्थिरमदृढमपीन भङ्गुर धान्यमिव भवति" इति । "युग्मेष्वहस्सु पुत्रकामोऽन्यत्र कन्यार्थी हर्षितस्तृप्तोऽनुरुद्धः स्त्रियमुपेयादिति सिद्धम्" इति च ।

समानप्रकरणे सुश्रुते च किञ्चिद्गुणदोषविशेषोपन्यासपुरस्सरमयमेवार्थः प्रदर्शित इति विशेषार्थलोभेनोपन्यस्यते—

"सर्पिःस्निग्धः सर्पिःक्षीराभ्या शाल्योदन भुक्त्वा मास ब्रह्मचारिणी तैलस्निग्धा तैलमाषोत्तराहारा नारीमुपेयाद्रात्रौ सामादिभिरभिविश्वास्य । विकल्प्यैव चतुर्थ्या षष्ठ्यामष्टम्या दशम्या द्वादश्या चोपेयादिति पुत्रकामः ।

> एषूत्तरोत्तरं विद्यादायुरारोग्यमेव च ।
> प्रजासौभाग्यमैश्वर्य बल च दिवसेषु वै ॥

अतः पर पञ्चम्या सप्तम्या नवम्यामेकादश्या च स्त्रीकामः ( कन्याकामः ) । त्रयोदशीप्रभृतयो निन्द्याः ( नपुसकजननात्तासा निन्द्यत्वम् )" इति ।

अत्र चतुर्थत्वादिकमृतुकालरात्रिगत वेदितव्यम् ।

"तत्र प्रथमे दिवसे ऋतुमत्या मैथुनगमनमनायुष्य पुसा भवति । यश्च तत्राधीयते गर्भः स प्रसवमानो विमुच्यते (प्राणेभ्यः) । द्वितीयेऽप्येव सूतिकागृहे वा । तृतीयेऽप्येवमसपूर्णाङ्गोऽल्पायुर्वा भवति । चतुर्थे तु सपूर्णाङ्गो दीर्घायुश्च भवति । न च प्रवर्तमाने रक्ते बीज प्रविष्ट गुणकर भवति । यथा नद्या प्रतिस्रोतः ( धाराभिमुखम् ) प्लाविद्रव्य प्रक्षिप्त प्रतिनिवर्तते नोर्ध्व गच्छति, तद्वदेव द्रष्टव्यम् । ( अतश्चतुर्थेऽपि दिवसे रजोनिवृत्त्यभावे न सगच्छेत स्त्रियेति भावः । ) तस्मान्नियमवती त्रिरात्र परिहरेत । अतः पर मासादुपेयात्" इति ।

इत्थं गर्भस्य समुदायप्रभवत्वेऽपि बीजस्यैव प्राधान्येन कारणत्वं न तु शोणितस्यान्येषां वा। नापि शोणितस्य समप्राधान्यं तत्र। किन्तु मानवशरीरे यथा पञ्चभूतात्मके पृथिव्या उपादानत्वं जलादीनां तु पोषकत्वेन सहकारित्वमेव, यथा वा बीजाङ्कुरे बीजस्यैवोपादानत्वमृतु-क्षेत्राम्बूनां तूपकारकत्वमेव, तथा गर्भेऽपि शुक्रातिरिक्तानाम्, बीजस्थानीयत्वात्तस्येत्युक्तप्राय सप्रमाणं पूर्वमेव। मनुवाक्यादपि बीजस्यैव प्रसवे उत्कृष्टत्वं समायाति। मनुवाक्यं च सर्वाभ्य-र्हितं प्रमाणम्–'यन्मनुरवदत् तद्भेषजम्', 'मन्वर्थविपरीता तु या स्मृतिः सा न शस्यते' इत्यादि-श्रुतिस्मृतिभ्यः। मनुवाक्यानि च—

पुत्रं प्रत्युदितं सद्भिः पूर्वजैश्च महर्षिभिः।
विश्वजन्यमिमं पुण्यमुपन्यासं निबोधत॥
भर्तुः पुत्रं विजानन्ति श्रुतिद्वैधं तु भर्तरि।
आहुरुत्पादकं केचिदपरे क्षेत्रिणं विदुः॥
क्षेत्रभूता स्मृता नारी बीजभूतः स्मृतः पुमान्।
क्षेत्रबीजसमायोगात् संभवः सर्वदेहिनाम्॥
विशिष्टं कुत्रचिद्बीजं स्त्रीयोनिस्त्वेव कुत्रचित्।
उभयं तु समं यत्र सा प्रसूतिः प्रशस्यते॥
बीजस्य चैव योन्याश्च बीजमुत्कृष्टमुच्यते।
सर्वभूतप्रसूतिर्हि बीजलक्षणलक्षिता॥
यादृशं तूप्यते बीजं क्षेत्रे कालोपपादिते।
तादृग् रोहति तत्तस्मिन् बीजं स्वैर्व्यञ्जितं गुणैः॥
इयं भूमिर्हि भूतानां शाश्वती योनिरुच्यते।
न च योनिगुणान् कांश्चिद्बीजं पुष्यति पुष्टिषु॥
भूमावप्येककेदारे कालोप्तानि कृषीवलैः।
नानारूपाणि जायन्ते बीजानीह स्वभावतः॥
व्रीहयः शालयो मुद्गास्तिला माषास्तथा यवाः।
यथाबीजं प्ररोहन्ति लशुनानीक्षवस्तथा॥
अन्यदुप्तं जातमन्यदित्येतन्नोपपद्यते।
उप्यते यद्धि यद्बीजं तत्तदेव प्ररोहति॥

तत्प्राज्ञेन विनीतेन ज्ञानविज्ञानवेदिना ।
आयुष्कामेन वप्तव्य न जातु परयोषिति ॥

[ मनु० ९।३१–४१ ]

विशिष्ट कुत्रचिद्बीजमिति मनुवाक्ये यथा परशुरामस्य दत्तात्रेयस्य च पितृजात्या ब्राह्मणत्वमेव न तु मातृजात्या क्षत्रियत्वम् । स्त्रीयोनिस्त्वेव कुत्रचिदिति । यथा शङ्खादि-स्मृतौ सकरजातिवर्णनावसरे मातृसधर्माणस्त इत्युक्तम् । उभय तु सम यत्रेति । यत्र बीजस्य योनेश्च समत्व सजातीयत्वमित्यर्थः । तदुक्त मनुना—'सवर्णेभ्यः सवर्णासु जायन्ते हि सजातय' इति । अन्यथा सकरजातीय इति भावः । बीज स्वैर्व्यञ्जित गुणैरिति, यथाबीज प्ररोहन्तीति, अन्यदुप्त जातमन्यदित्येतन्नोपपद्यत इति चाशत्रयेण बीजे पुरुषशुक्र एव गर्भाकारसत्त्वमिति स्पष्टमेवोक्तम् ।

इत्थ प्रसवे बीजस्यैवोत्कृष्टत्वम् , फलभागित्व तु क्षेत्रिकस्यैव भवति । दृष्ट च पाण्ड्वादि-पाण्डवेयाद्युपाख्यानेषु पुराणे । एतद्दृष्ट्या तु क्षेत्रस्य बीजापेक्षया महत्त्व तत्रैवाग्रे लौकिक-दृष्टान्तैः समर्थितम् ।

एव यथा गर्भस्य प्रागुक्तरीत्या कारणषट्कप्रभवत्व यथा च समनन्तरोक्तदिशा ऋतु-क्षेत्राम्बुबीजरूपकारणचतुष्कप्रभवत्व तथा सकल्पप्रभवत्व तत्तदौषधोपचारप्रभवत्वमप्युक्तम् । तच्च सकल्पस्य मनोवृत्तिरूपत्वेन सत्त्वजत्वेन गतार्थम् । औषधोपचारप्रभवत्व तु रसजत्वेन गतार्थम् । औषध हि निर्दुष्टरसजननेन दोषापनयेन गुणाधानेन च स्त्रीपुसयोः शोणितशुक्रयो-रुपकरोति । तत्र सकल्पप्रभवत्व यथा श्रुतौ—

अङ्गादङ्गात् संभवसि हृदयादधिजायसे ।
आत्मा वै पुत्रनामासि त्व जीव शरदः शतम् ॥ इति ।

[ पारस्कर० १८ कण्डिका ]

व्याख्यात च जयरामादिभिः—"अङ्गादङ्गात् सर्वाङ्गस्थितात् शुक्रात् संभवसि । तेन पितुरङ्गवैकल्येऽपि न गर्भाङ्गवैकल्यम् । हृदयाद् अन्तरङ्गादपि अधि अधिकतया जायसे, न केवल शुक्रादेव किन्तु ततोऽप्यधिक हृदयाज्जायसे । अत्र हृदयपदेन हृदयस्य वृत्तिरूपः सकल्पो गृह्यते । तत्र यथा जगतः परमेश्वरसंकल्पप्रभवत्वं तथा गर्भस्यापि पितृसंकल्पप्रभवत्वम् । जगतः संकल्पप्रभवत्व च सृष्टिप्रकरणे सर्वत्रैव श्रुतिषु–'तदैक्षत बहु स्या प्रजायेय तत्तेजोऽसृजत' इत्यादिरीत्या श्रुतम् । अत्र भगवतो मायावृत्त्यात्मकमीक्षण संकल्प एवेति तद्भाष्यादौ स्पष्टमेव ।

गीतायामपि—

मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।
सम्भवः सर्वभूतानां ततो भवति भारत ॥
सर्वयोनिषु कौन्तेय मूर्तयः संभवन्ति याः ।
तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता ॥ इत्युक्तम् ।

[ भगवद्गीता १४।३ ४ ]

अत्र पूर्वपद्ये प्रागुक्तश्रुत्यनुरोधेन महति ब्रह्मणि परायां प्रकृतौ सङ्कल्पेन बीजेनाविद्याकामकर्मादिरूपं गर्भं दधामीत्यर्थोऽभिप्रेतः । अग्रिमपद्ये च 'बीजप्रदः' इत्यत्र भगवतो बीजं च शुक्रस्थानीयः सङ्कल्प एव । अत एवोदयनेनापि—'जगतामीशाय पित्रे नमः' [ आत्मतत्त्वविवेके ] इत्युक्तम् । एवमेव पितुरपि सङ्कल्पेन गर्भजनकत्वम् । यथा देवीभागवतमाहात्म्ये कपिलरूपे गर्भे कर्दमस्य सङ्कल्पप्रभावः । पुराणेषु च सर्वत्रैव प्रजापतिकर्तृकसृष्टौ सङ्कल्पप्रभावः । योगसूत्रेषु च 'बलेषु हस्तिबलादीनि' इत्यादि । दृष्टं च व्यायच्छता स्वाङ्गेषु सङ्कल्पप्रभावः । उपपद्यते चेत्थं शुक्रे पितृसङ्कल्पप्रभावस्तद्द्वारा गर्भे ।

इदं त्ववधेयम् । यथा निषेकात् प्राक् शुक्र एव जीवस्थित्या पितृधर्मविशेषपवित्राकारविशेषादिपरिग्राहित्वं गर्भस्य तथा निषेकोत्तरं शुक्रशोणितसम्प्रयोगे रजस्यपि तत्सन्निधानेन मातृधर्मतदाकारविशेषादिपरिग्राहित्वमपि गर्भस्येति । तत्रान्यतरधर्मादिपरिग्रहे तु शुक्रशोणितयोर्बलवत्त्वाबलवत्त्वे एव प्रयोजके इत्युक्तं प्राक् । अथाधुना मातुः सङ्कल्पस्य परपुरुषादिदर्शनस्यान्येषां च व्यापाराणां गर्भे गुणदोषजनकत्वेन प्रभावः प्रदर्श्यते यथाशास्त्रम् । भवन्ति चात्र गर्भे मातुरिच्छायाः प्रभावे श्लोकाः—

राजसन्दर्शने यस्या दौर्हृदं जायते स्त्रियाः ।
अर्थवन्तं महाभागं कुमारं सा प्रसूयते ॥
दुकूलपट्टकौशेयभूषणादिषु दौर्हृदात् ।
अलङ्कारैषिणं पुत्रं ललितं सा प्रसूयते ॥
आश्रमे संयतात्मानं धर्मशीलं प्रसूयते ।
देवताप्रतिमायां तु प्रसूते पार्षदोपमम् ॥
दर्शने व्यालजातीनां हिंसाशीलं प्रसूयते ।
गोधामांसाशने पुत्रं सुषुप्सुं धारणात्मकम् ॥

गवां मांसे च बलिनं सर्वक्लेशसहं तथा ।
माहिषे दौर्हृदाच्छूरं रक्ताक्षं लोमसंयुतम् ॥
वराहमांसात् स्वप्नालुं शूरं संजनयेत्सुतम् ।
मार्गाद् विक्रान्तजङ्घालं सदा वनचरं सुतम् ।
सृमराद् विग्नमनसं नित्यभीतं च तैत्तिरात् ॥
अतोऽनुक्तेषु या नारी समभिध्याति दौर्हृदम् ।
शरीराचारशीलैः सा समानं जनयिष्यति ॥
कर्मणा चोदितं जन्तोर्भवितव्यं पुनर्भवेत् ।
यथा तथा दैवयोगाद् दौर्हृदं जनयेद्धृदि ॥

[ सुश्रुते शारीरस्थाने ३।२२–२६ ]

अत्र धारणात्मकमित्यस्य हृदयगृहीतवस्तूनाममोचकमित्यर्थ इति डल्हणः । ग्रहिलमिति यावत् । मार्गाद् मृगमांसे दौर्हृदात् । दौर्हृदं गर्भिण्या अभिलाषः । सृमराद् गवयमांसाभिलाषादित्यर्थः ।

युज्यते च मातुरिच्छाप्रभावो गर्भे । यतो हि गर्भिणी द्विहृदया भवति । गर्भिण्या गर्भकालिको मनोरथो दौर्हृदपदेनोच्यते । गर्भेच्छया हि तस्या हृदयं दुष्टं तदानीं भवति । अत एव गर्भेच्छया तदानीं गर्भिणीच्छा भवति । अत एव तस्या दौर्हृदसंपादनाभावे गर्भे विक्रिया भवतीति । 'दौर्हृदस्याप्रदानेन गर्भो दोषमवाप्नुयात्' इति भिषजः । काव्येषु च तत्संपादने महान् प्रयत्नो वर्णितः—'यदेव वव्रे तदपश्यदाहृतम्' इत्यादिना रघुवंशादिषु । सुश्रुतेऽपि—"द्विहृदयां च नारीं दौर्हृदिनीमाचक्षते । दौर्हृदविमानात् कुब्जं कुणिं ( कुत्सितपाणिम् ) खञ्जं जडं वामनं विकृताक्षमनक्षं वा नारी सुतं जनयति । तस्मात्सा यद्यदिच्छेत्तत्तस्यै दापयेत् । लब्धदौर्हृदा हि वीर्यवन्तं चिरायुषं च पुत्रं जनयति । भवन्ति चात्र श्लोकाः—

इन्द्रियार्थांस्तु यान् यान् सा भोक्तुमिच्छति भामिनी ।
गर्भाबाधभयात्तांस्तान् भिषगाहृत्य दापयेत् ॥
सा प्राप्तदौर्हृदा पुत्रं जनयेत गुणान्वितम् ।
अलब्धदौर्हृदा गर्भं लभेतात्मनि वा भयम् ॥
येषु येष्विन्द्रियार्थेषु दौर्हृदे वै विमानना ।
प्रजायेत सुतस्यार्त्तिस्तस्मिंस्तस्मिंस्तथेन्द्रिये ॥" इति ।

[ शारीर० ३।१८–२१ ]

गर्भस्य तत्तदौषधोपचारप्रभवत्वमपि। तथा हि लब्धगर्भाया गर्भधारणार्थमलब्धगर्भाया गर्भग्रहणार्थं योगा उक्ताः सुश्रुते—

"लब्धगर्भाश्चैतेष्वहस्सु लक्ष्मणावटशुङ्गासहदेवाविश्वदेवानामन्यतमं क्षीरेणाभिपुत्य त्रींश्चतुरो वा बिन्दून् दद्याद् दक्षिणे नासापुटे पुत्रकामायै न च तान्निष्ठीवेत्" इति।

श्वेतपुष्पा कण्टकारिका लक्ष्मणा। वटशुङ्गः वटप्ररोहः। सहदेवा नीलपुष्पा काचनौषधिः।

काश्यपसंहितायामसमानगोत्रीये शारीराध्यायेऽपि—

"लक्ष्मणामद्भिरालोड्य 'सोमः पवते' इत्येतेन शतजप्तेन सावित्र्या व्याहृतिभिः 'अपो देवीरुपसृज' इति मन्त्रेण नस्यं दत्त्वा वामदेव्यं जपित्वा दक्षिणेन पार्श्वेन स्त्रियं शाययीत। वामपार्श्वेन पुमानूर्ध्वोत्तरेणोपशयीत। शनैः प्रजार्थं चाचरेत्। बीजेऽवसिक्ते विधार्यावसर्पेत। शीतोदकेन च शौचं कुर्यात्। तत ऊर्ध्वमग्निकर्मप्रतापायासव्यायामशोकादिवर्जनमिति" इति।

अन्ये च हरिवंशनवाहश्रवणसप्तशतीशतपारायणादयो योगाः श्रद्दधानानां कृते। कालस्यापि गर्भे प्रभावः, यतो गर्भग्रहणयोग्यः कालविशेष एव—

षोडशर्तुनिशाः स्त्रीणां तासु युग्मासु संविशेत्।
युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु॥
एवं गच्छन् स्त्रियं क्षामां मघां मूलं च वर्जयेत्।

इत्यादिमनुयाज्ञवल्क्यादिषु सुश्रुतादिषु चोक्तः। अन्यस्तु कालो वर्ज्य एव गर्भग्रहणे। बीजनिषेकप्रकारविशेषस्यापि गर्भे प्रभावो भवति। तथा च यमोत्पत्तिकारणमुक्तं सुश्रुते—

बीजेऽन्तर्वायुना भिन्ने द्वौ जीवौ कुक्षिमागतौ।
यमावित्यभिधीयेते धर्मेतरपुरस्सरौ॥ इति।

अनेनैव न्यायेनैकगर्भतो जीवत्रयाद्युत्पत्तिरपि समर्थनीया।

मातुर्ऋतुकालिकचर्याया अपि प्रभावो गुणदोषजननाभ्यां गर्भे भवति परपुरुषदर्शनप्रभावश्चेत्यपि सुश्रुते तत्रैव प्रदर्शितम्—

"ऋतौ प्रथमदिवसात्प्रभृति ब्रह्मचारिणी दिवास्वप्नाञ्जनाश्रुपातस्नानानुलेपनाभ्यङ्गनखच्छेदप्रधावनहसनकथनातिशब्दश्रवणावलेखनानिलायासान् परिहरेत्। किं कारणम्? दिवास्वपन्त्याः स्वापशीलः, अञ्जनादन्धः, रोदनाद् विकृतदृष्टिः, स्नानानुलेपनाद् दुःखशीलः, तैलाभ्यङ्गात् कुष्ठी, नखापकर्तनात् कुनखी, प्रधावनाच्चञ्चलः, हसनाच्छ्यावदन्तौष्ठतालुजिह्वः,

प्रलापी चातिकथनात्, अतिशब्दश्रवणाद् बधिरः, अवलेखनात् ( कङ्कतिकादिना केशप्रसाधनात् ) खलतिः ( निष्केशशिराः ), मारुतायाससेवनादुन्मत्तो गर्भो भवतीत्येवमेतान् परिहरेत्। दर्भसंस्तरशायिनी करतलशरावपर्णान्यतमभोजिनी हविष्यम्, त्र्यहं च भर्तुः संरक्षेत्। ततः शुद्धस्नाता चतुर्थेऽहन्यहतवासस समलङ्कृता कृतमङ्गलस्वस्तिवाचना भर्तारं दर्शयेत्। तत्कस्य हेतोः ?

पूर्वं पश्येदृतुस्नाता यादृशं नरमङ्गना।
तादृशं जनयेत्पुत्रं भर्तारं दर्शयेदतः ॥” इति।

[ शारीर० ३।२५-२६ ]

ऋतुकालिकाहाररसस्यापि भाविनि गर्भे -तत्तद्वर्णादिजननद्वारेष्टानिष्टप्रभावो दर्शितः कश्यपसंहितायाम्। तद्यथा—

‘सा चेदिच्छेद् गौरमोजस्विनं शुचिमायुष्मन्तं जनयेयमिति तस्या एव शुद्धस्नानात्प्रभृति शुक्लयवसक्तूना मधुघृताभ्यां श्वेतायाः श्वेतपुवत्साया गोः क्षीरेण सम्मृज्य मन्थं राजते पात्रे कांस्ये वा सदा पाययेत। शालिगौरयवक्षीरदधिघृतप्रायं च काले मात्रया मात्रयाऽश्नीयात्। पुष्पाभरणवासांसि च शुक्लानि बिभृयात्। सायं प्रातश्च श्वेतमश्वं वृषभं वा पश्येत्। सौम्यहितप्रियकथाभिरासीत। अनुकूलपरिवारा च स्यात्। इष्टमपत्यं जनयति। या तु श्यामं लोहिताक्षं व्यूढोरस्कं पुत्रमिच्छेत् कृष्णं वा तत्र तादृगुपचारो भोजनवसनकुसुमालङ्काराणाम्, तादृग्देशानुचिन्तनं चेति। यवागूं तु कन्यार्थिनीभ्यो दद्यात्। क्षीरोदकतिलसिद्धार्थास्तु वर्ण्याः। गौरश्यामकृष्णेभ्योऽन्ये वर्णा निन्दिताः” इति। [ शारीराध्याये ६ ]

वर्णेभ्यो हिता वर्ण्याः। अनुकूलपरिवारा इष्टजनपरिवृतेत्यर्थः।

मातापित्रोः शुक्रशोणितवैजात्यादपि गर्भे गौरकृष्णादिवर्णवैजात्यं भवति। केचित्तु मातृभुक्ताहारवैजात्येन तदित्याहुः। अत एव स श्यामो मित्रातनयत्वादित्यत्र शाकपाकजमुपाधिं नैयायिका वदन्ति। शाकपाकजमपि श्यामत्वं भवतीति तेषामाशयः। तदेतत्सर्वमुक्तं सुश्रुते—

“तत्र तेजोधातुः सर्ववर्णानां प्रभवः। स यदा गर्भोत्पत्तावब्धातुप्रायो भवति तदा गर्भं गौरं करोति। पृथिवीधातुप्रायः कृष्णम्। पृथिव्याकाशधातुप्रायः कृष्णश्यामम्। तोयाकाशधातुप्रायो गौरश्यामम्। यादृग्वर्णमाहारमुपसेवते गर्भिणी तादृग्वर्णप्रसवा भवतीत्येके भाषन्ते। तत्र दृष्टिभागमप्रतिपन्नं तेजो जात्यन्धं करोति। तदेव रक्तानुगतं रक्ताक्षं पित्तानुगतं पिङ्गाक्षं श्लेष्मानुगतं शुक्लाक्षं वातानुगतं विकृताक्षमिति” इति। [ शारीरस्थाने २।३५ ]

अत्र तेजोधातुपदेन शुक्रं शोणितं चोच्यते। यतो हि सुश्रुते तत्रैवाध्याये शुक्रस्य सौम्यत्वमार्तवस्य चाग्नेयत्वमुक्तम्। गर्भकालिकमातृभुक्तान्नादिरसस्यापि गुणदोषजननेन प्रभावो गर्भे भवति। यतो हि तस्मिन् काले तेनैव गर्भस्य पुष्टिर्भवति। तदुक्तं सुश्रुते—

"मातुस्तु खलु रसवहायां नाड्यां गर्भनाभिनाडीप्रतिबद्धा साऽस्य मातुराहाररसवीर्यमभिवहति। तेनोपस्नेहेनास्याभिवृद्धिर्भवति। असञ्जाताङ्गप्रत्यङ्गप्रविभागमानिषेकात्प्रभृति सर्वशरीरावयवानुसारिणीनां रसवहानां तिर्यग्गतानां धमनीनामुपस्नेहो जीवयतीति" इति।

ततश्च शुक्रशोणितयोश्चान्द्रत्वाग्नेयत्वाभ्यां तेजोधातुत्वं स्पष्टमेव। तच्च सुश्रुतमुपन्यस्यते। तथाहि—

"सौम्यं शुक्रमार्तवमाग्नेयम्। इतरेषामप्यत्र भूतानां सान्निध्यमस्त्यणुना विशेषेण, परस्परोपकारात्परस्परानुग्रहात्परस्परानुप्रवेशाच्च। तत्र स्त्रीपुंसयोः संयोगे तेजः शरीराद् वायुरुदीरयति। ततस्तेजोऽनिलसंनिपाताच्छुक्रं च्युतं योनिमभिप्रपद्यते संसृज्यते चार्तवेन। ततोऽग्नीषोमसंयोगात् संसृज्यमानो गर्भो गर्भाशयमनुप्रपद्यते क्षेत्रज्ञो वेदयिता स्प्रष्टा घ्राता द्रष्टा श्रोता रसयिता पुरुषः स्रष्टा गन्ता साक्षी धाता वक्ता यः कोऽसावित्येवमादिभिः पर्य्यायवाचकैर्नामभिरभिधीयते। दैवसङ्गादक्षयोऽव्ययोऽचिन्त्यो भूत्वाऽऽत्मना सहान्वक्षं सत्त्वरजस्तमोभिर्दैवासुरैरपरैश्च भावैर्वायुनाऽभिप्रेर्यमाणो गर्भाशयमनुप्रविश्यावतिष्ठते। तत्र शुक्रबाहुल्यात् पुमान्। आर्तवबाहुल्यात् स्त्री। साम्यादुभयोर्नपुंसकम्। ऋतुस्तु द्वादशरात्रं भवति दृष्टार्तवः" इति।

[ शारीरस्थाने ३।३-६ ]

अयं भावः—शुक्रं ह्यत्यन्तहर्षादिना कदाचिद् बहु स्रवति। वैमनस्यादिना कदाचिदल्पं स्रवति। एवमार्तवमपि नार्याः। एवं च नार्यपेक्षयाऽत्यन्तपुष्टस्यापि पुंसः कन्याप्रसवः, पुरुषापेक्षया प्रबलाया अपि नार्याः पुत्रप्रसव उपपद्यते। तेजः शरीराद् वायुरुदीरयतीत्यत्र तेज इति कर्मपदं स्त्रीपुरुषेन्द्रियसंनिघर्षजन्यमूष्माणमित्यर्थकम्। पूर्वसंदर्भेऽब्धातुप्राय इत्यस्य आप्यधातुबहुल इत्यर्थः। दृष्टिभागमप्रतिपन्नं तेजो जात्यन्धं करोतीत्यस्य नेत्रारम्भकावयवमप्राप्तं तद्विरहितं तेजः शुक्रं शोणितं वा गर्भं जात्यन्धं जन्मान्धं करोतीत्यर्थः।

देशस्यापि गर्भवर्णे गर्भाकारे च प्रभावो भवति। अत एव यूरोपदेशीया गौराङ्गाः पिङ्गाक्षाश्च भवन्ति। अफ्रीकावासिनः कार्त्स्न्येन, भारतेऽपि द्रविडाः प्रायेण प्राच्याश्च कृष्णवर्णा भवन्ति। अत एव च देशभेदेन मनुष्याणां मुखाद्याकारभेदोऽप्यबाधितोऽनुभूयते। वस्तुतस्तु देशभेदेन सूर्यरश्मिप्रभावविशेष एव वर्णभेदकः। ततश्च यत्राधिकः सूर्यतापस्तत्र

कृष्णवर्णा यत्र न्यूनस्तत्र गौरवर्णाः। अत एव भारतेऽपि हैमवता गौरवर्णा एव भवन्ति शीताधिक्यात्।

गर्भे बाह्यवस्तुदर्शनस्यापि प्रभावो भवति। वर्णितश्च चित्रे मातुः शस्त्रास्त्रमदर्शनजो गर्भे कुशलवयोः प्रभावः। दृष्टश्च मातृणा गर्भावस्थाकालिकः प्रभाव· पाण्डुधृतराष्ट्रविदुरेषु। गर्भग्रहणकाले मातुर्लज्जया पाण्डिम्ना गर्भस्यापि पाण्डुता, मातुर्लज्जया नेत्रनिमीलनेन गर्भस्यान्ध-त्वम्, मातुर्गर्भग्रहणकाले प्रहर्षेण लज्जाकृतविक्रियाऽभावेन च गर्भे वैदुष्य सर्वाङ्गपूर्णत्व सुन्दरत्वं चेति। उक्त च सुश्रुते—

आहाराचारचेष्टाभिर्यादृशीभि· समन्वितो।
स्त्रीपुंसौ समुपेयाता तयोः पुत्रोऽपि तादृशः॥ [ शारीरस्थाने ३।४६ ]

गर्भधारणोत्तरकालिकगर्भिणीचर्याया अपि गुणदोषजननाभ्या गर्भे प्रभावः। तथा हि काश्यपसंहितायाम्—

यानि द्रव्याणि पुण्यानि मङ्गल्यानि शुचीनि च।
नवान्यथाप्यखण्डानि पुन्नामानि प्रियाणि च॥
गर्भिण्यै तान्युपहरेद् वासास्याभरणानि च।
न स्त्रीनपुसकाख्यानि धारयेद्वाऽऽलभेत वा॥
धूपितार्चितसमृष्ट मशकाद्यपवर्जितम्।
ब्रह्मघोषैः सवादित्रैर्वादित वेश्म शस्यते॥
प्रातरुत्थाय शौचान्ते गुरुदेवार्चने रता।
अर्चेदादित्यमुद्यन्त गन्धधूपार्घ्यवाजपैः॥
क्षीयमाण च शशिनमस्त यान्त च भास्करम्।
न पश्येद् गर्भिणी नित्य नाप्युभौ राहुदर्शने॥
सोमार्कौ सग्रहौ श्रुत्वा गर्भिणी गर्भवेश्मनि।
शान्तिहोमपराऽऽसीत मुक्तयोग तु याचयेत्॥
न द्विष्यादतिथि भिक्षा दद्यान्न प्रतिवारयेत्।
स्वय प्रज्वलिते चाग्नौ शान्त्यर्थं जुहुयाद् घृतम्॥
पूर्णकुम्भं घृतं माल्य पूर्णपात्र घृत दधि।
न किञ्चित्प्रतिरुन्धीयान्न च बध्नीत गर्भिणी॥

सूत्रेण तनुना रज्ज्वा स्तम्भन बन्धनानि च ।
वर्जयेद् गर्भिणी नित्य काम बन्धानि मोचयेत् ॥
केचिदस्यामवस्थाया व्यायाम मुसलादिकम् ।
जृम्भा चङ्क्रमणाद्य च भिषजो ब्रुवते हितम् ॥
वर्जनीय तु तत्सर्व भगवानाह कश्यपः ।
नार्याः प्रसवकाले हि शरीरमुपमृद्यते ॥
त्रयो दोषाः प्रकुप्यन्ति विचाल्यन्ते च धातवः ।
गर्भिणी तदवस्था हि यत्नधार्या विशेषतः ॥
अधिक सौकुमार्य हि गर्भिण्या. क्लेश एव च ।
स्रावकाले विशेषेण विषादभयसश्रयः ॥
एकपादो यमकुले पाद एक इह स्थितः ।
दृष्ट्वा दुःख स्त्रियस्तस्या इत्येव ब्रुवते मिथः ॥
तस्या त्वस्यामवस्थाया व्यायामो न प्रशस्यते ।
व्यायामः सेव्यमानो हि गर्भिणीमाशु नाशयेत् ॥
अतिचङ्क्रमणेनापि हन्याद् गर्भमुपस्थितम् ।
अत्यय प्राप्नुयाद् घोर देहान्तकरण महत् ॥
उपविष्टाऽसकृत्तस्मादनिर्विण्णाऽन्नपान्विता ।
वृद्धस्त्रीद्रव्यसपन्ना प्रजायेत प्रजार्थिनी ॥

उपविष्टाऽसकृदिति । कदाचिदुत्थिता कदाचिच्छयाना कदाचिदुपविष्टेत्यर्थः । तेनोपवेशने पौनःपुन्य सभाव्यते । न तु दीर्घकाल कार्यगुर्वादिगौरवेण त्रपया वोपविष्टैवेति भावः । तथा सति गर्भपीडासभवात् । अनिर्विण्णेति । गर्भिण्या निर्वेदे हि गर्भेऽपि निर्वेदस्तत्प्रभावश्च स्याताम्, द्वयोरेकवृत्तिकहृदयत्वात् । अन्नपान्वितेति । त्रपाया ह्याहारविहारादिवैगुण्ये गर्भे दोषः स्यात् । वृद्धस्त्रीद्रव्यसपन्नेति । स्त्रिया वृद्धत्वविशेषण प्रसवकालिकसम्यगनुभवार्थम् । अत्र द्रव्यपद च प्रसवकालोपयोगिवस्तुपरम् । पूर्वपद्येष्वपि–'स्त्रीनपुसकाख्यानि न धारयेत्, सोमार्कौ सग्रहावस्त यान्तौ वा न पश्येत्, स्तम्भन बन्धनानि च वर्जयेत्' इत्येवमादिभिर्वाक्यैर्गर्भे बाह्यव्यापारप्रयुक्तदोषाणा सक्रान्तिः स्फुटमेवाभिहिता । अत एव श्रुतावपि–'या खर्वेण पिबति तस्यै खर्वः' इत्युक्तम् । अस्या अर्थः–ऋतुकाले गर्भकाले वा खर्वेणातिह्रस्वेन पात्रेण या पयः पिबति

तस्याः पुत्रोऽपि खर्वो भवतीति। अतो मध्यमेन पात्रेण पिबेदित्यभिप्रायः। एषा च श्रुति सिद्धान्तकौमुद्या वैदिकप्रक्रियाया 'षष्ठ्यर्थे चतुर्थीति वाच्यम्' इति वार्त्तिके उदाहृता।

गर्भलिङ्गानि दृष्ट्वा गर्भं निश्चित्य गर्भे वर्जनीयानि तत एव कालाद् वर्जयेदिति सुश्रुतेऽप्युक्तम्। गर्भलिङ्गानि यथा—

"स्तनयोः कृष्णमुखता रोमराज्युद्गमस्तथा।
अक्षिपक्ष्माणि चाप्यस्याः समील्यन्ते विशेषतः॥
अकामतश्छर्दयति गन्धादुद्विजते शुभात्।
प्रसेकः सदन चापि गर्भिण्या लिङ्गमुच्यते॥

तदा प्रभृति व्यवाय व्यायाममतितर्पणमतिकर्शन दिवास्वप्न रात्रिजागरण शोक यानारोहण भयमुत्कटुकासन चैकान्तत. स्नेहादिक्रिया शोणितमोक्षण चाकाले वेगविधारण च न सेवेत" इति।

तत्र हेतुमाह तत्रैव—

दोषाभिघातैर्गर्भिण्या यो यो भागः प्रपीड्यते।
स स भागः शिशोस्तस्य गर्भस्थस्य प्रपीड्यते॥ इति।

अत्र प्रसेक. अतिस्वेदेन शरीरस्य क्लिन्नता। सदनम् अङ्गाना शैथिल्येन क्रमस्वनुत्साहः। व्यवाय मैथुनम्। अतितर्पणम् अतिभोजनम्। अतिकर्शनम् अतिलङ्घनम्। उत्कटुकासनम् उत्कटुकम् अतितीक्ष्णम् आसनम्, गर्भायाऽहितमासन वीरासनपद्मासनादि। स्नेहादिक्रिया स्नेहेन शरीरमर्दनम्। अकाले गर्भप्रसवात्प्राक्काले। वेगविधारण मूत्रपुरीषादीनाम्। तेन हि वायोः प्रातिलोम्येन गर्भपीडा स्यादिति भावः।

मातापित्रोस्तत्पित्रादीना च क्रमागतरोगाणा प्रभावोऽपि गर्भे भवतीति लोके दृश्यते, युज्यते, शास्त्रे च दृश्यते। तथा हि चरकसहितायाम्—

'शुक्रासृगाशयात्मकालद्रव्याणा सम्पत्तौ गर्भः सुख सजायते विपरीते तु विपरीत मित्युक्तप्रायम्।" [ शारीरस्थाने २।६ ]

तत्र शुक्रासृगाशयानामदुष्टत्व सपत्। आत्मनः शुक्रशोणितयोर्गाधिष्ठातु. शुभजीवकर्मयुक्तत्व संपत्। कालस्य त्वनतितीक्ष्णत्वादिकं सपत्। गर्भिण्या हितैरन्नैरुपचार इत्येवमादिभिर्गर्भः सुखं सजायते। शुक्रादीना रोगादिदुष्टत्वे तु गर्भेऽपि त एव रोगा. सभवन्ति। दर्शित चैतच्चक्रदत्तीये—

"मनुष्यबीजं हि प्रत्यङ्गबीजभागसमुदायात्मकं स्वसदृशप्रत्यङ्गसमुदायरूपपुरुषजनकम्। तेन पिता यदि कुष्ठ्यपि भवति बीजं न दुष्टं भवति कुष्ठाधारत्वगादिजनकम्, तदा निष्कुष्ठान्येव त्वगादीनि जायन्ते। यदा त्वतिवृद्धकुष्ठतया पित्रोर्बीजमपि कुष्ठजनकदोषदुष्टं भवति तदा कुष्ठदुष्टैव त्वग् जायते। यदुक्तम्—

दम्पत्योः कुष्ठबाहुल्याद् दुष्टशोणितशुक्रयोः।
यदपत्यं तयोर्जातं ज्ञेयं तदपि कुष्ठितम्॥" इति।

चरके च वन्ध्याऽपुंसकादीन्यपत्यानि मातापितृशुक्रशोणितदोषप्रभवाण्युक्तानि। तद्यथा—

"यदा ह्यस्याः शोणिते गर्भाशयबीजभागः प्रदोषमापद्यते तदा वन्ध्यां जनयति। यदा पुनरस्याः शोणिते गर्भाशयबीजभागावयवः प्रदोषमापद्यते तदा पूतिप्रजां जनयति। यदा त्वस्याः शोणिते गर्भाशयबीजभागावयवः स्त्रीकराणां च शरीरबीजभागानामेकदेशः प्रदोषमापद्यते तदा स्त्र्याकृतिभूयिष्ठामस्त्रियं वार्तां नाम जनयति तां स्त्रीव्यापदमाचक्षते।

एवमेव पुरुषस्य यदा बीजे बीजभागः प्रदोषमापद्यते तदा वन्ध्यं जनयति। यदा पुनरस्य बीजे बीजभागावयवः प्रदोषमापद्यते तदा पूतिप्रजं जनयति। यदा त्वस्य बीजे बीजभागावयवः पुरुषकराणां च शरीरबीजभागानामेकदेशः प्रदोषमापद्यते तदा पुरुषाकृतिभूयिष्ठमपुरुषं तृणपुत्रिकं नाम जनयति तां पुरुषव्यापदमाचक्षते।

एतेन सात्म्यजानां रसजानां सत्त्वजानां चावयवानां विकृतिर्व्याख्याता" इति।

[ शारीरस्थाने ४।३१–३३ ]

एतेन रजसि स्त्रिया आकाराः पुरुषे पुरुषाकाराश्च सन्तीति प्रतीयते। स्त्रिया मूषारूपत्वं च मनुष्यसामान्याकारमादायैवेति न पूर्वोक्तविरोधः। कुष्ठरोगवदपस्मारादीनामपि वंशानुगतत्वं द्रष्टव्यम्।

पूर्वजन्मन्यभ्यस्ता गुणा दोषा वोत्तरजन्मन्यप्यनुवर्तन्त इत्यपि श्लोकद्वयेन दर्शितं सुश्रुते—

भाविताः पूर्वदेहेषु सततं शास्त्रबुद्धयः।
भवन्ति सत्त्वभूयिष्ठाः पूर्वजातिस्मरा नराः॥
कर्मणा चोदितो येन तदाप्नोति पुनर्भवे।
अभ्यस्ताः पूर्वदेहे ये तानेव भजते गुणान्॥ इति।

[ शारीरस्थाने २।५७–५८ ]

अत्र गुणपदं दोषाणामप्युपलक्षकम्। तेषामुत्तरजन्मानुवृत्तौ पूर्वजन्माभ्यासरूपहेतो-स्तुल्यत्वात्। गर्भस्य वातादिप्रकृतिकत्वकारणमपि तत्रैवोक्तम्—

शुक्रशोणितसंयोगे यो भवेद् दोष उत्कटः।
प्रकृतिर्जायते तेन तस्या मे लक्षणं शृणु॥ इति।

[ शारीरस्थाने ४।६३ ]

शुक्रशोणितसंयोगे उत्कटैर्वातपित्तकफैर्दहनपवनतोयैः सत्त्वरजस्तमोभिर्वा गर्भस्य तास्ताः प्रकृतयो भवन्तीति च तद्व्याख्यातारः।

एवं प्रागुक्तदिशा शुक्रस्य बीजस्थानीयत्वे स्त्रियाश्च क्षेत्रत्वे व्यवस्थिते यथा सस्य-सम्पत्त्यर्थं बीजसंस्कारः क्षेत्रसंस्कारश्चापेक्ष्यते तथा शुक्रशोणितदोषापनोदार्थं स्त्रिया गर्भस्य च संस्कारो गर्भाधानादिरपेक्ष्यते। तदाह मनुः—

वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम्।
कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च॥
गार्भैर्होमैर्जातकर्मचौलमौञ्जीनिबन्धनैः।
बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते॥ इति।

[ मनुस्मृतौ २।२६–२७ ]

"संस्कारार्थं शरीरस्य यथाकालं यथाक्रमम्।"
"वैवाहिको विधिः स्त्रीणां संस्कारो वैदिकः स्मृतः।" इति च।

[ मनुस्मृतौ २।६६–६७ ]

अत्र मनुवाक्ये बैजिकं शुक्रभवं गार्भिकं रजसि भवं चैनोऽदृष्टदोषपाप्मशब्दाभिलप्यम्। अत्र गर्भपदेन रजो गृह्यते गृह्णाति शुक्रमिति व्युत्पत्त्या। सम्प्रसारणं गुणो हकारस्य भकारश्च पृषोदरादित्वात्। अस्या व्युत्पत्तौ प्रमाणं तु कश्यपसंहितायामसमानगोत्रीये शारीराध्याये—

प्राणस्तु बीजधातुं हि विभजत्यस्थिसंख्यया।
प्रविष्टमात्रं बीजं हि रक्तेन परिवेष्ट्यते॥ इति।

कौटिल्योऽपि राजकुमाराणां गर्भाधानादिसंस्कारान् समाद्रियत। तदभावे हि तेषां राज्यपरिपालनयोग्यतैव न स्याद् राज्यभ्रंशश्च स्यादित्याह। तथा हि—

"जीवन्मरणमेतदिति कौटिल्यः। काष्ठमिव हि घुणजग्धं राजकुलमविनीतपुत्रमभियुक्त-मात्रं भज्येत। तस्मादृतुमत्यां महिष्यामृत्विजश्चरुमैन्द्राबार्हस्पत्यं निर्वपेयुः। आपन्नसत्त्वाया

कौमारभृत्यो गर्भकर्मणि प्रजनने च वियतेत। प्रजातायाः पुत्रसंस्कारं पुरोहितः कुर्यात्। समर्थं तद्विदो विनयेयु:" इति।

तदित्थं गर्भस्य शुक्रशोणितोभयप्रभवत्वेऽपि तत्र शुक्रस्यैव प्राधान्यम्, तत्रैव जीवस्य पूर्वं स्थिते:, गर्भं यदनुसारं दृढं च तदुपादानत्वाच्च, बीजत्वेन शास्त्रेषु वर्णितत्वाच्च। पितुर्बीजप्रदत्वेन बीजवापत्वेन च, मातुस्तु भूपात्वेन क्षेत्रत्वेन दधिधानीत्वेन च शास्त्रेषूपन्यासात्, अङ्कुराकारस्य क्षित्यादिसहकृताद् बीजादुद्गम इव मनुष्यादिविग्रहस्य शोणितसहकृतात् शुक्रादुद्गमः। अत एव स्त्रिया भूपात्वमप्युपपद्यते, शुक्रगततत्तदाकारव्यञ्जकत्वात्। अतः शुक्रशोणितयोर्दोषासंसर्गाय गुणसम्पत्तये च सदाचारपातिव्रत्याभ्याम् अक्षेत्रियदोषवत्कुल-सम्बन्धेन पुंसवनादिसंस्कारेण हितौषधाहारसेवया ऋतुकालिकशास्त्रविहितचर्यया यथाकाल-संप्रयोगेण च वैशिष्ट्यं संपादनीयम्। एवं गर्भधारणे गर्भजन्मानन्तरमपि यथाशास्त्रमौषध-योगाः संस्काराश्चापेक्षिताः।

आयुर्वेदधर्मशास्त्रार्थशास्त्राणां त्रयाणां परस्परविरोधिधर्मार्थकामरूपपुमर्थसाधकानामपि सत्त्वरजस्तमसामिव दशानलतैलानामिव च परस्परापेक्षयैव प्रतिनियतस्वार्थसाधकत्वात्। यौन-सम्बन्धा अपि शास्त्रानतिलङ्घिन एव संपाद्या न तु यदृच्छया। शुक्रशोणितसंकरे हि दुश्चिकित्स्यो दोष आपतेत। तादृशापत्यसन्तानस्य निरुरुत्सितस्याप्यशक्यनिरोधत्वात्।

अत्र चैते श्लोका भवन्ति—

अर्थशास्त्रस्य संमत्या सर्वशास्त्राविरोधतः।
संस्कारतस्तु सत्कार्यो गर्भो नैवात्र संशयः॥ १॥
ऋषिभिः परिगीतानां संस्काराणां फलं प्रति।
संदेहविषयत्वेऽपि विधेया एव ते मताः॥ २॥
वैफल्ये विधिवैयर्थ्यमनिष्टं न च संभवि।
अविधौ फलसत्त्वे च दुर्वारानर्थसम्भवः॥ ३॥
तस्मात् परम्पराप्राप्ताः सदाचारसमाश्रयाः।
संस्कारा हितमिच्छद्भिर्न हातव्या मनीषिभिः॥ ४॥
आयुर्वेदविधानं तु प्रत्यक्षफलमिष्यते।
अतस्तदादृता चर्याऽविचिकित्स्या विधौ मता॥ ५॥

॥ इति शम्॥

# बार्हस्पत्यम्

श्री अनन्तशास्त्रिफडके, राजकीयसंस्कृतमहाविद्यालय, काशी ।

भारतीयपुराणादिग्रन्थेषु बृहस्पतेर्ग्रहरूपस्य वर्णनं पठित्वा सामान्यतो विचारकाणां चेतसि महदाश्चर्यं प्रादुर्भवति । यतो ग्रहरूपस्य तस्य तारारूपस्त्रीसम्बन्धः, चन्द्रमसा ताराहरणम्, ततो बुधोत्पत्तिः, श्वेताश्वरथस्थितत्वम्, एवमग्निरूपत्वमग्निरूपसप्तपुत्रादिजनकत्वम्, एवं फलितज्यौतिषशास्त्रे तस्य ब्राह्मण्यम्, नवपञ्चमसप्तमस्थानद्रष्टृत्वम्, सूर्यमित्रत्वम्, उपनयनादिषु तस्य बलाभावेऽपि चैत्रमीनराशिस्थसूर्ये दोषाजनकत्वम्, जातककुण्डल्यां तस्य दुष्टफलदायकत्वे पीतवस्त्रादिभिः पूजनमित्यादि सर्वमधुना महता दूरवीक्षणादियन्त्रजातेन प्रत्यक्षीकृतगुरुस्वरूपेण सह सर्वदा सर्वथा विसंवदतीति ।

यन्त्रादिसाधनतो वीक्षितगुरुस्वरूपमित्थं तावत्पाश्चात्यज्योतिर्विदो वर्णयन्ति—

पृथ्वीसदृशाश्चत्वारिंशदधिकद्वादशशतपिण्डा यद्येकत्र भवेयुस्तदा कदाचिद् गुरुपिण्डस्वरूपतुलना सम्भवेत् । पृथ्व्यादिग्रहापेक्षया तस्य गुरुत्वेऽपि स्वस्मादतिमहान्तं गुरुभूतं सूर्यमुपग्रहत्वेन स्थित्वा नित्यं बम्भ्रम्यत इति तस्य गुरुनामान्वर्थकं नास्ति । सूर्यतः पृथ्व्यपेक्षया पञ्चगुणिते दूरस्थे देशे तिष्ठन् सूर्यमेकनिमेषे( सेकेन्ड )ऽष्टक्रोशार्धं( मील )गत्या परिक्रामति । गुरोर्विषुववृत्तस्थो भागो यथा शीघ्रगत्या भ्रमति न तथा ध्रुवस्थभागः । गुरोर्विषुववृत्ते कश्चन मौक्तिकसमतेजस्वी पट्टको दृश्यते । तस्योत्तरदक्षिणदेशे तेजोहीनौ द्वौ रक्तवर्णौ पट्टकौ दृश्येते । कदाचन तत्र नीलवर्णाभाप्युपलभ्यते । एवं ध्रुवं यावत्क्रमेण तेजोहीनाश्चाकचिक्ययुता विषुववृत्तसमीपे पीताभामिश्रितपाण्डुराश्शृङ्खला अनेके पट्टका उपलभ्यन्ते, ध्रुवसमीपभागाः किञ्चिन्नीलवर्णयुताश्चावलोक्यन्ते । इतरग्रहापेक्षया सूर्येण सह गुरोर्बहुसाम्यं संलक्ष्यते, तस्य मध्यभागोऽत्युष्णः, सर्वदा तत्रेतस्ततश्शृङ्खलान्यभ्राणि परिभ्रमन्ति । गुरुः स्वयं किञ्चित्स्वप्रकाशयुतः । गुरोर्वैषुवपट्टवर्णः प्रायः पाण्डुर एव । न केवलं सूर्यसमीपं गुरुरागत्य सूर्यं विकरोति किन्त्वतिदूरस्थोऽपि । यतः १८६६ ईशवीयतः १८७१ वर्षपर्यन्तं किञ्चिद्रक्तवर्णः किञ्चिद् हरितपीतवर्णो वैषुवभागो दृष्टस्तदात्व एव सूर्येऽप्यनेकेऽङ्का उपलब्धा इत्येवं सूर्येण सह स्वकीयं कमपि सम्बन्धं स्थापयति । पृथ्व्या यथैकश्चन्द्रमास्तथा गुरोः पञ्च चन्द्रा विद्यन्ते । एवं चन्द्रादिनिमित्तानि ग्रहणाधिक्रमणपिधानादीनि तत्र प्रतिदिनमनेकानि सम्पद्यन्त इति ।

वेदभारतपुराणादिग्रन्थेषु रूपकवर्णनपद्धतेः स्वरूपं सम्यगज्ञात्वा सामान्यतो विचारकाणां भवति काचिद्भ्रमितिः, परन्तु वेदादिग्रन्थानां विशिष्टाध्ययनपद्धत्या बृहस्पत्यादिग्रहस्वरूपस्य विचारे क्रियमाणे यन्त्रादिद्वारा यूरोपीयविद्वद्वरप्रदर्शितग्रहस्वरूपापेक्षयाऽतीव महत्तरमसूक्ष्मं च यन्त्रादिना प्रत्यक्षीकृतं च यत्तदपि स्पष्टतया तैः स्वचित्तैकाग्र्यादिद्वारा सदृष्टं वर्णितं चोपलभ्यत एव। अतो वेदोपलब्धं बृहस्पतिस्वरूपं प्रथमतः प्रदर्श्य ततः पुराणादिप्रदर्शितं फलितज्यौतिषशास्त्रविनिर्णीतं च विलिख्य तत्समालोचनपूर्वकं समन्वयं प्रदर्शयामः।

ऋग्वेदे चतुर्थमण्डले पञ्चाशत्तमसूक्ते बृहस्पतेर्वर्णनमित्थमुपलभ्यते—

बृहस्पतिः प्रथमं जायमानो महो ज्योतिषः परमे व्योमन्।
सप्तास्यस्तुविजातो रवेण विसप्तरश्मिरधमत्तमासि॥ ४॥

महाज्योतिषः सकाशात्प्रथमं जायमानो बृहस्पतिः परमे व्योमन् आकाशेऽत्युच्चस्थाने स्थितः रवेण युक्तः सप्तास्यः बहिःप्रक्षिप्तसप्तभागयुतः समभवत्। अत्र आस्यपदमसु प्रक्षेपणे इति चतुर्थगणीयधातूत्पन्नम्। तत्सप्तभागेषु य एको विशिष्टसप्तरश्मियुतो भागः सूर्यः स तमांसि अधमत् नाशितवान्।

जगतः प्रारम्भकाले आकाशे स्थितं स्वाभाविकं सूक्ष्मं तेजः स्वाभाविकगत्या पिण्डीभूतं सद् महद्रवयुक्तं स्फुटितं तदा ततः सप्तावयवाः समजायन्त। तत्र विशिष्टः सप्तरश्मियुतः सूर्यनामको भागोऽन्धकारं नाशयति। यद्यपि श्रीमता सायणाचार्येणास्य मन्त्रस्यान्यद् व्याख्यानं कृतं तथाप्यन्यत्र कृततद्व्याख्यानपद्धत्यात्रास्माभिरित्थं व्याख्यायि। निरुक्तेऽपि "आस्यमस्यतेः" [ १।९।१ ] इति निर्वचनं दृश्यते।

सर्वग्रहोत्पादकत्वेन तस्य पितृरूपेण वर्णनं वैदिकं सगतं भवति—

**देवानां यः पितरमाविवासति** श्रद्धामना हविषा ब्रह्मणस्पतिम्। [ऋ० २।२६।३]

अत्र देवानां पितरं ब्रह्मणस्पतिमिति सम्बन्धः।

तीक्ष्णशृङ्गवर्णनमपि विभागप्राक्कालिकीं विभागानुकूलां तस्य स्थितिं ज्ञापयति—

अराय्यं ब्रह्मणस्पते **तीक्ष्णशृङ्गो** दृषन्निहि। [ ऋ० १०।१५५।२ ]

अन्यत्रापि बृहस्पतेः प्रथमजत्वं वारंवाररवकरणत्वं च वर्णितम्—

यो अद्रिभित् **प्रथमजा** ऋतावा **बृहस्पतिराङ्गिरसो** हविष्मान्।
द्विवर्हज्मा प्राघर्मसत्पिता न आ रोदसी वृषभो **रोरवीति**॥ इति।

[ ऋ० ६।७३।१ ]

अत एव तैत्तिरीयसंहितायामादित्यानां क्रमश उत्पत्तिः कयाचित्कथया श्राविता—

"अदितिः पुत्रकामा साध्येभ्यो देवेभ्यो ब्रह्मौदनमपचत्। तस्या उच्छेषणमददुस्तत् प्राश्नात्सा रेतो धत्त तस्यै **चत्वार आदित्या अजायन्त**।" [ ६।५।६ इत्यादि ]

अत्रादितिपदेनाग्निर्ग्राह्यः-"अग्निरप्यदितिरुच्यते" [ ११।२३।५ ] इति यास्कोक्तत्वात्। स च बृहस्पतिः।

अथर्ववेदे च बृहस्पतिमभितोऽर्काणां वर्णनं कृतं संगतं भवति। यतस्तेषां ततः उत्पत्तेः सत्त्वात्—

गिरिभ्रजो नोर्मयो मदन्तो **बृहस्पतिमभ्यर्का अनावन्**। [२०।१६।१]

गोपथब्राह्मणे च कस्याचित्कथायां बृहस्पतेः सूर्यचक्षुषावलोकनवर्णनमपि संगतं भवति, सूर्यस्य तस्माज्जातत्वात्—

"प्रजापतिर्वै रुद्रं यज्ञान्निरभजत्‥ । बृहस्पतय आङ्गिरसाय पर्यहरत्। सोऽबिभेत्। बृहस्पतिरित्थं वामार्तिमाक्रष्यसीति स एतं मन्त्रमपश्यत् सूर्यस्य त्वा चक्षुषा प्रतीक्ष इत्यब्रवीन्नहि सूर्यस्य चक्षुः किञ्चन हिनस्ति।" [ उ०भा० प्र० १ क० २ ] इति।

एवं च बृहस्पतेः सकाशात्सजातसप्तविभागेष्वेकः सूर्यरूपो विभाग इति निश्चप्रचम्। अन्ये च षड्विभागाः शुक्रबुधपृथ्वीरूपास्त्रयः, वरुणप्रजापतिप्रभृतयस्त्रयः ( हर्शलनेपच्यून-प्लुटोसंज्ञकाः ) इति स्युः। शनिस्तु सूर्याज्जातो मङ्गलः पृथिव्या जातश्चन्द्रमास्तु पृथिव्या उपग्रह इति न गुरोः सकाशात्तेषामुत्पत्तिः। एवं च गुरोः सर्वग्रहरूपदेवोत्पादकत्वेन गुरुनाम्ना वर्णनं सुसंगतमेव। सप्तग्रहरूपविभागोत्पत्तिसमये सप्तरश्मियुतो य एको महान् विभागः समजनि तमेकं विभागं गुरुत्वाकर्षणनियमेन पिता पुत्रमिव सर्वदेवपिता बृहस्पतिः स्वजातं सूर्यं परिक्रामतीत्युचितमेव। अत एव सूर्यस्य वस्तुतो गुरुरूपत्वे गुरोर्वा सूर्यरूपत्वे यन्मौहूर्तिकैः सिंहांशके नीचर्क्षे नीचभागगेऽपि बृहस्पतौ चैत्रस्थमीनराशिगतसूर्ये सति मौञ्जीबन्धः शुभ एवोक्तः संगच्छते—

गोचराष्टकवर्गाभ्यां यदि शुद्धिर्न लभ्यते।
तदोपनयनं कार्यं चैत्रे मीनगते रवौ॥
हरौ सिंहांशके जीवे नीचर्क्षे नीचभागगे।
मौञ्जीबन्धः शुभः प्रोक्तश्चैत्रे मीनगते रवौ॥ इति। [ रत्नकोशे ]

यतो हि वास्तविकगुरोर्दुष्टत्वेऽपि सूर्यरूपगुरोः स्वगृहमीनराशिस्थितत्वेन साधुफलकारकत्वात्।

गुरोरग्निरूपाङ्गिरसो जातत्वेन स्वयमग्निरूपत्वेन च वर्णनं ब्राह्मणादिग्रन्थेषूपलभ्यते—

"अथ यत्तृतीयमदीदेदिव त आदित्या अभवन्येऽङ्गारा आसंस्तेऽङ्गिरसोऽभवन्यदङ्गाराः पुनरवशान्ता उददीप्यन्त तद्बृहस्पतिरभवत् ।" [ ऐ० ब्रा० ३।३।१० ]

अत्र प्रजापते रेतसोऽङ्गाररूपाणामङ्गिरसामुत्पत्तिस्ततो दीप्तरूपबृहस्पतेरुत्पत्तिर्ज्ञायते । अत आधुनिकैर्यूरोपदेशनिवासिज्योतिर्विद्भिस्तस्य किञ्चित्स्वयप्रकाशरूपत्वं वर्णितं नातीव नूतनम् ।

ऋग्वेदेऽपि तस्याग्निरूपत्वेन वर्णनमुपलभ्यते—

आवेधस नीलपृष्ठं बृहन्तं बृहस्पतिं सदने सादयध्वम् । [ ५।४३।१२ ]

बृहतः परिवृढस्य कर्मणः स्वामीति बृहस्पतिरग्निरुच्यत इति श्रीसायणः ।

श्रीमन्महाभारते बृहस्पतेः पितुरङ्गिरस एव तस्माज्जातानामग्निरूपत्वं स्पष्टतया प्रतिपादितम् । तथा हि वनपर्वणि २१७ तमेऽध्याये—

अङ्गिरा उवाच—त्वमग्निः प्रथमं सृष्टो ब्रह्मणा तिमिरापहः ।
स्वस्थानं प्रतिपद्यस्व शीघ्रमेव तमोनुद ।

अग्निरुवाच—नष्टकीर्तिरहं लोके भवान् जातो हुताशनः ।
भवन्तमेव ज्ञास्यन्ति पावकं न तु मां जनाः ॥

... .. ... .. . . .. ..

निक्षिपाम्यहमग्नित्वं त्वमग्निः प्रथमो भव ।
भविष्यामि द्वितीयोऽहं प्राजापत्यक एव च ॥

अङ्गिरा उवाच—कुरु पुण्यं प्रजास्वर्ग्यं भवाग्निस्तिमिरापहः ।
मां च देव कुरुष्वाग्ने प्रथमं पुत्रमञ्जसा ॥ १७ ॥

अस्मिन् प्रकरणेऽग्न्यङ्गिरसोः संवादो विद्यते । तत्राग्निना स्वकीयाग्नित्वमङ्गिरसि न्यधायि । स्वयं च तस्य पुत्रत्वं बृहस्पतिरूपेण स्वीकृतम् । अग्रे च श्रीमार्कण्डेयेनैतत्स्फुटीकृतम्—

तच्छ्रुत्वाङ्गिरसो वाक्यं जातवेदास्तदाकरोत् ।
राजन् बृहस्पतिर्नाम तस्याप्यङ्गिरसः सुतः ॥
ज्ञात्वा प्रथमजं तं तु वह्नेरङ्गिरसं सुतम् ॥ १८ ॥ इत्यादिना ।

अग्रिमेऽध्याये बृहस्पतिसन्ततिवर्णनप्रसङ्गे तस्मात् षट् पुत्राश्चैका कन्या च जाताः । ते च शंयु निश्च्यवन विश्वजिद्-विश्वभुग्-वडवाग्नि-स्विष्टकृद्रूपा अग्निनामानः षट् । एवं

स्वाहानाम्नी वह्निभार्यारूपैका कन्या। वस्तुतः पूर्वप्रदर्शितरीत्या शुक्रबुधप्रभृतयः षट् ग्रहाः, एका कन्या पृथिवीरूपेति ज्ञेयम्। दूरवीक्षणयन्त्रादिना यूरोपदेशीयज्योतिर्विद्भिर्दृष्टं वर्णितं च गुरोः स्वरूपं चित्रद्वारा लिख्यते। तत्राङ्कास्तत्तत्पट्टकांश्च सूचयन्ति।

## गुरुमण्डलम्




१ अङ्कमितो विषुवद्वृत्तस्थो मौक्तिकसमतेजस्वी पट्टकः। २ मितौ द्वौ पट्टकौ तेजोहीनौ रक्तवर्णौ पट्टकौ। ३ मिता अनेके ध्रुवं यावद्विद्यमानास्तेजोहीना विषुवद्वृत्तसमीपे पीताभा-मिश्रितपाण्डुराश्चञ्चलाः पट्टकाः। ४ अङ्कमिता नीलवर्णाभा ध्रुवसमीपस्थाः।

यदि ऋग्वेदीयं बृहस्पतिवर्णनं सम्यक्तयालोच्येत तदा सर्वमेतद्वर्णनमलौकिकज्ञान-वद्भिर्ऋषिभिस्तत्र साक्षाद् दृष्ट्वैव लिखितमिति प्रतिभायात्। तथा हि बृहस्पत्यश्ववर्णनमृग्वेदे—

तं शग्मासो अरुषासो अश्वा बृहस्पतिं सहवाहो वहन्ति।

सहश्चिद् यस्य **नीलवत्सधस्थं नभो न रूपमरुषं** वसानाः॥ [ ७।९७।६ ]

“शग्मासः शग्माः सुखकराः। अरुषासः आरोचमानाः। सहवाहाः संहत्यवाहकाः। अश्वास्तं बृहस्पतिं वहन्ति। ······ कीदृशा अश्वाः नभो न आदित्यमिवारुषमारोचमानं रूपं वसाना धारयन्तः।” इति श्रीसायणाचार्यः। एवं चाकचिक्ययुतं सूर्यसदृशं रक्तवर्णं

धारयन्तोऽश्वा वहन्ति । अत्र वेदः २अङ्कमितौ पट्टकावश्वत्वेन वर्णयति । एवमन्ये च पीताभामिश्रितपाण्डुराचञ्चलाः पट्टका अश्वत्वेन परिकल्पिता इति वक्तु शक्यते । विष्णु-पुराणेऽश्वाना पाण्डुरवर्णतयापि स्वरूपमुपवर्णितम्—

अष्टाभिः पाण्डुरैर्युक्ते वाजिभि. काञ्चने रथे ।
तस्मिन् तिष्ठति वर्ष वै राशौ राशौ बृहस्पतिः ॥

[ विष्णु० २।१२।१६ ]

वेदे रक्तवर्णाश्वयुत पुराणे पाण्डुराश्वयुतसुवर्णरथस्थमर्थात्पीतवर्णमिश्रितपाण्डुवर्णाश्वयुत द्विधापि वर्णन सगच्छत एव, तत्रोभयस्य विद्यमानत्वात् । नीलवत्सधस्थमिति तु नीलवर्ण-सदस्थानयुतः स बृहस्पतिरिति स्पष्टमेव ४ अङ्कमितवर्णनवद्वर्णनमुपलभ्यते । एवमन्यत्रापि ऋग्वेदे—

आवेधसं **नीलपृष्ठं बृहन्तं** बृहस्पति सदने सादयध्वम् । [ ५।४३।१२ ]

इत्यत्र स्पष्टतया बोधितं नीलवर्णयुतत्व साधु सगच्छत इति ।

इत्थं च दूरवीक्षणयन्त्रादिना प्रत्यक्षतो दृष्ट यूरोपदेशीयैर्विद्वद्भिर्गुरुस्वरूप वेदे स्पष्ट-तयोपलभ्यत इति महत्तेषा भारतीयानामृषीणामलौकिकनित्यविज्ञानदृष्टेर्गौरवस्थानम् । यच्च कदापि दूरवीक्षणादियन्त्रैर्ज्ञातु न सुशक बृहस्पतेर्ब्राह्मण्यादिस्वरूपं तत्तु वैदिकऋषीणा मलौकिकविज्ञाने श्रद्धा कृत्वा भारतीयैर्विद्वद्भिरादरेण प्रमाणतयाङ्गीक्रियते न तत्रा-शतोऽप्याशङ्क्यते ।

ऋग्वेदे तस्य गृहपुरोहितरूपेण त विना यज्ञादिकर्मणा सपूर्णतया भवनमशक्यमेवेति च वर्णनमुपलभ्यते—

स सनयः स विनयः पुरोहितः स सुष्टुतः स युधि ब्रह्मणस्पतिः । [२।२४।६] इति ।
यस्मादृते न सिध्यति यज्ञो विपश्चितश्चन । [ १।१८।७ ] इति च ।

सर्वमानवपुरोधसामयमेव मन्त्रदातेति वर्णनमप्युपलभ्यते—

यद्देवापिः शंतनवे पुरोहितो होत्राय वृतः कृपयन्नदीधेत् ।
देवश्रुत वृष्टिवनि रराणो **बृहस्पतिर्वाचमस्मा अयच्छत्** ॥

[ ऋ० १०।९८।७ ]

"स च रराणो रममाणो बृहस्पतिर्देवोऽस्मै देवापये ( शन्तनुभ्रात्रे ) होत्रार्थ वाच-मयच्छत्" इति श्रीसायणाचार्यः ।

बृहस्पतिरेव ऋक्कद्गणयुतः सन् गणपतिपदेन, एव ब्रह्मणस्पति-सदसस्पत्यादिशब्देन

वेदे वर्णित उपलभ्यते । एव च परमर्षिभिस्तस्य बृहस्पतेः स्वरूप ब्राह्मणोचित दिव्यया दृष्ट्या-लोच्य तस्य ब्राह्मण्यमुद्घोषित सम्यगेव । अत एव विषुववृत्तभागस्थः १ अङ्कचिह्नितो मौक्तिक-सदृशश्चाकचिक्ययुतः पट्टो देहमध्यस्थयज्ञोपवीतमिव मध्ये स्थित्वा गुरुमण्डल भूषयति । यश्चा-धुनिकैर्दूरवीक्षणेन यन्त्रेणाद्यापि स्पष्टतयावलोक्यते । सूर्यस्य जनकत्वेन गुरोः सर्वथा सूर्येण सह साधर्म्य प्रतिभाति । एव गुरोर्मण्डले वर्णवैपरीत्ये सूर्यमण्डलेऽङ्काद्युपलब्धिः सुसगतैव, यतस्तयोरेकरूपत्व पितापुत्रयोरिव ।

तमभितः पञ्च चन्द्राः परिभ्रमन्तीति प्रत्यक्षत आलोचन तैत्तिरीयसहितास्थमदितेः ( बृहस्पतिरूपाग्नेः ) सकाशाच्चतुरादित्यानामन्येषा चोत्पत्तिवर्णनम्—"तस्या उच्छेषणमददुस्तत् प्राश्नात् सा रेतो धत्त, तस्यै चत्वार आदित्या अजायन्त" [ ६।५।६ ] इति कदा-चिन्निर्दिशतीति मन्ये । फलितज्योतिर्विदोऽपि गुर्वादीनामेकाधिकपूर्णदृष्टीर्निरूपयन्तस्तास्ताश्चन्द्रा दीनादायैव वर्णयन्तीत्यभिप्रैमि—

मधुनिभनयनो मतिमानुपचितमासः कफात्मको गौरः ।
ईषत्पिङ्गलकेशो मेदःसारो गुरुरदीर्घः ॥ इति ।

[ लघुजात० ३।५ ]

एव "ज्ञान सुख चेन्द्रगुरुः" [ ल० जा० २।१ ] इति च । श्रीवराहमिहिरोऽपि गुरु-स्वरूपमित्थ वर्णयन् सर्वथा वेदादीनद्य यावदुपलब्धदूरवीक्षणयन्त्रोपलब्धस्वरूप च सर्वथा-नुकरोतीति सूक्ष्मदृशा सुस्पष्टमेव ।

वेदोऽपि "सनि मेधामयासिपम्, स धीना योगमिन्वति" [ ऋ० १।१८।६-७ ] इति ज्ञानदातृत्वं गुरोर्वर्णयति । एव भगवान् याज्ञवल्क्योऽपि—"एष उ एव बृहस्पतिर्वाग्वै बृहती तस्या एष पतिस्तस्मादु बृहस्पति." [ १।३।२१ ] इति व्युत्पादयति बृहस्पतिशब्दम् ।

पीतद्रव्यसुवर्णादिसमर्पणकारण तु बृहस्पतेराधिदैविकस्वरूपे वेदोक्तं सुवर्णपरशुधारण-वर्णन स्यात् । उक्त च वेदे—

स हि शुचिः शतपत्रः स शुन्ध्युर्हिरण्यवाशीरिषिरः स्वर्षाः ॥
बृहस्पतिः स स्वावेश ऋष्वः पुरू सखिभ्य आसुति करिष्ठः ॥ [ ऋ० ७।९७।७ ] इति ।

"स हि स खलु बृहस्पतिः शुचिः शुद्धः शतपत्रो बहुविधवाहनः । स एव शुन्ध्युः सर्वेषा शोधयिता, हिरण्यवाशीः वाशीति वाङ्नाम हितरमणीयवाक्, यद्वा 'वाशीभिस्तक्षताश्मन्मयीभिः' [ ऋ० १०।१०१।१० ] इति निगमाद् वाश्यायुधम्, स्वर्णमयायुधः" इति श्रीसायणः ।

आधुनिका अपि तत्र ( ३ अङ्कमिते स्थाने ) पीतवर्णोऽप्युपलभ्यत इति कथयन्ति ।

ग्रहस्वरूपस्य बृहस्पतेस्तारारूपस्त्रीयुक्तत्वं तस्याश्चन्द्रमसा ग्रहणं ततो बुधोत्पत्तिरिति तु स्पष्टतया रूपकमिति विद्वांसो जानन्ति । तथा हि—बृहस्पतिर्ग्रहो यदा रोहिणीतारकासमीपस्थश्चन्द्रमसा विद्धो हीनतेजस्कः सजातः, रोहिणी तु चन्द्रतेजसा विलुप्तप्राया, अनन्तरं रोहिणीसमीपस्थबुधदर्शनं जातं तदा वैदिकं रूपकं विस्मृत्य गुरुपत्नीताराहरणरूपा कथा बुधस्य रौहिणेय इति नाम च लोकेषु प्रथितम् । एवं बृहस्पतिपुष्यनक्षत्रयोगोऽतीव शुभकर इति प्रसिद्धिरपि बृहस्पतेः प्रथमं ज्ञानं पुष्यनक्षत्रसमीपस्थतया जातत्वेन सुपपन्ना । वेदेऽपि—

"बृहस्पतिः प्रथमं जायमानः, तिष्यं नक्षत्रमभिसम्बभूव" [ तै० ब्रा० ३।१।१ ] इति वर्णितमित्यलं बहुना । अपि नामेत्थमलौकिकविज्ञानबोधका सर्वथा स्वकीयानन्यसाधारण्यलौकिकी चार्षदृष्टिः पुनरपि भारतीयैरार्यैरुपलभ्येत ?

गुरुमण्डले उपलभ्यमानानेकचञ्चलपट्टकानां वेदादिष्वनेकवर्णयुताश्ववर्णनम्, तस्य किञ्चित्स्वप्रकाशत्वस्य भारतादिस्थमग्निरूपवर्णनम्, अनेकचन्द्रयुतत्वस्य फलितज्यौतिषेऽनेकदृष्टियुतरूपेण वर्णनम्, तन्मध्ये स्थितमौक्तिकवच्चाकचिक्ययुतपट्टकस्य यज्ञोपवीतसूचितब्राह्मण्यवर्णनम्, एवमन्यदपि वर्णनं च मत्वा प्रकृतनिबन्धे विचारजातं प्रकटीकृतम् । अन्यैः संशोधनतत्परैर्विद्वद्भिरस्य साधुत्वासाधुत्वविषये निर्णयमिति सम्प्रार्थ्य विरम्यते ॥

---

# समासवृत्तिविचारः

श्रीकृष्णशास्त्री मोकाटे, मारवाडीसंस्कृतविद्यालय, काशी ।

अत्रेदं विप्रतिपत्तिवाक्यम्—राजपुरुषादिसमासजन्यबोधो विग्रहार्थबोधप्रयोजकवृत्तिभिन्न-वृत्तिप्रयोज्यो न वा ?

अत्र विधिकोटिर्वैयाकरणानां मीमांसकानां च । निषेधकोटिर्गौतमीयानाम् । न चात्र निषेधकोटिकानां गौतमीयानां नये बाधः शङ्कनीयः, भिन्नवृत्तिप्रयोज्यो न वेत्यत्र वृत्तिपदेन शक्ते-र्विवक्षितत्वात् । न चैवं मीमांसकानां मते बाधः, तेषां मते वाक्यार्थस्य लक्षणाप्रयोज्यत्वेन शक्तिप्रयोज्यत्वाभावादिति वाच्यम्, अस्य वाक्यस्यैकदेशिमताभिप्रायकत्वात् । अथवा समासवाक्य-जन्यबोधो विग्रहवाक्यजन्यबोधप्रयोजकवृत्तिभिन्नाखण्डैकवृत्तिप्रयोज्यो न वेत्येव विप्रतिपत्ति-वाक्यम् । एवं चास्मिन्पक्षे विधिकोटिर्वैयाकरणानां भट्टपादानां चेति न कोऽपि विरोधः । तथा चास्मिन् कल्पे वृत्तिपदस्य तद्विशेषपरत्वं बोध्यम् ।

अत्र व्यपेक्षासामर्थ्यवादिनो गौतमीयाः क्लृप्तावश्यकावयवशक्त्यैव सर्वसामञ्जस्ये समासवाक्येऽतिरिक्तशक्तिकल्पने समासानुपूर्वीभेदेनानन्तशक्तिकल्पनाप्रयुक्तगौरवापत्तेः प्रयोजना-भावाच्च न समासे शक्तिः सिद्ध्यति । न च तदस्वीकारे ऋद्धस्य राजमातङ्गा इति प्रयोगस्य प्रामाण्यापत्तिः, तव मते राज्ञः पदार्थत्वेन तत्र ऋद्ध्यादिपदार्थान्वये बाधकाभावात् । मन्मते समासशक्त्या विशिष्टार्थस्यैव बोधनाद्राज्ञः पदार्थैकदेशत्वेन तत्र पदार्थः पदार्थेनान्वेति न तु तदेकदेशेनेति व्युत्पत्तिभङ्गभियान्वयापत्त्यभावादिति वाच्यम्, तत्र ऋद्धत्वाद्यवच्छिन्नप्रकारता-निरूपितराजत्वाद्यवच्छिन्नविशेष्यताशालिशाब्दबुद्धित्वावच्छिन्नं प्रति सुबन्तराजादिपदसमभि-व्याहाररूपाकाङ्क्षाकल्पनात्, प्रकृते तूक्ताकाङ्क्षारूपकारणविरहादेव तदनापत्तेः । अथोक्तस्थले आप-त्तिवारणायोक्ताकाङ्क्षाकल्पने ऋद्धराजमातङ्गा इति प्रयोगानापत्तिः, उक्ताकाङ्क्षाविरहात् । न च तथा प्रयोगोपपत्तये ऋद्धत्वावच्छिन्नाभेदसंसर्गावच्छिन्नप्रकारतानिरूपितराजत्वाद्यवच्छिन्नविशेष्यता-कशाब्दत्वावच्छिन्नं प्रति ऋद्धादिपदाव्यवहितोत्तरराजादिपदत्वरूपाकाङ्क्षा कल्प्यत इति नानुप-पत्तिरिति वाच्यम्, तथात्वे ऋद्धस्य राज्ञो मातङ्गा इति प्रयोगानापत्तेः, उक्ताकाङ्क्षाविरहात् । न चोक्तस्थले विशेषणीभूतऋद्धादिपदोत्तरविभक्तेरभेदार्थकतयाऽभेदप्रकारकशाब्दबुद्धेरेवोदया-

दभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यताकशाब्दत्वस्यैवोक्ताकाङ्क्षाकार्यतावच्छेदकत्वेनोक्त-प्रयोगोपपत्तेरिति वाच्यम्, विशेषणविभक्तेर्निरर्थकत्वेन तत्राभेदप्रकारकशाब्दबुद्धेरनुदयादुक्ता-पत्तेर्दुरुद्धरत्वादिति चेन्न, मन्मतेऽपि राजपुरुषादिसमासे पूर्वपदादेर्नामार्थतया तस्याभेदसबन्धेन पुरुषाद्यन्वयासभवेन सबन्धिलक्षणावश्यकत्वेन राजादीनामेकदेशत्वादेव तत्र ऋद्धाद्यन्वयवारण-सभवान्नोक्तप्रयोगापत्तिः।

किञ्च—'सविशेषणाना वृत्तिर्न, वृत्तस्य च विशेषणयोगो न' इति स्मृत्यापि तादृशप्रयोग-वारणसभवान्न काप्यनुपपत्तिः। न चैव कृष्णस्य गुरुकुल मुकुन्दस्य दासभार्येत्यादिप्रामाणिक-प्रयोगाणा का गतिरिति वाच्यम्, तत्रापि तादृशविषये तुल्यत्वात्। न चैव समर्थसूत्रेणैकार्थी भावसामर्थ्ये समासविधानात् तव मते तदभावात् समासविलयापत्तिः, समासघटकपदानामेकया वृत्त्यैकार्थप्रतिपादकत्वरूपसामर्थ्यस्य भाष्यकाराद्यङ्गीकृतस्यासभवादिति वाच्यम्, तादृशस्या-सभवेऽप्यजहल्लक्षणात्मकव्यपेक्षारूपसामर्थ्यस्यैवाङ्गीकारादतिरिक्तशक्त्यकल्पनालाघवानुरोधेन च भाष्यादेरत्रैव तात्पर्यकल्पनात्।

यत्तु समासे वृत्त्यनङ्गीकारे समासस्यार्थवत्त्वाभावेन प्रातिपदिकसज्ञा न स्यात्, अर्थव-त्सूत्रेणार्थवतामेव प्रातिपदिकसज्ञाविधानात्। न चेष्टापत्तिः, तत्सज्ञानिमित्तकस्वाद्युत्पत्तेरभावेन राजपुरुष पश्य चित्रगुमानयेत्यादिप्रयोगस्यासिद्धिप्रसङ्गादिति, तत्तुच्छम्, अर्थवत्सूत्रेण सज्ञाया असिद्धावपि कृत्सूत्रेण प्रातिपदिकसज्ञासिद्धौ बाधकाभावात्। अत एव समासस्य वृत्त्यभावेनार्थ-वत्त्वाभावात्कृत्सूत्रे समासग्रहणसार्थक्यमप्युपपद्यते। अन्यथा तस्यार्थवत्त्वेनैवोक्तसज्ञासिद्धौ समासग्रहणमनर्थकमेव स्यात्। न चार्थवत्सूत्रेऽधातुरिति पर्युदासबलादर्थवतामेव प्रातिपदिक-सज्ञासिद्धावर्थवत्पदानर्थक्यमित्युत्तरसूत्रानुवृत्त्या तत्पदसार्थक्यमिति, अनुवृत्तिबलात्कृत्तद्धित-समासानामर्थवतामेव सा सिद्ध्यतीति समासे वृत्त्यभावे पुनस्तस्य प्रातिपदिकसज्ञा दुर्लभेति च वाच्यम्, यतोऽनुवृत्तिफल न समासस्यार्थवत्त्वलाभः, अपि तु सुप्तिङन्त पदमिति सूत्रेऽन्त-ग्रहणसामर्थ्यात् तदन्तपरिभाषा सज्ञाप्रकरणे न प्रवर्तत इति ज्ञापनमेव। तथा च प्रकृतसूत्रयोरपि सज्ञाप्रायकत्वेन सज्ञाप्रकरणस्थत्वादुक्तपरिभाषाप्रवृत्तौ कृत्तद्धितान्तयोः प्रातिपदिकसज्ञा न प्राप्नोतीति तदन्तपरिभाषाप्रवृत्त्या कृत्तद्धितान्तयोरुक्तसज्ञासिद्धिः। एव च समासस्यार्थवत्त्वा भावेऽपि कृत्सूत्रेणैव तादृशसज्ञासिद्धौ बाधकाभावात् समासे शक्तिस्वीकारे प्रमाणाभावः। न चेद कृत्तद्धितसमासाश्चेति शास्त्र नियामक न तु विधायकमिति वाच्यम्, तथात्वे शशशृङ्गाद्यनर्थकसमासेषु प्रातिपदिकसज्ञा न स्यादिति। दृश्यन्ते च तेष्वपि सज्ञाकार्याणीति।

किञ्च, अर्थवत्पदमुत्तरसूत्रेऽप्यनुवर्तताम् । तत्रोभयत्राप्यर्थवत्त्वं वृत्तिमत्त्वम् । वृत्ति-र्द्विविधा—शक्तिर्लक्षणा च । शक्तिरपि द्विविधा—समुदायशक्तिरवयवशक्तिश्चेति । यथा मण्डपपदस्य तावद्वर्णसमुदायस्य गृहविशेषे शक्तिः सा समुदायशक्तिः । तत्रैव मण्डपदस्य क्षीरसारे पाधातोर्गलबिलाधस्संयोगानुकूलव्यापारे कर्तरि कप्रत्ययस्येति शक्तित्रयं तिसृभिः शक्तिभिरुपस्थितानां त्रयाणां योग्यताबलादन्वये मण्डपानकर्तृरूपविशिष्टार्थलाभः । एवं च गृहविशेषतात्पर्यक-तादृशानुपूर्व्या समुदायशक्तिमत्त्वेन प्रातिपदिकसंज्ञा । पुरुषविशेषबोधे योगशक्तिमद्वर्णसमुदाये प्रातिपदिकसंज्ञेति विवेकः । एवं पाचकादिष्वपि । भूपचादिषु रूढशक्तिसत्त्वेन चिकीर्षतीत्यादौ सन्नन्तेऽवयवशक्तिमत्त्वेन च तद्वारणायाधातुरिति । तिङा सुपा च कृत्यादिरूढ्यर्थे रूढिशक्तित्वेन तद्वारणायाप्रत्यय इति । तिङन्तसुबन्तसमुदाये सत्त्वेऽप्युत्तरसूत्रे कृदन्ततद्धितान्तग्रहणमपि परिसंख्यार्थमेव । या च प्रत्ययान्ते प्रातिपदिकसंज्ञा सा कृत्तद्धितान्तातिरिक्ते नेति, तेन सुप्तिङन्ते न । राजपुरुष इति समासवाक्ये राजपदस्य तत्संबन्धिनि लक्षणारूपवृत्तिः, पुरुषपदस्य पुरुषे शक्तिः, तादृशवृत्तिमत्त्वमेवार्थवत्त्वमिति पूर्वसूत्रेणैव प्रातिपदिकसंज्ञासिद्धौ पुनः समासग्रहणं यदि पद-समूहस्य प्रातिपदिकसंज्ञा तर्हि समासानामेव न त्वसमासानामिति लाभार्थम् । तेन मूलकेनोपदंशं चैत्रस्य गुरुकुलमिति तावद्वर्णसमुदायस्य प्रातिपदिकसंज्ञाऽभावः सिद्ध्यति । बहुगुड इत्यत्र योगार्थवत्त्वेन प्रथमसूत्रेणैव प्रातिपदिकसंज्ञा । पचतकीत्यत्र कृत्तद्धितातिरिक्ततिङन्तत्वेन परिसंख्याशास्त्रविषयत्वान्न सा । एवरीत्या सर्वदोषोद्धारसंभवादतिरिक्तविशिष्टशक्तिकल्पनमनर्थक-मेवेत्यादि नैयायिकगजगर्जितमित्याहुः ।

तद् वृथैव गर्जितम्, स्मृतिविरुद्धत्वाद् युक्तिशून्यत्वाच्चेति वैयाकरणकण्ठीरवाः । तथा हि—तत्र समासत्वं संकेतविशेषसंबन्धेन समासपदवत्त्वम् । स च समासश्चतुर्धा—अव्ययीभावतत्पुरुष-द्वन्द्वबहुव्रीहिभेदात् । तत्र पूर्वपदार्थप्रधानसमासत्वादीन्यव्ययीभावत्वादिलक्षणानि प्रसिद्धा-न्येव । वस्तुतस्तून्मत्तगङ्गं सूपप्रति अर्धपिप्पली द्वित्राः शशकुशपलाशमित्यादौ परस्पर-व्यभिचारात् तत्तदधिकारपठितत्वमेव तत्तत्समासलक्षणं बोध्यम् । किमत्र नैयायिकोक्तसरण्या समासावयवलक्षणयैव सर्वदोषापाकरणं स्मृत्यविरोधेन भवति किं वा नेति पुनरत्र चिन्त्यमाने वैयाकरणाः प्रत्यवतिष्ठन्ते । यद्यप्युक्तरीत्याऽऽपातत ऋद्धस्य राजमातङ्गा इत्यादिप्रयोग-वारणेऽपि नैयायिकमते चित्रगुरित्यादिबहुव्रीह्यादावन्वयबोधनिर्वाहस्तद्बोधकस्मृतिप्रामाण्य-निर्वाहश्च कथञ्चिदपि दुर्घट एव । तत्रानेकमन्यपदार्थ इति स्मृत्याऽन्यपदार्थे वर्तमानमनेकं पदं समस्यत इति विधीयते । तदनुरोधेन च समासघटकपदयोरेकार्थबोधकत्वरूपसामानाधि-

करण्य वाच्यम्, तदनुरोधेन च तत्र लक्षणा वाच्या। भवन्मते सा च न पूर्वपदे चित्रादौ सभवति । चित्रादिपदाना प्रत्ययप्रकृतित्वाभावेन प्रत्ययाना प्रकृत्यर्थान्वितस्वार्थबोधकत्व-नियमव्याघातापत्ते. । नापि गोपद गोस्वामिलक्षकम्, गोरेकदेशत्वेन तत्र चित्रपदार्थान्वयानुपपत्तेः । नाप्युभाभ्या पदाभ्या गोस्वामी लक्षणीयः, अन्यतरेणैवान्यपदार्थबोधोपपत्तावन्यतरवैयर्थ्यप्रसङ्गात्, बोधावृत्तिप्रसङ्गश्च । न चान्यतरस्य पदस्य लक्षणातात्पर्यग्राहकत्वेन सार्थक्यमुच्यते तदा नोक्तदोप इति वाच्यम् बहुव्रीहिशास्त्रविरोधापत्तेः, तुल्ययुक्त्या घटादिपदेष्वन्त्यवर्ण एव शक्तिस्तदितरवर्णाना तात्पर्यग्राहकत्वापत्तिश्च । न चेष्टापत्ति., कोगादिबहुप्रमाण-विरोधापत्ते., अनुभवविरोधश्च । तस्मात्समासे शक्तिरावश्यकी ।

किञ्च, श्रीकृष्णमानयेत्यादौ द्वितीयाद्युक्तकर्मत्वाद्यनन्वयापत्तिः । प्रत्ययाना प्रकृत्यर्थान्वित-स्वार्थबोधकत्वमिति व्युत्पत्तेर्जागरूकत्वात् । तत्र हि विशिष्टोत्तरमेव प्रत्ययविधानेन समासस्यैव प्रत्ययप्रकृतित्वात् । नहि चित्रगुमानय श्रीकृष्णमानयेत्यादिस्थलेषु समासघटकाना विशकलिताना पदाना द्वितीयादिप्रत्ययप्रकृतित्व तवापीष्टम्, तथात्वे चित्रत्वाद्यानयनतात्पर्येणापि तथा प्रयोग-प्रसङ्गात् । न चेष्टापत्तिः, तथा शिष्टाना प्रयोगाभावात्, अनुभवविरोधाच्च । न च सन्निहितपदा र्थगतस्वार्थबोधकत्वमित्येव व्युत्पत्तिः कल्प्यते न तु तथेति वाच्यम्, तथा नियमाङ्गीकारे उप-कुम्भमर्धपिप्पलीत्यादौ व्यभिचारस्य दुर्वारत्वात् । यदि च प्रकृतित्वाश्रये द्वितीयादिविभक्त्य-र्थान्वय इत्येव नियम इति विभाव्यते, तदा पङ्कजमानय चक्रिण पूजय शूलिन नमस्कुर्वित्यादौ पङ्कचक्रशूलादावानयनाद्यन्वयप्रसङ्गेन तदसभवात् । अतस्तत्र विशिष्टशक्तिरावश्यकी । तत्स्वी-कारे चित्रग्वादिवाक्ये नोक्तान्वयानुपपत्तिर्न वोक्तस्मृतिविरोध इति ।

किञ्च, कूर्मरोमशशश्रृङ्गविकल्पयोरविशेषप्रसङ्गेन तद्विषययोर्व्यावर्तकाभावेन कूर्मरोमशश-श्रृङ्गादिपदजन्यबुद्धेर्वैलक्षण्यस्यानुभवसिद्धस्यापलापप्रसङ्गात् । "शशश्रृङ्गादिपदानामपि बौद्धोऽर्थो वाच्य." इति तत्राप्यर्थवत्सूत्रप्राप्तिरस्त्येव । तथैव वाक्यस्याप्यर्थवत्त्वेन प्रातिपदिकत्वप्रसक्तौ तद्व्यावृत्तये समासग्रहणस्य नियमार्थत्व सुस्थमेव । एव च विशिष्टशक्त्यनङ्गीकारेऽर्थवत्सूत्रेऽ-धातुरिति पर्युदासबलादर्थवतामेव प्रातिपदिकसज्ञाविधानादनर्थकाना सज्ञानापत्तेरनर्थकसमासादौ कृत्सूत्रेणैव सा वाच्येति तस्य विधायकत्वापत्तौ नियामकत्व तस्येति योऽय सिद्धान्तस्तस्य भङ्गापत्तेः । तद्वितयोगमात्रविवक्षाया पचतकीत्यत्राकच्प्रत्यययुक्ते तदापत्तेश्च समासे विशिष्टशक्तिरावश्यकी ।

किञ्च, समर्थः पदविधिरिति महाधिकारेणैकार्थीभावसामर्थ्ये समासविधानात् । एकार्थी-भावश्च समस्यमानपदद्वयस्य स्वार्थपरित्यागेनैकार्थप्रतिपादकत्वम् । स चार्थो राजसबन्धवानय-

मिति बोधीय राजसबन्ध्यभिन्नः पुरुष इति बोधीयो वा। तादृशबोधस्य च नावयवलक्षणया सभवः, तथात्वे तुल्ययुक्त्या पङ्कजादिपदेष्ववयवशक्त्या पङ्कजनिकर्तृत्वेन रूपेण बोधे लक्षणया पद्मबोधे च सभवति सति पुनः पद्मत्वेन रूपेण तदुपस्थितये समुदायशक्तिकल्पना न प्रामाण्यपथमारोढुमर्हति। न चेष्टापत्तिः, सर्वसिद्धान्तभङ्गापातादनुभवविरोधाच्च, चतुर्विधपदविभागो दत्तजलाञ्जलिश्च स्यात्। बाधादिप्रतिसन्धान विनापि बोधात्तत्र शक्तिसिद्धिश्चेत्प्रकृतेऽपि समम्।

किञ्च, शिवो नाम गायको यस्येति शिवनामगायक इति बहुव्रीहौ शिवकर्तृकगानकर्मीभूतनामवानिति बोधो विशिष्टशक्ति विना नैव निर्वहतीति तत्र सुतरामनुपपत्तेः समासे विशिष्टशक्तिरङ्गीकार्या।

किञ्च, नामार्थयोरिति व्युत्पत्त्यनुरोधेन कल्प्यमाना लक्षणा कि राजसबन्धे वा तत्सबन्धिनि वा? आद्य उक्तव्युत्पत्तिभङ्गरूपतद्दोषतादवस्थ्यमन्त्ये तत्पुरुषोच्छेदापत्तिः। नीलोत्पलादिकर्मधारयस्थलेऽभेदससर्गावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितोत्पलत्वावच्छिन्नविशेष्यताशालिशाब्द बोधजनकसमासस्यैव कर्मधारयत्वेनाङ्गीकारात्तस्य तत्पुरुषेऽपि तुल्यत्वात्। न च भवन्मतेऽपीद तुल्यमिति वाच्यम्; शक्त्याऽभेदप्रतियोग्युपस्थापकविग्रहकत्वस्यैव मन्मते कर्मधारयत्वात्।

यत्तु सर्वसमासेष्वविशेषेण शक्यङ्गीकारे समासे क्वापि लक्षणाया अप्राप्तेस्तत्प्रयुक्तगुरु लघुभावतारतम्याभावेन निषादस्थपत्यधिकरणविरोधः, तत्र लक्षणाऽभावप्रयुक्तलाघवानुरोधेन लक्षणापादकतत्पुरुषबहुव्रीही परिहृत्य सकरजातीयस्य निषादस्याग्निविषयो (?) रभावेऽपि फलमुखत्वेन तदाक्षेपकत्वगौरवमप्यङ्गीकृत्य कर्मधारयस्वीकारात्। अतः केषुचित्समासेषु लक्षणाकल्पनमावश्यकमिति तन्न, समासारम्भकवाक्यस्यैव विग्रहत्वेन समासविग्रहवाक्ययोः समानप्रकारकसमानविषयकबोधजनकत्वानुरोधेन वा राजपुरुषादिविग्रहे लक्षणाया आवश्यकतया विग्रह वाक्यगतगुरुलघुभावतारतम्यमादायोक्ताधिकरणसिद्धान्तसगतेः सभवात्। अत एव कर्मधारयसमासविग्रहे लक्षणाभावादेव कर्मधारयस्य ज्यायस्त्वात्कर्मधारयसज्ञकपदसमुदायजशक्तिग्रहापेक्षया षष्ठीतत्पुरुषसज्ञकतज्जन्यशक्तिग्रहस्य षष्ठ्याद्यर्थरूपाधिकविषयत्वेन गुरुत्वाच्च।

किञ्च, पङ्कजादिपदेषु वाक्यरूपेषु समुदायशक्तिः सर्वैरप्यङ्गीकार्येति तत्किमपराद्ध समासशक्त्या येन तस्यामेवरूपो विद्वेषस्तव। न चानन्यलभ्यन्याय एव विद्वेषमूलम्, तादृशन्यायस्य पङ्कजादावपि तुल्यत्वेन तत्राप्यायुष्मतस्तव कुतो न विद्वेषः। न च पङ्कजादिपदात् पद्मत्वावच्छिन्नस्य झटित्युपस्थितेस्तेन रूपेण तदुपस्थितये च समुदायशक्तिरावश्यकी, बाधक विना योऽर्थो यस्माज्झटिति प्रत्याय्यते सोऽर्थस्तस्य वाच्य इति नियमात्तथानुभवश्चेति वाच्यम्, तवाभीप्सितोऽनु-

भव. कि पामराणामुत ग्रन्थकृतामृषितुल्यानामथवा ऋषीणाम् । नाद्यः, पामरानुभवस्या-प्रयोजकत्वात्, पामराणा देहादावात्मानुभवस्य सर्वदैव सत्त्वात्तादृशानुभवस्यापि प्रामाण्यापत्ते. । अस्ति च ऋषितुल्याना हरिकैयटादीनाम् ऋषीणा च भाष्यकृता तथानुभवः । नहि तव मते ऋषीणामनुभवो वर्णयितु शक्य., अनुपलम्भात् ।

किञ्च, तव मते समुदायशक्तिर्नाम वाक्यशक्त्यपरपर्याय एव, अन्यस्य निर्वक्तु-मशक्यत्वात् । तथा च वाक्ये समासे च शक्तिर्नाङ्गीक्रियत इति हि तव मतसिद्धान्तः प्रतिज्ञा च । एव च पङ्कजादिवाक्ये तत्स्वीकारे सिद्धान्तभङ्ग. प्रतिज्ञाभङ्गश्चेति । तस्मात्समासे शक्तिरावश्यकीति वैयाकरणमतनिगर्व. ॥

# उत्तरप्रदेशे संस्कृतशिक्षायाः प्रगतिः

श्रीरामनरेशमिश्र , उत्तरप्रदेशीयसंस्कृतपाठशालाप्रधाननिरीक्षक . काशी ।

साम्प्रत परमामोदस्यावसरोऽय यदुत्तरप्रदेशीयप्रशासन सुरभारतीसमुन्नतिमभिलक्ष्य भारतवर्षीयज्ञानराशिनिधेरार्यसंस्कृतेश्च तत्त्वानुसन्धानार्थ प्रयत्नशील वर्तते । वर्षद्वयात्पूर्व प्रशासनेन काश्यामेक महासम्मेलनमकारि यत्र भारतस्याखिलसंस्कृतपरीक्षासंस्थाना प्रतिनिधय. संस्कृतसाहित्याभ्युन्नत्यै स्वस्वविचार प्रकटितवन्तः । एतत्फलस्वरूप राजकीयविभिन्नसंस्कृत-परीक्षाणा पाठ्यक्रमे महत्परिवर्तन जातम् । हिन्दी-आंग्लभाषा इतिहास-गणित-भूगोल -राजशास्त्र-अर्थशास्त्रादिरूपा आधुनिकविषया अपि पाठ्यक्रमे सन्निविष्टा । १९५२ ईशवीयसितम्बरमासे राजकीयविज्ञप्त्या प्रकाशितमिद यत्, संशोधितपाठ्यक्रमानुसारेण प्रचलिता आंग्लभाषासहिताः प्रथमापूर्वमध्यमोत्तरमध्यमाशास्त्रिपरीक्षा राजसेवासु प्रशिक्षणविद्यालयेषु च प्रवेश कामयमानाना कृते क्रमशो जूनियरहाईस्कूल हाईस्कूल इण्टरमिडियेट बी ए.परीक्षाणा समतामावहन्तीति ।

अनया विज्ञप्त्या नवजीवनमवाप्यानुप्राणिता इव सजाता सर्वा अपि संस्कृतपाठशाला । छात्राणा दैनन्दिन जीवनमप्याशापूर्ण सजातम् । प्रदेशस्यांग्लविद्यालयाना जूनियरहाईस्कूल-कक्षास्वपि संस्कृताध्ययनमनिवार्यरूपेण निर्धारितमस्ति । उच्चतरमाध्यमिककक्षासु हिन्दीभाषा-मधीयानाना कृतेऽपि संस्कृतज्ञानमनिवार्यरूपेणापेक्षितमेव । नरेन्द्रदेवसमितिरप्यचिरादेव संस्कृतगिरोऽनिवार्यता विधास्यतीति दृढ विश्वस्यते ।

संस्कृतपाठशालासु नवीनपाठ्यक्रमव्यवस्थाप्रचालनायोत्तरप्रदेशीयप्रशासनेन वर्षेऽस्मिन् ७५०००) परिमितमुद्राणा राज्यानुदान शास्त्र्याचार्यपरीक्षापर्यन्त स्वीकृतेभ्य. प्रदेशीयोत्कृष्ट-विद्यालयेष्वष्टनवतितमेभ्यः ( ९८ ) आदर्शविद्यालयेभ्य प्रदत्तम्, येनानिवार्यवेतनक्रमोऽपि सुचारुतया निर्वाह्येत । शास्त्र्याचार्यकक्षयोरध्यापयता प्राध्यापकाना वेतनक्रम. १२०) मुद्रा-मारभ्य २००) पर्यन्त, तथा सहायकाध्यापकाना वेतनक्रमश्च ७५) आरभ्य १००) पर्यन्तो भविष्यति । ९८ विद्यालयेष्वनेन क्रमेण प्रदीयमानवेतनस्यार्धांशो राजकीयकोषादुपलब्धो वर्तते । एतद्विद्यालयेषु नवीनपाठ्यप्रणाल्याऽधीयानाना कृते शोभना व्यवस्था भविष्यतीति प्रशासनस्य बलीयान् विश्वासः । प्रत्येकविद्यालय आचार्यपर्यन्त शास्त्रद्वयस्याध्यापनाय व्यवस्था भविष्यति तथाऽऽधुनिकविषयाध्यापनाय बी.ए परीक्षोत्तीर्ण एकोऽध्यापकोऽनिवार्यरूपेण नियुक्तो भविष्यति ।

अनया योजनया प्रादेशिकी सस्कृतशिक्षा विकसितेव सजाता । एतदतिरिक्त सस्कृतविद्यालयेषु पुस्तकालयाना व्यवस्थापनाय १३०००) परिमित राज्यानुदानमपि प्रशासनेन विभिन्नविद्यालयेभ्यः प्रदत्तम् । सस्कृतपाठशालाना व्ययाधिक्यात् २६३७२ ) परिमित पूरका-नुदानमपि प्रदत्तमस्ति । २८०००) परिमिता भवननिर्माणसहायतापि कतिपयविद्यालयेभ्यः प्रदत्तास्ति । एकोनत्रिंशद्विद्यालयेषु प्रारम्भिकसाहाय्यस्यापि श्रीगणेशो जातः । वर्षद्वयात्पूर्व राज्यसहायताप्राप्तपाठशालाना सख्या २२६ परिमितासीत्, या च वर्धमाना सती ४१७ पर्यन्ताऽद्य वरीवर्त्ति ।

सस्कृताध्यापकानामाधुनिकशिक्षणसरण्या परिचयार्थ प्रशिक्षणसत्रमपि प्रचलति । यतोऽद्यावधि प्रशिक्षणकलापटीयासो भूत्वा २६९ सस्कृताध्यापका नि.सृताः । तत्र शिक्षार्थमागतेभ्यो मार्गव्ययातिरिक्त विंशतिरूप्यकाणि छात्रवृत्तित्वेन प्रतिमास प्रदीयन्ते । तत्रागतेभ्यश्छात्राध्यापकेभ्य आधुनिकविषयाणा व्याकरणादिशास्त्रीयविषयाणा च सैद्धान्तिक व्यावहारिकाभ्यासकरणाय प्रशिक्षणे दक्षा बुधा नियुक्ता भवन्ति । अस्मिन्नेव प्रसङ्गे प्रशिक्षण-विद्यालयस्य योजनापि विचारपद्धतिमारूढा ।

सस्कृतपाठशालाना निरीक्षणेऽपि प्रचुरा प्रगतिर्दरीदृश्यते । राजकीयसाहाय्य लभमानानामलभमानाना च समेषा विद्यालयाना निरीक्षण सुसम्पन्न भवति । एतदर्थमेकः प्रधान-स्त्रय. सहायकनिरीक्षका नियुक्ता. सन्ति । अद्यावधि ८०५ विद्यालयाना निरीक्षण जातम् । उत्तरप्रदेशे प्रायः १२०० सख्याकाः सस्कृतपाठशाला वर्तन्ते । निरीक्षणावसरे सस्कृतप्रचाराय सभासमित्यादय आयोज्यन्ते । एकत्र स्थाने लघुरूपेण प्रचलन्तीनामनेकपाठशालानामेकीकरणेन पाठशालासघटनरूपात्मक कार्यमपि प्रशसनीयमेव वर्तते । अनेन प्रकारेण सक्रियतामापन्नासु पाठशालासु प्रतिवत्सर क्षीयमाणा छात्रसहतिर्दैनन्दिन वर्धते, आर्थिकस्थितिश्च शोभनेव प्रतिभाति । अद्यावध्यष्टसु मण्डलेषु षोडशसस्थानामेकीकरण सुसम्पन्नमस्ति ।

अनेनेद स्पष्टमेव प्रतीयते यत् सस्कृतशिक्षाया उन्मेषार्थ सर्वतोभावेन प्रयत्नशीलोऽस्त्यु-त्तरप्रदेशीयः सर्वकारः । राजकीयकन्यापाठशालाना स्थापनम्, अधिपाठशाल सैनिकशिक्षा, अनुसन्धानकार्यम्, बालचरायोजनादिक च सर्व विचाराधीनमेव । वाराणस्या संस्कृतविश्वविद्या-लयस्य स्थापनानन्तरं राज्यमिद भारतीयगणतन्त्रे सस्कृतशिक्षाविषयकमादर्शभूतमुन्नत स्थान प्राप्स्यतीति सुदृढो निश्चयः ॥

# विद्वद्गोष्ठ्या विशिष्टः कार्यक्रमः

राजकीयसंस्कृतमहाविद्यालयस्याध्यापकैर्बहुवर्षेभ्य एका विद्वद्गोष्ठी आयोजिता वर्तते। सा च प्रत्यब्दं प्रायः प्रतिमासं स्वकीयमधिवेशनं संपादयति। तत्र महाविद्यालयीयाध्यापकाः, अध्येतारः, सरस्वतीभवनस्था विद्वांसः, बाह्याश्चामन्त्रिताः संस्कृतमनीषिणः संमिलिता भवन्ति। तत्र कदाचिद्विषयविशेषे निबन्धपाठः, निबन्धनिर्दिष्टविषयमाश्रित्योपस्थितविदुषां वैदुष्यपूर्णो गभीरो मिथो विचारविनिमयः, कदाचिच्च कमपि शास्त्रीयं सामाजिकं वा विषयमुपाश्रित्य मौखिको विचारविनिमयः शास्त्रार्थरूपः परस्परालोचनामयव्याख्यानरूपो वा प्रवर्तते। स चैषमोऽपि यथावसरं बहुवारं महाविद्यालयभवने स्तुत्येन साफल्येन प्रवृत्तः। किन्तु वर्षेऽस्मिन् महाविद्यालय-प्रधानाचार्यप्रेरितया विद्वद्गोष्ठ्या प्रधानाध्यापकश्रीबदरीनाथशुक्लमहोदयानामाध्यक्ष्ये व्याकरणाध्यापकश्रीबालकृष्णपञ्चोलिमहोदयस्य संयाजकत्वे चैको विशिष्टः कार्यक्रमः परिचालितः। विगते पुरुषोत्तममासे महाविद्यालयसम्बन्धिराजकीयपरीक्षाणां पर्यवसन्नतयाऽध्यापकजनेषु कक्षाकार्यतः प्राप्तावकाशेष्वेका व्याख्यानमाला विद्वद्गोष्ठ्याऽऽयोजिता, यस्यां स्थानीयानां बाह्यानां च विदुषां विभिन्नविषयेषु गवेषणापूर्णानि भूयांसि भाषणानि समभवन्। तेषां च भाषणानां तैस्तैर्विद्वद्भिरुपनिबद्धं संक्षिप्तं विवरणमत्र समुपस्थाप्यते।

**पुराणस्वरूपं भूगोलश्च**

तत्र प्रथमं महाविद्यालयस्य पुराणाध्यापकैः श्रीमदनन्तशास्त्रिफडकेमहाशयैः सामान्यतः पुराणस्वरूपं भूगोलविषयं चावलम्ब्य दिनत्रयं यावद् व्याख्यायि। तत्र प्रथमदिने—

पुराणमेकमेवासीद् ब्रह्मणा निर्मितं पुरा।
अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिर्गताः॥

इत्यादिवचननिचयतो पुराणस्य सत्ता वेदादितोऽपि प्राचीना लभ्यते, परन्तु तत्रेदं ध्यातव्यं यद् वेदानामानुपूर्वीरक्षणे प्राचीनैर्यथा प्रयत्नः समुपपादितस्तथा न पुराणाद्यानुपूर्वीरक्षणे। अतो हिमालयत आकन्याकुमारि ऋग्वेदे न पाठभेद एकोऽप्युपलभ्यते। पुराणादिषु तु पदपाठभेदः, श्लोकपाठभेदः, अध्यायपाठभेदः, वर्णनक्रमभेद इत्यादि सर्वं सर्वत्र प्रायो देशपुस्तक-भेदेन भिद्यत एव। वेदानुपूर्वीरक्षणेन तत्रार्थादिनिश्चयकरणं सुलभं संपद्यते, परन्तु पुराणा

दितोऽर्थनिश्चयकरणे महत्काठिन्यं समापतति । सर्ववाङ्मयस्य वेदतुल्यरक्षण तस्मिन्महत्युप ग्लवकाले यवननिर्मितेऽशक्यमेवासीदितीतिहासविदा विदितचरमेव । पुराणवाङ्मयजातस्या लोचनेनातिमहद्विज्ञान जायते, यतः पुराणाना रचना श्रीमता करुणापारावारेण व्यासदेवेन स्त्रीशूद्रद्विजबन्धूना कृते समपादि । यतस्ते वेदत्रयीतः सर्वथा दूरगतास्तेषा यथा ज्ञानं जायेत तमुपायमवलम्ब्य क्वचिदाख्यानतोऽन्यत्रोपव्याख्यानतः परत्र कथाभिरेकत्रोपकथाभिः क्वचिदिति-हासतस्तथेतिवृत्तेनैव गाथातः क्वचित्क्वचित्कल्पितगोष्ठीसरणिमाश्रित्य च तदेव वैदिक तत्त्व वेदोक्त सर्वत्र प्राचारि । तद्योग्यश्च सूतः प्रवक्ताऽपि निरमायि । स च सर्वत्र बम्भ्रम्य वैदिक सिद्धान्त प्रचार्य चास्य भारतराष्ट्रस्यैक्य सुदृढ निर्मितवान् ।

पुराणादिकथादर्शनेन स्वर्गमृत्युलोकपातालमेरुद्वयस्य सत्तावश्यमङ्गीकरणीयेत्यापतति । यतः खट्वाङ्ग रेवत अर्जुन-दशरथ ककुत्स्थाना स्वर्गगमन ततः प्रत्यावर्तन च सुस्पष्ट समु-पलभ्यते । एव पाण्डवादीना महाप्रस्थानादिवर्णनादितः सुस्पष्ट दृश्यतेऽनेन शरीरेण स्वर्गन्तु-मशक्ताः सन्तो युधिष्ठिरमेक विहाय सर्वेऽत्रैव निपतिताः । एव सावित्रीनसिकेतःप्रभृतीना यम लोकगमन ततः प्रत्यावर्तन च दृष्ट्वा यमलोकस्यापि द्वैविध्यमवश्यं कल्पनीयमापतति । मेरुविषये च–'सर्वेषामेव वर्षाणा मेरुरुत्तरतः स्थितः' इति विष्णुपुराणीयवचनेन मेरोरुत्तरतोऽन्यदेशस्य स्थितिर्नास्तीति निश्चीयते । एव तत्रैव मेरोरुत्तरतो नील-श्वेत-हिरण्यकवर्षाणा स्थितिप्रतिपादनेन मेरोरुत्तरतोऽन्यवर्षोपलब्ध्या मेरोर्द्विविधत्व विनावलम्ब्य न सगतिर्भवतीति कश्चन महामेरुरपरश्च मेरुरिति कल्प्यते । अनेन शब्देन च वर्णनमप्युपलभ्यते पुराणादिषु । महामेरुश्च स यत्र दिनस्य रात्रेश्च सतत षाण्मासिकी स्थितिः । मेरुश्च स भारते वर्णितः—

मेरोर्हरेश्च द्वे वर्षे वर्ष हैमवत तथा ।
क्रमेणैव व्यतिक्रम्य भारत वर्षमासदन् ॥
स देशान् विविधान् पश्यन् चीनहूणनिषेवितान् ।
आर्यावर्तमिम देशमाजगाम महामुनिः ॥

[ भार० शा० अ० ३२५ ]

एव पातालविषयेऽपि तथैव द्वैविध्यमङ्गीकरणीयमेवेत्यादिक प्रत्यपादि[१] ।

---

१ अत्र वर्णने श्रीपण्डितफडकेमहोदयेन भारतमानचित्रं कृष्णफलके चित्रयित्वा प्रादर्शि । तत्र मेरु-स्वर्ग-पाताल-यमलोकद्वयस्य स्थिति सम्यक् प्रदर्शितासीत् ।

द्वितीयदिने वैदिकसाहित्ये प्रसिद्धतमसरस्वत्याः स्थितिः कीदृशी पुराणेतिहासग्रन्थेषूपलभ्यते तद्विषये तथा हिमालयप्रभृतिपर्वतविषयेऽनेकतीर्थसरोवरवाप्यादिविषये चानेके विचाराः प्रदर्शिताः। तत्सकलिताशः—अधुना सरस्वती विलुप्तैव समजनि । परन्तु पूर्व वेदकाले "इम मे गङ्गे यमुने सरस्वति" इत्यादिमन्त्रप्रदर्शिताऽन्यनदीवत्प्रवहति स्म, सा च प्रवह्य पश्चिमसमुद्र समगच्छत । भगवता परशुरामेण प्रभासतीर्थतः सरस्वतीयात्रा प्रारब्धा । स चैवक्रमेण सरस्वतीप्रादुर्भाव-स्थलपर्यन्त गतवान् । स च मरुदेशे उदपानतीर्थे आगतस्तदा सरस्वती विलुप्तासीत् । केवल-मेकः कूपस्तत्रासीत् । परन्तु तत्रत्यस्निग्धभूमिदर्शनेन सरस्वत्या अनुमान कर्तु शक्यत इति शल्यपर्वगतवर्णनेन वक्तु शक्यते । अनन्तरम्—

गङ्गा च यमुना चैव प्लक्षजाता सरस्वतीम् ।
रथस्था सरयू चैव गोमती गण्डकी तथा ॥
अपर्युषितपापास्ते नदीः सप्त पिबन्ति ये ।

एतासा नदीना स्थानविषये "। तथा -

महेन्द्रो मलय. सह्य. शुक्तिमान् ऋक्षवानपि ।
विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः ॥

इति पर्वतविषय आधुनिकी स्थिति वर्णयित्वा पर्वतनदीना स्थानादिक निर्णीय प्रसङ्गतो हिमालयोत्तरपार्श्वस्थितजना. पिपीलक सुवर्ण गृह्णन्ति स्मेति विषयमुपवर्ण्य तत्र प्रमाणतया—

खसा एकासना ह्यर्हा प्रदरा दीर्घवेणवः ।
पारदाश्च कुलिन्दाश्च तङ्गणाः परतङ्गणाः ॥
तद्वै पिपीलिक नाम उद्धृत यत्पिपीलकैः ।
जातरूप द्रोणमेयमहार्षुः पुञ्जशो नृपाः ॥

इति सभापर्वीयश्लोक वर्णितश्लोकस्थाननिश्चयपूर्वक व्याख्याय श्वेतसुवर्णस्यापि वर्णन वराहमिहिराचार्येण समभ्यधायीति कथयित्वा द्वितीयदिनीयभाषणमुपसमहारि ।

तृतीयदिने सपूर्णभारतीयभूविज्ञाने रामायणस्थकिष्किन्धाकाण्डस्थ सुग्रीवेण कृत भूवर्णनम्, भारतस्थ यात्रादिग्विजयादिवर्णनम्, गर्गसहितादिग्रन्थस्थभूवर्णनमवश्य ज्ञातव्यम् । सुग्रीवकृतवर्णनेऽस्त्येवैको विशेषः—सुग्रीवः किष्किन्धाया स्थित्वा वर्णनारम्भमार्यावर्तमालम्ब्यैव करोतीति । अनन्तर सामान्यतः सक्षेपेण तत्तद्दिक्स्थदेशान् अर्जुनादिपाण्डवदिग्विजयवर्णनप्रसङ्गेन प्रदर्श्य पुराणस्थवर्णित मेरुमध्यमाश्रित्य वर्षवर्णन सर्वविशिष्टनगरादिवर्णन च मानचित्रे

विलिख्य प्रदर्शितम् । ततः पृथिव्या जगतः प्रारम्भे विद्यमाना स्थिति वेदादिगतपृथ्वी-वर्णनपरमन्त्रप्रदर्शनेन प्रतिपाद्य जगत. प्रारम्भकाले मनुष्यसमाजस्य स्थितिमपेक्षा ग्रहनिर्माणादिकारणादिक च वायुपुराणप्रदर्शितपथेन सुविशद प्रत्यपादयत् ।

## राजशासनम्

चतुर्थ व्याख्यान भारतीयराजशासनविषयमधिकृत्य पण्डितश्रीफडकेमहोदयेन समपादि । तस्य सारांशः—भारतीयैरार्यैरनेकमकटनिवारणार्थं चतुर्वर्णचतुराश्रमादिसंस्था निर्माय राष्ट्ररक्षण सम्यक् कृतम् । तत्र शान्तिपर्वणि श्रीमता भीष्मेण राजावश्यकता प्रतिपादिता—तदभावे हि बलिनो दुर्बलान् ग्रसेयुरेव सर्वत्र मात्स्यन्यायप्रवृत्त्या विनाश' सम्पद्येतेति । तत्रापि नृपास्तु बहुत्रासन्, यथा सभापर्वणि—"गृहे गृहे हि राजानः स्वस्य स्वस्य प्रियङ्कराः । न च साम्राज्य माप्तास्ते सम्राट्शब्दो हि कृच्छ्रभाक्" इत्युक्त्या ज्ञायते । परन्तु -

यस्त्वय मानवो द्वीपस्तिर्यग्यामः प्रकीर्तितः ।
य एव जयते कृत्स्न स सम्राडिति कीर्तितः ॥

इति मत्स्यपुराणदिशा सम्राडेक एवैतादृशः सम्पूर्णभारतविजेत्रैव भवति स्म । तत्र प्राचीनकालतो गणराजानामपि सत्ता वेदतो ज्ञायते । तथा हि—

आ यद् वामीयचक्षसा मित्र वय च सूरयः ।
व्यचिष्ठे बहुपाय्ये यतेमहि स्वराज्ये ॥

[ ऋ० ५ । ६६ । ६ ] इति ।

"व्यचिष्ठे अत्यन्तविस्तृत बहुपाय्ये बहुभिर्गन्तव्ये बहुभी रक्षितव्ये वा स्वराज्ये स्वराट्त्वाय एवविधराज्यार्थ यतेमहि" इति श्रीसायणाचार्यः । नृपनाशे तस्य राज्ये तत्कुमारकुमारीणा स्थापन कर्तव्यमिति रीतिरासीदिति शान्तिपर्वणि—"कुमारो नास्ति येषा च कन्यास्तत्राभिषेचय" इत्युपदेशाज्ज्ञायते । तथा लोकमतेन राजनिर्वाचन प्रचलति स्म । यथा रामायणे—

ततः परिषद सर्वामामन्त्र्य वसुधाधिप. ।

...

अनुजातो हि मा सर्वैर्गुणैर्ज्येष्ठो ममात्मजः ।
यौवराज्ये नियोक्तास्मि प्रीत. पुरुषपुङ्गवम् ॥
यदिद मेऽनुरूपार्थं मया साधु सुमन्त्रितम् ।
भवन्तो मेऽनुमन्यन्ता कथ वा करवाण्यहम् ॥

यद्यप्येषा मम प्रीतिर्हितमन्यद्विचिन्त्यताम् ।
अन्या मध्यमस्थचिन्ता हि विमर्दाभ्यधिकोदया ।।

इत्यादि बहुत्र विद्यमानानेकप्रकरणतो ज्ञायते । क्वचिदयोग्यराजवधोऽपि क्रियते स्मेति भागवते वेनवधाख्यानेन वायुपुराणे पुरूरवसो वधवर्णनेन च ज्ञायते । राज्ञो देवतारूपत्व यथोपलभ्यते—

नहि जात्ववमन्तव्यो मनुष्य इति भूमिप. ।
महती देवता ह्येषा नररूपेण तिष्ठति ।। इति ।

तथा नृपप्रजाभिः परस्परमन्योन्यरक्षण कर्तव्यमित्यपि वर्णनमुपलभ्यते—

राजा राष्ट्र यथाऽऽपत्सु द्रव्यौघैरपि रक्षति ।
राष्ट्रेण राजा व्यसने रक्षितव्यस्तथा भवेत् ।। इति ।

एव राजाऽष्टमन्त्रिणा मध्ये मन्त्र कुर्यादित्यादिराजकर्तव्य स्पष्ट वर्णितम् । तथा राजपालितदेशे कश्चिदपि दुःखभाग न भवेदिति राज्ञा ध्यातव्यमित्यपि शासन तदासीत्—

धिक् तस्य जीवित राष्ट्र राज्ञो यस्यावसीदति ।
अवृत्त्यान्यमनुष्योऽपि यो वैदेशिक इत्यपि ।। इति ।

तथान्धादिरक्षण राज्ञ. कर्तव्यकोटिमाटीकते स्म—

कच्चिदन्धाश्च मूकाश्च पङ्गून् व्यङ्गानबान्धवान् ।
पितेव पासि धर्मज्ञ तथा प्रव्राजितानपि ।।

इति शान्तिपर्वस्थोपदेशाज्ज्ञायते । युद्धे क्षत्रियकर्तव्यविषये महानुपदेशस्तथा तदानींतनाना सर्वेषा तादृक् कर्तव्य च दरीदृश्यते—

उद्यच्छेदेव न नमेदुद्यमो ह्येव पौरुषम् ।
अप्यपर्वणि भज्येत न नमेतेह कस्यचित् ।।
अप्यरण्य समाश्रित्य चरेन्मृगगणैः सह ।
न त्वेवोज्झितमर्यादैर्दस्युभिः सहितश्चरेत् ।। इति ।

**धर्माचार्यस्वरूपम्**

पञ्चम व्याख्यान धर्माचार्योः स्वरूपमधिकृत्य श्रीफडकेमहोदयानामेव जातम् । तस्य साराशः—"अय तु परमो धर्मो यद्योगेनात्मदर्शनम् ", "यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्म.", "धारणाद्धर्ममित्याहुर्धर्मो धारयति प्रजाः", इत्याद्यनेकधर्मलक्षणाना

विद्यमानत्वेऽपि 'सर्वथा प्रजाना राष्ट्रस्य च यो रक्षण विदधाति स एव धर्मः, राष्ट्रादिधारकत्वमेव तस्य लक्षणमित्येवायाति । स च धर्मः सर्वदाऽविचलित एव । तस्य पोषको य आचार' स एव कालदेशपरिस्थित्या भिद्यते । यद्यपि—"आचारः परमो धर्म. श्रुत्युक्त. स्मार्त एव च" इत्याद्यनेकवचनत आचारस्य परमधर्मत्व निगदित- मित्यापातत. प्रतिभाति, तथापि तत्साधने साध्यारोपाल्लाङ्गल मम जीवनमितिवन्मन्तव्यम् । यत आचार सर्वत्र देशकालकुलभेदतो भिन्नो भिन्न उपलभ्यते । यथा चौलप्रयोगे केशादिधारणविषये । विवाहविषये-"सार्वकालमेके विवाहम्" इति सूत्रप्रदर्शितपद्धत्यानेकधा विवाहकालो भिद्यत एव । अत्र कश्मीरदेशीयाचाराणामनेकविधाना भेदो व्याख्यातृमहाशयेन प्रतिपादितः । सर्वथाचारतत्त्वस्य भेदेऽपि या धार्मिकविशेष स एकविध एव, यथा कश्मीरदेशे पलाशसमिधामभावे तद्देशोत्पन्न 'सहतूत' प्रभृतिवृक्षाणा समिद्भिस्तत्र होमस्तत्रत्यैः क्रियते स्म । अत्र होमसाधनभूतद्रव्याचार- विभेदेऽपि साधनद्रव्येणाग्निसन्तर्पणादिक समानमेव । विवाहे द्रव्यकालविभेदेऽपि—असपिण्डाया सगोत्राय कन्यासमर्पण धार्मिकं तत्त्व समानमेव । एवमाचारभेदो भारते सर्वत्रोपलभ्यते । अत एव यथा धर्मस्य जीवोन्नत्यै परमावश्यकता तथैवातत्करणसमर्थमनुजकरण आचारस्यापि पर मावश्यकता, अत एव-"आचाराद् विच्युतो विप्रो न वेदफलमश्नुते" इत्यभ्यधायि स्मार्तैः । धर्मस्तु मीमासकपद्धत्या यज्ञरूप एव । यतो हि-"यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमा न्यासन्' इति श्रुत्या तस्यैव धर्मरूपत्व प्रतिपादितम् । तत्साधनभूतद्रव्यकालादिकाना चाचारपदेन ग्रहणमित्यायाति । तथा यज्ञजापूर्वरूपधर्मस्य 'धर्मः क्षरति कीर्तनात्' इत्यादिस्मृति वाक्यतोऽपूर्वरूपस्य तस्य स्वीकर्तव्यत्वेऽपि तत्साधनीभूतयज्ञादिकानामैकरूप्यमेव, साधनद्रव्याणा- मेवानेकविधत्व दर्शदृश्यते । यथा सर्गाद्यकाले द्रव्याभावात्—"स प्रजापतिरात्मनो वपामुद खिदत्","तामग्नौ प्राहरत्" इत्यादिश्रुत्या द्रव्यस्य विभेदेऽपि तद्द्वारा करणीयस्य यागादिकस्यैक- रूपत्वमेव वर्णितम् । एव सप्रत्याचारस्य विभेदेऽपि तद्द्वारा साध्यभूतधर्मस्य सर्वदाऽपरि- वर्तनीयत्वमेकरूपत्व च । परमधर्मत्व तु जीवस्य परमात्ममिलनमेव—"अय तु परमो धर्मो यद्योगेनात्मदर्शनम्" इत्यादिविचारेणायाति । तत्साधन च यज्ञादिकमेव । तस्य यज्ञस्य चानेक विधत्व भगवद्गीतादौ सुस्पष्ट वर्णितमुपलभ्यत इति ।

**पाणिनीयसूत्रेष्वशुद्धयः कथम् ? अथवा वेदादीनामपौरुषेयत्वम्**

षष्ठ भाषण श्रीमदनन्तशास्त्रिफडकेमहोदयेन पाणिनीयसूत्रेष्वशुद्धय. कथम् ? अथवा वेदादीनामपौरुषेयत्वमिति विषयमवलम्ब्य समपादि । व्याकरणकर्तुः पाणिनेर्व्याकरणज्ञानमासीन्न वा ? आसीच्चेत्कथ तेन स्वसूत्रेष्वनेका अशुद्धयः कृताः ? यथा-"न पदान्ताद्विर्वचनवरेयलोप०"

इत्यादिसूत्रेषु सत्स्वपि स्वकीयेषु–"सुपो धातुप्रातिपदिकयोः" इत्यादिसूत्रेषु विभक्त्याद्यलोपः समकारि। व्याकरण नागच्छतीति न कदापि वक्तुं युक्तम्, भगवता महाभाष्यकारेण पतञ्जलिनापि–"वर्णेनाप्यनर्थकेन न भाव्य किं पुनरियता सूत्रेण", "आचार्याः कृत्वा न निवर्तन्ते" इत्यादिना तस्य ऋषेर्महत्त्वमेव सर्वत्र सप्राकाशि। अतः सशेते चेतो विचारकाणाम्। अत्र कदाचिदिद रहस्य सभवेत्–प्रायो विशिष्टं विज्ञान मनुजस्य बुद्धयाऽप्रापणीयम्। तत्तु स्वाहङ्कारं सर्वथा परित्यज्य विशिष्टशुद्धपरम्पराप्राप्तोपासनया समाध्यवस्थाया स्थितवता मनुजेन परमेश्वरसन्निधान प्राप्तवता लब्धुं शक्यते। न तत्र तस्य किञ्चिन्मात्रयापि कर्तृत्वमस्ति। केवलं महाभूतस्य निश्वासवदनेकशास्त्राणा वेदानामनायासेन प्रादुर्भावो भवति। तत्र स्वकीयसंस्कारमवलम्ब्य गतेन केवल स्वसामर्थ्यानुसार यादृग विज्ञान स्वीकर्तुं शक्येत तादृग तस्यामवस्थाया बहिर्यैरुपलब्धै. तद्देशीयतत्कालीयवार्तादिभिः सबद्धय शब्दै. कथञ्चित्स्वीयामर्धजागृति विधाय प्रकाश्यत इत्यस्ति स्वाभाविकी स्थितिः। यथा स्वप्नस्थः पुरुषः किमपि स्वप्नेऽनुभूय विसङ्गतयापि शब्दप्रणाल्या किमपि किमप्युत्स्वप्नायते। इतिहासेऽपि श्रीशिवराजमहोदयस्येदृश्येव स्थितिरुपवर्णिता। श्रीपरमहसरामकृष्णमहोदयस्यापीदृग्व्यवस्थानेकवार समजनीति तच्चरित्रतो ज्ञायते। आदिसृष्टिकाले ऋषीणामपि विशिष्ट विज्ञानमनयैव रीत्या हृदि सप्रकाशितम्। "यो ब्रह्माण विदधाति पूर्वं यो वै वेदाश्च प्रहिणोति तस्मै" इति श्रुत्या, "तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत्सूरयः" इति पुराणस्थवचनेन च तदेव प्रतिपाद्यते। यदा मनुजो व्याकरणकोशादिज्ञानवान् काव्य करोमीति बुद्ध्या किमपि सपादयति तदा लौकिकान् सर्वानपि नियमानवलम्ब्य करोति। परन्तु यत्र स्वात्मानमेव विस्मृत्य श्रीपरमेश्वरस्येशानस्य सर्वविद्याना समीपे समाध्यादिसाधनेन मनुजः सगच्छते तदा त्वभिमानराहित्येन लौकिकव्याकरणादिनियमस्य ज्ञानराहित्यात्तत्रत्यनियमादिद्वारार्थजात तादृशविशिष्टपुरुषद्वारोपलभते, अतस्तमृषिशब्देन सर्वे वर्णयन्ति। अतस्तत्प्रकाशितग्रन्थे लौकिकनियमापेक्षया भिन्नानुपूर्वी दरीदृश्यते। यथा लोके 'भद्र कर्णैः' भवति, वेदे तु 'भद्र कर्णेभिः शृणुयाम' इति। लोके लुक्समासे विभक्तिलोपः, परन्तु परमेश्वरसन्निधानेन विशिष्ट ज्ञान प्राप्नुवता महावैयाकरणेन श्रीपाणिनिऋषिणा सर्वथापि विस्मृताहङ्कारेण यच्च सप्राकाशि तत्र लोकदृष्ट्या दोषाणा सत्ता स्वाभाविकीति स्वाभाविक रहस्यं स्यादिति।

**वेश्याव्यवसायः**

सप्तमदिवसीय भाषणमपि प्रस्तुत विषयमवलम्ब्य श्रीफडकेमहोदयानामेव जातम्। तस्य सक्षेपः—"कामस्तदग्रे समवर्तताधि" इति श्रुत्या, "अकामस्य क्रिया काचिद् दृश्यते नेह कर्हिचित्"

इति स्मृत्या, "क इदं कस्मा अदात्कामाय" इति विवाहप्रकरणस्थब्राह्मणेन च सर्वप्रवृत्तिमूलकारणं स्त्रीपुरुषसम्बन्धप्रधानहेतुश्च कामोऽस्तीति निश्चितम्। तस्य द्वैविध्येन सत्त्वगुणयुक्तः स प्रवृत्तः सन् वर्णाश्रममर्यादां जीवस्य जीवन्मुक्तावस्थापर्यन्तं चोत्कर्षं सम्पादयति। द्वितीयप्रवृत्त्या रजस्तमोयुक्तः सन् स एवान्ततो गत्वा पश्वादिकानां स्वाभाविकीमुन्मार्गगामितां प्रकाशयति। अतस्तस्य स्वाभाविकप्रवृत्तेर्नियन्त्रणमावश्यकं जगद्धारणाय, कृतमपि तैः समाजधारकैः श्वेतकेतुप्रभृतिभिर्ऋषिश्रेष्ठैः—

> व्युच्चरन्त्याः पतिं नार्या अद्यप्रभृति पातकम्।
> भ्रूणहत्यासमं घोरं भविष्यत्यसुखावहम्॥
> भार्यां तथा व्युच्चरतः कौमारब्रह्मचारिणीम्।
> पतिव्रतामेतदेव भविता पातकं भुवि॥

इत्यादिना भारतादौ। अनन्तरं च व्याख्यात्रा विवाहसंस्थायाः प्रारम्भविषयेऽनेकदृष्टान्तप्रदर्शनपूर्वकं पुरा वेश्योत्पत्तिः कथं समजनि, तासां विशेषः, समाजे स्थानम्, स्वभावः, नियमितवेश्याकर्मकरणम्, गुप्तवेश्याव्यवसायः, तासां पातिव्रत्यम्, विवाहपद्धतिः, धर्मशास्त्रीया व्यवस्था, तासां कृतेऽगम्याः पुरुषाः, पुत्रकन्यादिकम्, सम्प्रति तासां कर्तव्यादिकम्, पुरा राज्ञां कृते तासामावश्यकतेत्यादि वेश्यासबद्धमनेकविषयजातमनेकदृष्टान्तपुराणेतिहासधर्मशास्त्रीयवचनसमुदायप्रदर्शनपुरस्सरं सार्धहोरापरिमितेन कालेन प्रतिपादितम्।

## भारतीयसाहित्ये महर्षिरगस्त्यः

अष्टमं भाषणं महाविद्यालयस्येतिहासाध्यापकैः श्रीनीलकण्ठपुरुषोत्तमजोशिभिः कृतम्। तस्य सारांशः—वैदिकवाङ्मयेऽगस्तेरगस्त्यस्य वा नामोल्लेखो यत्र तत्र समुपलभ्यते। पुराणेषु तु तस्य प्राचुर्येण समुपलब्धिरवलोक्यते। वेदेष्वगस्तिर्जारणमारणादिमन्त्रनिष्णातर्षित्वेनोपख्यातः। तत्रैव तस्य सहधर्मचारिण्या लोपामुद्राया अपि चर्चा विद्यते। पुराणेष्वगस्तेर्जन्मकथा विस्तरेण वर्णिता दृश्यते। पुराणानि लोपामुद्राया विषयेऽपि विविधाः कथा निर्दिशन्ति। श्रूयते लोपामुद्रायाः कथनादेवागस्तिर्विजित्येल्वलनामकेनासुरेण सह श्रुतर्वब्रध्नश्वत्रसदस्युनामकान् राज्ञो विपुलां सम्पत्तिमधिगतवान्। अगस्तिः समुद्रशोषणकर्मणा स्वकीयया दक्षिणाशायात्रया च विशेषेण प्रथितः। विमानविद्योपज्ञत्वेन तस्यैतोऽप्यधिका यशस्सन्ततिर्व्यराजत। अगस्तेर्विमानविद्यया सबद्धाः श्रीग० वि० केतकरमहोदयस्य निबन्धाः 'केसरी'-नामके महाराष्ट्रीय-

वृत्तपत्रे ( ८।६।५२, ७।१०।५२, २२।२।५३ दिनाङ्कितेष्वङ्केषु ) द्रष्टव्याः । उज्ज यिनीतोऽगस्तिसहिताया यो हि खण्डितो हस्तलेखः समुपलब्धस्तेनागस्तेर्विमानशास्त्रस्य प्राका म्येन स्वरूपोपलब्धिर्भवति । विमानानीमान्युदानवायुना पूरितान् कोशाननतिभारासु काष्ठ पट्टिकास्वावद्धय निर्मीयन्ते स्म । सुशिक्षितैर्विहगैरिमान्यूह्यन्ते स्म । उदानवायोरुपलब्धि स्तडित्साहाय्येन भवति स्म, यस्या हि 'मैत्रावरुण तेज.' इत्याख्या महर्षिणा विहिता । अस्य तेजस उपलब्धेः प्रक्रिया तत्र वर्णिता दृश्यते । अगस्तेरस्या विमानविद्यायाः सपुष्टिर्मत्स्य पुराणीयेनैकेन प्रकरणेनापि भवति । तत्र ह्युक्तं महर्षिणा—

यावद्वर्षसहस्राणा पञ्चविंशतिकोटयः ।

वैमानिको भविष्यामि दक्षिणाचलवर्त्मनि ॥ [ ६१।४० ] इति ।

अस्मन्मतेऽगस्ते. समुद्रशोषणकथा केवल रूपकमात्रम् । अस्या कथाया वास्तविक तात्पर्यं जलदस्युदमनरूपे कार्ये निहितम् , यद्धि तेन स्वकीयाना विमानाना साहाय्येन सुचारु निरूढम् ।

अगस्तेर्महत्त्वाधायक द्वितीय कार्यं दक्षिणाशाप्रस्थानरूपम् । अत्र स्कन्दपुराणान्तर्गता विन्ध्याचलगर्वभञ्जन तथापि रूपकमेव । ऐतिहासिकाना मते प्रागेविन्ध्यमार्यसस्कृतेः सवप्रथम प्रचार एवास्या. कथायास्तात्पर्यम् । महर्षिणा तेन सा भूमिरार्यनिवासयोग्याऽऽपादिता । अगस्तिकृतस्यास्य दिग्विजयस्य बौद्धसाहित्ये दक्षिणभारतीयतमिलसाहित्ये च वैविध्येन वर्णन दृश्यते ।

दक्षिणदिग्विजयानन्तरमेवागस्तिना समुद्रशोषणमाचरितम् । एव च दक्षिणापथ नरातङ्क विधायाऽऽर्येभ्यो महानुपकारो विहितः । कि बहुना, अगस्तिर्भारतवर्षस्य प्रथमो वैज्ञा- निकः, महानाचार्य., महत्तमः प्रचारकश्चासीदिति ।

**संस्कृतवाङ्मयः सर्वविद्यानामाकरः**

अस्या व्याख्यानमालायामन्तिम भाषण म०म०श्रीगिरिधरशर्मचतुर्वेदमहोदयानामासीत् । ते. काशिकराजकीयमहाविद्यालयस्य समस्ते भारते विदेशे च महत्त्वम् , आग्लानामपि सस्कृतसाहित्यसरक्षणे महाननुरागश्चेति पूर्वमभ्यधायि । ततो विविधेषु विषयेषु स्वकीया. प्राञ्जला विचारा इत्थ प्रदर्शिताः—

सम्प्रति परिस्थितिवशात्सस्कृतशिक्षाया गौणत्व तथापि सर्वविधभारतीयभाषासु सस्कृत- शब्दानामेव प्राचुर्य विद्यते । सर्वोऽपि व्यवहार. सस्कृतभाषया भवेद् यद्यपि, तथाप्यनेके

ये विषया नवीना आङ्ग्लभाषाया वर्तन्ते न तेषां समावेशः संस्कृतभाषायामिति संस्कृतभाषा-प्रचारे महत्काठिन्यम् । अतो विद्वद्भिस्ते ते नवीना विषयाः संस्कृतभाषाया संयोज्याः, तदर्थं नूतनसाहित्य निर्माय संस्कृतग्रन्था मुद्रापणीया. ।

पुरा संस्कृतवाङ्मयं सर्वतोभावेन परिपूर्णमासीत् । साम्प्रत संस्कृतभाषाया महान् ग्रन्थराशिर्विनष्टः । 'संग्रहे प्राधान्येन परीक्षितम्' इति पतञ्जलिना उक्तम्, सोऽपि ग्रन्थो विनष्ट एव, एवमेव वार्ताग्रन्थाना विनाश. समजनि ।

गोपथब्राह्मण उक्तम्–सर्वस्यास्त्रयादशाङ्गा वेदा आसन्निति । सम्प्रति षडङ्गो हि वेद. । सर्वमक्षिकया विचारेऽद्यापि सा विद्या सूत्ररूपेण वर्तत एव ।

प्रत्यक्षाश्रितेनानुमानेन कलादिविषये वैज्ञानिकै. परिवर्तन क्रियते संसारे । दर्शनक्रम विषयेऽप्येवमेव–पूर्वमणुवाद, ततः परिणामवादः, क्रमेण विवर्तवाद इति ।

विकासवादस्य प्राधान्य सम्प्रति । जीवाना प्रादुर्भावः क्रमेणाभूत् । वृक्षलतादीना पूर्वं सृष्टि । मानवस्य वानरादुत्पत्ति. । मानवा अपि क्रमेणैव बुद्धिमन्तोऽभवन्निति । पुराणेऽपि चतुर्विधः सर्गः प्रतिपादित. । सांख्येऽपि—प्रथम वृक्षसृष्टिः, तदनन्तर मानवसृष्टिः । पञ्चविध. सर्ग. पशूनाम्, मानवमादाय षड्विध. । सम्पूर्ण. सर्गस्तु चतुर्दशविध इति वैज्ञानिकाना न्यूनत्वम । ग्रन्थाना विलोपान्नोपलभ्यते विस्तरः ।

पाश्चात्त्याना यो विकासवादः स भारतीयाना तु ह्रासवाद एव । पूर्वं मानवा बुद्धिमन्त आसन् । साम्प्रतमल्पबुद्धय इति विकासवादे वैमत्यं भारतीयानाम् ।

मनोविज्ञान योगशास्त्रे यादृशमस्ति तादृश न साम्प्रतिकैः सयुक्तिक प्रतिपाद्यते । भौतिकविज्ञान पाश्चात्त्यैः प्रकटीकृतमिति तु भ्रम एवाधुनिकानाम् ।

शास्त्रेषु सर्वमिद प्रतिपादितम्, अन्वेषणस्यावश्यकताऽस्ति । तत्र संस्कृतज्ञाना मनोयोगः स्यात् तदा सर्वं समुपलब्ध भवेदिति ।

ताम्रेण सुवर्णनिर्माणं शास्त्रे दृश्यते । तत्र गुरुत्वान्न तत् संभवतीत्युद्घोषः केषाञ्चित् । अत्रोच्यते–तत्त्वस्य तत्त्वान्तरेण परिणमन संभवत्येव । मूल अस्यैव तत्त्वस्य सत्त्वात् । शास्त्रेऽपि–'सदेव सौम्येदमग्र आसीत्' इत्येकमेव तत्त्वम् । आधुनिकैर्वैज्ञानिकैरपि तत् स्वीक्रियत एव । एवम्–प्रकृतिः, क्षर., अक्षरः, अव्ययः, पुरुष, परात्पर इत्यादीनि तस्यैवैकस्य तत्त्वस्य नामान्तराणि । एव च वैज्ञानिकैराविष्कृता सर्वविधा सृष्टिप्रक्रिया संस्कृतसाहित्ये बीजरूपेण निहितैव ।

शतशः शब्दा अन्वेषणयोग्याः सन्ति । साम्प्रत विचारप्रक्रियाज्ञान नास्ति, काचन सर्वाङ्गपरिपूर्णाऽनुसन्धानशाला नास्ति ।

यावत्यो नद्यः पर्वताश्च पुराणेषु तेषां गणना न जाता, सा कर्त्तव्या। नीलनद्युद्गम स्थानमग्निपुराणे वर्णितमस्ति।

तदुत्तरम्—'वादे वादे जायते तत्त्वबोधः' इति सिद्धान्तमनुसृत्य श्रीचतुर्वेदमहोदयानां भाषणे विदुषां काचन जिज्ञासा स्यात् सा प्रकटनीयेति गोष्ठीसंयोजककथनानन्तरं राजकीय-महाविद्यालयीयदर्शनाध्यापकैः जगन्नाथशर्मोपाध्यायैः शास्त्यमतमनुसृत्य सयुक्तिका अनेका विप्रतिपत्तयः श्रीचतुर्वेदमहाशयानामग्रे विचाराय समुपस्थापिताः। एवम्—मात्राभेदेन गुण भेद, ह्रासविकासवादयोर्भिन्नं स्वरूपमित्यत्र वैदुष्यपरिपूर्णं सम्भाषणं जिज्ञासार्थं विहितम्। एवमेव महाविद्यालयीयदर्शनविभागाध्यक्षैः श्रीदेवदत्तशर्मोपाध्यायैः सृष्टिक्रमविषये विप्रतिपत्तयः समुपस्थापिताः।

कृतजिज्ञासानां सप्रमाणं समाधानं सांख्यमतेन कुर्वद्भिश्चतुर्वेदमहोदयैः प्रसङ्गतो विज्ञानभिक्षुवर्णितद्रव्यगुणप्रक्रियासंयोजनमापातरमणीयम्, वस्तुतो गुणसमष्टिर्द्रव्यमित्युक्तम्। अत्र विषये परमादरणीयानां म०म०श्रीगोपीनाथकविराजमहानुभावानां कथनमपि श्रीचतुर्वेद महोदयैरनूदितं यत् सांख्यग्रन्थानां विलोपात् सा प्रक्रिया लुप्तैवेति योगमार्गेण तस्याः प्रक्रियायाः ज्ञानं सम्भवति। विकासवादे ईश्वरप्रेरणा, कर्मसिद्धान्तोऽप्युपयोगी। उत्पत्तिक्रमविषयिका पुराणप्रक्रियाप्यनुसन्धानमन्दिरे गवेषणपद्धत्या विचार्योग्येति।

भाषणसमाप्तौ महाविद्यालयप्रधानाचार्यैः श्रीत्रिभुवनप्रसादोपाध्यायमहाभागैर्विद्वद्गोष्ठ्या महत्त्वम् श्रीचतुर्वेदमहानुभावानां भाषणे वर्णितविषयज्ञानस्यावश्यकत्वं सयुक्तिकं समर्थितम्। एवमनुसन्धानमन्दिरे विशिष्टविदुषां सहयोगो राजकीयविभागद्वारा तेषां सम्मानमावश्यक-मित्याद्युक्तम्। अन्ते धन्यवादप्रदानं सभासमाप्तिश्च सञ्जाता॥

# विविधम्

## अन्यतमस्य कर्पूरमञ्जरीश्लोकस्य समीक्षा

कर्पूरमञ्जरी राजशेखरप्रणीता प्राकृतभाषाया शूरसेनजनपदीय रूप प्रकाशयन्ती प्राकृताध्येतॄणा कृतेऽद्यत्वे भवत्यन्यतम पाठ्यपुस्तकम् । तस्य चत्वारि सस्करणानि तदध्येतारः प्रायश. समालोकयन्ति। तत्र निर्णयसागरीय सम्करण वासुदेवकृतटीकासहित यस्मात्सम्कृतच्छायो पहारेण सम्कृतज्ञानुपकरोति तस्मात्तदवलोक्यते । कलिकातानगरीतः प्रकाशित जीवानन्दीय सस्करणमपि तत्समानयोगक्षेमम । एतत्सस्करणद्वय नातीव विवेचनाप्रधानम् । कोनो- ( Sten Konow ) महोदयस्य सस्करण ( Harvard Oriental Series, Volume 4 ) अध्यापकलान्मैन-( C R. Lanman )कृताग्लभाषानुवादसहित विश्वविद्यालयीयच्छात्राणा परमोपकारि । विविधपाठभेदनिर्देशयुत तदिद विवेचनाप्रधानमग्रिम सस्करणम् । इत' पर कलिकाताविश्वविद्यालयीय श्रीमनमोहनघोषकृत सस्करण गणनामर्हति । पाठभेदसहित मूलमात्रमिद सस्करणमाग्लभाषाया काभिश्चिद्विवेचनात्मिकाभिष्टिप्पणीभिः सम लङ्कृतम । एतत्सस्करणद्वय पाठतदर्थविवेचनाया महदुपकारि । एतानि सस्करणान्युपजीव्यै- वात्र सदर्भो विवेक्तव्यः ।

शृगाररसा हि कर्पूरमञ्जरी प्रारम्भे सूत्रधारमुखेन शिवपार्वत्यो. सुरतप्रसङ्ग वर्णयति—

> [1]ससिहण्डमण्डणाण समोहणासाण सुरअणपआण ।
>
> गिरिसगिरिन्दसुआण सघाडी वो सुह देउ ॥
>
> [ मनोमोहनघोषकृतकर्पूरमञ्जरीसम्करणे, प्रथमजवनिकान्तरे, श्लोक. ३ ]

निर्णयसागरीये सस्करणे 'समोहणासाण' इत्यस्य स्थाने 'समोहणासाणॅ' इति पाठः । इम पाठ वासुदेवः 'समोहनाशयोः' इति च्छाययाऽनुवदति । तत्र कोनो सस्करणे छम्मुहणासाण इति पाठः ।

---

१ शशिखण्डमण्डनयोः समोहनाशयो. सुरजनप्रिययो ।
गिरिशगिरीन्द्रसुतयो सघाटी वः सुख ददातु ॥ इति च्छाया ।
घोषमहोदयस्य मते संमोहनाशपदस्यार्थ· समोहनाशकृत् ।
( The destroyer of ignorance P 142 )

'छम्मुहणासाण' इत्यस्य 'षण्मुखन्यासयोः' इति संस्कृतमूलं मत्वा लान्मैनसाहवेनानुवादः कृतः। तत्र घोषमहाभागस्येयं विप्रतिपत्तिः—'छम्मुह (=षण्मुख) इति पाठः (अर्थ-) विरोधं तनोति। द्वयोः शिवपार्वतीपुत्रयोः किमिति केवलं कार्त्तिकेये पक्षपात इति न सौकर्येण व्याख्यातुं शक्यम्[1]। इमां विप्रतिपत्तिं मनसि निधाय समोहणासाण (=समोहनाशयोः) इति पाठस्तेन समर्थितः। पाठोऽयं निर्दोषो भवतु नाम। परं सहृदयमनोऽत्रापि विप्रतिपन्नमेव तिष्ठति। क्व नाम सुरतप्रसङ्गः, क्व च मोक्षशास्त्रीया समोहनाशचर्चा?

वस्तुतस्तु 'छम्मुहणासाण' इति पाठः सर्वेषु रमणीयतमः। परं तस्यार्थाववोधे लान्मैन महोदयस्य भ्रमो जातः। मनोमोहनघोषमहोदयोऽपि तेन व्याख्यानं भ्रान्तमयमेव मूलपाठस्यार्थं मत्वा शोभनतममपीमं पाठं सर्वथैव निराचकार। तस्मात्सोऽयं पाठो व्याख्यातव्यः।

सुरतप्रसङ्गे शिवपार्वत्योः परस्परमेकीभूतयोरभेदनामैककल्पना च मनसि निधाय कविना 'छम्मुहणासाण' इति पदं न्यस्तम्। शिवस्य पञ्च मुखानि पञ्च नामानि (=नामैकं), पार्वत्या एकं मुखम् एकं च नामेति द्वयोरेकीभूतयोः षड् मुखानि षड् नामानि भवन्ति। तथा च 'छम्मुहणासाण' इति पदं षण्मुखनाम्नयोरित्येवमनूदितुं शक्यम्। मुखयोरिव नामयोरपि स्पर्शः सङ्गमे प्रीतिं जनयति।

यदि षण्मुखन्यासयोरित्येवानुवादः क्रियते तथापि व्याख्यानान्तरं तथा सम्भवति यथा घोषमहोदयस्य विप्रतिपत्तिर्निवर्तेत। तथा हि—चुम्बनादिव्यतिकरे षण्णां मुखानां तत्र यथायथं न्यासो भवति। कदाचित् पार्वत्या एकं मुखं शिवस्य पञ्च मुखानि चुम्बितुं त्वरते। कदाचिच्च शिवस्य पञ्च मुखानि पार्वत्या अद्वितीयं मुखं चुम्बितुं भवन्ति त्वरमाणानि।

एवं छम्मुहणास (=षण्मुखनाम, षण्मुखन्यास) शब्दो न सृजति किमप्यनौचित्यम्। प्रत्युत रसौचित्यनिर्वाहकः सन् भवत्येव रमणीयपाठानामन्यतमः। तत्स्थाने समोहणास (=समोहनाश) इति पाठान्तरम्। तस्य शृङ्गाररसानुकूलता न दृश्यते। यदि तु समोहने (=सुरते) आशा (=अभिलाषः) ययोरिति भङ्क्त्वा व्याख्यायते तर्हि तस्य रसानुकूलता सम्भवति। एवं कृतव्याख्यानं पदमिदं शब्दशक्तिमहिम्ना 'अविद्यानाशकृत्' इत्यर्थान्तरं द्योतयितुमलम्।

---

1 The reading Chammuha (= Ṣanmukha) creates difficulty, for it is not easy to explain why of the two sons of Siva and Parvati, only Kartikeya Should be given preference CF Lanman [ PP 142-143 ( Second Edition ) ]

( ४ ) सिद्धान्तकौमुदी ( आङ्ग्लभाषानुवादसहिता श्रीशचन्द्रवसुमहोदयसंस्कृता यस्या वैदिकस्वरप्रक्रियात्मको भागः १९०५ खीष्टाब्दे प्रकाशित. ) Panini Office, ALLAHABAD, 1905

( ५ ) पाणिनीय व्याकरणम् ( हरिशर्मसङ्कलितम् ), पटना, १९२८ ई०

( ६ ) पाणिनिसूत्रपाठस्य तत्परिशिष्टग्रन्थानां च शब्दकोशाः भाण्डारकरप्राच्यविद्यासंशोधन-मन्दिरम्, पूना, १९३२ ई० ( Word-Index to Panini-Sutra-Patha and Parisistas Bhandarkar Oriental Research Institute, POONA, 1935 )

एतेषु सर्वेषु 'वाचादीनाम्' इत्येव पाठ. समुपलब्धः । परं वाच् शब्दस्य रूपावल्यां न क्वचिदप्युभावचावुदात्तौ दृष्टौ । विशदीकरणार्थं वाच् शब्दस्य रूपावलि. पठ्यते स्वरनिर्देशपुरःसरम् । तत्रानुदात्तोऽच् अधस्तात् तिर्यग्रेखया, स्वरितोऽच् उपरिष्टादूर्ध्वाधररेखया लक्ष्यते । उदात्तोऽच् चिह्नरहितः स्थाप्यते—

| | | | |
|---|---|---|---|
| १ | वाक् | वाचौ | वाचः |
| २ | वाचम् | वाचौ | वाचः [ वाचः ] |
| ३ | वाचा | वाग्भ्याम् | वाग्भिः |
| ४ | वाचे | ,, | वाग्भ्यः |
| ५ | वाचः | ,, | ,, |
| ६ | वाचः | वाचोः | वाचाम् |
| ७ | वाचि | ,, | वाक्षु |

एकाच् वाच् शब्दः । प्रथमाविभक्तेरेकवचनं विहायान्यासु विभक्तिषु विभक्तियोगेन द्व्यच् सम्पद्यते । तत्र सर्वनामस्थानेषु ( प्रथमायास्त्रिषु वचनेषु द्वितीयाया एकद्विवचनयोश्च ) प्रकृत्यंश उदात्तः । अन्यत्र तु प्रत्ययांश उदात्तः । केवलं द्वितीयाबहुवचने द्विविधमपि रूपमुपलभ्यते । तत्र कोष्ठगतं रूपं विरलम् । सुबन्तेषूत्सर्गतः सुप्प्रत्ययानामनुदात्तत्वात् प्रकृत्यंश एवोदात्तो भवति । तथा च सूत्राणि—"प्रत्ययः, परश्च, आद्युदात्तश्च, अनुदात्तौ सुप्पितौ" [पा० ३।१।१-४] इत्यादीनि । परं वाच्-शब्दरूपेषु "सावेकाचस्तृतीयादिर्विभक्तिः (उदात्ता)" [ पा० ६। ।१६८ ] इति सूत्रेण प्रथमां द्वितीयां च वर्जयित्वान्यत्र तृतीयादिषु विभक्तिषु विभक्त्यंश उदात्तो भवति । प्रकृतिस्त्वनुदात्ता तिष्ठति । न च क्वचिदपि वाच् शब्दस्य रूपेषु

द्वयोरप्योरुदात्तता दृष्टा। न च पाणिनिना लेशतोऽप्यनुशिष्टा। तस्मात् "वाचादीनाम्" इति पाठश्चिन्त्यः।

मम तु इदमेतत्प्रतिभाति यत् पूर्वापरसूत्रेषु यतो निपातानां स्वरोऽनुशास्यते ततो मध्यगतमिदं सूत्रं निपातस्वरानुशासकमेव भवितव्यम्। दृश्यते वाव ( Vāva ) इति निपातो द्व्युदात्तः। तस्मात् समीचीनस्सूत्रपाठः 'वावादीनामुभावुदात्तौ' इति भवितव्यः। ब्राह्मणग्रन्थेष्वस्य वाव-निपातस्य प्रचुरः प्रयोगः। तैत्तिरीयसंहितां विहाय नान्यासु संहितास्वस्य प्रयोग उपलभ्यते। अस्य द्वयोः स्वरयोरुदात्तता प्रेक्ष्यैव मन्ये शान्तनवाचार्यो 'वावादीनाम्' इति सूत्रयामास। यस्य लिपिभ्रमेण 'वाचादीनाम्' रूपं सञ्जातम्। शोधनार्हेऽप्यत्र हन्त! शोधकैरुदासितम्।

अथ संशोधितपाठः सूत्रं व्याख्यायते-वावादीनामुभावुदात्तौ। 'वाव' इत्येवमादीनां द्वयोः स्वरयोरुदात्तता। 'वाव' इति निपातो निश्चयेन द्वयोर्निपातयोः संहतिः प्रतीयते। आदिपदेन तत्सदृशोऽन्योऽपि भवेच्चेदत्र संग्राह्यः। परं तथाभूतो नोदाहार्यो वर्तते। तेनायमेक एवोदाह्रियते—"एष वाव सोऽग्निरित्याहुः" [ तै० सं० २।२।४।८ ], "त्रीणि वाव सवनानि" [ तै० सं० ३।२।२।१, तै० ब्रा० १।१।१०।३ ]। उदाहरणान्तराणि बोथलिंग रॉथकोशे सङ्कलितानि। वैदिकपदानुक्रमकोशे च स्थलनिर्देशोऽपि संगृहीतः। तत एवोदाहरणविस्तरो द्रष्टव्य इति॥

श्रीशान्तिभिक्षुशास्त्री

**महाभाष्यपाठद्वयविमर्शः**

( १ )

अचः कर्तृयकि ( ६।१।१९५ ) इतिसूत्रभाष्ये पठ्यते-"यकि रपर उपसंख्यानं कर्तव्यम्। स्तीर्यते स्वयमेव" इति। पाठोऽयमशुद्ध एव प्रतिभाति। यतो ह्यनेन सूत्रेण विभाषयोदात्तत्वं विधीयते, अत उदाहरणं द्विः पठनीयमित्येव न्याय्यम्। अत एवास्मिन्नेव सूत्रभाष्ये 'उपदेशे जनादीनाम्' इतिवार्त्तिकस्योदाहरणप्रसङ्गे "जायते स्वयमेव, जायते स्वयमेव" इत्येतादृग्रूपेणैकमेवोदाहरणं द्विः पठ्यते स्वरभेदप्रदर्शनार्थम्। अपि चात्रैव समाधानवार्त्तिकोदाहरणप्रसङ्गे भाष्यकारेण पठितम्-"चीयते स्वयमेव, चीयते स्वयमेव" इति। अतो भाष्यशैल्याऽनुमीयते यदादिमोदाहरणेऽपि 'स्तीर्यते स्वयमेव' इत्युदाहरणं द्विविधस्वरप्रदर्शनार्थं द्विः पठनीयमेव। किञ्च समाधानकाले पतञ्जलिरपि—"स्तीर्यते स्वयमेव स्तीर्यते स्वयमेव" इति स्वयमेवाभाषिष्ट, अत उपक्रमोपसंहारयोरेकरूपतानियमाद् वयं मन्यामहे यदग्रिमसुदाहरणमपि द्विः पठनीयम्।

काशीमुद्रिते कस्मिंश्चिद् भाष्यपुस्तके 'स्तीर्यते स्वयमेव' 'जीर्यते स्वयमेव' इति पाठो दृश्यते, तत्तु भाष्यशैल्यननुगुणम्, स्वरभेदप्रदर्शनकाले शब्दभेदप्रदर्शनस्यान्याय्यत्वात्। परन्त्वशुद्धमपीद-मुदाहरणं ज्ञापयति यदत्र शुद्धं किमप्युदाहरणमासीत्। तत्त्वस्माभिर्निपुणं प्रदर्शितमिति।

( २ )

'कर्मवत् कर्मणा तुल्यक्रियः' ( ३।१।८७ ) इति सूत्रस्य निर्णयसागरीयभाष्यपाठे संदृश्यते— 'तथा कर्मदृष्टश्चेत समानधातौ। तथा कर्मदृष्टश्चेत समानधाताविति वक्तव्यम्' ( पृ० ११७ )। कीलहार्नमुद्रितभाष्ये तु— 'तथा कर्म दृष्टश्चेत् समानधातौ। तथा कर्म दृष्टश्चेत् समानधाताविति वक्तव्यम्' इति मुद्रितम्। पूर्वपाठे 'कर्मदृष्टः' इति समासेन पाठः, कीलहार्नपाठे पुनः 'कर्म दृष्टः' इति पृथक् पाठः।

अनयोः पाठयोः कीलहार्नपाठ एव शुद्धतर इति प्रतिभाति। यदि 'कर्मदृष्टः' इति समासयुक्तः पाठः स्यात् तर्हि 'कर्मणा दृष्टः कर्मदृष्टः' इत्येवार्थः स्यात्। परन्तु नहि खलु कर्मकर्तृवाच्ये कर्ता कर्मणा दृष्टो भवति। अत एव कर्मेति पदं पृथक् स्थापनीयम्। ततश्चायमर्थः प्रादुर्भवति—कर्ता कर्म (=कर्मरूपः) यदि दृष्टः, तदा कर्मवद्भावो भवतीति। अयमर्थः कैयटेनाभ्युपगतः। अतस्तस्याप्ययमेव पाठः सम्मत इति कथनं युक्तमेव। अनेन कीलहार्न-पाठस्यैव युक्तता न्याय्या॥

श्रीरामशंकरभट्टाचार्यः

**ब्राह्मणारण्यकोपनिषदः**

यावत्यः संहितास्तावन्त्येव ब्राह्मणान्यारण्यकान्युपनिषदश्चेति सम्प्रदायः। किन्तु यथा साम्प्रतं द्वादशैव संहिता उपलभ्यन्ते तथैव ब्राह्मणान्यप्येकोनविंशतिरेवोपलभ्यन्ते। तान्यैतरेय-कौषीतकि-( शाङ्खायन )नामके द्वे ऋग्वेदस्य, तैत्तिरीयमैत्रायणीकाठकनामानि त्रीणि कृष्ण-यजुर्वेदस्य, माध्यन्दिनकाण्वशाखयोः शतपथनामके द्वे शुक्लयजुर्वेदस्य; ताण्ड्यमहाब्राह्मण ( पञ्चविंशब्राह्मण-महाब्राह्मण-प्रौढब्राह्मणेत्यनर्थान्तरम् )-षड्विंशब्राह्मण ( अस्यैवान्तिमो भागः 'अद्भुतब्राह्मणम्' इति कथ्यते )-मन्त्रब्राह्मण-दैवतब्राह्मण ( छान्दोग्योपनिषदपि छान्दोग्यब्राह्मण-नाम्ना परिचीयते किन्तु सोपनिषत्स्वन्तर्भवति। अस्या एवैको भागो दैवतब्राह्मणनाम्ना परि चीयते, देवताध्याय इत्यपि तस्य नाम। इमानि चत्वारि ब्राह्मणानि छान्दोग्योपनिषच्च चत्वा-रिंशत्प्रपाठकात्मकस्य कौथुमशाखाया एकस्यैव ब्राह्मणस्य भागविशेषाणि। पूर्वं सर्वेषामेषां समुदायरूपं छान्दोग्यब्राह्मणनामधेयमेकमेव ब्राह्मणमासीदिति श्रीसत्यव्रतसामश्रमिप्रभृतयः ) आर्षेयब्राह्मण-सामविधानब्राह्मण-संहितोपनिषद्ब्राह्मण-वंशब्राह्मण-जैमिनीयब्राह्मण ( तलवकार-

ब्राह्मणम् )-जैमिनीयार्षेयब्राह्मण जैमिनीयोपनिषद्ब्राह्मणेत्येकादश सामवेदस्य, अथर्ववेदस्य च गोपथब्राह्मणमेकमेवेत्येव साम्प्रतमेकोनविंशतिब्राह्मणानामेवोपलब्धिः संजाता । एतदतिरिक्त वैदिकवाङ्मये त्रिंशदधिकाना ब्राह्मणाना नामान्युद्धरणानि चोट्टङ्कितानि दरीदृश्यन्ते । एतेषा हस्तलेखादयस्तु नोपलब्धाः ।

साम्प्रतमारण्यकानि तु सहिताब्राह्मणापेक्षयाऽपि स्वल्पतमान्येवोपलभ्यन्ते । तानि चैत रेय-शाङ्खायन तैत्तिरीय मैत्रायणी माध्यन्दिन काण्व-छान्दोग्यारण्यकेति सप्तैव ।

उपनिषदस्तु सहिताब्राह्मणारण्यकापेक्षयाधिका उपलभ्यन्ते । साम्प्रत त्रिशताधिका उपनिषदः प्रकाशिताः सन्ति । आसु द्वादशोपनिषदः प्रसिद्धतराः, यासा श्रीशङ्कराचार्यप्रभृतिभि· सर्वैराचार्यैर्भाष्यव्याख्यानादिकमकारि । प्रस्थानत्रय्या वेदान्तसूत्रभगवद्गीतोपनिषद्रूपायामुपनिषत्पदेनासा द्वादशोपनिषदामेव ग्रहणमिति ॥

## विश्वकथासाहित्ये पञ्चतन्त्रस्य स्थानम्

दक्षिणैशियाया जावात आरभ्य पश्चिमोत्तरयूरोपस्य 'आईसलैण्ड'-देशपर्यन्त प्रचलितासु प्रायः पष्टिमितासु भाषासु जनपदभाषासु च द्विशताधिका अनुवादाः पञ्चतन्त्रस्य समुपलभ्यन्ते ।

ईशवीयषष्ठशताब्द्या 'खुशरो अनशेरवा' नामकस्य पारसीकनृपतेः साम्राज्ये 'बुर्जो'-नामक एकश्चिकित्सको निवसति स्म, येन भारतभ्रमणमाचरितम् । स भारतीयाना पण्डिताना साहाय्येनात्रत्याना कतिपयकथाना स्वकीयाया 'पहलवी'-भाषायामनुवाद विधाय ५५० ई० वर्षे पुनः स्वगृह परावृत्त । एतासु कथासु पञ्चतन्त्रकथाना प्रामुख्यमासीत् । तेन प्रथमतन्त्रे प्रामुख्येण वर्णितयोः [1]करटकदमनकशृगालयोर्नाम्नैव स्वकीयग्रन्थस्य नामकरणं कृतम् ।

'बुर्जो' निर्मित एषोऽनुवादो यद्यपि प्रनष्टस्तथाप्यचिरादेवास्याधारेण द्वावनुवादौ विहितौ, ययोरेकतरः सम्पूर्णे यूरोपदेशे पञ्चतन्त्रप्रचारस्याग्रदूत आसीत् । प्रथमोऽनुवादः सीरियाभाषाया षष्ठशताब्द्या 'बुर्जो'-समकालमेव विहितः । जर्मनभाषानुवादेन सहैष साम्प्रत प्रकाशित उपलभ्यते । द्वितीयोऽनुवाद आरब्यभाषायाम् 'अब्दुल्ला इब्न अल-मोकार्फा'-नामकेन विदुषा 'कलीला वा-दिमना' नाम्नाऽष्टमशताब्द्या विहितः । अष्टादशशताब्दी यावत् सम्पूर्णे यूरोपे पश्चिमैशियाया च पञ्चतन्त्रपरिचय एतत्साहाय्येनैवासीत् ।

---

१ कल्पनानामके हिन्दीमासिकपत्रे ( मार्च १९५३, पृ० २०० ) 'विश्वभारती क्वार्टर्ली'-नामकपत्रिकायां च (मई-जुलाई १९५२, पृ० १२) करटकदमनकयोर्वृषभत्वोक्तिस्त्वनवधानमूला ।

एकादशशताब्द्या 'सायमन सेथ' नामकेन विदुषाऽस्य ग्रीकभाषायामनुवादो विहित.। पञ्चतन्त्रस्य यूरोपीयभाषाया समुत्पन्नैषा प्रथमा सन्ततिरासीत् । एतदाधारेण पञ्चतन्त्रस्य प्रचारो रशियादिपूर्वीययूरोपदेशेषु सजात.। पश्चिमयूरोपीयभाषासु १२५१ ई० वर्षे सजात. स्पेनीयानुवादः प्राचीनतमः प्रतीयते ।

पञ्चतन्त्रस्य हिब्रूभाषायामेकः प्राचीनोऽनुवादः समुपलभ्यते, यस्य रचनाकाल. कर्तुश्च नाम नोपलभ्येते । अस्यैतिहासिक महत्त्व वरीवर्ति, यतो ह्यस्यैव साहाय्येन १२६०-१२७० वर्षेषु 'जोन'-नामकेन विदुषा लेटिनभाषायामनुवाद' कृत । लेटिनभाषाया अस्यानुवादस्याधारेण विभिन्नासु दशयूरोपीयभाषासु तस्य रूपान्तरं सजातम् । एषु प्रसिद्धतमो जर्मनभाषानुवाद आसीत्, यस्य १४८० ई० प्रथम संस्करण प्रकाशितम् । प्रथमसस्करणादनन्तरभवेषु पञ्चाशद्वर्षेष्वस्य विशतिसस्करणानि प्रकाशितानि ।

'जोन'-कृतलेटिनानुवादमाधारीकृत्य स्पेनिश-चेक इटलीयभाषासु पञ्चतन्त्रस्यानुवादाः सजाताः । इटलीयानुवादो 'दोनीः'-महाशयेन १५५२ ई० विहितः । अस्य साहाय्येनैव 'सर टोमस नार्थ'-महाशयेन पञ्चतन्त्रस्याग्लानुवादः कृतः । अस्य प्रथम सस्करण १५७० ई० प्रकाशितमभूत् । एतच्च संस्कृतपञ्चतन्त्रस्य षष्ठी कुलसन्ततिरासीत् । सस्कृतत. पारसीकानुवादः, पारसीकत आरब्य., आरब्यतो हिब्रः, हिब्रूतो लेटिनः, लेटिनत इटलीयः, इटलीयत आग्ल इति ।

'कलीला वा-दिमना'-नामकस्यारब्यानुवादस्य 'पिप्लाय-विदपई' नामभ्या प्रसिद्धावन्यौ द्वौ फ्रेंचानुवादौ सजातौ, ययोर्नामनी यूरोपीये जनजीवने जल्पकथासु प्रथितचरे अभूताम् ।

अनुरञ्जनसाहित्ये विश्वजनीनमिद पञ्चतन्त्र भारतीयकथासाहित्यस्य समुज्ज्वल रत्नम्, यस्य भासुरा प्रभा भारताद्बहिरपि विदेशीयाना मनासि षष्ठशताब्दीत एव रञ्जयन्ती व्यद्योतिष्ट । एव स्थिते—

चतुर्थोपायसाध्ये तु रिपौ सान्त्वमपक्रिया ।<br>
स्वेद्यमामज्वर प्राज्ञः कोऽम्भसा परिषिञ्चति ॥ २६ ॥

सामवादाः सकोपस्य शत्रोः प्रत्युत दीपकाः ।<br>
प्रतप्तस्येव सहसा सर्पिषस्तोयबिन्दव. ॥ २७ ॥

इति प्रचलितेषु पञ्चतन्त्रेषु समुपलब्ध माघकाव्यस्य द्वितीयसर्गस्थमेतच्छ्लोकद्वय प्रक्षिप्तमेवेति निश्चितम् । पञ्चतन्त्रस्य प्राचीनतमरूपस्य परिचयाभिलाषुकैः पूनानगरीतः प्रकाशित 'फ्रेंकलिन एजर्डन'-महाशयेन सपादित सस्करण द्रष्टव्यम् ॥

———

व्र० व० द्वि०

# सम्पादकीयम्

**अष्टमवर्षप्रवेशः**

प्रस्तुतेनाङ्केन सह "सुषमा" उत्तीर्य बाल्यावस्थां कैशोरे वयसि निदधाति पदम्। साम्प्रतमेषा विद्वज्जनसन्निधानोपसर्पणसमर्था श्रद्धावनता तान् शुश्रूषमाणावतिष्ठते। नमस्तस्मै सर्वाधिष्ठानभूताय महाकालाय। अखण्डोऽपि यो विश्वव्यवहारनिष्पत्तये भूतभविष्यद्वर्तमानप्रभेदेषु, निमेषक्षणमुहूर्तदिनपक्षमासर्त्वयनवत्सरप्रभृतिखण्डेषु च स्वात्मानं संविभज्य विभ्राजते। सखण्डेऽपि यस्य स्वरूपे केवलं भूत एवानन्तानि ब्रह्माण्डानि, अनेके सर्गप्रलयादयः, ब्रह्मविष्णुमहेशादयश्च निलीनाः। का कथा तत्र ब्रह्मणो दिवसस्य ?

मन्वन्तरं तु दिव्यानां युगानामेकसप्ततिः।
चतुर्दशेषु मनुषु गतेषु ब्रह्मणो दिनम्॥
त्रिशतैश्च षष्ट्यधिकैर्दिनैर्वर्षं च ब्रह्मणः।
अष्टोत्तरं वर्षशतं विधेरायुर्निरूपितम्॥
एतन्निमेषकालस्तु कृष्णस्य परमात्मनः।

[ ब्रह्मवैवर्ते १।५।७-९ ]

इति ब्रह्मवैवर्तोक्तदिशा ब्रह्मणः परमायुरपि श्रीकृष्णस्यैक एव निमेष इति। एवमेवास्माकं सूक्ष्मतमस्य क्षणस्यापि सहस्रशो भागाः स्वयंचालितघटीयन्त्रादिभिः साम्प्रतमवलोकयितुं शक्यन्ते। एवं च "अणोरणीयान् महतो महीयान्" इति भगवती श्रुतिर्महाकालमेव यथार्थतो वर्णयति। अस्मिन् महति भगवति काले मानुषसप्तवर्षाणि नाम लघीयसी मात्रा। तथाप्यवलोक्य संस्कृतपत्रपत्रिकाणां परमायुः सप्त वर्षाण्यप्यस्माकं सतोषायालम्। विगतेषु वर्षेषु बह्वयः संस्कृतपत्रपत्रिकाः प्रचलिताः, द्वित्रवर्षेष्वेव ताश्च कालकवलिता अभवन्। ईदृश्यां स्थितौ "सारस्वती सुषमा" सप्तवर्षावधिं समाप्याष्टमवर्षे प्रविष्टेत्येषापि परमा कृपा परमेश्वरस्य।

सप्तमवर्षस्य प्रथमेऽङ्केऽस्माभिः पत्रिकायाः पूर्वतनेतिहासस्य तत्समक्षमापतितानां कियतीनां बाधानां च समुल्लेखः कृतः। तासु काश्चन बाधा दूरीभूताः। पूर्वं पत्रिकाया वितरणस्य नासीत् कश्चित् प्रबन्धः। परमेषमः पत्रिकाया वार्षिकं मूल्यं ७॥) रु० परिमितम्, प्रत्यङ्क

च १॥।=) परिमित मूल्य निर्धारितम् । तदनुसारमुत्तरप्रदेशीयासु राजकीयसहायताप्राप्तासु चतुश्शतपरिमितासु पाठशालासु पत्रिकायाः प्रचारः सजातो विद्यते । पत्रिकाया बहवो ग्राहका उत्तरप्रदेशाद्बहिरपि सन्ति । विदेशीया देशीयाश्च द्वादश प्राच्यविद्यागवेषणासस्थाः स्वस्व-साहित्यस्य विनिमये पत्रिका स्वीकुर्वन्ति । एव शनैः शनैः पत्रिकायाः प्रचारक्षेत्र विस्तृत भवदस्ति ।

"अस्या. खलु सरस्वतीभवनस्थैर्विद्वद्भिर्विद्यालयीयाध्यापकैरन्यैश्च स्वोपज्ञविचार विचारकैर्निबद्धानामनुसन्धानमूलकानामन्येषा चोपयोगिना निबन्धाना प्रकाशनेन सस्कृतज्ञेषु मौलिकानुसन्धानप्रवृत्ते. सम्यगालोचनाप्रवृत्तेश्चोत्पादन प्रोत्साहन चैव मुख्यमुद्देश्यम्" इति घोषितपूर्वेण पथा पत्रिका सस्कृतानुरागिणः ससेवते । एतदर्थमेव पञ्चमोपाधिवितरणोत्सवाङ्के "सुषमाया भाविस्वरूपम्" इति शीर्षके सपादकीये त्रिविधा लेखा अत्र प्रकाशिता. स्युरिति प्रतिज्ञातम् । तदनुरूपमेवास्या पत्रिकाया शास्त्रीयैर्निबन्धै. सह गवेषणाप्रधानाना लेखानामपि बाहुल्येन प्रकाशन भवति । सस्कृतज्ञानामप्याधुनिकनूतनविविधविद्याविषयपरिचयाधिगमाय तद्विषयसवद्धाना लेखानामतिवेलमपेक्षा विद्यते । शनैः शनैरेषा पत्रिका तल्लक्ष्यमपि पूरयिष्यतीत्याशास्यते ।

विगताब्दत एवाप्रकाशितग्रन्थोद्धरणदिशि दत्तावधानेषा पत्रिका प्रकाशयति सरस्वतीभवनस्थान् ग्रन्थमणीन् । विगतेऽब्दे 'पथिकजनपातकचिन्तनस्मृति' नामक यात्रा-पुस्तकम्, सभाष्य प्रत्यङ्गिरासूक्तम्, काण्वसहिताया आनन्दबोधभट्टोपाध्यायविरचित भाष्य च प्रकाशित प्रकाश्यते च । प्रस्तुतेनाङ्केन प्रथितचरस्याप्रकाशितस्य नारायणपण्डितविरचितस्य बीजगणितस्य प्रकाशन प्रारभ्यते । शनैः शनैर्विविधविषयाणा ग्रन्थप्रकाशनमप्यत्र कारयते । अनेन भारतीया विदेशीयाश्च सस्कृतानुरागिणो गवेषका विद्वासश्च परितुष्टा भविष्यन्ती-त्यस्माक विश्वासः ।

सस्कृतपण्डितानामाधुनिकप्राच्यगवेषणासाहित्येन परिचयमापादयितु विगताब्दत एव 'विविधम्' इतिनामकः स्तम्भः स्थापितो विद्यते । ज्ञानवर्द्धिका सामग्री बाहुल्येनात्र सगृहीता स्यादित्येवास्माकमस्योद्योगस्य चारितार्थ्यम् ॥

**बेधशालानिर्माणे प्रगतिः ॥**

उत्तरप्रदेशीयप्रशासनेन सुरभारतीसमाराधनबद्धादराणा श्रीसम्पूर्णानन्दमहाभागाना समुदञ्चति शिक्षामन्त्रित्वे स्वातन्त्र्यारुणोदयवेलायामेव काशिकराजकीयसस्कृतमहाविद्यालय.

सस्कृतविश्वविद्यालयत्वेन परिणमयिष्यत इति प्रतिज्ञातम् । ततः प्रभृत्येव प्रतिज्ञातस्य तस्य कार्यस्य पूर्णतावाप्त्यै शनैः शनैः पद न्यदधादुत्तरप्रदेशीय प्रशासनम् । सर्वप्रथम बहोः कालादुपेक्षितस्य सरस्वतीभवनपुस्तकालयस्य व्यवस्थायै समृद्धयै च १६४८ ई० वर्षे तत्रानुसन्धानमन्दिरस्य स्थापना समकारि । भारतीयज्यौतिषशास्त्रस्य समृद्धये समुन्नतये चाधुनिकसर्वविध साधनसपन्नाया वेधशालाया अतीवावश्यकताऽपि तदैवान्वभावि । अत एव तदर्थमपि शासनस्य प्रयत्न. प्राचलत् ।

विनैव साधनसपत्ति भारतीयैः प्राचीनैर्महर्षिभिर्मनीषिभिश्च दिव्येन चक्षुषा नलिकासाहाय्येन च नभसो निरीक्षण विधाय यानि तथ्यान्याविष्कृतानि, त्रिकालाबाधितानि तान्यधुनापि पाश्चात्त्यविदुषामाश्चर्यकराण्येव । विस्मयोत्फुल्ललोचनाः कथयन्ति ते केन साधनेनैभिरस्यानन्तस्य नभसो निपुण निरीक्षणमनुष्ठितम् ? कथमेभिः सूक्ष्मतमो गणनाप्रकार आविष्कृतः इति ? नूतनाविष्कारत्वेनाभिमतो भूभ्रमणरूपः सिद्धान्तोऽपीतो गताद्वर्षसहस्रात्पूर्वमेव नौयानदृष्टान्त मवलम्ब्य मनीषिणाऽऽर्यभटेन विवेचित आसीदित्यपि नैव तिरोहित विदुषाम् । ग्रहवेधप्रकारस्य वर्णन च भास्कराचार्यादिग्रन्थेषु समुपलभ्यते । अनयैव रीत्यैकशतवर्षाभ्यन्तर एवोत्कलदेशे चन्द्रशेखरसामन्तनाम्ना विचक्षणेन वेध कृत्वा मानानि प्रसाध्य सिद्धान्तदर्पणनामको विशिष्टो ग्रन्थो निर्मितः । इतोऽपि पूर्व जयपुराधिपतिजयसिंहेन काशीजयपुरोज्जयिन्यादिषु पञ्चसु स्थानेषु वेधशाला निर्माप्य प्राचीनगणकाना बुद्धिकौशल प्रदर्शितम् । विस्मृतोपेक्षिता वाऽस्माभिः सा प्राचीना प्रणाली ।

सर्वविधोन्नतिकर्त्री महामहिमशालिनी जिज्ञासावृत्तिरस्तीभूय पूर्वाकाशात्पश्चिमस्या दिशि समुदिता । आकाशरहस्यजिज्ञासा तत्र प्रबला सती दूरवीक्षणयन्त्राण्यसृजत् । कालेनोन्नति मापाद्यमानानि तानि भीमकायानि यन्त्राण्यनन्तकोटियोजनदूरस्थामपि नीहारिका समीपस्थामिव दर्शयन्ति । पाश्चात्त्यैर्विद्वद्भिरेषा यन्त्राणा साहाय्येन नूतनानि रहस्यानि प्रकटीकृतानि । तानि भारतीयविद्यार्थिना विशेषेण सस्कृतज्ञानामपि सुपरिचितानि स्युरिति, आकाशरहस्यदिदृक्षाजनिता ज्ञानराशिशृङ्खला मध्ये मा भाङ्क्षीदिति च भावनया भाविनि सस्कृतविश्वविद्यालये नूतनसर्वविधसाधनसम्पन्नाया वेधशालाया. स्थापनाप्रयासः सर्वथा समुचित एव ।

अस्या वेधशालाया द्वौ विभागौ भविष्यतः । एकस्मिन् विभागे शक्तिशालिदूरवीक्षणयन्त्रसाहाय्येन नक्षत्राणामाकाशीयस्थितेर्निरीक्षणमपरेण च यथार्थसमयज्ञान भारतीयसमयमानस्य निर्धारण च भविष्यति । प्रथमो विभाग. सारनाथसमीपे स्थापितो भविष्यति, द्वितीयश्च साम्प्रत

राजकीयसंस्कृतमहाविद्यालयभवने शीततापनियन्त्रककक्षाया स्थापित एव । अत्र च कार्यारम्भोऽपि संजात. । अचिरादेवैष विभागो जनताया वैज्ञानिकाना च कृते स्थिरमानभारतीयसमयसूचना' प्रसारयिष्यति । एतदर्थमत्र शर्मण्यदेशत. स्वयचालित सूक्ष्मतमसमयांशसूचक घटीयन्त्र पञ्च-सप्ततिसहस्ररूप्यकपरिमितेन मूल्येनानायितम् । शर्मण्यदेशीयेन प्राविधिज्ञेन श्रीलयूनहार्ट-महाशयेनात्रागत्यास्य स्थापना कृता ।

अस्याकारश्चित्रपटसदृशो विद्यते, यस्य च त्रयो विभागा. सन्ति । पूर्वापरान्तयो-र्विभिन्नानि घटीयन्त्राणि सन्ति, यैर्निमेषस्य दशसहस्रतमभागस्यापि बोध सौकर्येण भवति । मध्यभागे च ध्वनिलहरीप्रसारकग्राहके यन्त्रे विद्येते, याभ्यामन्याभ्यो वेधशालाभ्य. समयसूचना दीयते ताभ्यो गृह्यते च । एतानि च कार्याणि स्वयचालितघटीयन्त्रमिद स्वत एव सपादयति । अत्र चैकस्य कार्यस्य सपादनाय द्वे द्वे यन्त्रे स्तः, येनैकस्य कस्यचिदङ्गस्य केनापि कारणेन कार्याऽसामर्थ्येऽपि द्वितीयमङ्ग कार्य निष्पादयेत् । इद च विद्युत्साहाय्येन चलति । दुर्घटना-दिभिर्विद्युत्सबन्धे छिन्ने च 'बैटरी' द्वाराऽपि निजकार्य निर्वर्तयति । अद्भुतेनैतेन घटीयन्त्रेण सह द्वाचत्वारिंशत्सख्याकानि घटीपलविपलादिबोधकान्यन्यान्यपि घटीयन्त्राण्यत्र स्थाप्यमानानि सन्ति, यैर्भारतीयस्य समयस्य सौकरतर्येण बोधः सम्भाव्यते । प्रतिष्ठापयिष्यमाणेषु सर्वेष्वेतेषु घटीयन्त्रेष्वेष समयविभागः सर्वाङ्गपूर्णो भविष्यति ।

प्रथमविभागार्थं विगते वर्षे १०" द्व्यङ्गुलक ( इच ) व्यासमित दूरवीक्षणयन्त्रमाना-यितम् । वेधशालायाः साधारणकार्यनिर्वाहार्थं राजकीयसंस्कृतमहाविद्यालयीयविद्यार्थिनामाकाश-निरीक्षणशिक्षाप्रदानार्थं च द्वे लघुनी दूरवीक्षणयन्त्रे अपि समानीते स्तः । ऐषमश्च वेधशालायाः स्थापनास्थाननिश्चयपुरस्सरं विश्वविश्रुते ऐतिहासिके सारनाथक्षेत्रे प्राचीनस्मारकेभ्य. पूर्वदिशि सुविस्तृतो भूमिभाग आक्रीतः । उच्चायामस्या भूमौ मुख्यस्य दूरवीक्षणयन्त्रस्य स्थापना वातातपवर्षाधूलिभ्यो रक्षाकरे निपुण निर्मापयिष्यमाणे भवने भविष्यति ।

अस्या वेधशालाया उपयोगः सर्वाङ्गपूर्णस्य भारतीयस्य राष्ट्रियपञ्चाङ्गस्य निर्माणेऽपि भविष्यत्येव । अस्या वेधशालायामष्टादश विद्वासो नियुक्ता भविष्यन्ति । यत्रैको मुख्यो गणकः, पञ्च च तस्य सहायका अन्ये च गवेषका भविष्यन्ति । अस्या वेधशालाया निर्माणे दशलक्षरूप्य-काणा व्ययोऽपेक्षित. । अद्यावधि लक्षत्रयरूप्यकसामग्री सगृहीता । साम्प्रतमस्याः सर्व कार्य च सुप्रसिद्धस्य गणितज्ञस्य डा०ए०एन०सिंहमहोदयस्य तत्त्वावधाने प्रचलदस्ति । अत्रोत्तरप्रदेशीय-शिक्षामन्त्रिणः श्रीहरगोविन्दसिंहमहोदया अपि विशेषतयाऽवदधति । एषामत्र स्वाभाविकं प्रेम संस्कृतमहाविद्यालयस्य समुन्नत्यै शुभम् ।

एवमुत्तरप्रदेशीयप्रशासनं राजकीयसंस्कृतमहाविद्यालयं संस्कृतविश्वविद्यालयत्वेन परिणमयितुं सर्वाङ्गपूर्णां वेधशालां स्थापयितुं च बद्धपरिकरं कृतप्रतिज्ञं च विद्यते। विशेषतः प्रार्थयामहे यत्प्रशासनस्यास्माकं चैष हार्दिकोऽभिलाषस्तूर्णमेव पूर्णतापदवीमारोहेदिति ॥

## सरस्वतीभवनग्रन्थानां बृहत्सूची

राजकीयसंस्कृतमहाविद्यालयस्य सरस्वतीभवनपुस्तकालयो नाम प्राचीनहस्तलेखानां समुज्ज्वलं निधानम्। साम्प्रतमत्र षष्टिसहस्रसंख्याकाः हस्तलेखाः संगृहीताः सन्ति। अस्य ग्रन्थालयस्य स्थापना राजकीयसंस्कृतमहाविद्यालयभवन एव १७९१ ई० वर्षे संजाता। गच्छता कालेन ग्रन्थबाहुल्ये संजाते सति तत्र स्थानाभावमालक्ष्य तदानीन्तनाधिकारिभिरेतदर्थं नूतनभवननिर्माणस्यावश्यकताऽन्वभावि। अतः १९१४ ई० वर्षे भव्यस्यास्य भवनस्य निर्मितिः संजाता। ततः प्रभृत्यत्रैव ग्रन्थानां संग्रहः सुरक्षा च क्रियते।

प्राच्यविद्यासमाराधकं समग्रं जगदत्रत्यायाः विशालायाः ग्रन्थसम्पत्तेः परिचयमासादयितुं समुत्सुकं विद्यते। यद्यपि समये समये पण्डितपत्रे स्वातन्त्र्येण च प्रकाशिता लघ्व्यः कतिपयाः सूच्यो विद्यन्ते, किन्तु ताः स्वकुक्षावत्रत्यान् सप्ताष्टसहस्रसंख्यापरिमितानेव ग्रन्थानन्तर्भावयन्ति। शेषो ग्रन्थराशिरपरिचित एव समुत्सुकस्य विश्वस्य। अतः सम्पूर्णग्रन्थानां विषयसूची निर्मिता प्रकाशिता च स्यादित्येतदर्थं १९४० ई० वर्षे विदुषां द्वयी नियुक्ताऽत्र कार्ये। प्रतिवर्षं संगृह्यमाणानां पूर्वं संगृहीतानां च ग्रन्थानां विषयविभाजनपूर्वकं सूचीनिर्माणरूपं सुमहत् कार्यमासीत्। अत्र विदुषां द्वयमपर्याप्तमासीत्। सरस्वतीभवने स्थापितायानुसन्धानमन्दिराय चात्रत्यग्रन्थानां प्रामाणिकसूच्याः प्राथमिक्यावश्यकताऽवर्तत। अतः १९४८ ई० सूचीनिर्माणकार्ये चत्वारो विद्वांसो नियोजिताः। प्रामुख्येणैतेषां ग्रन्थपालोपग्रन्थपालादीनां च स्तुत्येन परिश्रमेण साम्प्रतं १७९१ ईशवीयतः १९५० ई० पर्यन्तमत्र संगृहीतानां प्रायः १४ सहस्रसंख्यापरिमितानां सर्वेषां वैदिकग्रन्थानां कर्मकाण्डग्रन्थानां च सूची चतुर्षु खण्डेषु समुद्रय प्रकाशिता विद्यते। वैदिकविभागस्य प्रथमखण्डे संहिताब्राह्मणारण्यकानां शिक्षाकल्पनिघण्टुनिरुक्तप्रातिशाख्यानां शुल्बसूत्रादिप्रकरणग्रन्थानां श्रौतप्रयोगग्रन्थानां तद्भाष्यटीकादिग्रन्थानां च समावेशो विद्यते, उपनिषदां तद्भाष्यटीकादीनां च द्वितीये खण्डे। स्मार्तप्रयोगग्रन्थानां तु कर्मकाण्डविभागस्य द्वयोरपि खण्डयोः। सरस्वतीभवनस्यानेन प्रयासेन तत्परिचयाय समुत्सुकस्य विश्वस्योत्कलिका मात्रयाऽप्युपशमिता स्यादिति मन्यामहे ॥

काशिकराजकीयसंस्कृतमहाविद्यालये १९५० ई० वर्षे संस्कृतपरीक्षासन्तुलनपरिषदोऽधिवेशनमभूत्। तन्निर्णयानुरोधेन परवर्तिनि वर्षे एवात्रत्यपरीक्षासु महत्परिवर्तनमजायत। प्रौढपाण्डित्येन सह नूतनजगत्प्रतियोगितायां संस्कृतज्ञा अपि महत्त्वपूर्णानि पदान्यधिगच्छेयुरित्युद्देशेन संस्कृतपरीक्षासु कतिचन नूतनविषया अपि समावेशिताः। शीघ्रमेवैतासां परीक्षाणामुत्तरप्रदेशीयप्रशासनेन मान्यतोद्घोषिता। अन्यान्यपि राज्यशासनानि सभाजयन्त्येताः परीक्षाः। साम्प्रतमेवोत्तरप्रदेशीयमाध्यमिकशिक्षासमित्याऽपि सम्मानितास्ताः। अधुना पूर्वमध्यमोत्तीर्णश्छात्र उत्तरप्रदेशीयायां कस्यामपि माध्यमिकशालायाम् 'इन्टरमीडियट'-कक्षायां समावेशमर्हति। 'इन्टरमीडियट'-परीक्षोत्तीर्णश्छात्रो यथा यत्र कुत्रापि 'बी०ए०'-कक्षायां समावेशितो भवति तथैवोत्तरमध्यमोत्तीर्णोऽपि तत्र न चिरेणैव प्रवेशमधिकरिष्यत्यपि सुदृढमाशास्यते। उत्तरप्रदेशीयासु प्रतियोगितापरीक्षासु प्रतियोगितानिरपेक्षेषु विभिन्नेषु पदेषु चात्रत्याश्छात्राः स्थानं लभन्त एव साम्प्रतम्।

एवं चाङ्ग्लभाषायामधीतीनां सर्वाः सुविधा अत्रत्यैश्छात्रैः साम्प्रतं लभ्यन्ते, अथ चाध्ययनव्ययभारोऽपि तथात्र नास्त्येव। प्रत्युत संस्कृताध्ययनव्यापृतैश्छात्रैस्तासु तासु पाठशालासु वृत्तयः प्राप्यन्ते। अन्यत्रालभ्याभिराभिः सुविधाभिः समाकृष्टानां परीक्षार्थिनां संख्या प्रतिवर्षं वर्द्धमानावलोक्यते। स्वतन्त्रतासमधिगमवत्सरेषु संस्कृतविद्यार्थिनां संख्या याऽतीव कार्श्यमुपगताऽऽसीत् सा नूतनेनानेन प्रयोगेण पुनरपि निस्संशयमुन्नत्युन्मुखी संजाता।

नवीनपाठ्यक्रमेण विद्यार्थिनः संस्कृतं प्रति हठादाकृष्टा यद्यपि, तथापि कुत्र कुत्रचिन्नूतनपाठ्यक्रमो विद्यार्थिनां कृतेऽतीव भारभूतः संजातः। अतः संस्कृतशिक्षापरिषदा गभीरं विचारविनिमयं विधाय नूतनविषयाणां भारः कथञ्चिदपि लघूकृतः स्यादिति निश्चितम्। तदनुरूपमेव नूतननियमावल्या रचना भविष्यति। परीक्षार्थिनां सुविधायै पूरकपरीक्षासञ्चालनमपि निश्चितप्रायमेव, यस्य प्रयोगः सहायकपरीक्षाध्यक्षस्य नियुक्तत्वेनाचिरभावितया संभाव्यते। इतरसंस्थापरीक्षा अपि पाठ्यक्रमे सन्तुलिते सति अस्याः संस्थायाः परीक्षाणां समानं मानं लप्स्यन्त इति। एवं चेतोऽप्यधिका संस्कृतपरीक्षाणां लोकप्रियताऽवश्यं भाविनीति निश्चप्रचम्॥

## संस्कृतविश्वपरिषदः प्रचारकार्यम्

स्वतन्त्रतासमधिगमसमनन्तरममरभारत्या भारते भारताद्बहिरपि च पुनः प्रतिष्ठामभिलषत्सु मनीषितल्लजेषु द्वावेव सुरभारतीसमाराधकौ मूर्द्धन्यायेते, ययोर्हार्दिको भावः कार्याकारमाद-

धन्मूर्तिमानिवाऽऽविरभूत् । तयोरेकतर उत्तरप्रदेशीयराज्यपालपदवी बिभर्ति, अपरश्चात्रत्यगृह-मन्त्रिपदमलङ्करोति । काशिकराजकीयसस्कृतमहाविद्यालयस्याहर्निशमुन्नतिपथारोहण प्रादेशिक प्रशासनस्य कृपायां विशेषतः श्रीसम्पूर्णानन्दमहाभागस्य च तपसः फलम् । विदेशेष्वपि गीर्वाणवाण्याः कीर्तिदुन्दुभिं श्रावयन्ती संस्कृतविश्वपरिषच्च महामान्यश्रीकन्हैयालालमाणिक-लालमुन्शिमहोदयानामनवरत श्रमं सफलयन्ती सहृदयाना सस्कृतानुरागिणा मनस्तर्पयति । स्वनामधन्यौ तौ द्वावपि परेशकृपया साम्प्रतमेकत्रीभूतौ । एष सहयोगः सुरभारत्या उदर्कायै-वाभूत् । फलतो विगते वर्षे सस्कृतविश्वपरिषदा द्वितीयमधिवेशन राजकीयसस्कृतमहाविद्यालय प्राङ्गणे विश्वेश्वरपुर्यां वाराणस्या सजातम् । तत्र निश्चितेषु सिद्धान्तेषु सस्कृतविश्वविद्यालयः साम्प्रत प्रगतिपथमधिरोहति । देववाण्याः प्रचाराय चोत्तरप्रदेश एव चतुर्णां विदुषा नियुक्तयः सजाताः । ते च लक्ष्मणपुरविश्वविद्यालयसस्कृतविभागाध्यक्षः श्रीडॉ०अ०सुब्रह्मण्याय्यरमहोदय., प्रयागविश्वविद्यालयसस्कृतविभागाध्यक्षः श्रीडा०बाबूरामसक्सेनामहोदयः, सरस्वतीभवनस्थानु-सन्धानमन्दिरसदस्यः श्रीरामाज्ञापाण्डेयः, काशिकराजकीयसस्कृतमहाविद्यालयपुराणाध्यापकः श्रीमदनन्तशास्त्रिफडकेमहादयश्च । लक्ष्मणपुरस्थे राजभवने विपश्चिता समितयो बहुश एकत्रीभूय भविष्यत्कार्यक्रमनिश्चय कृतवत्य. । सस्कृतप्रचारे नियुक्ता महानुभावाः साम्प्रतमुत्तर-प्रदेशस्य प्रसिद्धेषु केन्द्रेषु सभासमितीः सयाज्य स्वोद्देश्य सफलयन्ति । सस्कृतभाषणवार्ता लापादिद्वारा यथा स्यात्तथा तत्र जनरुचिमुद्भाव्य सस्कृतविश्वपरिषदः शाखाप्रशाखाजाल सम्पूर्णे उत्तरप्रदेशे प्रसार्य गीर्वाणवाण्याः पुनः स्वगौरवमयपदावाप्तिरेवैतेषा मनीषिणा परम ध्येयम् । सफलयतु भगवान् विश्वनाथ एत मनोरथमित्येवास्माकीनाऽऽकाङ्क्षा ॥

---

नाम देवाः। उपप्रयन्तु उपगच्छन्तु। हे इन्द्र, प्रागूर्भवा सचा। सह गमनाय [1]प्रागूः दीर्घगामी भव ॥ ४४ ॥

प्र नूनं ब्रह्मणस्पतिर्मन्त्रं वदत्युक्थ्यम्।
यस्मिन्निन्द्रो वरुणो मित्रो अर्यमा देवा ओकांꣳसि चक्रिरे ॥ ४५ ॥

( मा० ३४।५७ )

अयं ब्रह्मणस्पतिः। उक्थ्यं मन्त्रं नूनं प्रवदति। उक्थः परमात्मा स हीदं सर्वं जगदुत्पादयतीत्युक्थः, तं वक्तुं योग्यो मन्त्र उक्थ्यस्तमुक्थ्यम्। मननं त्रायत इति मन्त्रस्तं मन्त्रम्। प्रवदति उच्चारयति। किं च, यस्मिन्निन्द्रो वरुणो मित्रो अर्यमा देवा ओकांसि चक्रिरे। यस्मिन् श्रीभगवति ईश्वरे[2] श्रीभगवदीश्वरस्योदरे विराड्रूपलक्षणे यस्मिन्। इन्द्रो वरुणो मित्रोऽर्यमा चेत्येवमादयो देवाः। ओकांसि स्वनिवासस्थानानि। चक्रिरे कृतवन्तः। अथवा व्यत्ययः। ब्रह्मणस्पत इति मन्त्र इति च। एवं चेदुक्थ्यं ब्रह्मणस्पतिं मन्त्रः प्रवदतीति यस्मिन्निति स एव विशेष्यते। प्राणः पृथिवी यज्ञो वाऽत्र उक्थ्य इत्यभिधीयते। बहुविधश्रुत्यनुसारेण तत्रापि वाक्ययोजना कर्तुं शक्येत्येव ब्रह्मणस्पतिः स्तूयते ॥ ४५ ॥

ब्रह्मणस्पते त्वमस्य यन्ता सूक्तस्य बोधि तनयं च जिन्व।
विश्वं तद्भद्रं यदवन्ति देवा बृहद्वदेम विदथे सुवीराः।
य इमा विश्वा विश्वकर्मा यो नः पितान्नपतेऽन्नस्य नो देहि ॥ ४६ ॥

( मा० ३४।५८ )

हे ब्रह्मणस्पते, त्वम् अस्य प्रतीयमानस्य स्थावरजङ्गमलक्षणस्य जगतः। यन्ता नियन्ता [3]आज्ञापयिता। सूक्तस्य साधुवचनस्य। तत्त्वमित्यध्याहारः। तत्त्वं बोधि अबोधि बुद्धम्। विज्ञापनार्थं ज्ञात्वा तनयं च जिन्व। जिन्वतिः प्रीतिकर्मा [ निघ० ४।३, निरु० ६।२२ ]। अपत्यानि प्रीणीहि। चशब्दादस्मानपि जिन्व। यद्विश्वं तद्भद्रम्। यद्विश्वं तदिदं भद्रमस्तु

---

१ 'प्राशूः' इत्यत्र–"दीर्घश्छान्दसः" इति–ग० टि०।

२ 'ईश्वरे' इत्यस्याग्रे 'इति' इत्यधिकम्–ग०।    ३ 'आज्ञापयिता' नास्ति–क०।

[१]मङ्गलात्मकमस्तु । देवाश्च यद् अवन्ति पालयन्ति तत्सर्वं त्वत्प्रसादादेव न स्वतः । अत एव वयं त्वा बृहद् महदर्थयुक्तवचनम् । वदेम ब्रूमः । [२]भवदीयां तां कथामिति । विदथे सुवीराः । विदथे गृहे त्वत्पूजार्थं क्रियमाणे यज्ञे । सुवीराः सुपुत्राः कल्याणरूपसंपन्नाः । अतस्त्वां स्तोष्याम इति शेषः । [३]प्रतीकोक्ताश्चतस्रो ब्रह्मयज्ञादौ ध्येयाः । 'य इमा विश्वा' [ १८।१७ ], 'विश्व-कर्मा ह्यजनिष्ट' [ १८।३२ ], 'यो नः पिता जनिता' [ १८।२७ ], 'अन्नपतेऽन्नस्य नो देहि' [ १२।८४ ] इत्येवमादिमन्त्रगणैः श्रीभगवान् ब्रह्मा प्रजापतिः स्तूयत इति ॥ ४६ ॥

इति [४]श्रीशुक्लयजुःकाण्वसंहिताभाष्यसंग्रहे त्रयस्त्रिंशोऽध्यायः[५] ॥ ३३ ॥

---

१ मङ्गलमस्तु–क० । २ भवदीयतां कथमिति ?–क-ख-ग० ।

३ 'प्रतीको ध्येयाः' नास्ति–ख०, तत्स्थाने–'य इमा विश्वा विश्वकर्मा यो नः पितान्नपतेऽन्नस्य नो देहीति प्रतीकोक्ता' इति ।

४ श्रीकाण्ववेदमन्त्रभाष्यसंग्रहे–ख-ग० ।

५ 'अयमध्यायः संपूर्णो ब्रह्मयज्ञार्थकः' इत्यधिकम्–ग० ।

## चतुस्त्रिंशोऽध्यायः

'देव सवितः' [ ३४।१ ], 'सहस्रशीर्षा' [ ३५।१ ] इति च द्वावध्यायौ पुरुषमेधविषयौ श्रीनारायण. पुरुषो ददर्श, अतो नारायणस्यार्षं द्वयोरध्याययोः। "पुरुषो ह नारायणोऽकामयता-तितिष्ठेयᳪं सर्वाणि भूतान्यहमेवेदᳪं सर्वᳪं स्यामिति। स एत पुरुषमेधं पञ्चरात्रं यज्ञक्रतुमप-श्यत्तमाहरत्तेनायजत तेनेष्ट्वाऽत्यतिष्ठत्सर्वाणि भूतानीदᳪं सर्वमभवदतितिष्ठति सर्वाणि भूतानीदᳪं सर्वं भवति य एवं विद्वान्पुरुषमेधेन यजते यो वैतदेव वेद ॥ १ ॥ तस्य त्रयोविᳪंशतिर्दीक्षा द्वादशोपसदः पञ्च सुत्याः [1]स एष चत्वारिᳪंशद्रात्रः सदीक्षोपसत्कश्चत्वारिᳪंशदक्षरा विराट् तद्विराजमभिसपद्यते" [शत० ब्रा० १३।६।१।१-२] इत्यारभ्याह[र्] नियममभिधाय—"ता वा एताश्चतस्रो [2]दशतो भवन्ति, तद्यदेताश्चतस्रो दशतो भवन्त्येषा चैव लोकानामाप्त्यै दिशा च। इममेव लोकं प्रथमया दशताऽनुवन्नन्तरिक्षं द्वितीयया दिवं तृतीयया दिशश्चतुर्थ्या, तथैवैतद्यजमान इममेव लोकं प्रथमया दशताप्नोत्यन्तरिक्षं द्वितीयया दिवं तृतीयया दिशश्चतुर्थ्या। एतावद्वा इदम्" [ शत० ब्रा० १३।६।१।३ ] इत्येतेषां च [3]फलप्राप्तिमप्यभिधायानन्तरम्—"एकादशाग्नीषोमीयाः पशव उपवसथे। तेषाᳪं समानं कर्मैकादश यूपा एकादशाक्षरा" [शत० ब्रा० १३।६।१।४] इति, "ऐकादशिनाः सुत्यासु पशवो भवन्ति" [शत० ब्रा० १३।६।१।५][इति], "यद्वेवैकादशिना भवन्त्येकादशिनी वा इदम्" [ शत० ब्रा० १३।६।१।६ ] इति [च] पशूनां विधानेनाभिधानं विनियोगादींश्च विस्तरेणाभिधायानन्तरम्—"नियुक्तान् पुरुषान् ब्रह्मा दक्षिणतः पुरुषेण नारायणे-नाभिष्टौति 'सहस्रशीर्षा पुरुषः' [ ३५।१ ]" [ शत० ब्रा० १३।६।२।१२ ] इत्यादिनाऽभिष्टूय ततः—"पर्यग्निकृताः पशवो बभूवुरसञ्ज्ञप्ताः ॥ अथ हैनं वागभ्युवाद पुरुष मा सन्तिष्ठिपो यदि सᳪंस्थापयिष्यसि पुरुष एव पुरुषमत्स्यतीति तान्पर्यग्निकृतानेवोदसृजत्तद्देवत्या आहुतीरजुहोत्ता-भिस्ता देवता अप्रीणात्ता एनं प्रीता अप्रीणन् सर्वैः कामैः ॥ आज्येन जुहोति" [ शत० ब्रा० १३।६।२।१२-१४ ] इति च सुविस्तरतः पुरुषमेधः स्तूयते। तद्विषयावेतौ द्वावध्यायौ। तथा च सूत्रम्—"पुरुषमेधस्त्रयोविंशतिदीक्षः [4]प्रतिष्ठाकामस्य ब्राह्मणराजन्ययोरग्निष्टोमावन्तरेणातिरात्र

---

१ य एष—क-ख-ग०।

२ 'दशतो····भवन्त्येषाम्' इत्यस्य स्थाने 'दशत-श्चतुर्धा विभज्येष्ट्वा' इति पाठः—क-ख-ग०।

३ फलप्राप्तिरपि—क-ख-ग०।

४ अतिष्ठाकामस्य—का० श्रौ०।

[1]उक्थपक्षो यूपैकादशिनी भवति तावन्तोऽग्निष्टोमीयाः पशूनुपाकरिष्यन्नतिरात्रेण[2] 'देव सवितः' [३४।१] इति प्रत्यृचं तिस्रो जुहोत्येकादशिनानुपाकृत्य[3] ब्राह्मणादींश्च नियोजनकालेऽष्टाचत्वारिंशतमाद्यानग्निष्ठ इतरेष्वेकादशैकादशद्वितीयोच्छ्रिते शेषान्नियुक्तान् ब्रह्माभिष्टौति होतृकादनुवाकेन। 'सहस्रशीर्षा' [ ३५।१ ] इति कपिञ्जलादिवदुत्सृजन्ति ब्राह्मणादीन् स्विष्टकृद्वनस्पत्यन्तरे पुरुषदेवताभ्यो जुहोति सपुरुषमश्वमेधवद्दक्षिणा सर्वस्वं ब्राह्मणस्य प्रतिदेवतं तिस्रस्तिस्रोऽनुबन्ध्याः पञ्चोत्तमाया त्रैधातव्यन्ते समारोह्यात्मन्नग्नीसूर्यमुपस्थाय 'अद्भ्यः सभृतः' [ ३५।१७ ] इत्यनुवाकेनानपेक्षमाणोऽरण्यं गत्वा [4]न प्रत्येयाद् ग्रामे वा विवत्सन्नरण्योः" [का०श्रौ० २१।१] इतीममर्थं ब्रवीति।

अथ 'देव सवितः' [ ३४।१ ], 'तत्सवितुर्वरेण्यम्' [ ३४।२ ], 'विश्वानि देव सवितः' [ ३४।३ ] इति सवितारं प्रीणाति। 'तत्सवितुर्वरेण्यम्' [ ३४।२ ], 'विश्वानि देव सवितः' [३४।३] इति च सावित्र्यौ गायत्र्यौ। श्यावाश्वो नाम ऋषिराद्यन्त्ययोर्मध्यमायास्तु विश्वामित्रः।

[5]देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय।
दिव्यो गन्धर्वः केतपूः केतं नः पुनातु वाचस्पतिर्वाचं नः स्वदतु ॥१॥

[6]देव सवितः, प्रसुव। यज्ञं प्रसुव अनुजानीहि। यज्ञपतिं चानुजानीहि। [7]भगाय भाग्यसपत्त्यादिभ्यः। दिवि भवो दिव्यः। गन्धर्वः सूर्यः। केतपूः बुद्धिशोधकः। केतं नः अस्माकं केतं प्रज्ञानम्। पुनातु। वाचस्पतिर्वाचं नः अस्माकं वाचम्। स्वदतु आस्वादयतु ॥१॥

[8]तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि।
धियो यो नः प्रचोदयात् ॥ २ ॥

व्याख्यातो मन्त्रः [ ३।४३ ] ॥ २ ॥

---

१ उक्थ्यपृष्ठौ–क-ख-ग०।
२ अतिरात्रे–क-ख ग०।
३ एकादशिनीमुपाकृत्य–क-ख-ग०।
४ 'न प्रत्येयाद्' इत्यस्य स्थाने 'अप्रत्यथात्'–क-ख-ग०।
५ ( मा० ३०।१ )।
६ 'देव सवित' 'प्रसुव' नास्ति–क०।
७ 'भगाय' नास्ति–ख०।
८ ( मा० ३०।२ )

[1]विश्वानि देव सवितर्दुरितानि परासुव ।
यद्भद्रं तन्न आसुव ॥ ३ ॥

हे श्रीभगवन्सवितः, नः अस्माकम् । विश्वानि सर्वाणि । दुरितानि आगतान्यागम्यमानानि वा दुःखकारणानि । परासुव पराङ्मुखानि गमय । निवर्तयेत्यर्थः । यद्भद्र भन्दनीय कल्याण तत् । नः अस्माकम् । आसुव आगमय आप्रापय ॥ ३ ॥

[2]विभक्तारꣳ हवामहे वसोश्चित्रस्य राधसः ।
सवितारं नृचक्षसम् ॥ ४ ॥

सवितृदेवत्या गायत्री । ऋषिर्मेधातिथि । विभक्तार वसोः [3]वासवितुर्वसतिहेतुभूतस्य । चित्रस्य विचित्रस्य चायनीयस्य । राधसः धनस्य आयुषश्च । विभक्तार विभागस्य कर्तारम्, कर्मानुरूपतया कर्तारम्, अस्य कर्मण एतावदेव फलमिति फलपरिणामस्य कर्तारम् । नृचक्षसं नृणामन्तर्यामित्वेन सदा ज्ञातारम् । सवितार सर्वप्राणिना प्रतिप्रसवकर्तारम् । हवामहे आह्वयामः ॥ ४ ॥

इत उत्तर [4]पौरुषमेधिकाः पशवो देवतासम्बन्धाः स्तूयन्ते । "सोऽस्मै [5]प्रीत एतान् पुरुषान् [6]प्रसौति तेन प्रसूतानालभते" [ शत० ब्रा० १३।६।२।६ ]—

[7]ब्रह्मणे ब्राह्मणं क्षत्राय राजन्यं मरुद्भ्यो वैश्यं तपसे शूद्रं तमसे तस्करं नारकाय वीरहणम् । पाप्मने क्लीबमाक्रयाया अयोगूं कामाय पुꣳश्चलूमतिक्रुष्टाय मागधम् ॥ ५ ॥

एते पशवो निगमनिरुक्तव्याकरणनिघण्टविशेषैरवगन्तव्याः । [8]"अथ यस्मात्पुरुषमेधो नाम । इमे वै लोकाः पूरयमेव पुरुषो योऽय पवते सोऽस्या पुरि शेते तस्मात्पुरुषस्तस्य यदेषु

---

१ ( मा० ३०।३ ) ।
२ ( मा० ३०।४ ) ।
३ सवितु·—ख० ।
४ पुरुषमेधिकाः—क-ग० ।
५ प्रीतये तान्—क-ख-ग० ।
६ स्तौति—क-ग०, प्रस्तौति—ख० ।
७ ( मा० ३०।५ ) ।
८ अतस्तस्मात्—क-ख-ग० ।

लोकेष्वन्न तदस्याग्नि मेवस्तद्यदस्यैतदन्न मेधस्तस्मात्पुरुषमेधोऽथो यदस्मिन् मेध्यान्पुरुषानालभते। [शत० ब्रा० १३।६।२।१ ] पुरुषमेधस्यैवाप्त्यै" [ शत० ब्रा० १३।७।१।८ ] इत्यादिना पुरुषशब्दार्थनिर्वचनपूर्वक तस्योचितान्पशूनाह। तच्च–[1]"तान् वै मध्यमेऽहन्नालभते" [ शत० ब्रा० १३।६।२।२ ] इत्युपक्रम्य "अष्टाचत्वारिꣳशत मध्यमे यूप आलभते" [ शत० ब्रा० १३।६।२।५ ] इति, 'एकादशैकादशेतरेषु' [ शत० ब्रा० १३।६।२।६ ], "अष्टा उत्तमाना लभते" [ शत० ब्रा० १३।६।२।७ ] इत्याह पुरुषान् पशून्। अत्र पदान्वयमात्र प्रदर्श्यते।

[2]ब्रह्मणे ब्राह्मणमिति ब्रह्मदेवत्या [3]अष्टिः। अस्याध्यायस्य पुरुषो नारायण ऋषिः, प्रतिमन्त्र स एव। ब्रह्मणे देवतायै ब्राह्मण पशुमालभते। क्षत्राय देवतायै राजन्य पशुमालभते। मरुद्भ्यो देवताभ्यो वैश्य पशुमालभते। तपसे देवतायै शूद्र पशुमालभते। तमसे देवतायै तस्कर पशुमालभते। नारकाय देवतायै वीरहण पशुमालभते। पाप्मने देवतायै क्लीब पशुमालभते। आक्रयायै देवताया अयोगूम् अयसो गन्तार पशुमालभते। कामाय देवतायै पुश्चलू पशुमालभते। अतिक्रुष्टाय देवतायै मागध पशुमालभते ॥ ५ ॥

[4]**नृत्ताय सूतं गीताय शैलूषं धर्माय सभाचरं नरिष्ठायै भीमलम्। नर्माय रेभꣳ हसाय कारिमानन्दाय स्त्रीषखं प्रमदे कुमारीपुत्रं मेधायै रथकारं धैर्याय तक्षाणम् ॥ ६ ॥**

अतिशक्करी लिङ्गोक्तदेवत्या। नृत्ताय देवतायै सूत ब्राह्मण्या क्षत्रियाज्जातः सूतस्त सूत पशुम्। गीताय देवतायै शैलूष नृत्यशिक्षाकारक पशुमालभते। धर्माय देवतायै सभाचर सभाया चरतीति त पशुम्। नरिष्ठायै देवतायै भीमल भयङ्कर पशुमालभते। नर्माय देवतायै रेभ पशुम्। हसाय देवतायै कारि करणविशिष्ट पशुम्। आनन्दाय देवतायै स्त्रीषख पशुम्। प्रमदे देवतायै कुमारीपुत्रम्। मेधायै रथकार पशुम्। धैर्याय देवतायै तक्षाण वर्धकिं पशुमालभते ॥ ६ ॥

---

१ "तन्मध्यमे यूपमालभते" [ शत० ब्रा० १३।२।२।२ ] इति–क-ख-ग०।
२ 'ब्रह्मणे ब्राह्मणम्' [ ३४।५ ] इति द्वे कण्डिके तपसेऽनुवाकश्च ब्राह्मणम्" इति–ग० टि०।
३ आर्ष्टिः—ख०। ४ ( मा० ३०। ६ )।

[1]तपसे कौलालं मायायै कर्मारꣳ रूपाय मणिकारꣳ शुभे वपꣳ शरव्याया इषुकारꣳ हेत्यै धनुष्कारम्। कर्मणे ज्याकारं दिष्टाय रज्जुसर्जं मृत्यवे मृगयुमन्तकाय श्वनिनम्॥ ७॥

लिङ्गोक्तदेवत्या। तपसे देवतायै कौलाल कुलालापत्य पशुमालभते। मायायै देवतायै कर्मार कर्मकरणदक्ष पशुम्। रूपाय देवतायै मणिकारम्। शुभे शुभाय देवतायै वप पशुम्। शरव्यायै देवताया इषुकार पशुम्। हेत्यै [2]देवतायै धनुष्कार पशुम्। कर्मणे देवतायै ज्याकार [3]ज्यायाः कर्तार पशुम्। दिष्टाय देवतायै रज्जुसर्ज रज्जुकर्तार [4]पशुम्। मृत्यवे देवतायै मृगयु मृगग्राहक पशुम्। अन्तकाय देवतायै श्वनिन श्वानवन्त पशुमालभते[5]॥ ७॥

[6]नदीभ्यः पौञ्जिष्टमृक्षीकाभ्यो नैषादं पुरुषव्याघ्राय दुर्मदं गन्धर्वाप्सरोभ्यो व्रात्यम्। प्रयुग्भ्य उन्मत्तꣳ सर्पदेवजनेभ्योऽप्रतिपदमयेभ्यः कितवमीर्यताया अकितवं पिशाचेभ्यो बिदलकारीं यातुधानेभ्यः कण्टकीकारीम्॥ ८॥

शाक्करः प्रगाथो लिङ्गोक्तदेवत्यः। नदीभ्यो देवताभ्यः पौञ्जिष्ट पुञ्जिष्टस्यापत्य पशुमालभते। ऋक्षीकाभ्यो देवताभ्यो नैषाद निषादापत्य पशुम्। पुरुषव्याघ्राय देवतायै दुर्मदं पशुम्। गन्धर्वाप्सरोभ्यो देवताभ्यो व्रात्यं सावित्रीपतितं पशुम्। प्रयुग्भ्यो देवताभ्य उन्मत्त पशुम्। सर्पदेवजनेभ्यो देवताभ्योऽप्रतिपद प्रतिपदर्राहत पशुम्। अयेभ्यो देवताभ्यः कितवं द्यूतकारं पशुम्। ईर्यतायै देवताया अकितव पशुम्। पिशाचेभ्यो देवताभ्यो बिदलकारीं पशुम्। यातुधानेभ्यो देवताभ्यः कण्टकीकारी पशुमालभते॥ ८॥

[7]संधये जारं गेहायोपपतिमार्त्यै परिवित्तं निर्ऋत्यै परिविविदानमराध्या

---

१ ( मा० ३०।७ )।
२ 'देवतायै' नास्ति–ख ग०।
३ 'ज्यायाः कर्तारम्' नास्ति–क ग०।
४ 'पशुम्' नास्ति–क-ग०।
५ 'आलभते' नास्ति–ख ग०।
६ ( मा ३०।८ )।
७ ( मा० ३०।९ )।

एदिधिषुःपतिं निष्कृत्यै पेशस्कारीᳬं संज्ञानाय स्मरकारीम्। प्रकामोद्यायोपसदं वर्णायानुरुधं बलायोपदाम्॥ ९॥

त्रैष्टुभः प्रगाथो बहुदेवत्यः। सधये देवतायै जार पशुमालभते। गेहाय देवताया उपपतिं जार पशुमालभते। आर्त्यै देवतायै परिवित्त परिवेदनस्य कर्तार पशुम्। निर्ऋत्यै देवतायै परिविविदान परिवेदन कुर्वाण पशुम्। अराध्यै देवताया एदिधिषुःपति [1]पशुम्। निष्कृत्यै देवतायै पेशस्कारीं पशु [2]कोशकारीं पशुम्। सज्ञानाय देवतायै स्मरकारी कामकारिणीम्। प्रकामोद्याय देवताया उपसद पशुम्। वर्णाय देवताया अनुरुध पशुम्। बलाय देवताया उपदाम् उपददातीत्युपदामालभते॥ ९॥

[3]उत्सादेभ्यः कुब्जं प्रमुदे वामनं द्वार्भ्यः स्रामᳬं स्वप्नायान्धमधर्माय बधिरं पवित्राय भिषजम्। प्रज्ञानाय नक्षत्रदर्शमाशिक्षायै प्रश्निनमुपशिक्षाया अभिप्रश्निनं मर्यादायै प्रश्नविवाकम्॥ १०॥

बहुदेवत्याऽत्यष्टिः। उत्सादेभ्यो देवताभ्यः कुब्जमतिह्रस्व पशुमालभते[4]। [5]प्रमुदे देवतायै वामन पशुम्। द्वार्भ्यः स्राम पशुम्। स्वप्नाय देवताया अन्ध पशुम्। अधर्माय देवतायै बधिर पशुम्। पवित्राय देवतायै भिषज वैद्य पशुम्। प्रज्ञानाय देवतायै नक्षत्रदर्श नक्षत्राणि दर्शयतीति नक्षत्रदर्शस्त पशुम्। आशिक्षायै देवतायै प्रश्निन [6]प्रश्नवन्त पशुम्। उपशिक्षायै देवताया अभिप्रश्निन पशुम्। मर्यादायै देवतायै प्रश्नविवाक [7]प्रश्नविवेचन पशुमालभते॥ १०॥

[8]अर्मेभ्यो हस्तिपं जवायाश्वपं पुष्ट्यै गोपालं वीर्यायाविपालं तेजसेऽजपाल-

---

१ 'पशुम्' नास्ति—क-ग०।
२ 'कोशकारीं पशुम्' नास्ति—ख०।
३ (मा० ३०।१०)।
४ 'आलभते' नास्ति—क-ग०।
५ प्रमदे—क-ख-ग०।
६ 'पशुं प्रश्नवन्तम्' इति विपर्यस्तः पाठः—क-ग०।
७ प्रश्नविवेचकम्—ख०।
८ (मा० ३०।११)।

**मिरायै कीनाशम् । कीलालाय सुराकारं भद्राय गृहपꣳ श्रेयसे वित्तधमाध्यक्षाया-नुक्षत्तारम् ॥ ११ ॥**

अनुष्टुप् प्रगाथो बहुदेवत्यः । अर्मेभ्यो देवताभ्यो हस्तिप [1]गजपाल पशुमालभते । जवाय देवताया अश्वपम् [2]अश्वपाल पशुम् । पुष्ट्यै देवतायै [3]गोपाल पशुमालभते[4] । वीर्याय देवताया अविपाल पशुम् । तेजसे देवताया अजपाल पशुम् । इरायै देवतायै कीनाशमिति त पशुम् । कीलालाय देवतायै सुराकार पशुम् । भद्राय देवतायै गृहप [5]गृहपालक पशुम् । श्रेयसे देवतायै वित्तध वित्तानि निधीयन्ते येन स वित्तधस्त वित्तधं पशुम् । आध्यक्षाय देवताया अनुक्षत्तार पशुमालभते ॥ ११ ॥

**[6]भायै दार्वाहारं प्रभाया अग्न्येध ब्रध्नस्य विष्टपायाभिषेक्तारं वर्षिष्ठाय नाकाय परिवेष्टारम् । देवलोकाय पेशितारं मनुष्यलोकाय प्रकरितारꣳ सर्वेभ्यो लोकेभ्य उपसेक्तारमवऋत्यै वधायोपमन्थितारं मेधाय वासःपल्पूलीं प्रकामाय रजयित्रीम् ॥ १२ ॥**

बृहतीशक्वर्यौ यत्र मीलिते भवतः स बार्हतः प्रगाथो बहुदेवत्यः । भायै देवतायै दार्वाहार दृढाकार पशुम् । प्रभायै देवताया अग्न्येधम् अग्न्यभिवर्धक पशुम् । ब्रध्नस्य विष्टपाय देवताया अभिषेक्तारम् अभिषेकस्य कर्तार पशुम् । वर्षिष्ठाय देवतायै [7]नाकाय देवतायै परिवेष्टार परिवेषणस्य कर्तार पशुम् । देवलोकाय देवतायै पेशितारम् अवयवाना कर्तार पशुम् । मनुष्यलोकाय देवतायै प्रकरितार प्रकरस्य कर्तार पशुम् । सर्वेभ्यो लोकेभ्यो देवताभ्य उपसेक्तारम् उपसेचनस्य कर्तार पशुम् । अवऋत्यै देवतायै वधाय देवताया उपमन्थितारं पशुम् । मेधाय देवतायै वास.पल्पूली वाससा पल्पूलनकारिण पशुम् । प्रकामाय देवतायै रजयित्री रञ्जनकारिणं पशुमालभते ॥ १२ ॥

---

१ गजपालकम्—ख-ग० ।
२ अश्वपालकम्—ख-ग० ।
३ गोपालकम्—ख० ।
४ 'आलभते' नास्ति—क-ग० ।
५ 'गृहपालकम्' नास्ति—क-ग० ।
६ ( मा० ३०।१२ ) ।
७ 'नाकाय देवतायै' नास्ति—क-ग० ।

[1]ऋतये स्तेनहृदयं वैरहत्याय पिशुनं विविक्त्यै क्षत्तारमौपद्रष्ट्र्यायानुक्षत्तारं बलायानुचरं भूम्ने परिष्कन्दम् । प्रियाय प्रियवादिनमरिष्ट्या अश्वसादꣳ स्वर्गाय लोकाय भागदुघं वर्षिष्ठाय नाकाय परिवेष्टारम् ॥ १३ ॥

त्रिष्टुब्बृहत्यौ यत्र मीलिते स त्रैष्टुभः प्रगाथो बहुदेवत्यः । ऋतये [2]देवतायै स्तेनहृदय पशुम् । वैरहत्याय देवतायै पिशुनं [3]परवृत्तसूचक पशुम् । विविक्त्यै देवतायै क्षत्तार पशुम् । औपद्रष्ट्र्याय देवताया अनुक्षत्तार पशुम् । बलाय देवताया अनुचर पुरुष पशुम् । भूम्ने देवतायै परिष्कन्द परितः स्कन्दयतीति परिष्कन्दस्त परिष्कन्द पशुम् । प्रियाय देवतायै प्रियवादिन पशुम् । अरिष्टयै देवताया अश्वसादम् [4]अश्वनोदक पशुम् । स्वर्गाय लोकाय देवतायै भागदुघ भागस्य दोहक पशुम् । वर्षिष्ठाय नाकाय देवतायै परिवेष्टारमालभते ॥१३॥

[5]मन्यवेऽयस्तापं क्रोधाय निसरं योगाय योक्तारꣳ शोकायाभिसर्तारं क्षेमाय विमोक्तारमुत्कूलनिकूलेभ्यस्त्रिष्ठिनम् । वपुषे मानस्कृतꣳ शीलायाञ्जनीकारी निर्ऋत्यै कोशकारी यमायासूम् ॥ १४ ॥

त्रिष्टुबुष्णिहौ यत्र मीलिते भवतः सोऽय त्रैष्टुभः प्रगाथो बहुदेवत्यः । मन्यवे देवताया अयस्तापम् अयस्तापकर पशुम् । क्रोधाय देवतायै निसरं नितरा सर्तार पशुम् । योगाय देवतायै योक्तार योगस्य कर्तार [6]पशुम् । शोकाय देवताया अभिसर्तार पशुम् । क्षेमाय देवतायै विमोक्तार पशुम् । उत्कूलनिकूलेभ्यो देवताभ्यस्त्रिष्ठिन त्रिषु स्थान शीलयते त पशुम् । वपुषे देवतायै मानस्कृत मानःकृत प्रजाया अभिमानस्य [7]वा कर्तारम् । शीलाय देवताया आञ्जनीकारीम् अञ्जनस्य कर्तार पशुम् । निर्ऋत्यै देवतायै कोशकारी पशुम् । यमाय देवतायै [8]असू भिक्षुक पशुमालभते ॥ १४ ॥

---

१ ( मा० ३०।१३ ) ।
२ 'देवतायै' नास्ति—ख० ।
३ 'पशुं परवृत्तसूचकम्' इति विपर्यस्त पाठ.—क-ग० ।
४ अश्वतोदकम्—क० ।
५ ( मा० ३०।१४ ) ।
६ 'पशुम्' नास्ति—ख-ग० ।
७ 'वा' नास्ति—ख० ।
८ असुम्—ख-ग० ।

[1]यमाय यमसूमथर्वभ्योऽवतोकाꣳ संवत्सराय पर्यायिणीं परिवत्सरायाविजातामिदावत्सरायातीत्वरीमिद्वत्सरायातिष्कद्वरीम्। वत्सराय विजर्जराꣳ संवत्सराय पलिक्नीमृभुभ्योऽजिनसन्धꣳ साध्येभ्यश्चर्मम्नम् ॥ १५ ॥

यत्र जगत्युष्णिहौ समीलितौ स्तः स जागतः प्रगाथो नानादेवत्यः। यमाय देवतायै यमसूं यमलप्रसवा पशुमालभते[2]। अथर्वभ्यो देवताभ्योऽवतोका निकृष्टप्रजा पशुम्। संवत्सराय देवतायै पर्यायिणीं परिगमनशील पशुम्। परिवत्सराय देवताया अविजाता पशुम्। इदावत्सराय देवताया अतीत्वरीम् अतित्वरणशील पशुम्। इद्वत्सराय देवताया अतिष्कद्वरी पशुम्। वत्सराय देवतायै विजर्जरा विजर्जरस्वभावाम्। संवत्सराय देवतायै पलिक्नी बालगर्भिणी [3]पशुम्। ऋभुभ्यो देवताभ्योऽजिनसन्धम् अजिनस्थानवन्त पशुम्। साध्येभ्यो देवताभ्यश्चर्मम्न चर्मवन्त पशुमालभते ॥ १५ ॥

[4]सरोभ्यो धैवरमुपस्थावराभ्यो दाशं वैशन्ताभ्यो बैन्दं नड्वलाभ्यः शौष्कलम्। पाराय मार्गारमवाराय केवर्तं तीर्थेभ्य आन्द विषमेभ्यो मैनालम्। स्वनेभ्य पर्णकं गुहाभ्यः किरातꣳ सानुभ्यो जम्भकं पर्वतेभ्यः किपूरुषम् ॥ १६ ॥

अतिजागतः प्रगाथो बहुदेवत्यः। सरोभ्यो देवताभ्यो धैवर [5]धीवरस्यापत्य धैवर पशुमालभते। उपस्थावराभ्यो देवताभ्यो दाश कैवर्त पशुम्। वैशन्ताभ्यो देवताभ्यो बैन्द बिन्दोरपत्य पशुम्। नड्वलाभ्यो देवताभ्यः शौष्कल पशुम्। पाराय देवतायै मार्गार पशुम्। अवाराय देवतायै केवर्त कैवर्तस्य पितर पशुम्। तीर्थेभ्यो देवताभ्य आन्द पशुम्। विषमेभ्यो देवताभ्यो मैनाल पशुम्। स्वनेभ्यो देवताभ्यः पर्णक पशुम्। गुहाभ्यो देवताभ्यः किरात पशुम्। सानुभ्यो देवताभ्यो जम्भक पशुमालभते[6]। पर्वतेभ्यो देवताभ्यः किपूरुष [7]पशुमालभते ॥१६॥

---

१ ( मा० ३०।१५ )।
२ 'आलभते' नास्ति–क०।
३ 'पशुम्' नास्ति–ख-ग०।
४ ( मा० ३०।१६ )।
५ धैवरस्यापत्यम्–क-ग०।
६ 'आलभते' नास्ति–क०।
७ 'पशुम्' नास्ति–क०।

[1]बीभत्सायै पौल्कसं वर्णाय हिरण्यकारं तुलायै वाणिजं पश्चादोषाय ग्लाविनं विश्वेभ्यो भूतेभ्यः सिध्मलम् । भूत्यै जागरणमभूत्यै स्वपनमार्त्यै जनवादिनं व्यृद्ध्या अपगल्भꣳ सꣳशराय प्रच्छिदम् ॥१७॥

बार्हतः प्रगाथो नानादेवत्यः । बीभत्सायै देवतायै पौल्कसं पशुमालभते[2] । वर्णाय देवतायै [3]हिरण्यकारं पशुम् । तुलायै देवतायै वाणिजं वणिजोपत्यम् । पश्चादोषाय देवतायै ग्लाविनं पशुम् । विश्वेभ्यो भूतेभ्यो देवताभ्यः सिध्मलं पशुमालभते । भूत्यै देवतायै जागरणं जागरणवन्तम् । अभूत्यै देवतायै स्वपनं स्वपनवन्तं पशुम् । आर्त्यै देवतायै जनवादिनं पशुम् । व्यृद्ध्यै देवताया अपगल्भं पशुम् । संशराय देवतायै प्रच्छिदं पशुमालभते[4] ॥ १७ ॥

[5]अक्षराजाय कितवं कृतायादिनवदर्शं त्रेतायै कल्पिनं द्वापरायाधिकल्पिनमास्कन्दाय सभास्थाणुं मृत्यवे गोव्यच्छमन्तकाय गोघातम् । क्षुधे यो गां विकृन्तन्तं भिक्षमाण उपतिष्ठति दुष्कृताय चरकाचार्यं पाप्मने सैलगम् ॥ १८ ॥

[6]जागतः प्रगाथो नानादेवत्यः । अक्षराजाय देवतायै कितवं पशुम् । कृताय देवताया [7]आदिनवदर्शं पशुम् । त्रेतायै देवतायै कल्पिनं पशुम् । द्वापराय देवताया अधिकल्पिनं पशुम् । आस्कन्दाय देवतायै सभास्थाणुम् । मृत्यवे गोव्यच्छं पशुम् । अन्तकाय देवतायै गोघातं गोघातकं पशुम् । [8]क्षुधे देवतायै [9]यो गां भिक्षमाणो याचमानो विकृन्तन्तं छेदनं कुर्वाणं पशुं पुरुषमुपतिष्ठत्युपस्थानं करोति स्वयं [10]बुभुक्षितस्तं [11]क्षुधे देवतायै । दुष्कृताय चरकाचार्यं पशुम् । पाप्मने देवतायै सैलगं [12]पशुं सैलगापत्यं पशुमालभते ॥ १८ ॥

---

१ ( मा० ३०।१७ ) ।
२ 'आलभते' नास्ति–क० ।
३ 'हिरण्यकारं पश्चादोषाय देवतायै' नास्ति–क० ।
४ 'आलभते' नास्ति–ख-ग० ।
५ ( मा० ३०।१८ )
६ 'जागतः प्रगाथो नानादेवत्य ' नास्ति–ख० ।
७ आदीनवदर्शनम्–ख० ।
८ क्षुधे यो गां विकृन्तन्तं भिक्षमाण उपतिष्ठति य. पुमान् गां विकृन्तन्तं छिन्दन्तम् । भिक्षमाणो याचमान उपतिष्ठते तं याचितारं क्षुधे देव्यै आलभेत–मही० ।
९ यो गां तम्–क-ख० ।
१० बुभुक्षितस्ततस्तस्यै–क-ग० ।
११ 'क्षुधे देवतायै' नास्ति–ख० ।
१२ 'पशुम्' नास्ति–ख-ग० ।

[1]प्रतिश्रुत्काया अर्तनं घोषाय भषमन्ताय बहुवादिनमनन्ताय मूकᳪं शब्दायाऽऽडम्बराघातम् । महसे वीणावादं क्रोशाय तूणवध्ममवरस्पराय शङ्खध्मं वनाय वनपमन्यतोऽरण्याय दावपम् ॥ १९ ॥

बार्हत प्रगाथो नानादेवत्यः । प्रतिश्रुत्कायै देवताया अर्तनं पशुमालभते[2] । घोषाय देवतायै भष पशुम् । अन्ताय देवतायै बहुवादिन पशुम् । अनन्ताय देवतायै मूक पशुम् । शब्दाय देवताया आडम्बराघात पशुम् । महसे देवतायै वीणावाद पशुम् । क्रोशाय देवतायै तूणवध्म पशुम् । अवरस्पराय देवतायै शङ्खध्म पशुम् । वनाय देवतायै वनप पशुम् । अन्यतोऽरण्याय देवतायै दावप पशुमालभते ॥ १९ ॥

[3]नर्माय पुᳪंश्चलूᳪं हसाय कारिं यादसे शाबल्यां ग्रामण्यं गणकमभिक्रोशकं तान्महसे । वीणावादं पाणिघ्नं तूणवध्मं तान्नृत्तायानन्दाय तलवम् ॥ २० ॥

अतिजगती नानादेवत्या । नर्माय देवतायै पुश्चल्ं पशुम् । हसाय देवतायै कारिं करणशील पशुम् । यादसे देवतायै शाबल्या [4]च ग्रामण्य च गणक [5]चाभिक्रोशकं [6]चेति तानेतान् पशूनालभते । महसे देवतायै वीणावाद पशु पाणिघ्न तूणवध्ममिति [7]च तानेतान् पशूनालभते । नृत्ताय [8]देवताया आनन्दाय देवतायै तलव पशुमालभते ॥ २० ॥

[9]अग्नये पीवानं पृथिव्यै पीठसर्पिणं वायवे चाण्डालमन्तरिक्षाय वᳪंशनर्तिनं दिवे खलतिᳪं सूर्याय हर्यक्षम् । नक्षत्रेभ्यः किर्मिरं चन्द्रमसे किलासमह्ने शुक्लं पिङ्गाक्षᳪं रात्र्यै कृष्णं पिङ्गाक्षम् ॥ २१ ॥

---

१ ( मा० ३०।१९ ) ।
२ 'आलभते' नास्ति—क० ।
३ ( मा० ३०।२० ) ।
४ 'च' नास्ति—ख० ।
५ 'चाभिक्रोशकम्' नास्ति—ख०, 'च' नास्ति—ग० ।
६ 'च' नास्ति—ख-ग० ।
७ 'च' नास्ति—ख० ।
८ 'देवतायै' नास्ति—क० ।
९ ( मा० ३०।२१ )

त्रैष्टुभः प्रगाथो नानादेवत्यः। अग्नये देवतायै पीवान पशुमालभते[१]। पृथिव्यै [२]देवतायै पीठमर्पिण पशुमालभते[३]। वायवे देवतायै चाण्डाल चण्डालकर्माणम्। अन्तरिक्षाय देवतायै वशनर्तिन वशेन महता नर्तनशील [४]वशे नृत्यकारिणम्। दिवे देवतायै खलतिम्। सूर्याय देवतायै हर्यक्ष हरिताक्ष पशुम्। नक्षत्रेभ्यो [५]देवताभ्यः किर्मिर किर्मिरवर्णक पशुम्। चन्द्रमसे देवतायै किलास पशुम्। अह्ने देवतायै शुक्ल पिङ्गाक्ष पशुम्। रात्र्यै देवतायै कृष्ण पिङ्गाक्षं पशुमालभते ॥ २१ ॥

[६]अथैतानष्टौ विरूपानालभतेऽतिशुक्लं चातिकृष्णं चातिदीर्घं चातिह्रस्वं च। अतिस्थूलं चातिकृशं चातिकुल्वं चातिलोमशं चाशूद्रा अब्राह्मणास्ते प्राजापत्याः। मागधः पुंश्चली क्लीबः कितवोऽशूद्रा अब्राह्मणास्ते प्राजापत्याः ॥ २२ ॥

[७]सप्तत्युत्तरशत पशवश्चेति [?] द्विपदपशवः पुरुषमेधे नियुक्ताः। अथेदानी तिर्यक्पशूनुत्तमान् विरूपानजाख्यानष्टावाह। [८]अथैतानित्यतिशाक्करः प्रगाथो नानादेवत्यः। अथ द्विपादपश्वालम्भनानन्तरम्। एतान् अष्टौ विरूपान् विपरीतरूपान् पशूनालभते। अतिशुक्लम् अतिशुक्लवर्णमजम्। अतिकृष्णम् अतिकृष्णवर्णमजम्। अतिदीर्घमजम्। अतिह्रस्वमजम्। तिस्थूलमजम्। अतिकृशमजम्। अतिकुल्वमजम्। अतिलोमशमजम्। अशूद्राः शूद्रव्यतिरिक्ताः। अब्राह्मणाः ब्राह्मणव्यतिरिक्ताः। एते पशवस्त्वशूद्रा अब्राह्मणा इत्युक्ताः। पूर्वोक्ताः पशवो ब्राह्मणक्षत्रियवैश्यशूद्रात्मका इत्युक्ता भवन्ति। ते प्राजापत्याः सामान्येन प्रजापतिसम्बन्धिनः। मागधः पुंश्चली क्लीबः कितव एते चत्वारोऽप्यशूद्रा अब्राह्मणाश्च न [?] भवन्ति, किन्तु प्राजापत्याः ॥ २२ ॥

इति [९]शुक्लयजुःकाण्वसंहिताभाष्यसंग्रहे चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

---

१ 'आलभते' नास्ति–क०।
२ 'देवतायै' नास्ति–क०।
३ 'आलभते' नास्ति–क०।
४ 'वशे नृत्यकारिणम्' नास्ति–ख०।
५ 'देवताभ्यः' नास्ति–क०।
६ ( मा० ३०।२२ )।
७ सप्तत्युत्तरपशवश्चेति–ख०।
८ अथैतानिति शक्करः–ख०।
९ श्रीकाण्ववेदमन्त्रभाष्यसंग्रहे–ख०, काण्ववेदभाष्ये–ग०।

## पञ्चत्रिंशोऽध्यायः

[1]सहस्रशीर्षेति । [2]ब्रह्मवैवर्तोक्तविधानेन न्यासादिकं कथ्यते—[3]'न्याङ्गे देवे सविन्यासाः षोडशैवोपकारकाः । होमः पुष्पाञ्जलिर्जाप्य षडावृत्तिरिमे क्रमात् । १ ॥ कर्मणोऽर्द्धं हरेद्दैत्यो विना न्यास कृतस्य च । तेनान्यथा न कर्तव्यं पूजाहोमजपादिकम् ॥ २ ॥ वामदक्षकरे पाद-जानुष्वपि कटिद्वये । नाभौ हृत्कण्ठबाह्वोश्च वक्त्रे चाक्ष्णोश्च मूर्द्धनि ॥ ३ ॥ न्याङ्गे देवस्य चाप्येव विन्यसेत् षोडशैः क्रमात् । आद्ययाऽऽवाहन कुर्यादासन तु द्वितीयया ॥ ४ ॥ पाद्य तृतीयया चार्घ्यं दद्यात्तस्मै तुरीयया । पञ्चम्याऽऽचमनीय च स्नान षष्ठ्याथ वाससी ॥ ५ ॥ सप्तम्या चोपवीत स्यादष्टम्या च पितामह । गन्ध नवम्या पुष्प तु दशम्यैकादशर्चया ॥ ६ ॥ धूप दीप च द्वादश्या त्रयोदश्यान्नमुत्तमम् । पुष्पाञ्जलि चतुर्दश्या पञ्चदश्या प्रदक्षिणम् ॥ ७ ॥ विसर्जन तु षोडश्या इति सूक्तार्चन क्रमात् । [4]आद्य त्वाचमन कार्यं स्नाननैवेद्ययोः सदा ॥८॥ षोडशर्च भवेन्मन्त्र सूक्त पुरुषदैवतम् । सर्वदेवात्मकस्यास्य ऋषिर्नारायणः परः ॥ ९ ॥ पुरुषो यो जगद्बीज वेदसारमयोऽच्युतः । देवता त्रिष्टुभ तस्य छन्दोऽनुष्टुप् चतुष्पदी ॥ १० ॥ पुरुष एवेदमिति यद्बीज त्रैलोक्यविश्रुतम् । एतावानस्य महिमा इति शक्तिः सनातनी ॥११॥ चतुर्भिश्च चतुर्भिश्च ऋग्भिः प्रतिमुख यजेत् । वेदमूर्तिश्चतुर्वक्त्रो भुजैरष्टभिरावृतः ॥१२॥ ऋग्वेदास्यो यजुःकुक्षी सामचक्षुस्त्वथर्वहृत् । ऋचः पश्चिमवक्त्र स्याद्यजुश्चोत्तरमुच्यते ॥ १३ ॥ साम पूर्वं मुखं ज्ञेयमथर्वा दक्षिण मुखम् । अवयवाश्च [5]भवेयुस्ता वेदशाखा महात्मनः ॥ १४ ॥ हिरण्मय

---

१ हरिः ॐ सहस्रशीर्षेति–ख०, ॐ सहस्रशीर्षेति–ग०, अत्र–"परमात्मा विज्ञानानन्दादिगुण-निध्यात्मभूतः पुरुषमेधो यज्ञः प्रजापतिर्लोकपालाग्न्यादिवपुः पुरुषोत्पत्तिस्थितिसंहृतीनां हेतुः स्वर्गापवर्गैश्वर्यमोक्षदो ज्ञानकर्मसमुच्चयकारिणः शरीरम्, 'यज्ञो वा अस्यात्मा भवति' [ शत० ब्रा० ११।२।२।५ ] इति श्रुतेः । प्रथमानुवाकेन षोडशर्चेनानुष्टुभेन त्रिष्टुबन्त्येन तथा 'ब्रह्मणे ब्राह्मणम्' इत्याद्यवयवभूतपुरुषद्वारेणावयवी स्तूयते।" इति–ग० टि० । अत्रत्यशौनकभाष्येण तुलनीयैषा ।

२ ब्रह्मवैवर्तपुराणे नोपलभ्यन्त इमानि श्लोकानि । ऋग्विधानस्य तृतीयाध्याये पुरुषसूक्तस्यास्य विनियोग ईदृश एव दरीदृश्यते किन्तु तत्र श्लोकावलिर्भिन्नैव ।

३ साङ्गे देवे सविन्यासम्–ख० ।

४ आद्यंताचमनम्–क-ख-ग० ।

५ भवेद्यज्ञे–ख० ।

वपुस्तस्य श्मश्रुकेशौ हिरण्मयौ । पीतवस्त्रपरीधानं श्वेतवस्त्रोत्तरीयकम् ॥ १५ ॥ हारकेयूरमुकुटकुण्डलाद्यैर्विराजितम् । आयुधानि चतुर्वेदा वाष्कलादिमयाः स्मृता ॥१६॥ [1]ऋग्वेदादिमया ज्ञेयाः शङ्खचक्रगदाब्जकाः । मुसलासिधनुःपाशा वाष्कलादिमयाः स्मृताः ॥१७॥ शङ्खं शैलं च मुसलं खड्गं दक्षोपरि स्मरेत् । चक्राब्जशार्ङ्गपाशांश्च [2]तथोत्तरकरे स्मरेत् ॥१८॥" [ इति । ]

अथ—"नियुक्तान् पुरुषान् ब्रह्मा दक्षिणतः पुरुषेण नारायणेनाभिष्टौति–[3]'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्' [ ३५।१ ] [4]इत्येतेन षोडशर्चेन । षोडशकलं वा इदꣳ [5]सर्वम्" [ शत० ब्रा० १३।६।२।१२ ] इत्यत्र विनियुक्तेषु पशुषु [6]विराट्पुरुषरूपश्रीनारायणस्वरूपमारोप्य श्रीनारायणस्वरूपदृष्ट्या तेषां स्तुतिः । कार्याणां च कारणानन्यत्वात् कारणरूपेणापि स्तुतिरुपपद्यते । [7]स्तुत्यर्थे विनियुक्तमन्त्रपदानामपि स्वार्थे शक्तिरस्त्येव, स्वार्थे शक्तिमतां पदानां परस्परान्वयेन [8]विवक्षितार्थता चास्त्येव । प्रयोजनवशात् विनियोगबलाच्चान्यार्थता तेषाम् । सर्वथापि स्वार्थे तात्पर्यावसानमस्त्येव, अन्यथा [9]स्वार्थे प्रकाशस्याप्यभावप्रसङ्गादिति । अथ पदव्याख्या—

[10]सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिꣳ सर्वतः स्पृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ १ ॥

[11]सहस्रशीर्षेति षोडशर्चं सूक्तम् । तत्रानुष्टुभः पञ्चदश, अन्त्या त्रिष्टुप् । श्रीनारायणपुरुष ऋषिः । परमात्मा श्रीनारायणो देवता । शतं सहस्रमनन्तमपरिमितमिति नाम, सङ्ख्यानियमस्त्वविवक्षितः । सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपादित्ययमेव निर्देशः सङ्ख्याया अविवक्षितत्वं सूचयति, शिरश्चक्षुःपादानामेकत्र समसङ्ख्यानुपपत्तेरिति । सहस्राणि शीर्षाणि यस्य सः सहस्रशीर्षा, 'शीर्षंश्छन्दसि' [ अष्टा० ६।१।६० ] इति शिरःशब्दस्य शीर्षन्नादेशः, अपरिमितशिराः । सर्वप्राणिनां शिरांस्यस्यैव शिरांसि, प्राणिनामानन्त्यात् । प्रायशस्त्वत्रत्या बहवः शब्दा लक्षणया स्वार्थमभिवदन्ति, न मुख्यवृत्त्या । सर्वावयवानां प्रधानभूतशिरसस्तु

---

१ सप्तदशतमः श्लोको नास्ति–क० ।
२ 'तथा' इत्यस्य स्थाने 'तान्' इति–ख० ।
३ सहस्रशीर्षेत्यनेन–क० ।
४ इत्यनेन–ख-ग० ।
५ 'सर्वम्' इत्यस्याग्रे 'प्रजापतिः' इत्यधिकम्–क-ख ग०, एष चात्र शत० ब्रा० न दृश्यते ।
६ 'रूप' नास्ति–क-ग० ।
७ स्तुत्यन्तेन–क ख-ग० ।
८ विवक्षितार्थे–क ख ग० ।
९ स्वार्थे प्रकाशस्याप्यर्थे प्रकारस्यापि–क-ग० ।
१० ( मा० ३१।१ ) ।
११ 'सहस्रशीर्षेति' नास्ति–क० ।

प्रथम तावद्ग्रहणम्, सर्वेषा प्रधानभूतस्य सत्यज्ञानानन्तानन्दभावलक्षणस्य परब्रह्मणः परिग्रहार्थं तस्य चात्मत्वेनानन्यशेषत्वेन प्राधान्यादिति । अस्य च स्वरूपावगमस्तु तटस्थलक्षणया स्वरूप-लक्षणया च भवति, नान्यथेति तद्द्वय क्रमेण दर्शयति–'सहस्रशीर्षा पुरुषः' इति । ब्रह्माण्डलक्षणे पुरि शेत इति पुरुषः । तथा च [1]श्रुतिर्नामनिर्वचन करोति–[2]"अथ यस्मात्पुरुषमेधो नाम । इमे वै लोकाः पूरयमेव पुरुषो योऽय पवते सोऽस्या पुरि शेते तस्मात्पुरुषस्तस्य[3] यदेषु लोकेष्वन्न तदस्यान्न मेधस्तद्यदस्यैतदन्न मेधस्तस्मात्पुरुषमेधोऽथो यदस्मिन मेध्यान्पुरुषानालभते । तस्माद्वेव पुरुषमेधः" [ शत० ब्रा० १३।६।२।१ ] इति, "इदꣳ सर्व पुरुषमेधः सर्वस्याप्त्यै सर्वस्यावरुध्यै" [ शत० ब्रा० १३।६।२।१२ ] इति [ च ]। सर्वजगदभिपूरयिता च पुरुषः । सहस्राक्षः, ज्ञानेन्द्रियाणामुपलक्षणम् । सहस्राण्यक्षीणि यस्य [4]स सहस्राक्षः अनन्ताक्षः । सहस्रपात् सहस्राणि पादा यस्य स सहस्रपात्, सर्वकर्मेन्द्रियाणामुपलक्षणम् अपरिमितपादः । [5]यः [6]सर्वैः प्राणिशिरोऽक्ष्यादिभिः कार्यभूतैरेव तैः कारणेन स्थितोऽपि श्रीभगवान् "तदनन्यत्व-मारम्भणशब्दादिभ्यः" [ ब्र० सू० २।१।१४ ] इति[7] न्यायाद् अनन्यत्वेन स्वय सहस्रशीर्षे-त्यादिशब्दैरभिहितः । सोऽय भूमि सर्वतः स्पृत्वात्यतिष्ठद्दशाङ्गुलमिति[8] । भूमिं भूम्युपलक्षित सर्व कार्यकारणजातम् । सर्वतः सर्वप्रकारेण अन्तर्बहिरपि स्पृत्वा 'स्पृश सस्पर्शने' [ १४२३ तुदा० ] सर्वतः सस्पृश्य, सर्वत आवृत्य, कारणत्वेनान्तर्बहिरपि संव्याप्य । अत्यतिष्ठद्दशाङ्गुलम् अति-क्रान्तवान्, कार्यप्रपञ्चमतिक्रम्यावर्ततेत्यर्थः । तस्य [9]परिमाणशून्यस्यापि परमेश्वरस्य जिज्ञासूना सुखप्रतिपत्त्यर्थं किञ्चित्परिमाण परिकल्प्यैवं शिरोऽप्यवशिष्टमश कल्पयति–दशाङ्गुलमिति । द्वादशाङ्गुला वितस्तिः । तत्र द्वादशाङ्गुलमितरूपेणैव[10] वर्तमानस्य परमेश्वरस्वरूपस्याङ्गुलिद्वयाशो जगदभूत्[11] । अवशिष्ट निष्प्रपञ्चरूप सदित्याह–दशाङ्गुलमिति । दशाङ्गुलयो यत्र तद्वस्तु सद्-ब्रह्मेति । एवमेव श्रीवेदव्यासोऽपि मन्त्र व्याचष्टे—"तेनेदमावृत विश्व वितस्तिमधितिष्ठति"

---

१ श्रुतिश्चतुर्भिर्नामभिर्निर्देशम्–क०, श्रुतिश्चतुर्भिर्नामभिर्नामनिर्देशम्–ग० ।
२ 'अथ नाम' नास्ति–ख० ।
३ 'तस्य यदेषु 'सर्वस्यावरुध्यै' नास्ति–ख० ।
४ 'स' नास्ति–ख० ।
५ 'यः' नास्ति–ख० ।
६ सर्वपाणिशिरो–ख० ।
७ इत्थम्–क-ग० ।
८ 'इति' नास्ति–क० ।
९ परिणाम–क-ख-ग० ।
१० एवम्–क ग० ।
११ जगदस्तु–ख० ।

[भाग० २।६।१९] इति। तद्द्वादशाङ्गुलयो वितस्तिरिति कुर्वता तेन परमेश्वरेण [1]परब्रह्मणाऽङ्गुलिद्वयमात्रपरिमितरूपेणेदं सर्वं जगत् तिर्यगूर्ध्वमधोऽन्तर्बहिश्च सन्निष्प्रपञ्चरूपेणाभिवर्तत इत्यर्थः। अत्यतिष्ठद्दशाङ्गुलमित्यत्र दशाङ्गुलिप्रदेशनिरूपणं तूपासनार्थम्, न तु वस्तुतत्त्वनिरूपणमिति। यथावस्तुकथनमेवात्र स्तुतिरिति व्यपदिश्यते। परमार्थवस्तुतत्त्वनिरूपकमिदं सूक्तं परमकृपया स्तुतिव्याजेन क्रतुप्रकरणं प्रविशति, अन्यार्थत्वेन वेममर्थं ज्ञात्वा कृतकृत्या भवेयुरिति॥ १॥

[2]पुरुष एवेदꣳ सर्वं यद्भूतं यच्च भाव्यम्।
उतामृतत्वस्येशानो यदन्नेनातिरोहति॥ २॥

इदं प्रत्यक्षादिभिः प्रमाणैः साक्षिणा च परिदृश्यमानमिदं सर्वं जगत्। पुरुष एव नान्यत्। स्वकारणसत्ताप्रतीतिव्यतिरेकेण कार्यस्य पृथक्सत्ताप्रतिपत्त्यभावान्नान्यदित्यर्थः। तच्च विवृणोति—यद्भूतं यच्च भाव्यम्। यद् भूतं निष्पन्नम्। यच्च अतिक्रान्तं स्थितं वा भवतु। यच्च भाव्यं भविष्यत्। इदमित्यनेनैव [3]वर्तमानमित्यभिहितम्। एवं कालत्रयसंबन्धि यदिदं सर्वं पुरुष एव। किं च, उतामृतत्वस्येशानो यदन्नेनातिरोहति। उत अपि। अमृतत्वस्य मोक्षस्यापि स एवेश्वरः, यः सर्वजगदधिष्ठानभूतो यः सर्वजगत्कारणभूतो यस्तु स्वयं निष्प्रपञ्चरूपः। ईशानः ईश्वरः, स्वयमेव मोक्षप्रद इत्यर्थः। यदन्नेन यद् वस्तु अन्नेन व्रीह्यादिलक्षणेनातिशयेनातिरोहति। 'रुह बीजजन्मनि' [ ८५९ भ्वादिः ] उत्पद्यते, उत्पद्य स्थितिं च प्राप्नोति। तस्यापीशानः, एवंविधस्य मोक्षस्य च स एवेश्वर इत्यापाततः प्रतीयमानोऽर्थः। अतिरोहति। श्रीवेदव्यासस्त्विमं मन्त्रमित्थं व्याचष्टे—"सोऽमृतस्याभयस्येशो मर्त्यमन्नं यदत्यगात्" [ भाग० २।६।१७ ] इति। "जगद्वाचित्वात्" [ब्र० सू० १।४।१६] इत्यधिकरणन्यायेन मृत्युं गतं मर्त्यमिति योग्यं [4]मर्त्यनाम आदायान्नशब्दो मृतिमत्सर्वं कार्यजातमभिधत्ते, अतस्त्वन्नेनोपलक्षितं सर्वं कार्यजातं यद् यः [5]स्वतः सिद्धः। [6]अत्यगात् अतिरोहति अतिक्रामति अभिगच्छति। स एवामृतस्येति। अमृतमिति क्षेमाभययोरुपलक्षणम्।

---

१ ब्रह्मणा—क०।
२ ( मा० ३१।२ )।
३ वर्तमानमभिहितम्—ख०।
४ 'मर्त्यनाम' इत्यत्र "तद्धर्मम्" इति—ग० टि०।
५ सर्वतः—क०।
६ 'अत्यगात्' नास्ति—ख०।

"अमृत क्षेममभयम्" [ भाग० २।६।१६ ] इति निष्प्रपञ्चरूपस्य ब्रह्मणस्त्रयाणां पादानां नामानि। अमृतस्यानन्दरूपस्य मोक्षस्य मोक्षरूपस्य। अभयस्य [1]अद्वैतरूपस्येशित्वममृतत्वस्येश[2] ईश्वर इति। एवं तटस्थस्वरूपलक्षणाभ्यां परमेश्वरत्वं निरूपितम् ॥ २ ॥

[3]एतावानस्य महिमातो ज्यायाँश्च पूरुषः।
पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥ ३ ॥

अतीतानागतवर्तमानकालसंबद्ध[4] यदिदं किञ्चित्प्राणिजातं तस्यैव रूपमित्येतावानस्य महिमा माहात्म्यमस्य। भूतिः प्रभाव ऐश्वर्यशक्तिरिति पर्याय.। अतः अस्माद् एवंभूतान्महिम्नः। ज्यायान् महत्तर. अधिकतरस्त्वयं पुरुषः। सामान्यत एवैतदुक्त्वाऽथ तदेव विशिनष्टि-पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि। अस्य [5]प्रमाणनिरपेक्षितया सर्वेषामपरोक्षभूतस्यास्य। विश्वा विश्वानि सर्वाणि। भूतानि भूतजातानि अतीतानागतवर्तमानकालसंबन्धीनि। पादः एकपादः एको भागः। अंशो भागः पाद इत्यनर्थान्तरम्। अस्यावशिष्टास्त्रयः पादा. कुत्रेति तदाह-त्रिपादस्यामृतं दिवीति। अमृतं क्षेमम् अभयमिति त्रय.पादा यस्य स त्रिपादिति। ऋग्यजुःसामात्मके आदित्यमण्डले। यद्वा स्वस्वरूपमनुभवता द्युतिसाधनभूतविशिष्टान्त.-करणे वर्तते इति सर्वतः पूर्णस्यापि तत्राभिव्यक्तिविशेषोपपत्तेरिति। श्रीशुकोऽपीमं मन्त्रमित्थं व्याचष्टे-"महिमैष ततो ब्रह्मन् पुरुषस्य दुरत्ययः। पादेषु सर्वभूतानि पुंसः स्थितिपदो विदुः" [भाग० २।६।१८] इति। अथवा, अस्य पुरुषस्य। महिमा कार्यकारणरूपो महिमा। एतावान् एतावत्परिमितः। अतः अस्मात्। पुरुषः निरुपाधिकः पुरुषः पूर्णरूपः। ज्यायान् महत्तर.। [6]कथमिति? पादोऽस्येति। समानमन्यत् ॥ ३ ॥

[7]त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः।
ततो विष्वङ् व्यक्रामत् साशनानशने अभि ॥ ४ ॥

पूर्वोक्तस्त्रिपात् "ज्योतिश्चरणाभिधानात्" [ ब्र० सू० १।१।२४ ] इत्यधिकरणसिद्धो द्युसंबन्धित्वेन त्रिपात् पादत्रयात्मकः परब्रह्मलक्षणः पुरुषः। ऊर्ध्व उदैत्। ऊर्ध्वः कार्यप्रपञ्चाद्

---

१ अद्वैतरूपलक्षण-ख०, अद्वैतलक्षण-ग० टि०। २ ईशान-ख०। ३ ( मा० ३१।३ )। ४ सम्बन्धम्-क·ग०। ५ परिमाण-क·ग०। ६ क इति-क·ग०, मह इति-ख०। ७ ( मा० ३१।४ )।

उपरि द्युस्थाने, ऊर्ध्वः सर्वोत्कृष्टः । उदैत् अतिशयेन दीप्यते । निवृत्तिमार्गनिष्ठानामुपास्यत्वेन निष्प्रपञ्चरूपस्तत्र प्रतीयते । पादोऽस्येहाभवत्पुनः । इह ब्रह्माण्डे प्रपञ्चपुरुषलक्षणः पादः । [1]अग्रगामीत्युपास्यत्वेन [2]तत्फलरूपेण च पुनरभवत् । ततो विष्वङ् व्यक्रामत् । यस्मात् स्वयमुपास्यरूपोऽतस्ततस्तस्मात् कारणात् साशनानशने [3]विद्याविद्ये विद्याविद्याप्रयुक्ते [स्तुती]। स्तुतिमार्गैरग्निहोत्रादिलक्षणा स्तुतिरेका साशना हविरादिप्रयुक्ता [ अविद्यात्मिका ]। देवयान-लक्षणाऽनशना विद्यात्मिकाऽन्या । एव द्वे स्तुती साशनानशने अभि अतिव्याप्य । विष्वङ् विषु सर्वत. अञ्चतीति विष्वङ्, पुनः सर्वगामी सर्वग. सन् व्यक्रामत् आक्रान्तवान् । कर्मसु तत्साध्यफलसाधनमार्गेषु तत्फलेषु च व्याप्तवान्, "सृती विचक्रमे विष्वङ् साशनानशने उभे । यदविद्या च विद्या च पुरुषस्तूभयाश्रयः ॥" [ भाग० २।६।२० ] इति श्रीवेदव्यास व्याख्यानात् । यद्वा, त्रिपादूर्ध्व उदैदिति । सर्गस्थितिप्रलयहेतुभूतास्त्रयः पादा यस्य स ऊर्ध्वः उत्कृष्टः सन् उपसहारकाले सर्वजगदुपसहृत्य ऊर्ध्वमुदैत् [4]उद्गत्य प्रकाशते । सर्गकाले प्राप्ते इह जगति अभवत् । [5]जगत् सृष्ट्वा क्षेत्रज्ञरूपेणान्तर्यामिरूपेण च तज्जगत्यभवत् । स्थितिकाले च ततो विष्वङ् व्यक्रामत् [6]समहरत् । साशनानशने अभीति । ततः स्थितिहेतुभूतैर्नानावतारैः स्थितिविरोधिनो राक्षसान् सहरन् सुमार्गं प्रदर्शयन् तत्सर्वमाक्रान्तवान् ॥ ४ ॥

[7]ततो॑ वि॒राळ॑जायत वि॒राजो॒ अधि॒ पूरु॑षः ।
स जा॒तो अत्य॑रिच्यत प॒श्चाद्भूमि॒मथो॑ पु॒रः ॥ ५ ॥

इत उत्तर सृष्टिविशेषोऽभिधीयते । समस्तजगदुत्पत्तिकारणत्वेन यः परमात्मा नारायणः पुरुषो निर्दिष्टस्ततस्तस्मात्परमात्मरूपात् श्रीनारायणात्पुरुषात् विराड् ब्रह्माण्डलक्षण शरीर-मजायत । अत्रैव [8]तत्त्वाभिधानक्रम तत्सप्रदायविदो निरूपयन्ति – आदौ तावत्सत्यज्ञानानन्ता-नन्दात्मलक्षण[9] [10]यत्पर ब्रह्म तदेव विक्षेपाच्छादनशक्तिमताऽज्ञानेन जीवोऽयमसावीश्वर-स्तद्ब्रह्मेत्येव विभागमापन्न सल्लीलार्थं विक्षेपप्रधाना मायाशक्ति च स्वीकृत्याच्छादनशक्ति-प्रधानायामविद्याया प्रतिबिम्बिताना जीवाना ससारव्यवहारोपाधिभूतानहङ्कारादीन् पदार्थान्

---

१ अग्रयायीति–ख०। २ उत्पन्नरूपेण–क ख०। ३ 'विद्याविद्ये' नास्ति–क०, विद्याविद्यावियुक्ते–ख०। ४ 'उद्गत्य' नास्ति–क-ग० । ५ 'जगत्' नास्ति–क-ग० । ६ 'समहरत्' नास्ति–ख० । ७ ( मा० ३१।५ ) । ८ 'तत्त्वाभिधानक्रमम्' नास्ति–ख० । ९ आनन्दात्मकलक्षणम्–क० । १० यत्परब्रह्म–क-ग० ।

लीलया सिसृक्षुर्वशीकृतमाय ईश्वरः सर्वकार्यनिर्वोढा स्वशक्ति मायामैक्षत् —"बहु स्या प्रजायेय" [छा० ६।२।३] इति। एवमीश्वरनिरीक्षणविषयभूता मायात्मिका प्रकृतिस्तदानीमेव ईश्वरनिरीक्षण-लक्षणकार्यात्मना विवर्तत। स चाद्यो विकारो महानित्युच्यते। स चेश्वराद् [जायमानः] अहङ्कारो हैरण्यगर्भो बुद्धिरित्युच्यते, "बहु स्या प्रजायेय" [छा० ६।२।३] इत्युत्तमपुरुषेण प्रतीयमान-त्वाद् एवविधाऽहमेवविधानर्थान् स्रक्ष्यामीति ब्रुवन् ईश्वरादुपादानभूतात् सत्त्वरजस्तमोमयोऽहङ्कारो जायते। स चाहङ्कारो जीवव्यवहारोपाधिर्जातः। एव परब्रह्मणो मायाशक्तिमतो जगत्सिसृक्षोर्निरीक्षितुरीश्वराद् आकाशादीनि पञ्च महाभूतानि जायन्ते। तदा स एव श्रीभगवानीश्वरः सर्वज्ञो नारशब्दवाच्यः। स च स्वाशभूताना नारशब्दवाच्याना जीवाना परमार्थत-स्त्वयनभावमापद्यमानः स्वयमीश्वरः श्रीनारायण इत्यभिधीयते। स एव पुनरीश्वरो नारायणः स्वसृष्टेषु नारशब्दवाच्येषु महाभूतेषु स्वलीलायतनभूतेषु लीलया विहरन् नारायण इत्यभिधीयते। य एवभूतः श्रीभगवान्नारायण एव—"पादोऽस्य विश्वा भूतानि त्रिपादस्यामृत दिवि"इति। "त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः" इति [च] अभिहितः। तस्माद्यथोक्तगुणविशिष्टाद् भूतसूक्ष्मरूपमापन्नात् श्रीभगवता नारायणादीश्वराद् विराड् ब्रह्माण्डलक्षण शरीरमजायत। विराजो अधि विराजम् अधिरुह्य विराट्शरीरं सव्याप्य विराडहमस्मीति विराट्शब्दाभिमानी पुरुषः [1]अजायत। स पुरुषो जातः अभिव्यक्तः सन् अत्यरिच्यत। [2]'विचिर् पृथग्भावे' [ १४८३ रुधा० ] ब्रह्माण्ड सव्याप्य ततो व्यतिरिक्तस्त्रिपाद्ब्रह्मात्मनाऽवर्ततेत्यर्थः। तत्रापि विशेषमाह—पश्चाद्भूमिमिति। भूम्युपलक्षितमण्डाद्बहिःस्थित जलादिमहदहङ्कारकार्यजात सव्याप्यात्यरिच्यत। केवल बहिरेवावर्ततेति न, अपि त्वन्तरपीत्याह—अथो पुर इति। अतो यस्मादेवभूतस्तस्मात्। पुरः शरीराणि सुरनरतिर्यगादीन्यपि क्षेत्रज्ञरूपेणान्तर्यामिरूपेण च सव्याप्यात्यरिच्यत। एव समस्तजगदाकारेण श्रीभगवानेक एव प्रतीयत [3]इति। अथ तस्माद्धिरण्यगर्भाद् विराड् अजायत। विराट् पुरुषविधः। विराजो अधि पूरुष इति [4]स्वायभुवो मनुरिति। स च अत्यरिच्यत [5]पुत्रपौत्रादिभिरयमधिको जात इति व्याचष्टे ॥ ५ ॥

---

१ 'अजायत स पुरुषो' नास्ति—ख०। २ विचित्र—क-ख-ग०, 'रिच वियोजनसंपर्चनयोः' [ १८१७ चुरादिः ] इति साधीयान् पाठः। ३ 'इति' नास्ति—क०। ४ स्वयंभुवः—क-ग०। ५ पुत्रपौत्रप्रपौत्रादिभि.—ख ग०।

अथेदानीं विराड्रूपाच्छ्रीभगवतो जातान् यज्ञसाधनभूतद्रव्यपशुविशेषदेशकालविशेष-ऋग्यजुःसामादितत्तत्फलादिपदार्थान् ब्रवीति—

[1]तस्माद्यज्ञात् सर्वहुतः संभृतं पृषदाज्यम्।
पशूꣳस्ताꣳश्चक्रे वायव्यानारण्या ग्राम्याश्च ये ॥ ६ ॥

तस्मात्पूर्वोक्ताद्यज्ञाद्विराड्रूपाद् विष्णोरुपादानभूतात्। सर्वहुतः यज्ञः सर्वाण्यस्मिन् हूयन्त इति सर्वहुतः यज्ञः। अजायतेति सबन्धः। यद्वा व्यत्ययः। चिद्रूपः श्रीभगवानेव ब्रह्माण्डान्तर्वर्तिसर्वपदार्थाना सिसृक्षुः स्वय चतुर्वदनविशिष्टरूपमास्थाय स्रष्टृरूपेण स्थितः सुर-नरतिर्यगादिसृष्टि विराजोऽवयवैरेव करोति। तस्माद्विराजो मुखाद्यज्ञ पुरुषमेधादिलक्षण यज्ञ [2]ब्रह्मा चक्रे कृतवान्। ततस्तु सर्वहुतः। व्यत्ययः। सर्वहुतं सर्वमस्मिन् हूयत इति सर्वहुतः अग्निस्त सर्वहुतमग्नि विराजो मुखाच्चक्रे। सभृत संभरण हविषा सभरण चक्रे, हविषा सामान्यतो निर्देशः। पुनश्च विशेष्यते–पृषदाज्य चक्रे। दधिमिश्रितम् आज्य पृषदाज्य [3]च ब्रह्मा चक्रे। तान् वायव्यान् वायुदेवत्यान् पशूꣳश्चक्रे ब्रह्मा कृतवान्। आरण्याश्च ग्राम्याश्च ये। ये ग्राम्याः पशवो ये चारण्याश्च पशवस्तानुभयविधान् पशूꣳश्चक्रे ॥ ६ ॥

[4]तस्माद्यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे।
छन्दाꣳसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥ ७ ॥

तस्माद्यज्ञाच्चिद्रूपाद् विष्णोरुपादानात् सर्वहुतः। अग्निनानात्वाभिप्रायेण यज्ञनानात्वाभिप्रायेण पुनर्वचनम्। तथा हि पुराणेष्वेषा प्रतिमुखमुत्पत्तिस्मरणात्। तथा च तस्माद्यज्ञात्। ऋचः नियतपादपदबद्धा ऋचः। जज्ञिरे आविर्भूताः। सामानि च गीतप्रधानानि जज्ञिरे। छन्दासि गायत्र्यादीनि च जज्ञिरे। तस्माद्विराजो विष्णोरेव यजुः प्रश्लिष्टपठित यजुः। अजायत जातमाविर्भूतम् ॥ ७ ॥

[5]तस्मादश्वा अजायन्त ये के चोभयादतः।
गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः ॥ ८ ॥

---

१ ( मा० ३१।६ )। २ 'ब्रह्मा' नास्ति–क०। ३ 'च' नास्ति–क०।
४ ( मा० ३१।७ )। ५ ( मा० ३१।८ )।

तस्माद्विराजः अश्वाः अजायन्त । ये के च उभयादतः । उभयतो दन्ताः, ये के च [1]उभयदतः प्रसिद्धास्तेऽप्यजायन्त । गावो ह जज्ञिरे, तस्माद्विराजः गावो ह जज्ञिरे । तस्माद् विराजः छागाः अजाः, अवयश्च दीर्घोर्णाश्च जाताः ॥ ८ ॥

[2]तं यज्ञं बर्हिषि प्रौक्षन् पुरुषं जातमग्रतः ।

तेन देवा अयजन्त साध्या ऋषयश्च ये ॥ ९ ॥

किं [3]बहुनोक्तेन, अग्रतः जातं [4]प्रथमजं तं पुरुषं विराड्रूपं यज्ञं विष्णुं बर्हिषि यज्ञे यागे नानासाधनादिरूपेण स्थितं [5]विष्णुं देवा ऋषयश्च प्रौक्षन् । 'उक्ष सेचने' [ ६५७ भ्वादिः ] प्रोक्षणस्य संस्कारं कृतवन्तः । तेन प्रोक्षितेन यज्ञेन विराड्रूपेण करणभूतेन साध्या देवाः ये ऋषयश्च तेऽयजन्त । श्रीभगवन्तं विष्णुम् अयजन्त यजनं कृतवन्तः ॥ ९ ॥

इदानीं पुरुषमेधयाजिनः[6] फलपरिणामभूतविराड्रूपाणि पृच्छति—

[7]यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् ।

मुखं किमस्यासीत् किं बाहू किमूरू पादा उच्येते ॥ १० ॥

यत् यदा । पुरुषं विराड्रूपं पुरुषम् । व्यदधुः पुरुषविधं चक्रुः । [8]पुरुषाकारतायामवयव-विशेषान् पृच्छति—कतिधा व्यकल्पयन्निति[9] । कतिधा कतिप्रकारेण । व्यकल्पयन् अव-यवकल्पना कृतवन्तः । तत्रापि कल्प्यमानस्यास्य पुरुषस्य किं मुखम् आसीत् । किं बाहू कौ [10]वा बाहू स्तः । किं पादौ उच्येते ॥ १० ॥

एवं पृष्टे सति श्रुतिः स्वयमेवोत्तरमाह—

[11]ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः ।

ऊरू तदस्य यद्वैश्यः पद्भ्यांꣳ शूद्रो अजायत ॥ ११ ॥

अस्य विराड्रूपस्य । ब्राह्मणः मुखमासीत् । राजन्यः क्षत्रियः विराड्रूपस्य बाहू कृतः । ऊरू तदस्य यद्वैश्यः। यद् अस्य वैश्यः। [12]तत् सः । अस्य विराजः पद्भ्यां शूद्रो अजायत ।·

---

१ उभयादतः—क-ग० । २ (मा० ३१।९) । ३ बहूक्तेन—क-ग० । ४ 'प्रथमजं तम्' इत्यस्य स्थाने 'प्रथमजातम्' इति—ख० । ५ विष्णुः—क ख-ग० । ६ याजिनि—क-ग० । ७ (मा० ३१।१०) । ८ पुरुषाकारतया—क-ग० । ९ 'इति' नास्ति—क० । १० 'वा' नास्ति—ख० । ११ ( मा० ३१।११ ) । १२ 'तत् सः अस्य' · · 'वा अस्य' नास्ति—ख० ।

यत्तदनुसारेण वा अस्य विराजो मुखमेव ब्राह्मण आसीत् । बाहू राजन्यः कृतः । श्रीभगवतः अस्य ऊरू तो वैश्यः कृत इति[1] ॥ ११ ॥

यत्पुरुषं व्यदधुरित्यस्योत्तरमाह—

[2]चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत ।
श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत ॥ १२ ॥

अस्य [3]विराजः । मनसः चन्द्रमा जातः । चक्षोः चक्षुषः । सूर्य. अजायत । श्रोत्रात् श्रोत्राकाशात् । वायुः [4]प्राणश्च अजायत । अस्य मुखाद् अग्निरजायत ॥ १२ ॥

अथ लोकसृष्टिमाह—

[5]नाभ्या आसीदन्तरिक्षꣳ शीर्ष्णो द्यौः समवर्तत ।
पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ २ अकल्पयन् ॥ १३ ॥

अस्य विराजः पुरुषस्य । नाभ्याः सकाशात् । अन्तरिक्षमुत्पन्नमासीत् । [6]शीर्ष्णः शिरसः [7]द्यौः द्युलोकः । समवर्तत समजायत । पद्भ्या भूमिः समवर्तत । दिशः अस्य विराजः श्रोत्रात् दिशः आसन् । तथा तेन प्रकारेण [8]पुरुषाः लोकान् अकल्पयन् ॥ १३ ॥

[9]यत्पुरुषेण हविषा देवा यज्ञमतन्वत ।
वसन्तोऽस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ॥ १४ ॥

यत् यदा । पुरुषेण हविषा पुरुषावयवरूपेण हविषा । देवाः प्रजापतेः प्राणरूपाः । यज्ञमतन्वत यज्ञविस्तारं कृतवन्तः । पुरुषस्यावयवा एव यज्ञस्य विस्तृताः सभारा आसन् । तैरेव यज्ञ कृतवन्त इत्यभिप्रायः। यस्मिन् काले यज्ञमतन्वत । स वसन्त आसीत् । यो वसन्तः सोऽस्य यज्ञस्य आज्यमासीत् । ग्रीष्म ऋतुरस्य यज्ञस्य इध्म आसीत् । शरद् अस्य हविरासीत् ॥ १४ ॥

---

१ 'इति' नास्ति–क० । २ ( मा० ३१।१२ ) । ३ 'विराज.' नास्ति–क० । ४ प्राणाश्च अजायन्त–ख० । ५ ( मा० ३१।१३ ) । ६ 'शीर्ष्ण.' नास्ति–ख० । ७ द्यौर्लोकः–क-ग० । ८ पुरुषलोकान् व्यकल्पयन्–ख० । ९ ( मा० ३१।१४ ) ।

एते इति । [1]अथानयाग्निं प्रति कृत्याकारिनाशं प्रार्थयतेऽतिगालनपूर्वकम् । हे अग्ने, [2]य एते कृत्याकारिणः शत्रवः । अनृजवः अतिकुटिलाः । सदाधियः सदा सर्वदा मदीय वधमेव ध्यायन्ति ते सदाधियः सदा मदीयवधध्यातारः । दुर्मदाः [3]दुष्टमदा अतिदुष्टाभिमानवन्तः । अनग्रनासः [4]न विद्यतेऽग्रो यासा ता अनग्रा अग्ररहिताश्छिन्नाग्रा इत्यर्थः । ईदृश्यो नासा नासिका येषा तेऽनग्रनासः । [5]छिन्नाग्रनासिका [6]इत्यर्थ. । [7]'सुपा सुलुक् ' [ अष्टा० ७।१।३९ ] इत्यादिना जस. स्थाने सु. । तेऽञ्जसा साकल्येन । मह्य जहि आजघ्नुर्हतवन्तः । एतान् [8]शत्रून् शोचिषा तेजसा । आविध्य भस्मसात् कृत्वा । तदनु तन्तून् [9]सूत्रतन्तूनिवातिक्षीणानेषा संबन्धिनः । [10]आविध्य भस्मसात् कृत्वा । तदनु वैवस्वतस्य [11]विवस्वतः सूर्यस्याय वैवस्वतस्तस्य वैवस्वतस्य सूर्यपुत्रस्येदृशस्य यमस्य । सदन गृहम् । प्रेषयेति शेष [12]इति ॥ ४३ ॥

ये न इति । [13]अनयाऽग्निं प्रति कृत्याकारिनाश प्रार्थयतेऽतिगालनपूर्वकम् । हे अग्ने, ये कृत्याकारिणः । दुश्चरितास. दुश्चरित्रा. । मर्त्यासः [14]मर्त्या [15]मरणशीला अतिनिकटमरणोपेताः अनृत वदन्तः असत्य वदन्तः । [16]अत एव दुश्चरितासोऽत एव मर्त्यासो ये कृत्याकारिणः शत्रवः । नः अस्माकम् । रयि धनम् । जह्रुः हृतवन्त. । तेषा वपूषि शरीराणि । हे जातवेदः जाताना प्राणिना वेदयित' हे अग्ने । अर्चिषा स्वतेजसा । अभिसदहस्व अभिमुखीभूय सम्यक्प्रकारेण भस्मसात् कुरु । कमिव ? शुष्क न वृक्षम् । शुष्क वृक्षमिव । [17]यथा शुष्क वृक्षमनायासेनाग्निर्दहति । नकार उपमार्थो ज्ञेयः । [18]"दुर्मदासो न सुरायाम्' [ऋ० ८।२।१२] इत्युपमार्थीय उपरिष्टादुपचारस्तस्य येनोपमिमीते" [ निरु० १।४ ] इति यास्क इति ॥४४॥

---

१ 'अथानया' नास्ति–ख-ग० । २ 'ये' नास्ति–क० । ३ 'दुष्टमदा.' नास्ति–ग० । ४ 'न विद्यते' अनग्रनास' नास्ति–ख-ग० । ५ छिन्ननासिका.–क० । ६ 'इत्यर्थ' नास्ति–ख-ग० । ७ 'सुपां' 'सुः' नास्ति–ख-ग० । ८ 'शत्रून्' नास्ति–ग० । ९ 'अतिक्षीणान्' इत्यस्य स्थाने 'अतितीक्ष्णान्' इति–क० । १० 'आविध्य तदनु' नास्ति–ख-ग० । ११ 'विवस्वत ··· ईदृशस्य' नास्ति–ख-ग० । १२ 'इति' नास्ति–ख-ग० । १३ 'अनया पूर्वकम्' नास्ति–ख ग० । १४ 'मर्त्या.' नास्ति–ख-ग० । १५ मरणधर्माणः–क० । १६ 'अत एव ···शत्रव.' नास्ति–ख-ग० । १७ 'यथा दहति' नास्ति–ख-ग० । १८ 'दुर्मदासो · यास्क इति' नास्ति–ख-ग० ।

[1]अथान्तिमः कृत्योत्पादनमन्त्रः। हे विधूमाग्निसमप्रभे, [2]विगतो धूमो यस्मादग्नौ विधूम., विधूमश्चासावग्निश्च विधूमाग्निः, विधूमाग्निसमा तुल्या प्रभा यस्याः सा विधूमाग्निसम प्रभा, तस्याः सबोधन हे विधूमाग्निसमप्रभे, धूमलेशरहितातिप्रज्वलिताङ्गाररूपाग्नितुल्यदीप्ते हे कृत्ये। त्व त्रिशूलेन शत्रून् अस्मदीयाञ्छत्रून् कृत्याकारिण'। जहि मारय। आदरातिशयद्योतनार्थं पुनस्तदेवाह–फट् फट् धिक्कृत्य धिक्कृत्य। [3]जहि मारय त्रिशूलेन। [4]हतेष्वपि शत्रुषु [5]हे महाकृत्ये, क्रुध्यस्व क्रोध कुरु। क्रोधं कृत्वा पिब शोणित [6]तेषा रुधिर [7]पिबेति ॥४८॥

[8]इति पिप्पलादशाखीयं या कल्पयन्तीति सूक्तमष्टचत्वारिंशदृगात्मक व्याख्यातम्।

इति श्रीश्रीपतिकनिष्ठतनयवासुदेवविरचिताया कृत्यानिर्हरणसूक्तगणव्याख्याया कलबोधविवेकिन्या पिप्पलादशाखीयमष्टचत्वारिंशदृगात्मक या कल्पयन्तीति सूक्त व्याख्यातम्।

इति श्रीद्विवेदश्रीश्रीपतिकनिष्ठतनयवासुदेवद्विवेदविरचित कृत्यानिर्हरणसूक्तगणव्याख्यान समाप्तम्।

---

१ 'अथ ' मन्त्र' नास्ति–ख-ग०। २ 'विगतो फट् फट्' इत्यस्य स्थाने 'धूमरहितप्रज्वलिताग्नितुल्यदीप्ते। आदरार्थं पुनस्तदेवाह–फट् फट् जहीति' इति–ख-ग०। ३ जहीति–ख-ग०। ४ अहितेष्वपि–ख-ग०। ५ 'हे महाकृत्ये' नास्ति–ख ग०। ६ 'तेषाम्' नास्ति–क०। ७ पिबेत्यर्थः–ख ग०। ८ 'इति ''समाप्तम्' नास्ति–ख-ग०, तत्स्थाने–'इति प्रत्यङ्गिरासूक्तव्याख्या समाप्ता' इति पाठः।

# प्रत्यङ्गिरासूक्तपरिशिष्टम्–१

[2]उ त्वा मन्दन्तु स्तोमाः कृणुष्व राधो अद्रिवः ।
अव ब्रह्म द्विषो जहि ॥ १ ॥

[3]त्रिपाद्भस्मप्रहरणस्त्रिशिरा रक्तलोचनः ।
स मे प्रीतः सुखं दद्यात् सर्वामयपतिर्ज्वरः ॥ २ ॥

ज्वरराजाय विद्महे त्रिशिरस्काय धीमहि ।
तन्नस्त्रिपात् प्रचोदयात् ॥ ३ ॥

[4]गृध्रकर्णि विरूपाक्षि लम्बस्तनि महोदरि ।
हन शत्रून् त्रिशूलेन क्रुध्यस्व पिब शोणितम् ॥ ४ ॥

इत्याथर्वणे पिप्पलादशाखीयं सपरिशिष्टं प्रत्यङ्गिरासूक्तं समाप्तम् ॥

---

१ परिशिष्टमेतत् केवलं गपुस्तक एव वर्तते । आरम्भे–'हरिः ॐ' इति विद्यते ।

२ च-छ-ज-झ-ञपुस्तकेषु एष मन्त्रो मूलसूक्त एव स्थापितः । द्रष्टव्यम्–पृ० ७ ।

३ चपुस्तकारम्भे एष मन्त्रो दृश्यते ।

४ मन्त्र एष कपुस्तकस्य १४ पत्रस्य निरङ्के पृष्ठे स्वातन्त्र्येण कोष्ठके स्थापितः, ञपुस्तके तु मूलसूक्त एव ४४ सङ्ख्याकोऽयम् ।

# प्रत्यङ्गिरासूक्तपरिशिष्टम्–२

[1]ॐ आं ह्रीं कृष्णवाससे सिंहवदने महाभैरव ज्वल ज्वालाजिह्वे करालवदने प्रत्यङ्गिरे क्ष्म्यौँ २ क्ष्म्यूॅं ॐ नमो नारायणाय घृणि सूरि य आदित्यौ (?) सहस्रार हूं फट् ॥ १ ॥

---

१ छपुस्तके मूलसूक्तस्य त्रिंशत्तमसख्यको मन्त्रोऽयम् । वस्तुतस्तु प्रत्यङ्गिराकल्पकवचादिस्था इमे मन्त्रा विभिन्नैः कोशलेखकैर्मूलसूक्ते परिशिष्टे वान्तर्भाविता इति मन्तव्यम् ।

## [१]मन्त्रसंख्याक्रमबोधिका सारिणी

| क | ख | ग | घ | ङ | च | छ | ज | झ | ञ | सा | व |
|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ | १ |
| २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ | २ |
| ३ | ३ | ३ | ३ | ३ | ३ | ३ | ३ | ३ | ३ | ३ | ३ |
| ४ | ४ | ४ | ४ | ४ | ४ | ४ | ४ | ४ | ४ | ४ | ४ |
| ५ | ५ | ५ | ५ | ५ | ५ | ५ | ५ | ५ | ५ | ५ | ५ |
| ६ | ६ | ६ | ६ | ६ | ६ | ६ | ६ | ६ | ६ | ६ | ६ |
| ७ | ७ | ७ | ७ | ७ | ७ | ७ | ७ | ७ | ७ | ७ | ७ |
| ८ | ८ | ८ | ८ | ८ | ८ | ८ | ८ | ८ | ८ | ८ | ८ |
| ९ | ९ | ९ | ९ | ९ | ९ | ९ | ९ | ९ | ९ | ९ | ९ |
| १० | १० | १० | १० | १० | १० | १० | १० | १० | १० | १० | १० |
| ११ | ११ | ११ | ११ | ११ | ११ | ११ | ११ | ११ | ११ | ११ | ११ |
| १२ | १२ | १२ | १२ | १२ | १२ | १२ | १२ | १२ | १२ | १२ | १२ |
| १३ | १३ | १३ | १३ | १४ | १४ | १४ | १४ | १४ | १४ | १३ | १४ |

१ मरस्वतीभवनग्रन्थागारे मंरक्षितानां दशसंख्यकानां हस्तलेखानाम्, स्वाध्यायमण्डलाद् वैदिकमंशोधनमण्डलाच्च प्रकाशितयोर्ऋग्वेदपरिशिष्टयोश्च साहाय्येन प्रत्यङ्गिरासूक्तस्य सपादन विहितम् । एषु मन्त्रसख्याक्रमविषये महद्वैषम्यं विद्यते । तस्य सौकर्येण बोधनायैषा सारिणी रचिता । अत्र कसञ्ज्ञकस्य वासुदेवद्विवेदविरचितव्याख्यानसहितस्य हस्तलेखस्य क्रम एव मुख्यत्वेनाङ्गीकृत । अपरेषु कोशेषु यो मन्त्रसख्याव्युत्क्रम. स खादिकोष्ठेषु तत्समक्षमवलोकनीयः । यथा ककोशीयः ४१ सख्यको मन्त्रो घकोशे ४२ सख्याक, च छ-साकोशेषु ४३ सख्याक., ज-झकोशयो. ३८ सख्याक., ञकोशे ३७ सख्याक इति । वपुस्तके तु नास्त्येवैष मन्त्रः । सर्वेषां कोशानां विस्तृतः परिचय. प्रस्तावनायां प्रदास्यते ।

| क | ख | ग | घ | ङ | च | छ | ज | झ | ञ | सा | व |
|---|---|---|---|---|---|---|---|---|---|---|---|
| १४ | १४ | १४ | १४ | १५ | १५ | १५ | १५ | १५ | १५ | १४ | १५ |
| १५ | १५ | १५ | १५ | १३ | १३ | १३ | १३ | १३ | १३ | १५ | १३ |
| १६ | १६ | १६ | १६ | १६ | १६ | १६ | १६ | १६ | १६ | १६ | १६ |
| १७ | १७ | १७ | १७ | १७ | १७ | १७ | १७ | १७ | १७ | १७ | १७ |
| १८ | १८ | १८ | १८ | १८ | १८ | १८ | १८ | १८ | १८ | १८ | १८ |
| १९ | १९ | १९ | १९ | १९ | १९ | १९ | १९ | १९ | १९ | १९ | १९ |
| २० | २० | २० | २० | २० | २० | २० | २० | २० | २० | २० | २० |
| २१ | २१ | २१ | २१ | २१ | २१ | २१ | २१ | २१ | २१ | २१ | २१ |
| २२ | २२ | २२ | २२ | २२ | २२ | २२ | २२ | २२ | २२ | २२ | २२ |
| २३ | २३ | २३ | २३ | २३ | २३ | २३ | २३ | २३ | २३ | २३ | २३ |
| २४ | २४ | २४ | २४ | २४ | २४ | २४ | २४ | २४ | २४ | २४ | २४ |
| २५ | २५ | २५ | २५ | २५ | २५ | २५ | २५ | २५ | २५ | २५ | २५ |
| २६ | २६ | २६ | २६ | २६ | २६ | २६ | ४४ | ४४ | ४६ | २६ | २६ |
| २७ | २७ | २७ | १७ | २७ | २७ | २७ | ४५ | ४५ | ४७ | २७ | २७ |
| २८ | २८ | २८ | २८ | २८ | २८ | २८ | ४६ | ४६ | ४८ | २८ | २८ |
| २९ | २९ | २९ | २९ | २९ | २९ | २९ | ४७ | ४७ | ४९ | २९ | २९ |
| ३० | ३० | ३० | ३० | ३० | ३० | ४६ | ४० | ४० | *३९-४० | ३० | × |
| ३१ | ३१ | ३१ | ३१ | ३१ | ३१ | ३१ | २६ | २६ | २६ | ३१ | ३० |
| ३२ | ३२ | ३२ | ३२ | ३२ | ३२ | ३२ | २७ | २७ | २७ | ३२ | ३१ |
| ३३ | ३३ | ३३ | ३३ | ३३ | ३३ | ३३ | २८ | २८ | २८ | ३३ | ३२ |

*पूर्वार्द्ध. ३९ संख्याकः, उत्तरार्द्धश्च ४० ।   × मन्त्राभावसूचकं चिह्नमेतत् ।

| क | ख | ग | घ | ङ | च | छ | ज | झ | ञ | सा | व |
|---|---|---|---|---|---|---|---|---|---|---|---|
| ३४ | ३४ | ३४ | ३४ | ३४ | ३४ | ३४ | २९ | २९ | २९ | ३४ | ३३ |
| ३५ | ३५ | ३५ | ३५ | ३५ | ३५ | ३५ | ३० | ३० | ३० | ३५ | ३४ |
| ३६ | ३६ | ३६ | ३६ | ३६ | ३६ | ३६ | ३१ | ३१ | ३१ | ३६ | ३५ |
| ३७ | ३७ | ३७ | ३७ | ३७ | ३७ | ३७ | ३२ | ३२ | ३२ | ३७ | ३६ |
| ३८ | ३८ | ३८ | ३८ | ३८ | ३८ | ३८ | ३३ | ३३ | ३३ | ३८ | ३८ |
| ३९ | ३९ | ३९ | ३९ | ३९ | ३९ | ३९ | ३४ | ३४ | ३४ | ३९ | ३९ |
| ४० | ४० | ४० | ४० | ४० | ४० | ४० | ३५ | ३५ | ३५ | ४० | ३७ |
| ४१ | ४१ | ४१ | ४२ | ४१ | ४३ | ४३ | ३८ | ३८ | ३७ | ४३ | × |
| ४२ | ४२ | ४२ | ४३ | ४२ | ४६ | ४५ | ३९ | ३९ | ३८ | ४४ | × |
| ४३ | ४३ | ४३ | ४४ | ४३ | ४५ | ४४ | ४८ | ४८ | × | ४८ | × |
| ४४ | ४४ | ४४ | ४५ | ४४ | ४४ | ४७ | ४१ | ४१ | ४१ | ४५ | × |
| ४५ | ४५ | ४५ | ४६ | ४५ | ४७ | ४८ | ४२ | ४२ | ४२ | ४६ | ४० |
| ४६ | ४६ | ४६ | ४७ | ४६ | ४२ | ४२ | ३६ | ३६ | ३६ | ४२ | × |
| ४७ | ४७ | ४७ | ४१ | ४७ | ४१ | ४१ | ३७ | ४७ | ❦ | ४१ | × |
| ४८ | ४८ | ४८ | ४८ | ४८ | × | ४९ | ४३ | ४३ | ४३ | ४७ | × |
|  |  |  |  |  |  | * ५० |  |  | ♁ ४४ |  |  |
|  |  |  |  |  |  | ◉ ३० |  |  | ⬯ ४५ |  |  |

× मन्त्राभावसूचकं चिह्नमेतत् । ❦ अत्र ३५-३६ मन्त्रयोर्मध्ये 'अव ब्रह्म' इति मन्त्रो विद्यते किन्तु तत्र कापि सख्या न दत्ता । * "अग्न्यास्ये विषुरूपे इति" इत्येष पञ्चाशत्तमो मन्त्रो मूलस्थ-'अघ्न्यास्ये' इतिमन्त्रस्य प्रतीकद्वयमात्रम् ।

◉ द्वितीयं परिशिष्टमवलोकनीयम् । ♁ प्रथमपरिशिष्टस्य चतुर्थी टिप्पण्यवलोकनीया ।

⬯ एतत्संख्याङ्कितः कोऽपि मन्त्रस्तत्र न दृश्यते ।

# बीजगणितावतंसः

नारायणपण्डितविरचितः

( सटिप्पण )

[1]एकमनेकस्यास्याऽव्यक्तं व्यक्तस्य गुणवतो जगतः ।
गणनाविधेश्च बीजं ब्रह्मेव गणितं च तद्वन्दे ॥ १ ॥
अजगोलोऽयमियानिति करकलितामलकसन्निभो येन ।
व्यक्तीचक्रे ह्यगणितगणितेन ततः किमस्त्यन्यत् ॥ २ ॥
गणितमिति नाम लोके ख्यातमभूद् गणितस्य शास्त्रस्य ।
अगणितविक्रमविष्णोस्त्रिविक्रमश्चेति नामेव ॥ ३ ॥
सद्गुरुकृपयानुभवैरभ्यासैः परमतत्त्वमिव योगी ।
यो वेत्ति कर्म सांख्यं स भवति संख्यावतां धुर्यः ॥ ४ ॥
[2]यो यो यं यं प्रश्नं पृच्छति करणं न तस्यास्ति ।
व्यक्तेऽथाव्यक्ते तु प्रायस्तत्करणमस्त्येव ॥ ५ ॥
व्यक्तक्रियया ज्ञातुं प्रश्नान्पटवो भवन्ति नाल्पधियः ।
बीजक्रियां च तस्माद्वच्मि व्यक्तां सुबोधां च ॥ ६ ॥

[3]धनर्णसंकलिते करणसूत्रमार्याद्वयम्—

रूपाणामव्यक्तानामाद्याक्षराणि लेख्यानि ।
उपलक्षणाय तेषामृणानामूर्ध्वबिन्दूनि ॥ ७ ॥

---

१ आदर्शपुस्तकारम्भ.—"श्रीगणेशाय नमः। श्रीमत्सद्गुरुचरणारविन्दाभ्यां नमः।" इत्येव भवति ।

२ 'यो यो य य. प्रश्नः पृच्छति' इति,हस्तलेखस्थ. पाठः ।

३ धनर्णसकलित इति । प्राचीनैर्ऋणचिह्नज्ञापनार्थं रूपाणामुपरि, अथवाऽव्यक्तोपरि बिन्दुः प्रदर्श्यते । नवीनैस्तु $+$, $-$, $\times$, $\div$ $\sqrt{\ }$ एतै. सङ्केतचिह्नैः क्रमेण धन-ऋण-गुणन-भजन-वर्गमूलानि कथ्यन्ते । एव यस्य रूपस्याव्यक्तस्य वा वामपार्श्वे यच्चिह्नं वर्तते तज्जातिक एव स रूपोऽव्यक्तो वा सिद्ध्यति नवीनमते । यथा 'क + ग' अत्र 'क ग' अनयो-

[1]योगे धनयोः क्षययोर्योगः स्यात्स्वर्णयोर्भवेद्विवरम् ।
अधिकादूनमपास्य च शेषं तद्भावमुपयाति ॥ ८ ॥

उदाहरणम्—

रूपत्रयं च रूपकपञ्चकमस्वं धनात्मकं वापि ।
वद सहितं झटिति सखे स्वर्णमृणं च यदि वेत्सि ॥ १ ॥

न्यासः–रू ३ रू ५

अत्र धनयोर्योगे योग इति योगे जातम्–रू ८

न्यासः–रू ३̇ रू ५̇

ऋणयोर्योगे योग इति, जातं योगे–रू ८̇

न्यासः–रू ३ रू ५̇

स्वर्णयोर्विवरमिति जातमृणभावं शेषम्–रू २̇ । अयं योग एव ।

---

योगोऽपेक्ष्यत इति लक्षित भवति । एव 'य × क' अत्र य क' अनयोर्वधोऽपेक्ष्यते । 'क–ख' अत्रापि खस्य वामपार्श्वे ऋणचिह्नदर्शनात् 'क ख' अनयोर्विवरमपेक्षितम् ।
अन्तरार्थं कुत्रचित् ∽ अस्य चिह्नस्यापि प्रयोगो भवति । तस्यायमर्थः–यथा 'क ∽ ख' अनयोर्मध्ये योऽधिकस्तस्मादल्पं विशोधनीयम् । एवं वर्गमूले घनमूलेऽपि चिह्नसाहाय्येन गणित भवति । अत. सिद्धमिद यन्नव्या गौरवावहं प्राचीनमत परित्यज्य धनादिचिह्नानि विन्यस्य कार्यं साधयन्ति ।

[1] योग इति । सजातीयानां योगोऽन्तरं वा भवति न त्वसजातीयानाम् । ययोर्योगोऽपेक्ष्यते तौ यदि रूपात्मकौ करणीगतौ वा राशी तावुभौ यदि ऋणगतौ धनगतौ वा भवतस्तदा तयोर्योगः कर्तव्यः । यदि राश्योर्मध्य एको धनात्मकोऽन्यश्च ऋणात्मकस्तदा तयोरन्तरमेव योगो भवति । शेषं तद्भावमुपयाति, अर्थादधिकजातीयं शेषं भवति । यथा—

रू ३ रू ५ अनयोर्योगः ८

रू ३̇ रू ५̇ अनयोर्योग. ८̇

रू ३ रू ५̇ स्वर्णयोर्विवरम् २̇

रू ३̇ रू ५ स्वर्णयोर्विवरम् २ धनभावम् ।

नव्यरीत्या— ३ + ५ = ८
−३ + −५ = −(३ + ५) = −८
३ − ५ = −२
५ − ३ = २

न्यासः–रू ३ रू ५

स्वर्णयोर्विवरमिति जातं धनभावं शेषम्–रू २ । अयं योग एव । एवं भिन्नेष्वपि।

इति धनर्णसंकलनम् ॥

---

[1]धनर्णव्यवकलने सूत्रमार्यार्द्धम्—

स्वमृणत्वमृणं स्वत्वं शोधकराशेः समुक्तवद्योगः ।

उदाहरणम्—

रूपाष्टकं रूपकपञ्चकेन क्षयं क्षयेणापि धनं धनेन ।
धनं क्षयेण क्षयगं धनेन व्यस्तं च संशोध्य वदाशु शेषम् ॥ २ ॥

न्यासः–रू ८ रू ५

अत्र शोधके स्वमृणत्वमिति जातं स्वम्–रू ८ रू ५

प्राग्वद्योगे जातम्–रू ३ एतच्छेषम् ।

न्यासः–रू ८ रू ५

स्वमृणत्वमिति जातमृणत्वम्–रू ८ रू ५

प्राग्वद्योगे जातम्–रू ३ ।

---

१ धनर्णव्यवकलन इति । अत्र संशोध्यमानं धनमृणत्वमेति तथा ऋणं धनत्वमेति । पश्चात्पूर्ववद्योगो भवति । वस्तुतो यदि सूक्ष्मविचार. क्रियते तदा ऋणं वैपरीत्यम् । तच्च त्रिविधम्—१ देशतः, २ कालतः, ३ वस्तुतश्चेति । देशतो यथा—काशीतः कश्चिद्देशो १० योजन पूर्वमस्ति, तथाऽन्यो देशः काशीतः ५ योजन पश्चिमं वर्तते, अनयो. पूर्वपश्चिमदेशयोर्मध्ये १५ योजनमन्तरं स्पष्टमेव । कालतो यथा–यदि किञ्चिद्वाष्पयानं घटीमिते काले पञ्चदशक्रोशान् पूर्वदिशि गच्छति तथान्यच्च तत्तुल्ये काले विंशतिक्रोशान् तस्यामेव दिशि याति तर्हि द्वयोर्बाष्पयानयोरेकस्यामेव घट्यां पञ्चक्रोशात्मकमन्तर जातमेवेति सुतरां सिद्धम् । वस्तुतो यथा—कस्यचिदष्टरूप्यकाणि ऋणस्वरूपाणि सन्ति । तथा च स पञ्च रूप्यकाण्यर्जयित्वोत्तमर्णाय दद्यात्तदा तस्य कियद्धनमृणं वाऽवशिष्टमिति विचारे स्पष्टमिद यदधुना तस्योपरि रूप्यकत्रयमृणमवशिष्टम्। यतो हि धनत्वं पञ्चस्वेव, ऋणत्वञ्चाष्टसु । अत. शेषे ऋणत्वमवशिष्टमेव । यथात्र—

रू ८ रू ५ अत्र शोधके स्वमृणत्व जातम् ।

तेन रू ८ रू ५ पूर्ववद्योगे कृते जातम् ३ एतच्छेषम् ।

नव्यरीत्या तु— −(८−५)=−८+५=−३

न्यासः–रू ८ रू ५

स्वमृणत्वमिति जातमृणत्वम्–रू ८̇ रू ५̇

प्राग्वद्योगः–रू १̇३̇ एतदन्तरम् ।

इति धनर्णव्यवकलना ॥

---

[1]अथ धनर्णगुणने सूत्रमार्यार्द्धम्—

ऋणयोर्धनयोर्घाते स्वं स्यादृणहतावस्वम् ॥ ९ ॥

उदाहरणम्—

रूपद्वयं रूपकपञ्चकेन धनं धनेन क्षयगं क्षयेण ।
धनं क्षयेण क्षयगं धनेन निघ्नं पृथक् किं गुणने फलं स्यात् ॥ ३ ॥

न्यासः–रू २ रू ५

गुण्यगुणकौ धनयोर्घाते स्वं स्यादिति जातम्–रू १०

न्यासः– रू २̇ रू ५̇

ऋणयोर्घाते स्वं स्यादिति जातं धनम्–रू १०

न्यासः–रू २ रू ५̇

ऋणधनहतावस्वमिति जातमृणम्–रू १०̇

---

१ धनर्णगुणनमिति । गुणनं नाम आवर्त्तनम्, गुण्यगुणकयोर्मध्य एकस्यापरतुल्याऽऽवृत्तिरिति यावत् । यदा गुण्यो गुणकश्च द्वावपि धनमृण वा भवतस्तदा गुणनफलमपि धनं भवति । किन्त्वनयोरेकतरस्य धनत्वे ऋणत्वे वा गुणनफलमृणं भवति । यथा–

रू २ रू ५ अनयोर्घाते स्वं स्यादिति रू १० जातम्, उभयोर्धनत्वात् ।

रू २̇ रू ५̇ अत्रापि द्वयोर्ऋणत्वाद् गुणनफलम्–रू १० धनात्मकमेव ।

रू २ रू ५̇ अत्र धनर्णयोर्घाते गुणनफलमृणात्मकम्–रू १०̇

नव्यरीत्या तु–

२ × ५ = १०
(–२) × (–५) = १०
–२ × ५ = –१०
२ × -५=-१० इति स्पष्टम् ।

न्यासः–रू २ रू ५

प्राग्वज्जातमृणम्–रू १०̇ । एवं भिन्नेष्वपि ।

इति गुणना ॥

---

[1]धनर्णभागहारे सूत्रम्—

ऋणधनगुणने यच्चोपलक्षणं तच्च भागहरणेऽपि ।

उदाहरणम्—

[2]धनं धनेनैवमृणं धनेन किं रूपषट्केन च रूपयुग्मम् ।

क्षयं धनेन स्वमृणेन वापि सखे वदाश्वत्र हृतौ फलं मे ॥ ४ ॥

न्यासः–रू ६ रू २

अत्र [3]गुणने यच्चोपलक्षणमिति । यथा धनयोर्घाते धनं तथा धनयोर्भजने धनमिति । भागे हृते जातम्–रू ३

न्यासः–रू ६̇ रू २̇

भागे हृते जातम्–रू ३

[ न्यासः ] रू ६̇ रू २

गुणनवद्भागे हृते जातम्–रू ३̇

---

१ धनर्णभागहार इति । भागहारेऽपि गुणनवदेव । अर्थाद् भाज्यभाजकयोरुभयोर्धनत्वे ऋणत्वे वा धनमेव लब्धिः । तथा उभयोर्मध्ये एकस्य धनत्वे इतरस्य ऋणत्वे लब्धिस्तु ऋणात्मिकैव भवति । यथा–

रू ६ रू २ अत्र धनयोर्भजने लब्धं धनमिति ३

रू ६̇ रू २̇ अत्र ऋणयोर्भजने लब्धं धनमिति ३

रू ६ रू २̇ अत्र धनर्णयोर्भजने लब्धमृणमिति ३̇

नव्यप्रकारेण —

६ ÷ २ = ३

(—६) ÷ (—२) = ३

(—६) ÷ २ = –३ अग्रे सुगमम् ।

२ 'धन धनेनर्णमृणं धनेन' इति हस्तलेखस्थ. पाठः ।

३ 'गुणनेन' इति हस्तलेखस्थः पाठः ।

न्यासः- रू ६ रू २̇

भागे हृते जातम्—रू ३̇

इति धनर्णभागहारः ॥

---

[1]धनर्णवर्गवर्गमूलयोः करणसूत्रम्—

ऋणधनयोश्च कृतिः स्वं धनमूलं धनमृणं भवेद्वापि ॥ १० ॥

अकृतित्वादृणराशेर्मूलं नास्त्येव सिद्धमिति ।

उदाहरणम्—

सखे चतुर्णामधनात्मकानां धनात्मकानां च कृतिं वदाशु ।

धनस्य रूपद्विगुणाष्टकस्य क्षयस्य वा मित्र पृथक्पदं किम् ॥ ५ ॥

न्यासः-रू ४̇ रू ४

जातौ वर्गौ १६।१६

न्यासः-रू १६

जात मूलम्-४

अथवा मूलम्-रू ४̇

न्यासः-रू १६̇

अस्य क्षयगतस्य राशेरकृतित्वान्मूलं नास्तीति सिद्धम् ।

इति धनर्णवर्गवर्गमूले ॥

इति धनर्णषड्विधम् ॥

---

१ धनर्णवर्गवर्गमूलयोरिति । समानराशिद्वयघातो वर्ग उच्यते । वर्गस्तु धनात्मक एव भवति । यत. स्वयोरस्वयोर्वा वधः स्वमेव भवति । अत एवोक्तम्–ऋणराशेर्मूलं नास्त्येवेति । वर्गमूलानयनेऽस्वयोर्घातात्मकस्य धनात्मकवर्गस्य मूलमृणात्मकं भवति । यथा–

रू ४̇ रू ४ जातौ वर्गौ १६ । १६

मूलानयने १६ । १६ अस्य मूलं ४ । ४̇

नवीनरीत्या— $=(४)^2 = १६$

$-(४)^2 = १६$

$\sqrt{१६} = ४$, अथवा ४̇

[1]शून्यसंकलितव्यवकलितयोः करणसूत्रम्—

स्वर्णं शून्येन युतं विवर्जितं वा तथैव तद्भवति ॥ ११ ॥
शून्यादपनीतं तत्स्वर्णं व्यत्यासमुपयाति ।

---

१ शून्यसंकलितव्यवकलितयोरिति । शून्यस्य संकलनादिषड्विधकथनात्पूर्वमेवेदं विचार्यते यत्किमिदं शून्यमिति ? किमभावरूपमन्यथा वा ? यद्यभावरूपं तर्हि तत्संकलनादिक व्यर्थमेव, संकलनादेः संख्याधर्मत्वात् । यदि कथञ्चित्सख्यान्तरेण सह संकलनादिकं स्वीक्रियेत तदापि शून्यस्यास्य षड्विधत्व कथमपि न संभवति, तस्याभावात्मकस्य वर्गमूलयोरभावात् । एव च चतुर्विधत्वमेवायाति परिकर्मणां न षड्विधत्वम् । पर च तत्षड्विधत्वमेवोचितमिति गणित-प्रक्रियया सिद्ध्यति । यथा १०१, ५० इत्यनयोः संख्ययो परस्पर योगेऽपेक्षिते स यथास्थानं कार्यं । तत्र प्रथमसंख्यायां दशकस्थाने शून्यमेकस्थाने चैक द्वितीयस्याञ्चैकस्थाने शून्यं दशक-स्थाने पञ्च । अस्त्यत्र शून्यसंकलनेऽपि सख्याद्वयम् ।

अत्र विषये साधूक्तं कृष्णदैवज्ञेनापि नवाङ्कुराभिधायां बीजगणितटीकायाम्—"इह किल सकलचराचरनिर्माता भगवान्परमकारुणिकः स्वयम्भूस्तत्क्रमविशेषविशिष्टवर्णमयानि शास्त्राणि स्पृष्ट्वाऽथाल्पमेधसां तदुपस्थितये मेधाविनां तु तदुपस्थितिलाघवाय सति विस्मरणेऽन्यनिरपेक्ष तत्स्मरणाय चाश्रुतपरकृतग्रन्थावगमाय च यथा वर्णज्ञापकलिपीः ससर्ज तथा संख्योपस्थितिलाघवाय तज्ज्ञापकानङ्कानप्यसृजत् । तत्र प्रतिवर्णं लिपिसर्गे वर्णानामि-यत्तया तज्ज्ञापकलिपिष्वपि साऽस्तीति लिपिषु सङ्केतग्रहः सुशकः । इह तु प्रतिसंख्यमङ्कसर्गे संख्यानामानन्त्यात्तज्ज्ञापकाङ्केषु वर्षशतेनाप्यशक्यः सङ्केतग्रहः । तथा हि–कुशाग्रबुद्धेरपि प्रतिदिनं यथाकथञ्चिच्छतपर्यन्तमपि सकेतग्रहे तदेकचित्ततया शतवर्षपर्यन्तमभ्यासेन षट्त्रिंशल्लक्षपर्यन्त सङ्केतग्रहः स्यान्मेधाविनः, न तु तदधिकसख्याज्ञापकाङ्केष्विति । अतः परमकारुणिको भगवानतिचतुरो नवैवाङ्कान्ससर्ज । यथा–१।२।३।४।५।६।७।८।९ इति । अथ चाभीष्टस्थानाद्वामक्रमेण द्वितीयतृतीयादिस्थानान्युत्तरोत्तरं दशगुणानां सख्यानां संज्ञामिदंश-शतादिभिरसङ्केतयत् । प्रथमस्थान चैकगुणसंख्यास्थानत्वादेकसज्ञया । तथा सति नवैवाङ्कास्तत्र स्थानसंबन्धात् । स्थानानि वा तत्तदङ्कसंबन्धाद्यथा स्वान्तान्तां सख्यां ज्ञापयेयुरिति सकल-सख्यावगमः सुगम इति । यथाभीष्टस्थाने निवेशितोऽयमङ्कः ३ एकगुणायास्त्रित्वसख्याया ज्ञापको भवति । ततो वामतो द्वितीयस्थाने निवेशितः स्वसंख्याया दशकज्ञापको भवति । यथा दशकद्वयज्ञापकोऽय २३ । एव वामतस्तृतीयचतुर्थपञ्चमादिस्थाननिवेशितोऽङ्क उत्तरोत्तरं दशगुणानां शतसहस्रायुतादीनां यथास्वं ज्ञापको भवति । तत्राभीष्टसख्याया यथा सभवमेक-दशकशताद्यभावे तत्स्थानपूरणार्थमभावद्योतकाङ्कः ( ० ) शून्यसंज्ञको लिपिविशेषो निवेश्यते । यथाऽष्टोत्तरशतसंख्याया दशकाभावाद् द्वितीयस्थाने शून्यनिवेशनं १०८ । यथा वाऽष्टोत्तर-सहस्रसंख्यायां दशकशतयोरभावाद् द्वितीयतृतीयस्थानयोस्तत् १००८ । अनयोरुदाहृत-

संख्ययोर्यथाक्रममष्टकशतकयोरष्टकसहस्रकयोरेव वाऽनिवेशे १८ द्वितीयस्थाननिवेशितस्य दशक-ज्ञापकत्वादष्टादशत्व प्रतीयेत नाभीष्टसंख्या । अत एवात्रायुतलक्षादीनामभावेऽपि तत्स्थाने शून्यं निवेश्यते, तेन विनाप्यभीष्टसख्याज्ञापकस्थानपूरणात् । अतोऽभीष्टसंख्यायामुत्तरा-वधिभूताङ्कस्थानाद्दक्षिणस्थानानां पूरकत्वात् तत्रोक्तरीत्या शून्यनिवेशनमावश्यकम् । वाम-स्थानानां त्वपूरकत्वादानन्त्याच्च न तत्तथेति" इति ।

सख्याङ्कस्थानानां वामत. कल्पनमपि शिष्टक्रमाविरुद्धमेव । यतो हि शिष्टा वामत आरभ्याभ्यर्हित-तमादिक्रमेणैव जगत्प्रसिद्धेन पठने लिखने च नियुक्तास्तादृशपठनलिखनार्थमेव स्थानानां वामक्रमं स्वीकृतवन्त । येन पाठक्रमानुसार सख्याङ्कलिखन संभाव्यते । स्थानानां दक्षिणक्रमे कल्पिते चाभ्यर्हिततमसख्याद्योतकाङ्कानां लिखिताङ्केषु दक्षिणत उपस्थितौ लिखनपठनक्रमभेदः । पठनार्थं लेखका वयमिति शिष्टैः पाठक्रमानुसारेणैव यथावर्णलिपिविन्यास आदिष्टस्तथैवाङ्कलिपिष्वपि पाठक्रमरक्षार्थं तल्लिपिविन्यासोऽपि कारुणिकैस्तै कल्पितः । येन वाक्यान्तर्गतवर्णानां यस्य प्रथममुच्चारणं तस्य तद्वाक्यलिखने वामतो लिखनम्, एवमुत्तरोत्तरोच्चरितानां वर्णानां यथाक्रमं दक्षिणतो लिखनमिति हि शिष्टक्रमः । एवमेव सङ्ख्यावाचकेषु पठ्यमानेषु यस्य प्रथमं पाठस्तस्य वामतो लिखनमनन्तर दक्षिणक्रमेण पठितानां संख्यावाचकानां लिखनं स्थानानां वामतः कल्पनाव्यतिरेकेण न संभाव्यते, अत स्थानानां वामक्रमः• शिष्टैरादृतः । पाठस्य मुख्यत्वात्तदनुकूलः क्रम. कल्पनीय इति नात्र शिष्टक्रमभङ्गप्रसङ्गोऽपि । ये च विपरीतमतयोऽ-त्राङ्कानां लिखने स्थानानां वामत. स्थितिदर्शनेनानुमिन्वन्ति भारतीयानां आरब्य ( यवन ) पण्डितेभ्योऽङ्कलिप्यधिगम इति, ते तु प्रष्टव्या यद् आरब्यानां सख्याङ्कपाठकाले भवदभिमतस्य मुख्यभूतस्य स्थानक्रमस्य कथं भङ्गः स्वीक्रियत इति । यदि स्थानक्रमस्यैव प्राधान्यं तर्हि ते आरब्या भवतां पर्यनुयोगार्हा । अस्माकं तु पाठार्थं लिखन लिखनार्थं च क्रम इति तेषु पूर्वपूर्वस्य मुख्यत्वमुत्तरोत्तरस्य गौणत्वमित्यजानद्भिरनेकैः सर्वज्ञै· सह विवादेनालमिति विस्तरेण ।

तदेवं शून्यस्याभावत्वेऽपि तत्सकलनादेर्न संख्याद्वयसाध्यत्वहानि । नहि द्वितीयसङ्ख्याया उभयोर्वा सख्ययोर्दशकाद्यभावमात्रेण सर्वथा तदभाव इति । वस्तुतस्तु संख्याया दशकाद्यभावे सर्वथाऽप्यभावे वेत्यभावमात्रे यत्षड्विध तत्खषड्विधमिति । अन्यथाऽनन्तस्य खहरराशे· खमूलस्य चासम्भवात् । रूपस्य वर्णस्य करण्या वा शून्येन सह योगे वियोगे वा कर्तव्ये रूपादिकं तथैव धनमृण वा भवति । नात्र कश्चिद्विशेष । परन्तु खाद्वियोगे धनमृणं वा रूपादिकं वैपरीत्य गच्छतीति विशेषः । यथा—

रू ५̇ रू ५ शून्येन युतान्यूनितान्यविकृतान्येव ।

अत. रू ५̇ । रू ५

नव्यैस्तु—

−५ + ० = — ५<br>
५ + ० = ५<br>
०— (५) = — ५<br>
०— (−५) = ५

# काशिकराजकीयसंस्कृतमहाविद्यालयमुखपत्रिका

[ त्रैमासिकी ]



प्रधानसम्पादकः

श्रीत्रिभुवनप्रसाद् उपाध्यायः

एम० ए०, व्याकरणाचार्य



सहायकसम्पादकः

श्रीव्रजवल्लभद्विवेदो दर्शनाचार्यः



| वार्षिकम् | प्रत्यङ्कम् |
|---|---|
| ७॥) | १॥।=) |

# विषय-सूची


| | | |
|---|---|---|
| भागवृत्तिसंकलनम् | —श्रीयुधिष्ठिरमीमांसकः। | ८३ |
| वेदान्तावतारः | —श्रीशान्तिभिक्षुः, साहित्याचार्यः। | १०७ |
| साक्षिस्वरूपविचारः | —श्रीमुरलीधरमिश्रः, व्याकरणाचार्यः। | १२३ |
| षष्टितन्त्रम् | —श्रीमामराजदत्तः कापिलः, एम० ए०। | १३१ |
| राहुग्रासः | —ब्रह्मचारी गिरिजाप्रकाशः। | १३६ |
| नवभारते वर्णाश्रमव्यवस्था आवश्यकी न वा ? | —पण्डितराजराजेश्वरशास्त्री द्राविडः। | १४३ |
| हिन्दूधर्मसंहिताविमर्शः | —श्रीरघुनाथशर्मा, व्याकरणाचार्यः। | १४७ |
| प्राचीनपाठनिर्णयकुञ्जिका | —श्रीरामाज्ञापाण्डेयः, व्याकरणाचार्यः। | १५६ |
| कला तत्प्रयोजनं च | —श्रीद्विजेन्द्रनाथमिश्रः, साहित्याचार्यः। | १६८ |
| संस्कृतभाषायाः क्रमिको ह्रासः | —श्रीअजयमित्रशास्त्री। | १७२ |
| भारतशतकम् ( खण्डकाव्यम् ) | —श्रीमहादेवशास्त्री पाण्डेयः, साहित्याचार्यः। | १७६ |
| मायाजालम् ( आख्यायिका ) | —सौ० क्षमादेवी राव। | १६५ |
| न्यायनये शब्दार्थसम्बन्धविचारः | —श्रीबदरीनाथशुक्लः, न्यायाचार्यः, एम० ए०। | २०४ |
| शाब्दिकमते शब्दशक्तिस्वरूपम् | —श्रीभूपनारायणझा, व्याकरणाचार्यः। | २०६ |


## विविधम्


| | | |
|---|---|---|
| शून्य-निःस्वभाव-निरालम्बशब्दार्थविचारः | —श्रीजगन्नाथ उपाध्यायः, वेदान्ताचार्यः। | २१४ |
| वास्तवचन्द्रशृङ्गोन्नतौ स्थलविशेषद्वयविमर्शः | —श्रीमीठालाल ओझा, ज्यौतिषाचार्यः। | २१६ |
| कालिदासीयपद्येऽस्थानस्थपदता ? | —श्रीरघुनाथशर्मा, व्याकरणाचार्यः। | २२१ |
| महाभाष्यपाठविमर्शः | —श्रीरामशङ्करभट्टाचार्यः, शास्त्री। | २२२ |
| सिद्धान्तकौमुदीपाठविमर्शः | —श्रीरामशङ्करभट्टाचार्यः, शास्त्री। | २२३ |
| फिट्सूत्रसमीक्षा | —श्रीरामशङ्करभट्टाचार्यः, शास्त्री। | २२३ |

सम्पादकीयम्

देवनागरीलिपिप्रतिसंस्कारसंमेलनम् २२४

ग्रन्थाः

काण्वसंहिताभाष्यसंग्रहः ( वेदः ) आनन्दबोधभट्टोपाध्यायप्रणीतः। डा० सुभद्रझा–
व्रजवल्लभद्विवेदाभ्यां सपादितः। १२१–१६८

बीजगणितावतंसः ( गणितज्यौतिषम् ) नारायणपण्डितविरचितः। श्रीचन्द्रभानुपाण्डेयेन
ज्यौतिषाचार्येण सपादितः। ६–२४

---

# सारस्वती सुषमा

## काशिकराजकीयसंस्कृतमहाविद्यालयपत्रिका

८ वर्षः } भाद्रमार्गौ २०१० { २-३ अङ्कौ

## भागवृत्तिसंकलनम्

श्रीयुधिष्ठिरमीमांसक', प्राच्यविद्याप्रतिष्ठानम्, मोतीझील, काशी ।

( पूर्वतोऽनुवृत्तम् )

### ४०–प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा । ( २।३।४६ )

( ५७ ) कथं वृक्षोऽयमिति ? क्रियाया अभावे कारकत्वाभावादनभिहितत्वाच्च । उच्यते—"कारकत्वमभिहितत्व[1] च" इति भागवृत्तिः । [ दुर्घटवृत्तिः–पृ० ४६ ]

### ४१–क्तस्य च वर्तमाने । ( २।३।६७ )

( ५८ ) ( वर्तमानक्तेन भूतक्तस्य बाधनात् त्वया ज्ञातो मयाऽर्चित इत्यादयोऽपशब्दा इति भागवृत्तिः । [ द्र० ३।२।१८८ सूत्रोद्धरणानि ] )

### ४२–द्विगुरेकवचनम् । ( २।४।१ ) (?)

( ५९ ) यत्तु 'द्विगु'-[ २।४।१ ] [2]सूत्रे भागवृत्तिकारेणोक्तम्—"समाहरणं समाहार इति भावे घञ् इति स्थिते यदुक्तं कर्मसाधने पञ्चकुमार्यः समाहृताः पञ्चकुमारि इति

---

१ "अस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्ति" [ २।३।४६ ] इति भाष्यवचनात् क्रियात्वे गम्यमाने कारकत्वमभिहितत्वं चोभयमुपजायत इति भावः ।

२ परिभाषावृत्तिसम्पादकेन [ २।१।५१ ] संख्या निर्दिष्टा सा त्वशुद्धा प्रतिभाति ।

'गोस्त्रियोरुपसर्जनस्य' [ १।२।४८ ] इति न प्राप्नोति । एव तर्हि भावसाधनः''[1] इति ।
[ परिभाषावृत्तिः–पृ० ७६ ]

## ४३–तद्राजस्य बहुषु तेनैवास्त्रियाम् । ( २।४।६२ )

( ६० ) कथम् ' ' 'कौरव्याः पशवः' इति वेणी [ १।२५ ] ? यतः–'कुर्वादिभ्यो ण्य.' [ ४।१।१५१ ] इत्यक्षत्रियवृत्तिकुरुशब्दात् सावकाश इति क्षत्रियवृत्तेः–'कुरुनादिभ्यो ण्यः' [ ४।१।१७२ ] इति भाव्यम् । तस्य च तद्राजत्वाल्लुक् । · · · · उच्यते—''कुर्वादिभ्यो ण्यः' [ ४।१।१५१ ] इत्यत्रापि क्षत्रियगोत्रग्रहणानुवृत्तेः[2] सोऽपि क्षत्रियगोत्रवचनादेव, तस्यातद्राजत्वादलुक्'' इति भागवृत्तिः । [ दुर्घटवृत्तिः–पृ० ५२ ]

( ६१ ) 'परस्पर परिरेभिरे कुकुरकौरवस्त्रियः' इति माघः [ १३।१६ ], तथा-'सोऽय मद्भुजपञ्जरे निपतितः सरक्ष्यता कौरवा.' [ वेणी ३।४७ ] ? 'कच्छादि'-[ ४।२।१३३ ] पाठात् 'मनुष्यतत्स्थयोर्वुञ्' [४।२।१३४] इति वुञा भाव्यम् । उच्यते—शब्दव्युत्पत्तेर्विवक्षाधीनत्वाद् मनुष्याणा कुरुशब्देनाविवक्षितत्वान्न वुञ् । ततश्च तस्येदमित्यर्थेऽण्, जनपदविवक्षाया वाञ् । ''विषयो देशे' [ ४।२।५२ ] इत्यणि तात्पर्यात्'' इति [3]भागवृत्तिः । [ दुर्घटवृत्तिः–पृ० ५३ ]

## ४४–यङोऽचि च । ( २।४।७४ )

( ६२ ) ''चकारात् 'बहुलं छन्दसि' [२।४।७३] इति सर्वमनुवर्तते । तेन बाहुल्यादनच्यपि छन्दस्येव यङ्लुक् । भाष्ये तु हुश्नुग्रहणज्ञापक-[ ६।४।८७ ] बलाद् बोभवीतील्येव पदं भाषाया साधु, नान्यत्'' इति [4]भागवृत्तिः । [ भाषावृत्तिः–पृ० १०६ ]

---

१ सीरदेवो भागवृत्तिकारमत प्रत्याचक्षाण आह–''तदयुक्तम्, यतः–'गोस्त्रियोरुपसर्जनस्य' [ १।२।४८ ] इत्यस्याभावे 'ह्रस्वो नपुंसके प्रातिपदिकस्य' [ १।२।४७ ] इति विद्यत एव । नपुंसकत्वं तु 'स नपुंसकम्' [२।४।१७] इत्यनेन । अत एव 'स्वमोर्नपुंसकात्' [ ७।१।२३ ] इति लुका न विभक्तिश्रुति. । [ परिभाषावृत्तिः–पृ० ७६ ]

२ क्षत्रियगोत्रग्रहणं कुतोऽनुवर्तत इति तु न व्यक्तीकृतं भागवृत्तिकृता । न हि कुतश्चित्तस्यानुवृत्ति. सम्भवति ।

३ प्रकृतसूत्रेऽय पाठोऽन्यसूत्रे वेति न निश्चितं शक्यते वक्तुम् । दुर्घटवृत्तौ त्वत्रैव सूत्र उद्धृतः ।

४ अत्र भागवृत्तिमतमेव युक्तम् । ये त्वत्र 'छन्दसि' पदं नानुवर्तयन्ति, तेषां मते बहवो दोषाः । यथा—

( क ) अननुवर्तने छन्दसि पदे भाषायां स्वत. सिद्धे 'यङ्लुग् भाषायामपि भवति'इति ज्ञापकं [ महाभा० ६।४।८७ ] व्यर्थं स्यात् ।

( ६३ ) यङो लुग् बहुलम्, प्रकृतिवत् परस्मैपदी चेति । भागवृत्तिकारस्तु बोभवीतीत्येव न छान्दसमिति मन्यते ।

[ कविकण्ठहारविरचिते चर्करीतरहस्ये । द्र०–लायब्रेरी आफ दी इण्डिया आफिस, कैटोलाग जिल्द १, भाग २, ग्रन्थ नं० ७८३ ]

### ४५–बाष्पोष्मभ्यामुद्वमने । ( ३।१।१६ )

( ६४ ) "धूमाच्चेति भर्तृहरिः" इति भाषावृत्तिः । अत्राह [1]सम्पादकः–"भर्तृहरि. भागवृत्तिकार." इति ।

### ४६–सर्त्तिशास्त्यर्त्तिभ्यश्च । ( ३।१।५६ )

( ६५ ) अत एव 'पुषादिद्युतादि-ऌकारानुबन्धार्त्तिसर्तिशास्तिभ्यश्च परस्मै' इत्येकीकृत कौमारैः [ कातन्त्र० ३।४।२८ ], भागवृत्तौ च यथाश्रुत यथाभाष्यं च सूत्रं व्याख्यातम् ।

[ [2]शब्दसाम्राज्यम् ]

---

( ख ) भाषायां सति यङ्लुकि 'रोरवीति' इत्यत्र 'दृष्टानुविधिश्छन्दसि' इति भाष्यकारीय वचनमसमञ्जसं स्यात् । [ द्र०–महाभा० १।१।५ ] ।

( ग ) "यङ्लुग् भाषायामपि भवति । किमेतस्य ज्ञापने प्रयोजनम् ? बेभिदीति चेच्छिदीतीत्येतत् सिद्धं भवति भाषायामपि" [ ६।४।८७ ] इति भाष्यवचन उभयत्र 'अपि'-पदस्य सामञ्जस्यं न प्रकल्पते ।

( घ ) 'च्छ्वोः शूड०' [ ६।४।१९ ] इत्यत्र क्ङिद्ग्रहणानुवृत्त्यननुवृत्ती प्रकृत्य-'तत्र त्वेतावान् विशेषः' इति भाष्यकारव्याख्यानुसारं वकारान्तानां भाषायां यङ्लुग् न भवतीति ज्ञाप्यते, अन्यथा दिवादीनां यङ्लुगन्तानां तिबादिषु क्ङिद्ग्रहणानुवृत्तौ ऊठ् न स्यात्, अननुवृत्तौ च स्यादित्येषोऽपि भेदः स्यात् । न चायं विशेषो भाष्यकारेण प्रतिपादितः । अत एव कैयट आह–छान्दसो यङ्लुक् । न चैते छन्दसि प्रयोगा दृश्यन्ते । भाषाया तु 'हुश्नुवो. सार्वधातुके' [ ६।४।८७ ] इत्यत्र हुश्नुग्रहणज्ञापकात् क्वचिदेव यङ्लुग् भवति न सर्वत्र । अन्यथा–'यङोऽचि च' [ २।४।७४ ] इत्यत्र छन्दोग्रहणानुवृत्तिरनर्थिकैव स्यादिति भाष्यकारस्य दर्शनम् । [ कैयटे ६।४।१९ ]

( ङ ) नागेशभट्टोऽपि–"छान्दस एव यङ्लुक्, भाषायां तु क्वाचित्क एव" इत्यत्रानुकूलः । द्र० भाष्यप्रदीपोद्योत.–१।१।५ ६।४।८७, एतेन चान्द्रादीनां भाषायां 'यङो वा' [ ६।२।३५ ] इति सूत्रेण सामान्येन यङ्लुग्विधानं चिन्त्यमेव ।

१ भाषावृत्तिसम्पादकस्यैतद्वचनं चिन्त्यम् । [ द्रष्टव्यम्–संस्कृत व्याकरणशास्त्र का इतिहास भाग १, पृ० २७०, टि० १ ]

२ द्रष्टव्यम्–मद्रास राजकीय हस्तलेख पुस्तकालय भाग ३, खण्ड १ बी० पृष्ठ ३३९३, पुस्तकसंख्या २४४५

## ४७–चरेष्टः । ( ३।२।१६ )

( ६६ ) कथ 'प्रेक्ष्य स्थिता सहचरीम्' इति रघुः [?] अधिकरण इत्यनुवृत्तेः। उच्यते—"चिन्त्यताम्" इति भागवृत्तिः । [ दुर्घटवृत्तिः–पृ० ५६ ]

## ४८–लिटः कानज् वा । ( ३।२।१०६ )

## ४९–क्वसुश्च । ( ३।२।१०७ )

( ६७ ) क्वसुकानचौ छन्दस्येव विहिताविति भाष्यव्याख्यातृभिर्व्यवस्थितम् । अत एव भाषाभागे भागवृत्तिकृद् भाषावृत्तिकारश्च क्वसुकानज्विधानलक्षणं न लिखितवान्[1]

[ संक्षिप्तसारटीका–तिङन्त० ८२६ ]

## ५०–यजजपदशां यङः । ( ३।२।१६६ )

( ६८ ) वदेर्यङ्लुगन्तादूकः–'वावदूकश्च वक्तरि'[2] इति भागवृत्तिः ।

[ उज्ज्वलदत्तस्य–उ० वृ० पृ० १५३ ]

## ५१–मतिबुद्धिपूजार्थेभ्यश्च । ( ३।२।१८८ )

( ६९ ) "इह वर्तमानक्तेन भूतक्तस्य बाधनमिष्यते । तेन 'त्वया ज्ञातो मयार्चितः' इत्याद्यचिकित्स्यम्" इति भागवृत्तिः । [ भाषावृत्तिः–पृ० १६१ ]

( ७० ) कथ 'त्वया ज्ञातो वधाद् भीतः' [ ? ] इत्यादि । उच्यते—अपशब्द इति पदे [?] भागवृत्तिः । [ दुर्घटवृत्तिः–पृ० ६३ ]

( ७१ ) 'वर्तमानक्तेन भूतक्तस्य बाधनमिष्यते । तेन 'त्वया ज्ञातो मया ज्ञातः' इत्याद्यचिकित्स्यम्" इति भागवृत्तिरिति भाषावृत्तिः । [ दुर्घटवृत्तिः–पृ० ६३ ]

---

१ 'न लक्षितवान्' इति पाठान्तरम् ।

२ तुलना कार्या—'वावदूकोऽतिवक्तरि' [ ३।१।३५ ] इत्यमरः । अत्र क्षीरस्वामी–"यजजपे-त्यत्र वदेरुपदेशः कार्य इति पदकारवाक्यादूकः"इत्याह । पदकारशब्देन नात्र भाष्यकारोऽभि-प्रेतः, भाष्ये तादृशपाठस्यानुपलम्भात् । यद्वा भाष्येऽयं पाठस्त्रुटितः स्यात् [ द्र०–स० व्याकरण-शास्त्र का इतिहास पृ० २५१ ]। टीकासर्वस्वकारस्तु–"वदेर्यङन्तात् 'यजजपदशां यङः' [ ३।२।१६६ ] इति बहुवचननिर्देशादन्यतोऽपि 'ऊक.' इति धातुपारायणम् । चेक्रीयन्तानां 'यजिजपिदंशिवदाम्' इत्यूक इति कालापाः" इत्याह । भानुजिदीक्षितस्तु–"कुर्वादिषु [ गण० ४।१।१५१ ] वावदूकशब्दपाठाद् वदेरूकः" इत्याह [ अमरटीका ३।१।३५ ]।

( ७२ ) कथ भूते क्ते सति 'त्वया शीलितो मया ज्ञातः' इति, बुद्ध्यर्थत्वाद्वतमानक्तेन भूतक्तस्य बाधनात् । अत एव 'क्तस्य च वर्तमाने' [ २।३।६७ ] इति षष्ठी न भवति । यदि वर्तमानक्तस्य ग्रहण स्यात् तर्हि 'क्तस्य च वर्तमाने' इति षष्ठी स्यात् । "कालदुष्टा एवापशब्दा" [इति] भागवृत्तिः । [ दुर्घटवृत्तिः–पृ० ६३ ]

( ७३ ) 'त्वया ज्ञातो मया ज्ञातः' इत्यसाधुरिति भागवृत्तिः ।

[ सङ्क्षिप्तसारवृत्तिः–कारक० १७७ ]

( ७४ ) आह चैतत् सर्वं सुधाकरः—"अनेन वर्तमाने क्तेन भूते प्राप्तः क्तो बाध्यत इति [1]भर्तृहरिः । [2]भाष्यटीकाकृतस्तु भूतेऽपि भवतीत्यूचुः ।

[ दैवस्य पुरुषकारव्याख्यायाम्–पृ० १०६ ]

## ५२–परिमाणाख्यायां सर्वेभ्यः ( ३।३।२० )

( ७५ ) कथम्—'एकोऽपि तव निश्चयः' इति ? [3]"पदसंस्कारेण" इति भागवृत्तिः ।

[ धातुवृत्तिः–पृ० ३१४ ( चिञ्धातौ ) ]

## ५३–प्रथने वावशब्दे । ( ३।३।३३ )

( ७६ ) अशब्दविषये प्रथने वाच्ये वेः परात् स्तृणातेर्घञोऽभावात् "वस्तुविस्तरे" इत्यसाधुरय प्रयोग इति चेत्, तत्तु नातिश्लिष्टम् । यतः सूत्रे प्रथन विस्तीर्णत्वमभिप्रेतम् । तदाह काशिकाकारः—"प्रथन विस्तीर्णता" इति । न चात्र विस्तरशब्देन वस्तूना विस्तीर्णत्वमभिप्रेतम्, अपि तु बाहुल्यम् । यथा तृणस्य विस्तर इत्यत्र । अत एव "प्रथनमिति किम् ? तृणविस्तारः" इति प्रत्युदाहृतम् । अस्य चार्थ भागवृत्तिकारोऽपि अञ्जसाऽ·य ( ? सा व्या ) ञ्जीत्–"तृणस्य विस्तरो बाहुल्यमित्यर्थः" ; तत्कथ प्रथने वर्तमानादस्माद्धातोर्घञ् भवितुमर्हतीति । [ पण्डितदुर्वेकमिश्रकृतहेतुबिन्दुटीकालोकः–पृ० २६२ ]

---

१ कोऽयं भर्तृहरिरिति न ज्ञायते । पूर्वोद्धरणानां तुलनया कदाचिदयं भागवृत्तिकृतो निर्देशः स्यात् ।

२ क इमे भाष्यटीकाकृत इति न ज्ञायते । कदाचिदत्र पूजायां बहुवचनं स्यात् । तथा सति किमयं वाक्यपदीयकारो महाभाष्यव्याख्याताऽशेषशब्दविद् भर्तृहरि संभवति ? प्रदीपकारस्त्वयं नैव संभवति, तस्य तक्रकौण्डिन्यन्यायेन वर्तमानक्तेन भूते क्तस्य बाधाश्रयणात् ।

३ 'पदसंस्कारपक्षे भविष्यति' इति भाषावृत्तिः [ ३।३।२० ] ।

५४-उदि श्रयतियौतिपूद्रुवः। ( ३।३।४९ )

( ७७ ) 'उच्छ्रायः·· [1]उच्छ्रूय.' [ अमर० २।४।१० ] । भागवृत्तिकारस्तु 'उच्छ्रयम्' नेच्छति। [ सक्षिप्तसारटीका-कृदन्त० २८१ ]

५५-एरच्। ( ३।३।५६ )

( ७८ ) "वाऽसरूपेण' [ ३।१।६४ ] क्तादयोऽपि भवन्ति। भीत शिशुना, वृष्टं देवेन, वर्षण मेघस्य" इति भागवृत्तिः। [ भाषावृत्तिः-पृ० १७१ ]

५६-अ प्रत्ययात्। ( ३।३।१०२ ) (?)

( ७९ ) "कण्डूतिरसाधु." इति भागवृत्तिः। [ टीकासर्वस्वम्-भा० २ पृ० ३११ ]

५७-अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा। ( ३।४।१८ )

( ८० ) "भावेऽपि हि प्रत्यये सकर्मकाद् धातोः पश्चात् कर्मसबन्धो भवत्येव। पाक ओदनस्य, कटं कृत्वा शेते, गम्यते मया ग्रामम्" इति भागवृत्तावुक्तम्। [ भाषावृत्तिः-पृ० १८६ ]

( 'लः कर्मणि च' [ ३।४।६९ ] सूत्रमपि द्रष्टव्यम्। )

( ८१ ) भावेऽपि प्रत्यये सकर्मकस्य धातोः कर्मापेक्षा चेत् कर्मसबन्धो भवत्येव। यथा—गम्यते मया ग्राममिति भाषावृत्तिर्भागवृत्तिश्च। [ हरिनामामृतम्-सू० ६६६ ]

५८-कषादिषु यथाविध्यनुप्रयोगः। ( ।४।४६ )

( ८२ ) "स[2] च क्रियासमभिहारानुपयोगवद् व्यवधानेऽपि भवति। यथा—घृतनिधाय-मुदक निदधाति" इति भागवृत्तिः। [ भाषावृत्तिः-पृ० १९३ ]

५९-सप्तम्यां चोपपीडरुधकर्षः ( ३।४।४९ )

( ८३ ) "अत्र णमुल्विधावुपसर्गग्रहणं पीडेरेव [3]विशेषणम्" इति भागवृत्तिः। [ धातुवृत्तिः-पृ० २०० ( कृषधातौ ) ]

---

१ कथ 'पतनान्ता समुच्छ्या.' [ महा० शान्ति० २७।३१ ] इति। वक्ष्यमाण विभाषाग्रहणमिह सिंहावलोकितन्यायेन सम्बद्ध्यत इति काशिकाकारः।

२ अनुप्रयोग इत्यर्थ ।

३ 'धनुररिमिरसद्यं मुष्टिपीडं दधाने' [ भट्टि० १।२६ ] इति प्रयुञ्जन् भट्टिकारस्त्वतन्त्रं मन्यते। धातुवृत्तिकारो [ पृ० २०० ] भट्टिभागवृत्त्योर्मतमेवं निराचष्टे—"इदं तावत् साहसमात्रम्, यदाचार्येण प्रत्युक्तस्यातन्त्रत्वाङ्गीकरणम्। यदपि पीडिनैव सम्बन्धकथनं तदपि न न्याय्यम्, बह्वच्कस्यास्य पूर्वनिपातायोगात्। अत एव वृत्तिन्यासपदमञ्जर्यादिषु सम्बन्धोऽङ्गीकृतः" इति।

( ८४ ) [1]केचिद् उपशब्दस्य पीडयतिनैव संबन्धमाहुः ।

[ धातुवृत्तिः–पृ० ३४८ ( रुपधातौ ) ]

( ८५ ) उपपूर्वाणामेवैषा ग्रहणमिच्छन्ति जयादित्यदुर्गसिह[2]धर्मदासा.[3] । तदिह नेष्टम् । एतदर्थमेव 'हस्तरोधं दधद्धनु.' [?] इति भट्टिप्रयोगो दर्शितः । भागवृत्तिकृताऽप्येतदेवेष्टम् । [ सक्षिप्तसारटीका–कृदन्त० ४३७ ]

**६०–लः कर्मणि च भावे चाकर्मकेभ्यः ( ३।४।६९ ) (?)**

( ८६ ) 'गम्यते ग्राम विप्रेण' इत्याद्यपि भावे भवतीति भागवृत्तिकृतोक्तम् ।

[ सक्षिप्तसारटीका–कृदन्त० १८० ]

---

यत्तु भागवृत्तिमतनिराकरणे–' इदं तावत् साहसमात्रं प्रयुक्तस्यातन्त्रत्वाङ्गीकरणमित्युक्तम्'' तन्न, दृश्यते ह्यन्यत्रापि प्रयुक्तस्यातन्त्रत्वम् । यथा–'तस्यादित उदात्तमर्धह्रस्वम्' इत्यत्र ह्रस्वग्रहणम् [ द्र०–काशिका १।२।३२ ] । अपि च 'बह्वच्कस्य पूर्वनिपातायोगात्' इति यो हेतुरुक्त सोऽप्ययुक्त , भवति ह्यन्यत्रापि बह्वच्कस्य पूर्वनिपाते उपसर्गस्यैकेनैव धातुना सम्बन्धः । यथा–'नाम्न्यादिशिग्रहोः' [ ३।४।५८ ] इति । अत्र ह्याङो दिशिनैव सम्बन्ध., न तु ग्रहिणा । स्वयमपि ग्रहधातौ तथैव प्रयुङ्क्ते–'नामग्राहमाह्वयति' इति । तस्मादत्रापि केवलं पीडयतिनैव सम्बन्ध. सम्भवति । यदि तु नेष्यते तर्हि हेत्वन्तर वाच्यम् । माषावृत्तिकारोऽपि भागवृत्तिमतमनुसरति [ द्र०–पृ० १९३ ] ।

शब्दरत्नकारस्तु पूर्वोक्तं भट्टिप्रयोगं घञन्तं मन्यते । तदाह–'धनुररिभिरसह्य मुष्टिपीडं दधाने' इति भट्टिप्रयोगे तु न णमुलन्तम् । किन्तु घञन्तम् । क्रियाविशेषणत्वाच्च द्वितीयेति बोध्यमिति [ श० र० पृ० ८३८ ] ।

१ केचित्पदेन भागवृत्तिकारोऽत्राभिप्रेत' ।

२ कातन्त्रवृत्तिकार. ।

३ धर्मदासो चान्द्रव्याकरणस्य वृत्तिकारः । नायं वृत्तिकारस्यैवाभीष्टमपि तु–'सप्तम्यां चोपात् पीडरुधकर्षेभ्य ' [ १।३।१४१ ] इति सूत्रे 'उपात्' इति पृथक्पदस्य निर्देशात् सूत्रकारस्य चन्द्रगोमिनोऽप्यभीष्टम् । जैनशाकटायनव्याकरणकारोऽपि–'तत्सप्तम्योपात् पीडरुधकृष.' [ ४।४।१५७ ] इति सूत्रे 'उपात्'-पद पृथक् पपाठ । तेनोभयोर्मते उपपदस्य सर्वधातुभिः सह सम्बन्ध. स्पष्ट एव । भोज [ सं० कं० २।४।२६४ ]–देवनन्दि [ जैनेन्द्र० २।४।३५ ]-हेमचन्द्र [ ५।४।७५ ]-कातन्त्रकार [ कृद्वृत्ति० ४६४ ] प्रभृतय उपपद धातुभिः सह समस्य [ उपपीडरुधकर्ष० ] निर्दिशन्ति , व्याख्यायां च सर्वधातुभिः सहोपसर्गं सम्बध्नन्ति । एवं च कृत्वा सर्वव्याकरणसम्प्रदायेषु भट्टिकारभागवृत्तिकारावेव 'उप'-पदं केवलं पीडयतिना सम्बध्नीतः ।

(अलखल्वोः [ ३।४।१८ ] सूत्रमप्यत्र द्रष्टव्यम्। सङ्क्षिप्तसारटीकाकृता कृदन्तप्रकरणेऽस्य पाठस्योद्धरणात् कदाचिदयं पाठः–'अलंखल्वोः' [ ३।४।१८ ] इति सूत्रवृत्तावेव स्यादिति सम्भाव्यते।)

### ६१–न षट्स्वस्रादिभ्यः (४।१।१०)

(८७) भागवृत्तिकारस्तु नप्तृशब्दमपि स्वस्रादिषु पठित्वा [1]'नप्ता कुमारी' इत्युदाजहार।

[ शब्दकौस्तुभः–भा० ३ पृ० १० ]

(८८) भागवृत्तिकृद् नप्तृशब्द स्वस्रादौ पठितवान्। [ दुर्घटवृत्तिः–पृ० ७४ ]

### ६२–वर्णादनुदात्तात् तोपधात् तो नः। (४।१।३९)

(८९) वाऽनुवृत्तिर्जयादित्यचन्द्रप्रभृतिभिरुक्ता। वाचस्पत्यादिकोशे च विकल्पो दृश्यते। भाष्येऽनुदाहृतत्वाद् भागवृत्तिकृता नित्यत्वमुक्तम्। भागुरिवोपालितादिकोशे नित्यत्व-मुदाहृतम्। [ सङ्क्षिप्तसारटीका–तद्धित० ४६ ]

### ६३–चन्द्रभागान्नद्याम्। (४।१।४५ ग० सू०)

(९०) तस्माच्चन्द्रभागान्नद्यामिति पाणिनीयाना ह्रस्वादिपाठः[2]। तेषामेव भ्रमपरम्परा-विरोधादपपाठ इति भागवृत्तिकृतोपेक्षित। [ संक्षिप्तसारटीका–तद्धित० ७४ ]

### ६४–न प्राच्यभर्गादियौधेयादिभ्यः। (४।१।१७८)

(९१) कथं 'प्राक्, केकयीतो भरतस्ततोऽभूत्' [भट्टि० १।१४] इति? "आद्यप्रकृते-रेव कुलद्वारेण सोऽयमिति स्त्रीवृत्तेः 'शार्ङ्गरवाद्यञो ङीन्' [ ४।१।७३ ]" इति भागवृत्तिः।

[ भाषावृत्तिः–पृ० २२६ ]

### ६५–दध्नष्ठक्। (४।२।१८)

(९२) केचिद् दध्नि संस्क्रियत इत्यर्थविवक्षायां टन्[3] माभूदित्याहुः। न हि किञ्चिद् दध्नि संस्क्रियमाण प्रसिद्धमस्ति। यस्याभिधानं दाधिकम्? स्पष्टार्थं वचनमिति भागवृत्तिः।

[ सङ्क्षिप्तसारटीका-तद्धित० १६२ ]

---

१ 'नप्तेति भागुरिः' इति भाषावृत्तिकारः [ पृ० २०४ ]। अमरस्तु–'नप्त्री पौत्री सुतात्मजा' [ २।६।२९ ] इत्याह।

२ सङ्क्षिप्तसारे–'चान्द्रभागान्नद्याम्' इति दीर्घादिपाठः।

३ पाणिनीयानां ठग् इत्यर्थः।

६६–भिक्षादिभ्योऽण्। ( ४।२।३८ )

( ९३ ) भागवृत्तिकारः–"युवतीना समूहो यौवनम्"[1] इत्याह। [परिभाषावृत्तिः-पृ० ५८]

( ९४ ) युवतिशब्दाद् यौवतमिति जयादित्यः। "भस्याढे तद्धिते' [ ६।३।३५ वा० ] इति पुंवद्भावे यौवनम्" इति भागवृत्तिः। [ भाषावृत्तिः–पृ० २३५ ]

( ९५ ) ( युवतीना समूह ) "पुंवद्भावे यौवनम्"इति भागवृत्तिः।

[ हरिनामामृतम्–सू० २३९५ ]

६७–नडशादाद्ड्वलच्। ( ४।२।८८ )

( ९६ ) "पङ्कवाचिन. शादशब्दाद् ड्वलज् न भवति, अनभिधानात्। शष्पवाचिन एव भवति" इति भागवृत्तिः। [ टीकासर्वस्वम्–भा० २ पृ० ११ ]

( ९७ ) शष्पवाचिन एव ( शादशब्दात् ) भवतीति भागवृत्ति।

[ सक्षिप्तसारटीका–तद्धित० ३४० ]

६८–शेषे। ( ४।२।९२ )

( ९८ ) "इह चक्षुषा गृह्यते चाक्षुष रूपम्। श्रावणः शब्दः। अश्वैरुह्यते आश्वो रथः। चातुरं शकटम्। दृषदि पिष्टा दार्षदा माषाः। औलूखलाः सक्तवः। चतुर्दश्या दृश्यते चातुर्दश रक्षः। इति सामान्येन 'तस्येदम्' [ ४।३।१२० ] इति विवक्षायाम्" इति भागवृत्तिः।

[ भाषावृत्तिः–पृ० २४३ ]

६९–अग्रपश्चाड्डिमच्[2]। ( ४।३।२३ वा० )

( ९९ ) "अग्रपश्चाड्डिमजिति छान्दसम्" इति भागवृत्तिः। [ भाषावृत्तिः–पृ० २५४ ]

७०–पदोत्तरपदं गृह्णाति। ( ४।४।३९ )

( १०० ) पदोत्तरपदिकः। एतद् भागवृत्तिकृतो [3]भाषावृत्तिकृतश्चाभीष्टम्। [4]जयादित्येन त्वन्यथा व्याख्यातम्। [ सक्षिप्तसारटीका–तद्धित० १९५ ]

१ तथा च दृश्यते—"रूपलावण्यसम्पन्न कलाकुशलयौवनम्। यस्य पुण्यकृतः प्रेष्यं सफलं तस्य जीवितम्॥" इति सीरदेवोद्धृत. श्लोक.। [ परिभाषावृत्ति–पृ० ५८ ]

२ 'अग्रादिपश्चाड्डिमच् स्मृत ' इति भाष्यवार्त्तिकम्।

३ 'पदोत्तरपदिक.' इत्यत्र भाषावृत्तिकृतो या सम्मतिर्निर्दिष्टा सा चिन्त्या। भाषावृत्तौ तादृशोदाहरणस्यानुपलम्भात्, पौर्वपदिक औत्तरपदिक. प्रातिपदिकमित्याद्युदाहरणानां दर्शनाच्च।

४ जयादित्येन तु पदशब्द उत्तरपदं यस्य तस्मादित्येवं व्याख्याय पौर्वपदिकः, औत्तरपदिक इत्युदाहरणे उपन्यस्ते।

### ७१-स्तेनाद्यन्नलोपश्च । ( ५।१।१२५ )

( १०१ ) "स्तैन्यशब्दस्तु [1]पाञ्चायतलौहितक इतिवदागमिकः" इति भागवृत्तिः ।

[ भाषावृत्तिः-पृ० ३०६ ]

### ७२-योपधाद् गुरूपोत्तमाद् वुञ् । ( ५।१।१३२ )

( १०२ ) साहाय्यमित्यपि ब्राह्मणादि-[ ५।१।१२४ ] त्वादिति जयादित्यः । नेति भागवृत्तिः । [ भाषावृत्तिः-पृ० ३१० ]

( १०३ ) जयादित्यमतेन साहाय्यमित्यपि, न भवति चेति भागवृत्तिः ।

[ दुर्घटवृत्तिः-पृ० ८६ ]

( १०४ ) साहाय्यमिति जयादित्यः, नेति भागवृत्ति. । [ हरिनामामृतम्-सू० २६०६ ]

### ७३-धान्यानां भवने क्षेत्रे खञ् । ( ५।२।१ )

( १०५ ) धान्यशब्देनात्र तद्विशेषवाचिनः शब्दा गृह्यन्ते, न तु धान्यशब्दः । ·····भागवृत्तिकारस्तु 'धान्यीनम्' उदाजहार । [ सङ्क्षिप्तसारटीका-तद्धितपरि० ६०३ ]

( १०६ ) भागवृत्तिकारस्तु 'धान्यकम्' ( ? धान्यीनम् ) उदाजहार ।

[ अनिर्ज्ञातकर्तृकाऽमरटीका-द्र० मद्रास ओरियण्टल जर्नल सन् १६३२ पृ० २५३ ]

( भाषावृत्तिकारो धान्यविशेषवाचिन उदाहरन् 'धान्यीनम्' अप्युदाजहार । तेन तन्मते धान्यपदस्य स्व रूप तद्विशेषवाचिनश्चेत्युभयमपि गृह्यत इति स्पष्टम् । )

### ७४-अद्यश्वीनाऽवष्टब्धे । ( ५।२।१३ )

( १०७ ) कथमद्यश्वीनो वियोगः ? विजायत इत्यस्यानुवृत्तेरिति जयादित्यः । "स्त्रीलिङ्ग निर्देशादुपमानस्याप्यसभवान्नैतत्" इति भागवृत्तिः । [ भाषावृत्तिः-पृ० ३१४ ]

### ७५ सस्येन परिजातः । ( ५।२।६८ )

( १०८ ) ···· ····· ·······सस्यकः ॥ १८७६ ॥

---

[1] इमं सृष्टिधर इत्थं व्याचष्टे—"पञ्चायतस्य भाव. पाञ्चायतम् । लोहितको मणिः, तस्य भावो लौहितकम् । एतौ शब्द्येते । न चानयोरञोऽणो वा विधाने सूत्रमस्ति । तथा च 'अण्' इति योगविभागाद् यथेदं तथा स्तेनात् स्तैन्यमिति च कल्प्यमिति भावः । आगमः परम्परा, तत आगत आगमिकः । 'चौरिका स्तैन्यचौर्ये च' [ २।१०।२५ ] इत्यमरोऽपि" इति । [ द्र० भा० वृ० पृ० ३०९ टि० ]

भागवृत्तिकृता तूक्तं सस्यसम्पन्नवस्तुषु ।
व्रीहिशाल्यादिकेष्वेव स्थावरेष्वत्र भेदवत् ॥ १८८० ॥
यत्त्विदं गुणसम्पन्ने जयादित्येन भाषितम् ।
अप्रतिलोकतया तस्य विरसत्वादुपेक्षितम्[1] ॥ १८८१ ॥

[ नानार्थार्णवसंक्षेपः केशवकृत.–भा० २ पृ० २११ ]

७६ ऊषसुषिमुष्कमधो रः । ( ५।२।१०७ )

नगपांसुपाण्डुभ्यश्चेति वक्तव्यम् । ( काशिका )

( १०६ ) पाण्डुगुणयोगात् 'नगपाण्डुपासुभ्यो रः' इति रः । अस्यानार्षत्वात् पाण्डुरोऽसाधुरिति भागवृत्तिकृतो दुर्ज्ञान जयादित्य प्रति वाम्यमात्रजनितम् । भाष्यविरुद्ध हि चेद न त्वयुक्तम्, वृद्धान्तरोक्तानामन्येषामपि ग्राह्यत्वात् । भाष्यानुक्ताना भट्टिकाव्योक्तानामन्यथाऽप्रामाण्यापत्तेः । अयं च शब्दार्णवकारादिभिरपि परमशिष्टैरनुशिष्टः ।

[ रायमुकुटकृताऽमरटीका–द्र० ओरियण्टल कान्फ्रेंस बनारस जिल्द १, पृ० २७५ ]

७७ रजःकृष्यासुतिपरिषदो वलच् । ( ५।२।११२ )

( ११० ) 'या सम्प्रति प्राक् परिषद्वलानाम्' इति व्योषः[2] । [3]'परिषद्वलान् महाब्रह्मैः' [ ४।१२ ] इति भट्टिः । ( इह तु ) नवाक्षरैकपादेऽपि वृत्तभेदोऽस्यास्तीति । यथा–'प्रधाने कर्मण्यभिधेये[4] लादीनाहुर्द्विकर्मणाम्" [ १।४।५१ भाष्ये ] इति भागवृत्तिः[5] ।

[ भाषावृत्तिः–पृ० ३२६ ] ।

( १११ ) "कथम्–'परिषद्वलान् महाब्रह्मैः' इति भट्टिः, नवाक्षरेण च्छन्दोभङ्गात् । नवाक्षरेणैकपादे वृत्तभेदोऽस्ति । यथा–'प्रधाने कर्मण्यभिहिते लादीनाहुर्द्विकर्मणाम्' [ १।४।५१

---

१ अय भावः—भागवृत्तिकारमते सस्यक. शालिव्रीह्यादिष्वेव प्रयुज्यते । काशिकाकारस्तु–सस्यकः शालि., सस्यकः साधुः, सस्यको मणिरिति सर्वत्र प्रयुक्तवान् ।

२ 'घोषः' इति दुर्घटवृत्तिः–पृ० ८६ ( घोषोऽश्वघोष इत्यर्थः । )

३ 'पर्षद्वलान्' इति साम्प्रतिकः पाठः ।

४ 'अभिहिते' इति दुर्घटवृत्तिः–पृ० ८७

५ भागवृत्तिकृतोद्धृतः पाठो भाष्येऽन्यथोपलभ्यते । तद्यथा—'प्रधानकर्मण्याख्येये' इति । अस्मिन् पाठेऽष्टाक्षरैकपाद एव । गणरत्नमहोदधिकारोऽप्येवमाह । द्रष्टव्याग्रिमा टिप्पणी ।

भाष्ये ] इति । तथा-'तस्मै तिलोदक दद्यादपुत्राय भीष्मवर्मणे' । एव च न छन्दोभङ्गः" इति भागवृत्तिः[1] । [ दुर्घटवृत्तिः-पृ० ८७ ]

### ७८-किमोऽत् । ( ५।३।१२ )

( ११२ ) भागवृत्तिकारस्तु [2]भाषायामेतन्नेच्छति । [ पदमञ्जरी-भा० २ पृ० ३३६ ]

( ११३ ) त्र ( ल ) मपि केचिदिच्छन्तीति जयादित्यः । कुत्र क्व इति रूपद्वयम् । कुत्र इत्यस्मात् तमिति (?) भागवृत्तिः । [ सक्षिप्तसारटीका-सुबन्त० ३२२ ]

### ७९-शीले को मलोपश्च । ( ५।३।७३ वा० )

( ११४ ) "कुर्वन्त्येव हि तूष्णीका राजन् गम्भीरवेपसः ।
लघवो घोषयन्त्येव न तु कुर्वन्ति किञ्चन ॥" इति भागवृत्तिः ।

[ उज्ज्वलदत्तस्य-उ० वृ० पृ० १५२ ]

---

१ "आसुतिपरिषद्रजश्शब्दानां यौगिकत्वं केचित् प्रतिपन्नाः । तन्मते आसुतिमान् परिषद्वान् रजस्वान् ग्राम इत्यपि भवति । परिषच्छब्द एव गृह्यते । यस्त्विदानीन्तनपुस्तकेषु सयोगः परिषच्छब्दो (? सयोगवान् पर्षच्छब्दो ) दृश्यते स प्रमादपाठ एव । पुराणेषु हि भाष्यपुस्तकेषु 'परिषदो वलच्' इति पाठः । काव्येषु-'श्रीहर्षो निपुणः कवि. परिषद्प्येषा गुणग्राहिणी' इत्यादिषु परिषच्छब्द एव दृश्यते । कथ तर्हि—'परिषद्वलान् महाब्रह्मैराट नैकटिकाश्रमान्' इत्यनुष्टुप् ? अत्र हि रिशब्दे पृथगवस्थिते नवाक्षर. पादो भवति । न चैतद्युक्तम्-त्रयः पादा अष्टाक्षरा अनुष्टुप्, एको नवाक्षर इति । उच्यते-अयमप्यस्ति वृत्तप्रभेदो यत्रैक· पादो नवाक्षरोऽन्येऽष्टाक्षराः । यथा-"प्रधाने कर्मण्यभिधेये लादीनाहुर्द्विकर्मणाम् । अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणाम् ॥" [ महाभा० १।४।५१ ] इति । अत्र ह्याद्य एव पादो नवाक्षरः, परिशिष्टा अनुष्टुभ एवेति कश्चिद् ब्रूते । तत्त्वतिसूक्ष्मेक्षिकयोच्यते, यतो व्याकरणलक्ष्यं च द्वाभ्यामपि शब्दाभ्यां व्याप्तम् । क्षीरस्वामिनाऽपि-'मार्ष मारिष इत्यपि, यथा पर्षत् परिषत्' [ अमरटीका १।६।१४ ] इति टीकायां विवृतम् । किञ्च, यो नवाक्षर. पाद उदाहरणीकृत., सोऽपि न सगच्छते, 'प्रधाने कर्मण्याख्येये' इति दर्शनात्" [गणरत्नमहोदधि -पृ० २३८] । अत्रोद्धरणे रेखाङ्कितपदेष्वयं विशेष.—( १ ) रजस्वान् ग्राम., अत्र धर्मशास्त्रेष्वसकृत् प्रयुज्यमानः 'रजस्वला नद्यः' इत्यनुसन्धेय. । ( २ ) कश्चिद् ब्रूते भागवृत्तिकृदित्यर्थ. । ( ३ ) द्वाभ्यामपि शब्दाभ्याम्-पर्षत्परिषच्छब्दाभ्यां वलज् दर्शनादित्यर्थः । "पृषोदरादित्वादिकारलोपे एकदेशविकारद्वारेण पर्षच्छब्दादपि वलज्" इति केशवः [ भाषावृत्ति.-५।२।११२ ] । एतेन केशवमते सूत्रे 'परिषत्'-शब्दो द्रष्टव्यः ।

२ 'एतत्'-पदेन 'कुत्र' इत्यस्य परामर्शः । त्रलमपि केचिदिच्छन्तीति काशिका [५।३।१२] ।

( ११५ ) तथा च भागवृत्तौ श्लोकः—

"कुर्वन्तोऽपि हि तूष्णीका राजन् गम्भीरचेतसः।
लघवो घोषयन्त्येव न कुर्वन्ति च केचन॥" इति।

[ भाषावृत्त्यर्थविवृतिः[1] ]

## ८०–बहुव्रीहौ संख्येये डजबहुगणात्। ( ५।४।७३ )

( ११६ ) अत एव भागवृत्तिकृतोक्तम्—निस्त्रिंशाद्यर्थम्[2]।

[ संक्षिप्तसारटीका–समास० २७९ ]

## ८१–शेषाद्विभाषा। ( ५।४।१५४ )

( ११७ ) 'नद्यृतश्च'इत्यतः 'शेषाद्विभाषा' इत्यत्र चकारोऽनुवर्तते। स चानुक्तसमुच्चयार्थः। तेन प्रतिषेधविषयेऽपि कः, निश्रेयस्क इति भागवृत्तिन्यासकाराश्रद्धयारक्षितः (?)।

[ संक्षिप्तसारटीका–समास० २७६ ]

## ८२–सन्यङोः। ( ६।१।९ )

( ११८ ) भागवृत्तिकारस्त्वाह—"पूर्वसूत्रे [ ६।१।८ ] धातोरनभ्यासस्येति द्वयमपि प्रत्याख्याय भाष्यकारेणोक्तम्—'तिष्ठतु तावत् सान्यासिक धातुग्रहणम्' इति। उत्तरार्थमिति भावः। अनभ्यासग्रहणस्य तु न किञ्चित् प्रयोजनमुक्तम्, ततश्चोत्तरार्थमपि तन्न भवतीति भाष्यकारस्याभिप्रायो लक्ष्यते। तेनात्र[3] भवितव्यमेव द्विर्वचनेन" इति।

[ पदमञ्जरी–भा० २ पृ० ४२६

---

१ द्रष्टव्या–भाषावृत्तिः–पृ० ३४४ टि०।

२ अत्र–'डच्प्रकरणे सख्यायास्तत्पुरुषस्योपसख्यान निस्त्रिंशाद्यर्थम्' इति, 'अव्ययादेरिति वक्तव्यम्' इति च वार्त्तिकमनुसन्धेयम्।

३ 'लोलूय + सन्' इत्यत्र। अय भाव —अनभ्यासस्येति प्रत्याख्यानाद् यङन्तात् सनि भवितव्यमेव द्विर्वचनेन। तेन लोलूयतेः सनि 'लुलोयिषते' इति रूप भागवृत्तिकारमत इष्टमिति गम्यते।

इदमत्रावधेयम्–चान्द्रभोजव्याकरणे विहायान्येष्ववर्वाचीनव्याकरणेष्वेकेषां मतेनाभ्यासस्य पुनर्द्वित्वमुच्यते। यथा—"चस्यैके, च ( अभ्यास ) संज्ञकस्य द्वे न स्त इत्येके, लोलूयिषते। अस्त्येवेत्यपरे, लुलोलूयिषते' इति शब्दार्णवचन्द्रिकाकारः [४।३।५]। "द्विरेकेषाम्" इति जैनशाकटायनम् [४।१।५०]। "द्विरुक्तस्य द्विर्वचनं न भवतीत्यर्थः। लोलूयिषते, पोपूयिषते। अन्येषां भवति—सुसोषूयिषते, प्राणिणिनिषते" इति तस्य चिन्तामणिवृत्तिः। "पुनरेकेषाम्"

८३–धात्वादेः षः सः । ( ६।१।६४ )

अजदन्त्यपराः सादयः षोपदेशाः स्मिट्स्वदिस्विदिस्वञ्जिस्वपयश्च,

[1]सृपिसृजिस्तृस्त्यासेकृसृवर्जम् [ महाभाष्यम् ] ।

( ११६ ) भागवृत्तौ तु 'सीकृसेकृ' इत्यधिकमपि पठ्यते[2] । तच्च 'सीकृ सेचने' इति श्रीधरो[3] व्याकरोत् । 'एतानष्टौ वर्जयित्वा' इति चाधिक्यं मुक्तकण्ठमुक्तवान् ।

[ दैवस्य पुरुषकारटीका–पृ० १६ ]

८४–णो नः । ( ६।१।६५ )

( १२० ) 'नॄ' इति प्रायो न [4]पठन्ति ( भागवृत्तिकारादयः ) । तथा च [5]श्रीधरो नॄत्यागेन नृत्यादीन् पठित्वा 'एतान् सप्त वर्जयित्वा' इत्याह । [दैवस्य पुरुषकारटीका–पृ० ६६]

( १२१ ) [6]भागवृत्तौ तु नाधृधातुरपि णोपदेशः पठ्यते ।

[ सक्षिप्तसारटीका–तिङन्त० १७६ ]

---

इति हैमव्याकरणम् [ ४।१।१० ] । "एकेषां मते द्वित्वे पुनर्द्वित्वं स्यात्" इति तदीया लघ्वी वृत्तिः । चन्द्रस्तु-"पुनः" [५।१।६], यद्द्विरुक्तं तत् पुनर्न द्विरुच्यते । जुगुप्सिषते, लोलूयिषते" इति स्पष्ट पुनर्द्विर्वचनं प्रतिषिद्धवान् । भोजोऽपि चान्द्रमतमनुससार । यत्तु भोजव्याकरणसूत्रसम्पादकेन–'अयि रः', 'पुनः' इति द्वे सूत्रे एकीकृत्य मुद्रापिते तदयुक्तम् ।

१ 'सृपिसृजिस्तृस्तॄस्त्यासेकृवर्जम्' ···· 'स्तृ' इति ह्रस्वान्तं केचिन्न पठन्ति । तथा च 'स्तॄञ् छादने' इति दीर्घान्तमेव जिनेन्द्रादयः प्राय. पठन्ति । श्रीधरस्तु–"स्तॄञ् छादने दीर्घः, स्तृञ् छादने ह्रस्वः" इत्युभावप्युपन्यास्थत् [ दैवस्य पुरुषकारटीका–पृ० १६ ] । एतेन श्रीधरमते–'सृपिसृजिस्तॄस्तृस्त्यासीकृसेकृसृवर्जम्' इति भाष्यपाठो द्रष्टव्य. ।

२ पुरुषकारेण भागवृत्तिकारोक्तः 'सीकृ'-पाठः प्रत्याख्यातः । तथा हि—"तत्र चाद्यः पक्षः शीकर इति प्रयोगानुगुणः । योऽपि षोपदेशलक्षणे सीकृपाठ उक्तः सोऽप्येवमेव प्रत्युक्तः [ दैवस्य पुरुषकारटीका–पृ० ४६ ] ।

३ श्रीधरो भागवृत्तेर्व्याख्याता । [ द्र० संस्कृत व्याकरणशास्त्र का इतिहास पृ० ३४१ ] ।

४ महाभाष्ये—"सर्वे नादयो णोपदेशा., नृतिनन्दिनर्दिनक्किनाटिनाथृनाधृनॄवर्जम्" इत्यत्र नॄधातुरपि पठ्यते । त भागवृत्तिकारादयो न पठन्तीति भावः ।

५ श्रीधरो भागवृत्तेर्व्याख्याता । माधवीयधातुवृत्तौ–"नृतिनन्दिवाक्ये नाधृवर्जं नृत्यादीन् पठित्वैतान् सप्त वर्जयित्वेति वदन् श्रीकरो ( क्वचित् श्रीकारो ) ऽप्यत्रैवानुकूल. ।" [ नाधृधातौ ] इति । अत्र श्रीकरः श्रीकारो वा पाठः श्रीधरस्यैवापभ्रंश इति प्रतीयते ।

६ यथा तु पुरुषकारपाठो धातुवृत्तिपाठश्च तथा भागवृत्तौ 'नाधृ'-धातुर्णोपदेश इति न शक्यते वक्तुम् । मैत्रेयाभरणकारौ नाधृधातुं णोपदेशं मन्येते, नान्ये वैयाकरणाः ।

### ८५-दिव उत्। (६।१।१३१)

(१२२) "बहुलवचनात् केवलादपि [1]कनिन्निति। तेन दिवौकस इत्यत्र वृद्धिर्भवति" इति 'दिव उत्' [६।१।१३१] इत्यत्र भागवृत्तिः। [उज्ज्वलदत्तस्य-उ० वृ पृ० ५८]

(१२३) "कनिन्प्रत्ययान्तेन दिवा ओको येषाम्" इति भागवृत्तिः।
[दुर्घटवृत्तिः-पृ० ६७]

(१२४) यद्यपि दिवर्थे दिवमिति निश्चितम्, तथाप्योकारनिवृत्त्यर्थमाह-दिवौकसः। तथा च भागवृत्तिकृता विमलमतिनाप्येष निपातितः। [कातन्त्रपरिशिष्टम्-सन्धि० १४२]

### ८६-अपरस्पराः क्रियासातत्ये। (६।१।१४४)

(१२५) "सूत्रार्थे केचिदनुस्वारस्य च लोपमिच्छन्ति। मास्पचनम्, मास्पाक इति। तत्तु तन्त्रभाष्यवाक्यस्याभावात् सन्दिग्धम्" इति भागवृत्तिः। [भाषावृत्तिः-पृ० ३३९]

### ८७-स्त्रियाः पुंवद् भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु [६।३।३४]

(१२६) दृढभक्तिरित्यादि त्वविवक्षितस्त्रीत्वात्, पूर्वपदस्य "आर्षत्वात्" इति भागवृत्तिः।
[संक्षिप्तसारवृत्तिः-समास० ४१६]

### ८८ जातेश्च। (६।३।४१)

(१२७) अमानिनीत्येव-कठमानिनी। 'कठीमानिनी' इति भागवृत्तिः।
[संक्षिप्तसारवृत्तिः-समास० ४३६]

(१२८) अत्र टीकाकारः-कठीमानिनीति भागवृत्तिरित्यमानिनीत्यस्यानुवृत्तिमसौ नाङ्गीकरोति। [संक्षिप्तसारटीका-समास० ४३६]

### ८९ इको ह्रस्वोऽङ्यो गालवस्य। (६।३।६१)

(१२९) "अद्भ्य उत्तारक उदपः (उड्डप.) प्लवः। 'ऊदनोर्देशे' [६।३।९८] इति दीर्घनिर्देशादन्यत्रापि भवति" इति 'इको ह्रस्वोऽङ्यो गालवस्य' [६।३।६१] इत्यत्र भागवृत्तिः।
[उज्ज्वलदत्तस्य-उ० वृ० पृ० ८१]

(१३०) "भ्रुवोर्भङ्गो भ्रभङ्गो भ्रुभङ्गो भ्रूभङ्गश्चेति रूपत्रयम्। 'भ्रूकुंसादीनामकारो वा' [६।३।६१ वा०] इत्यकारह्रस्वौ, पक्षे दीर्घ एवावतिष्ठते।" एतत्सर्वम् इको ह्रस्वः' [६।३।६१] इत्यत्र भागवृत्तिः। [उज्ज्वलदत्तस्य-उ० वृ० पृ० ८४]

---

१ 'कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः' [उ० १।१४२] इति सूत्रेणेति शेषः।

९० समानस्य च्छन्दस्यमूर्धप्रभृत्युदर्केषु । ( ६।३।८४ )

( १३१ ) इह समानस्येति योगविभागः, तेन सपक्षसधर्मसजातीयाः सिद्धयन्तीति वामनवृत्तिः । "अनार्षोऽय योगविभागः । तथा ह्यव्ययानामनेकार्थत्वात् सदृशार्थस्य सहशब्दस्यैते प्रयोगा. । कथ नाम समानपक्ष इत्यादयोऽपि भवन्ति"[1] इति भागवृत्तिः ।

[ भाषावृत्तिः–पृ० ४२० ]

( १३२ ) "अव्ययानामनेकार्थत्वात् सहशब्दस्य समानार्थस्य सभावे सपक्षः, समानशब्दे तु समानपक्षः" इति भागवृत्तिः । [ दुर्घटवृत्तिः–पृ० १०० ]

( १३३ ) एवम्–"सपक्षः सधर्मा सजातीयः" इति भागवृत्तिः ।

[ सक्षिप्तसारवृत्तिः–समास० ४७३ ]

९१ विभाषा पुरुषे । ( ६।३।१०६ )

( १३४ ) "ईषदर्थे च वा" इति भागवृत्तिः । ईषत्पुरुषः, कुपुरुषः, कापुरुषः[2] ।

[ सक्षिप्तसारवृत्तिः–समास० २४८ ]

९२–अन्येषामपि दृश्यते । ( ६।३।१३७ )

( १३५ ) दृशिग्रहणादिह पूरुषो नारक इत्यादावप्यय दीर्घ इति वामनवृत्तिः । "अनेनोत्तरपदविधानादप्राप्तिरिति पूरुषादयो दीर्घोपदेशा एव सज्ञाशब्दाः" इति [3]भागवृत्तिः ।

[ भाषावृत्तिः–पृ० ४२७ ]

---

१ अत्र कश्चित् पाठस्त्रुटितः प्रतिभाति । अस्यायं भावः—सहशब्देन समासे तस्य सादेशे सपक्षसधर्मादयो भविष्यन्ति, समानशब्देन समासे समानपक्षसमानधर्मादय इति ।

२ पुरुष उत्तरपदे ईषत्पुरुष इत्यपीष्यत इति भागवृत्तिकारमत स्यात् । तथा सति विभाषापदमुभयोः शेष इति द्रष्टव्यम् ।

३ सर्वत्र भाष्यैकरणः सन्नप्यत्र भागवृत्तिकारो भाष्यमतमुपेक्षितवान् । भाष्ये तु–"बहुलं छन्दसि दीर्घत्वं दृश्यते । तद्यथा पूरुषः नारक." [ ६।४।७४] इति, "येषामपि दीर्घत्वं नारभ्यते तेषामपि छन्दसि दीर्घत्व दृश्यते । तद्यथा–पूरुषः नारक." इति चासकृत् पठ्यते । वस्ततस्तु–"पूरुषादयो दीर्घोपदेशा एव संज्ञाशब्दाः" इति भागवृत्तिकारमतमेव युक्तम् । भाषायामप्येषां बहुत्र प्रयोगदर्शनात् । "छन्दोवत् कवय. कुर्वन्ति" इति स्वगतिका गतिः [द्र० स० व्याकरणशास्त्रका इतिहास–पृ० ३३ ] । वस्तुतस्त्विमे छान्दसा इमे लौकिका इत्ययं विभागस्त्वतिपुरा नासीदेव । सर्वेषामेव छान्दसत्वेनाभिमतानामतिपुरातनकाले लोकेऽपि प्रयोग आसीदेव । [ द्र० संस्कृत व्याकरणशास्त्र का इतिहास–पृ० ३–४१ ]

९३– दम्भेरेत्वं वक्तव्यम् । ( ६।४।१२० काशिका )

९४–श्रन्थेश्चेति वक्तव्यम् । ( ६।४।१२२ काशिका )

( चकारस्यानुक्तसमुच्चायकत्वाद् ग्रन्थेरपि )

( १३६ ) 'दम्भिश्रन्थिग्रन्थीना नलोपश्च' [ संक्षिप्तसारः–तिङन्त० ८०६ ] । वामनेनास्य नित्यत्वमुक्तम् । भागवृत्तिकृता त्वनार्षत्वमुक्तम्[1] । [ संक्षिप्तसारटीका–तिङन्त० ८०६ ]

९५–न शसददवादिगुणानाम् । ( ६।४।१२६ ) (?)

( १३७ ) भागवृत्तौ [2]त्वनयोर्विकल्पेन 'वेमतुः' इत्युदाहृतम् ।

[ धातुवृत्तिः–पृ० १४८ ( टुवमधातौ ) ]

( १३८ ) भागवृत्तौ तु 'वेमतुः'[3] इत्याद्यप्युदाहृतम् ।

[ सिद्धान्तकौमुदी–पृ० २६० ( टुवमधातौ ) ]

९६–अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि । ( ७।१।५१ )

अश्ववृषयोर्मैथुनेच्छायाम् । ( ७।१।५१ वा० )

( १३९ ) अश्वस्यति वडवा । [4]वृत्तिकृतोऽभीष्टमेतदुदाहरणम् । वामनभागवृत्तिकाराभ्यामपि दर्शितम् । [ सक्षिप्तसारटीका–तिङन्त० ५१२ ]

---

१ यत्तु भागवृत्तिकृता–"देभतुः, देभुः, श्रेथतु, श्रेथुः, ग्रेथतुः, ग्रेथुः" इत्यादिप्रयोगाणामनार्षत्वमुक्तं तदयुक्तम्। 'देमतु', देभु.'इति प्रयोगार्थम् "दम्भ एत्वम्, नलोपस्यासिद्धत्वात्" इति वार्त्तिकस्य भाष्ये पठ्यमानत्वात । वार्त्तिके–'नलोपस्यासिद्धत्वात्' इति यो हेतुरुक्त स तदैव समर्थो भवितुमर्हति यदा–'श्रन्थिग्रन्थिदम्भिस्वञ्जीनामिति वक्तव्यम्' [ १।२।६ ] इति जयादित्योक्त व्याकरणान्तरीयं वचनमभिप्रेतं स्यात्। अन्यथा दम्भे. परस्य लिट. कित्त्वाभावात् 'अनिदिताम्' [ ६।४।२४ ] इति नलोपस्य प्राप्तिरेव नास्ति, कुतस्तस्यासिद्धत्वं स्यात् ? अतो भाष्यकारस्य व्याकरणान्तरीयं सकलमपि वचनमभिप्रेतमित्येकदेशस्वीकृत्या सूचितम् । एकदेशस्वीकृत्या सकलमपि प्राचां लक्षणं स्वीकृतं भवतीति भाष्यकृता—"एवं तर्हि सिद्धे सति यदतिङ्ङिति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यः–अनयोर्योगयोर्निवृत्तं सुप् सुपेति । किमेतस्य ज्ञापने प्रयोजनम् ? गतिकारकोपपदाना कृद्भि. सह समासो भवतीत्येषा परिभाषा न कर्तव्या भवति" इत्यादिना ज्ञापितम् । अन्यथा 'उपपदमतिङ्' [ २।२।१९ ] इत्यत्रोपपदस्यैव श्रवणाद्गतिकारकयोर्विषये ज्ञापकमनुपपन्नं स्यात् ।　　२ 'एत्वाभ्यासलोपयोः' इत्यर्थः ।

३ "वेमुश्च केचिद् रुधिरम्' [ सप्तशती २।५७ ] इत्यादिप्रयोगानुरोधेन तथोदाहृतमित्याहु." इति तत्त्वकौमुदी । 'वेमुश्च रुधिर वीराः' [ महाभारते भीष्म० ५७।१५ ] इति च ।

४ संक्षिप्तसारवृत्तिकृतो जुमरनन्दिन इति शेषः ।

## ९७–युजेरसमासे । ( ७।१।७१ )

( १४० ) [1]'युनक्ति' इति निर्देशः 'युज समाधौ' इत्यस्य दैवादिकस्य निरासार्थः । तेन–"युजमापन्ना ऋषयः" इति भागवृत्तिकारः । केचित् सामान्यग्रहणमिच्छन्ति ।

[ संक्षिप्तसारटीका–सुबन्त० २३५ ]

## ९८–एकाच उपदेशेऽनुदात्तात् । ( ७।२।१० )

( १४१ ) ( 'शक्लृ व च घसि' इत्यादयः संक्षिप्तसारीया अनिट्कारिकाः ) 'शक्लृ शक्तौ' स्वादिः । लृकारान्तनिर्देशात् 'शक मर्षणे' इति दैवादिकस्योभयपदिनो न ग्रहणम् । वामनभागवृत्तिकाराभ्या चाय विशेषो न व्याख्यातः[2] । [ संक्षिप्तसारटीका–तिङन्त० ७०४ ]

( १४२ ) ज्ञानार्थलाभार्थविदो इड् ( इट् ) एव भवतीति जयादित्यजिनेन्द्रविनीत कीर्तीना मतम् । तत्र वामनभागवृत्तिकृतोः स्वरसः[3] ।

[ संक्षिप्तसारटीका–तिङन्त० ७०४ ]

## ९९–घुषिरविशब्दने । ( ७।२।२३ ) (?)

( १४३ ) भागवृत्तिकारा घुषिं शब्दार्थं [4]पेठुः ।

[ धातुवृत्तिः–पृ० ११६ ( घुषिर्धातौ )

( १४४ ) घुषिर् शब्दार्थं इति तु क्षीरस्वामिधनपालभागवृत्तिकाराः ।

[ दैवं पुरुषकारश्च–पृ० ११० ]

## १००–स्नुक्रमोरनात्मनेपदनिमित्ते । ( ७।२।३६ )

### क्रमेः कर्तर्यात्मनेपदविषयात् कृति प्रतिषेधः । ( ७।२।३६ वा० )

( १४५ ) कथम्–'चिक्रसया कृत्रिमपत्त्रिपङ्क्तेः' इति माघः [ ३।५१ ], क्रमेरनात्मने-

---

१. संक्षिप्तसारे–'युनक्तेरसमासे' इति सूत्रपाठः । तत्पदं निर्दिशति–'युनक्ति' इति ।

२ 'शकिस्तु कान्तेष्वनिडेक इष्यते' इत्यनिटकारिकाव्याख्यान इति शेष । 

३ 'विद्यति विन्त इत्यपि' इत्यनिट्कारिकाव्याख्यान इति शेष । अत्र श्यना श्नमा च निर्देशाद् ज्ञानार्थकस्य वेत्तेर्लाभार्थकस्य विदन्तेरिट्प्रतिषेधो न भवति ।

४ "...भागवृत्तिकाराः–'घुषिरविशब्दनार्थः' इति पेठु." इति पाठान्तरं मैसूरमुद्रितायाम् [ धा० वृ० भा० २ पृ० ३७० ] । तच्चासम्यक् , क्षीरतरङ्गिण्यां 'घुषिर् शब्दार्थः' इत्यस्यैव पाठस्य दर्शनात् ।

पदनिमित्तत्वादिट्प्रसङ्गात्। उच्यते, तर्ह्ययमनित्यत्वान्नेट्। "ग्रहे [1]जिघृक्षयेति पाठः" इति भागवृत्तिः। जिघासयेति वा पाठः। [ दुर्घटवृत्तिः–पृ० ११३ ]

( १४६ ) कथम्–'चिक्रसया कृत्रिमपत्त्रिपङ्क्तेः' इति माघः [ ३।५१ ] आत्मनेपदस्य कर्तरि कृतश्चाभावाद् इडा ( इटा ) भवितव्यम्। अनन्तरमय नाटीना (?) प्रमादपाठः। "प्राच्यास्तु [1]'जिघत्सया' इति पठन्ति" इति भागवृत्तिः। [ सक्षिप्तसारटीका–तिङन्त० ७१७ ]

## १०१–किरश्च पञ्चभ्यः। ( ७।२।७५ )

( १४७ ) 'वॄतो वा' [ ७।२।३८ ] इत्यस्येटो दीर्घो नेहास्तीति वामनवृत्तिः। "अस्तीति" भागवृत्तिः। [ भाषावृत्तिः–पृ० ४८२ ]

( १४८ ) भागवृत्तौ त्वत्रापि दीर्घविकल्पो दृश्यते।

[ धातुवृत्तिः–पृ० ३३८ ( कृधातौ ) ]

## १०२–त्यदादीनामः ( ७।२।१०२ )

( १४९ ) स्यश्छन्दसि बहुलम्' [ ६।१।१३३ ] इति पाणिनिलक्षणे छन्दोग्रहणादनुमीयते भाषायामपि स्यो भवतीति। तथा हि–'त्यदादीनाम् अ विभक्तौ' इति सर्ववर्मा, [2]'त्यदादीनामच्छन्दोविहित आदेशः' इति चन्द्रः। तस्मात्–"स्य इति छान्दसम्" इति भागवृत्तिकारस्य भ्रमः। [ सक्षिप्तसारटीका–सुबन्त० २८५ ]

## १०३–नोदात्तोपदेशस्य मान्तस्यानाचमेः। ( ७।३।३४ )

( १५० ) विश्रामः—चन्द्रोऽत्र नित्या [3]वृद्धिमाह। भागवृत्तिकारस्तु नित्य वृद्ध्यभाव ( इत्याह )। [ सक्षिप्तसारटीका–सन्धि० ६ ]

( १५१ ) "यथालक्षणमप्रयुक्ते' [ महाभा० १।१।२४ ] इति 'उपराम उद्यामः' इत्येव भवतीति" भर्तृहरिणा भागवृत्तिकृता चोक्तम्। [ दुर्घटवृत्तिः–पृ० ११७ ]

---

१ दुर्घटवृत्तिकारो भागवृत्तेर्मते 'जिघृक्षया' इति पाठमाह, सक्षिप्तसारटीकाकृत्तु 'जिघत्सया' इति। कोऽत्र शुद्धः पाठ इति न शक्यते निश्चेतुम्।

२ 'त्यदां तसादिषु चा द्वे र.' इति चान्द्रं सूत्रम् [ ५।४।६८ ]।

३ 'मः सेटो नावम्यमिकमाचमविश्रमः' [ ६।१।४२ ] इत्यत्र विश्रम· पर्युदासात्। वामनस्तु–'सूर्यविश्रामा भूमिः' इत्यादिकमन्याय्यं मन्यते। 'वेः श्रमेर्वा' इति वर्धमानः। विश्रमः, विश्रामः।

१०८–क्विन् प्रत्ययस्य कुः । ( ८।२।६२ )

( १५७ ) कथं दृग्भ्याम्, दृशेः क्विपि कुत्वम् ? "प्रत्ययग्रहणसामर्थ्यात् क्विन्प्रत्ययो यस्माद्दृष्ट इति बहुव्रीहावन्यप्रत्ययान्तादपि पदान्ते कुत्वम्" इति भागवृत्तिः ।

[ दुर्घटवृत्तिः–पृ० १२५ ]

१०९–इञि च पदे । ( ८।३।२१ )

( १५८ ) भर्तृहरिणा चास्य नित्यार्थतैवोक्ता । तथा च भागवृत्तिकृता प्रत्युदाहरण-मुपन्यस्तम्—"तन्त्रे उतम्, तन्त्रयुतम्" इति ।

[ तन्त्रप्रदीपः–८।३।२१ ( द्र० न्यासभूमिका–पृ० १४ ) ]

११०–तिरसोऽन्यतरस्याम् । ( ८।३।४२ )

( १५९ ) 'तिरस्कृत्वा कष्ट ( ? काष्ठं ) गतः' इत्यत्रापि कस्कादित्वम्[1] । अत्र तिरस-स्तिर्यगर्थत्वेनान्तर्धानार्थाभावात्तिरोऽन्तर्धाने न श्रदादित्वम्[2], अतो न यच्[3] । भाष्यकारमता-नुसारेण सूत्रकृत इदमेवाभीष्टम् । भागवृत्तिकृताऽप्येतादृशमेव व्याख्यातम् । वामनादिस्वरसेन त्वन्तर्धान एव कस्कादित्वम् ( सत्वमित्यर्थः ) । [ संक्षिप्तसारटीका–सन्धि० १५० ]

१११–सहेः साडः सः । ( ८।३।५६ ) (?)

सहेः पृतनर्ताभ्यां च । ( ८।३।१०९ ) (?)

( १६० ) भागवृत्तिकारस्तु पृतनासाहमित्यत्रापि मूर्धन्यं नेच्छति ।

[ संक्षिप्तसारटीका–सन्धि० २४० ]

११२–अभिनिसः स्तनः शब्दसंज्ञायाम् । ( ८।३।८६ )

( १६१ ) 'विसर्गे वाच्ये' इति [4]भागवृत्तिकृतो मतम् । 'विसर्गे वर्णे च वाच्ये' इति वामनस्य मतम् । 'अभिनिष्टानो वर्णे' [ ६।४।७३ ] इति चन्द्रमतम् ।

[ संक्षिप्तसारटीका–सन्धि० २७३ ]

---

१ सत्वमित्यर्थः । यत् पाणिनीयानां सत्वं तत् संक्षिप्तसारे कस्कादिपदेनोच्यते ।

२ गतिसंज्ञेत्यर्थः ।

३ ल्यब् इत्यर्थः ।

४ भागवृत्तिकृतो मतमेवात्र युक्तम् । तथा हि–"विसर्जनीयोऽभिनिष्टानः" इति चतुरध्याय्याः सूत्रम् । आश्वलायनगृह्येऽपि–"नाम दध्युर्घोषवदाद्यन्तरन्तस्थमभिनिष्टानान्तं द्व्यक्षरं चतुरक्षरं वा" [ १।१३।५ ] इति ।

११३–अट्कुप्वाङ्नुम्व्यवायेऽपि । ( ८।४।२ )

( १६२ ) भागवृत्तिकृता प्रतिपादित नुमः पूर्वनिपातलक्षणव्यभिचारचिह्नात्[1] प्रेन्वन-मित्यत्र णत्वाभावः, [2]क्षुभ्नादित्वाद्वा । [ परिभाषावृत्तिः–पृ० १२ ]

११४–प्रातिपदिकान्तनुम्विभक्तिषु च । ( ८।४।११ )

( १६३ ) "तत्र च पूर्वपदाधिकारः, समासे च पूर्वोत्तरपदव्यवहारः । तत्कथमिह ( प्राहिण्वदित्यत्र ) णत्वमिति न [3]व्यक्तीकृतम्" इति भागवृत्तिकृतोक्तम् ।

[ परिभाषावृत्तिः–पृ० १२ ]

( १६४ ) प्राहिण्वनम् । भर्तृहरिसमतमिदमुदाहरणम्, भागवृत्तिकृताऽप्युदाहृतम् । अत्र णत्व वामनादीनामसंमतम्[4] । [ सक्षिप्तसारटीका–सन्धि० ३२८ ]

११५–कुमति च । ( ८।४।१३ )

( १६५ ) भागवृत्तौ तु–"....युजाक्रीड०" [ ३।२।१४२ ] इति घिनुणन्तमुदाहृत वस्त्र-योगिणाविति ।" [ तन्त्रप्रदीपः–८।४।१३ ( द्र०–न्यासः, भा० २, पृ० १११३ टि० ) ]

११६–अनितेरन्तः । ( ८।४।१९–२० )

( १६६ ) परेश्च । परस्य न भवतीत्येके ( पर्यनिति ) । अस्मिन् व्याख्याने 'हे प्रान्' इति रूपम् । अयमेव मुख्यः सूत्रार्थः । भागवृत्तिकृताऽप्येतदेवैकदेशीयमत [5]व्याख्यातम् ।

[ सक्षिप्तसारटीका–सन्धि० ३१५ ]

---

१ 'प्रातिपदिकान्तनुम्विभक्तिषु च' [ ८।४।११ ] इति सूत्रेऽल्पाच्तरस्य नुम. पूर्वनिपाते प्राप्ते तदभावलक्षणचिह्नादित्यर्थः ।

२ 'क्षुभ्नादिषु च' [ ८।४।३९ ] इति सूत्रेण ।

३ भर्तृहरिणेति शेष । [ द्र० परिभाषावृत्ति.–पृ० १२ ]

४ यथा त्वत्र परिभाषावृत्ते. पाठस्तथा भागवृत्तिकारः–'प्राहिण्वनम्' इत्यत्र णत्वं नानुमनुते । यथा च संक्षिप्तसारटीकाकृत· पाठस्तथा भागवृत्तिकारमतेऽपि णत्वमिष्यते । एवमुभयविध-मतभेदे कतमन्मतं भागवृत्तिकारस्येति न वयं विद्मः । महाभारते कर्णपर्वणि-'मानुष्यवाजि-मातङ्गान् प्राहिण्वन्तं यमक्षयम्' [ ७३।७५ ] इति प्रयोगदर्शनाण्णत्वं त्विष्यत एव ।

५ अयमभिप्राय.–'अनितेरन्त.' इति पाणिनीयमेकमेव सूत्रम् । भाष्यकृता सूत्रमेतद् द्विधा व्याख्यातम्—"अनितेरन्तर्ग्रहणं क्रियते सम्बुद्ध्यर्थम्, हे प्राण्' । अस्मिन् व्याख्यानेऽनिते-र्धातोर्नकारो योऽन्ते ( सामर्थ्यात् पदान्ते ) वर्तते तस्य णत्वं भवतीति सूत्रार्थ. । अपरम्–"यो वा तस्मादनन्तरः । अनितेः समीपे यो यो रेफस्तस्माद्यस्य ( णत्वं ) यथा स्यात् ।

११७–अणोऽप्रगृह्यस्यानुनासिकः । ( ८।४।५७ )

( १६७ ) 'अण् सानुनासिकः' इति वक्तव्यम् । अवसाने वर्तमानोऽण् सानुनासिको वा भवति–दधिँ दधि, मधुँ मधु, नदीँ नदी । व्यवस्थितविभाषयाऽत्रासन्धिविषये न स्यात्–अग्नी, वायू , अमी । 'द्विवचनसिद्धानामीदूदेताम्' इति,'अदसो माद् इण.' इत्यसन्धेरय विषयः । अथवा, एतन्न वक्तव्य छान्दसत्वात् । अत एव भागवृत्तौ भाषाभागे [1]नास्त्येतत् ।

[ सक्षिप्तसारटीका–सन्धि० १६० ]

## अनिश्चितस्थानानि

( १६८ ) भागवृत्तिकृता तु–'पक्तामूलत्यपान्तनमीषाते' (?), तन्मतेन शेषविवक्षाया षष्ठ्यत्र । [ दुर्घटवृत्तिः–पृ० ४७ ]

( १६९ ) "उष्ट्रो राष्ट्रो भ्राष्ट्र." इति भागवृत्तिः । [ उज्ज्वदत्तस्य–उ० वृ० पृ० १८६ ]

( १७० ) "पृषोदर मेदुर पृषत्" इति भागवृत्तिः ।

[ उज्ज्वलदत्तस्य–उ० वृ० पृ० २०६ ]

( १७१ ) 'तन्द्री प्रमिला' इति [2]त्रिकाण्डीपाठात् साधुत्वम्" इति भागवृत्तिकारः ।

[ श्वेतवनवासिनः–उ० वृ० पृ० ६३ ]

---

प्राणिति । इह मा भूत्–'पर्यनिति" इति । अस्मिन् व्याख्याने 'हे प्रान्' इत्येव प्राप्नोति, 'पदान्तस्य' [८।४।३७] इति णत्वस्य प्रतिषेधो भवति। वृत्तिकृता वामनेन सूत्रमेतद् विभज्य व्याख्यातम् । तेन तन्मते हे प्राण्' इति णकार एव भवति। भागवृत्तिकारस्तु भाष्यकारीय-मपरं व्याख्यानमनुसृतवान् । केशववृत्तौ तु विकल्प उक्त–'हे प्राण्, हे प्रान् वा' [ द्र०–भाषावृत्ति. ८।४।२० ] ।

१ 'अणोऽप्रगृह्यस्यानुनासिकः' इति सूत्रमित्यर्थः ।

२ अयममरकोशाद्भिन्नः कश्चित्त्रिकाण्डीकोशः । अमरकोशे तु– तन्द्री प्रमीला' [ १।७।३८ ] इति पाठः । 'यतस्त्रिकाण्डोत्पलिन्यादीनि नाममात्रतन्त्राणि' इति टीकासर्वस्वकारवचनाद्रार्सी-दमराद्भिन्न. कश्चित् त्रिकाण्डकोश इति सम्भाव्यते ।

कश्चित्त्रिकाण्डकोशो भागुरिकृतोऽप्यासीदिति पुरुषोत्तमदेववचनाज्ज्ञायते । तदुक्तम्— "शिवताति , शन्ताति., अरिष्टतातिः' अमी शब्दाश्छान्दसा अपि क्वचिद्भाषायां प्रयुज्यन्त इति त्रिकाण्डे भागुरिनिबन्धनाद्वाऽव्युत्पन्नसञ्ज्ञाशब्दत्वाद्वा सर्वथा भाषायां साधवः" [ भाषावृत्ति.– पृ० २८९ ] इति । विवृत च सृष्टिधरेण—"त्रिकाण्डे कोशविशेषे भागुरेरेवाचार्यस्य यदेषा निबन्धन तस्माच्च" इति [ द्र०–भा० वृ० पृ० २८९ टि० ] ।

( १७२ ) ततः-"धराधरेन्द्र व्रततीततीरिव' [माघ० १।५] इत्यसाधुः" इति [1]भाववृत्तिः ।

[ अनिर्ज्ञातकर्तृकाऽमरटीका-मद्रास ओरियण्टल जर्नल, सन् १९३२, पृ० २५३ ]

( १७३ ) भागवृत्तिकार विमलमति बलिया छेन ( = आह )—

विशेष्यस्य विशेषेण मिलितं युक्तमुच्यते ।
समासाख्यं तदेव स्यात् तद्धितोत्पत्तिरेव च ॥

[ व्याकरण दर्शनेर इतिहास-पृ० १७९ पादटिप्पणी ]

इति शम् ॥

---

१ अत्र कदाचित् 'भागवृत्तिः' इति पाठः स्यात् ।

# वेदान्तावतारः

श्रीशान्तिभिक्षुशास्त्री, शान्तिनिकेतनम् ।

वेदान्तावतारनामा लघुतमोऽयं प्रबन्धः सकलस्याद्वैतवेदान्तस्वरूपस्य परिचयायाभिन-वादर्शभूतः[1] क्रियते । अङ्गुलिमेये ह्यादर्शे यथा विशालाकृतिर्गजो मुष्टिमेयो भवति, तथैवास्मिन् प्रबन्धादर्शे विशालवेदान्तगजोऽपि सुखेन सर्वेषां मतिग्राह्यो भवितव्यः । षट्प्रकरणोऽयं प्रबन्धश्चतुश्चत्वारिंशदनुच्छेदात्मकः । अयमस्ति तत्र मातृकोद्देशः—

१ जीवब्रह्माभेदः ।
२ अभेदस्यानुभवविरुद्धता ।
३ अभेदस्य कर्मविरोधित्वम् ।
४ अविद्या विद्या च ।
५ विद्यायाः श्रुतिगम्यत्वम् ।

इत्यनुबन्धो नाम प्रथमं प्रकरणम् ॥

६ परा विद्या, अपरा विद्या च ।
७ परं ब्रह्म, अपरं ब्रह्म च ।
८ परापरब्रह्मणोर्विवेकः ।
९ परब्रह्मणो ह्यविज्ञेयता ।
१० परब्रह्मणो लक्षणम् ।
११ परब्रह्मणः समाधावभिसमयः ।
१२ अपरं ब्रह्म ।
१३ अपरब्रह्मणो विश्वात्मत्वम् ।
१४ अपरब्रह्मणः शरीरात्मत्वम् ।
१५ अपरब्रह्मणः पुरुषविधेश्वरभावः ।

इति ब्रह्मविद्या नाम द्वितीयं प्रकरणम् ॥

१६ व्यवहारसत्यं परमार्थसत्यं च ।
१७ परापरविद्ययोः सत्यद्वयेन सम्बन्धः ।
१८ सर्गः ।
१९ अनादिः संसारः ।

---

१ डायसनकृतिरेव ( Paul Deussen: The System of the Vedanta, pp. 453–78 ) क्वचिदविकलभावेन क्वचित्संग्रहभावेन चात्रोपजीव्यभूता । सोऽयं निबन्धश्चिराय केवलसंस्कृतपरायणानां कृते कुतोऽपि सम्प्रति मन्ये प्रकाशं लभेत । सरलात्र रीतिर्विषयो-पस्थापने स्फीतिश्च वेदान्तसारादिभ्योऽपि हृद्यतरे इति पदे पदेऽनुभविष्यन्ति सुधियः । यूरोपदेशे डायसनकृतिः परमप्रमाणभूता वेदान्तविषये प्रसिद्ध्यति । तस्या महाकृतेर्बिन्दुलेश एवात्रोपहारीकृतः ।

२० शुभाशुभकर्ममूलकः संसारः ।
२१ भूतग्रामः ।
२२ जीवनिकायः ।
२३ जगतः परमार्थत्वप्रतिषेधः ।

इति सर्गो नाम तृतीयं प्रकरणम् ॥

२४ जीवस्य सत्यता ।
२५ जीवो ब्रह्मैव ।
२६ परमार्थतो जीवस्वरूपम् ।
२७ व्यवहारार्थतो जीवस्वरूपम् ।
२८ उपाधिः
२९ मनः, इन्द्रियाणि च ।
३० मुख्यः प्राणः ।
३१ सूक्ष्मशरीरम् ।
३२ धर्माधर्मौ ।
३३ जीवावस्थाः ।

इति जीवात्मा नाम चतुर्थं प्रकरणम् ॥

३४ उत्क्रान्तिः ।
३५ पितृयानम् ।
३६ तृतीय स्थानम् ।
३७ देवयानम् ।

इति प्रेत्यभावो नाम पञ्चमं प्रकरणम् ॥

३८ ज्ञानान्मोक्षः ।
३९ ईश्वरानुग्रहलभ्य भवति ज्ञानम् ।
४० ज्ञानमुखानि ।
४१ कर्मक्षयः ।
४२ कर्तव्याभावः ।
४३ मुक्तस्य शरीरधारणम् ।
४४ ज्ञानिनो ब्रह्मणि लयः ।

इति मोक्षो नाम षष्ठं प्रकरणम् ॥

आसा मातृकाणामुपरिष्टाद्यथाक्रममुपपादन भविष्यति ।

१ य एव विश्वात्मा स एव शारीरिक आत्मा न तु तद्भिन्न इति प्रतिपादयितुमेव वेदान्ताना प्रस्थानम् । तथा चात्मैकत्वविद्या नाम वेदान्ताना प्रतिपादनीयो विषयः । विश्वात्मा नाम ब्रह्म । तत एव—"इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसविशन्ति" [ द्रष्टव्यमत्र–तैत्तिरीय० ३।१ ] । तद्ब्रह्मैव ह्येष शारीरिक आत्मा । तथा च ब्रह्मात्मनोरभेदपरा श्रुतिः–"अह ब्रह्मास्मि" [ बृहदारण्यक० ४।१० ] इति । "तत्त्वमसि" [ छान्दोग्य० ६।८।७ ] इति च ।

२ ब्रह्मात्मनोरेषोऽभेदः, एषोऽद्वैतभावः, एतदैक्य नास्माभिरनुभूयते । वैदिके लौकिके च व्यवहारे सर्वत्रैव नानात्वभावो नामरूपभेदभिन्नो विविधाकारः प्रपञ्चः सविकार एष शारीरिकात्मभावो भवति सर्वेषामस्माकमनुभवगोचरः ।

३ किञ्च, कर्मस्वका· प्राणिनो हीनप्रणीतयोनिषु ससरन्त स्वकृताना कर्मणा फलमनुभवन्ति—सुखं वा, दुःख वा, अदु खमसुख वेति न केवल श्रुतीनामेव नयः प्रत्युत श्रुतिविप्रतिपन्नाना केषाञ्चनाध्यात्मपरायणानामपि नयः। तत्र ससरतामेतेषा प्राणिना नानात्वख्यातिरेव सिद्धयति न त्वेकत्वख्यातिः।

४ नानात्वख्यातिरेषा प्रत्यक्षानुमानागमाश्रया श्रुतिस्मृतिमनिश्रया भ्रान्तिरेव। सेय भ्रान्तिर्मिथ्याज्ञानम् 'अविद्या' इत्युच्यते। अविद्यया मोहितो नायमात्मा विजानाति स्व निरुपाधि स्वरूपम्। स तु कर्मक्लेशकायोपाधिसहित स्व रूप मन्यमानो विषीदति, नात्मैकत्व पश्यति। यदा ह्येष सम्यग्दर्शनलक्षणया विद्यया स्व रूपम् उपाधींश्च विवेकेन पश्यति, पश्यति यदुपाधयोऽविद्याश्रया मायाश्रया अभिमानाश्रया इति, पश्यति यदयमात्मा भवेत्येकोऽद्वितीय इति; तदा खल्वेष ब्रह्मैव भवति। अविद्या भवति स्वप्नोपमा, विद्या तु प्रबोधोपमा। भ्रान्तमपि मिथ्यापि स्वप्नदर्शन तावत्पीडयत्येव यावन्न सुप्तः प्रबुध्यति, मिथ्यापि तथैवाविद्या नानात्वभावेन मोहयन्ती बहुतरमायासयत्येव। सा खल्वविद्या विद्यया ह्यात्मैकत्वप्रबोधिन्या नश्यति।

५ सेयं सम्यग्दर्शनलक्षणा विद्या वेदान्तश्रुतिगम्या वेदितव्या। न ता गमयितु लौकिकाना प्रत्यक्षानुमानादिप्रमाणाना गतिः। नापि चोदनालक्षणाः श्रुतयो भवन्ति तद्बोधनप्रतिबलाः। नापि वा तर्कस्मृतिभ्या तदवगतिः। अविद्यावद्विषयाण्येव प्रत्यक्षादीनि प्रमाणानि शास्त्राणि च। तत्कथ तानि विद्याप्रतिपादने क्षमाणि स्युः। श्रुतिर्हि वेदः। ब्रह्मनिःश्वसितमेतद् वेदशास्त्रम् ऋषिभिर्दृष्टम्। सदेवकमिद जगद् अनित्यम्। वेदस्तु नित्यः। प्रलयान्ते वेदशब्देभ्य एव ब्रह्मणा कृतो भवति सर्गः। प्रतिसर्ग महर्षयस्तपसा सेतिहासान् वेदान् प्रतिलभन्ते। वेदो द्विविधः—कर्मकाण्डात्मको ज्ञानकाण्डात्मकश्च। कर्मकाण्डात्मको भवत्यभ्युदयसाधन.। ज्ञानकाण्डात्मको भवति निःश्रेयससाधनः। सोऽय वेदो भवति स्वतःप्रमाणम्। स्मृत्यादीनि तु परत.प्रमाणानि। मन्त्रब्राह्मणयोर्वेदनामधेयम्। तदन्ते स्थिताः श्रुतयो वेदान्ताख्याः। ताः खलु निःश्रेयससाधनभूतस्य सम्यग्दर्शनलक्षणस्य ज्ञानस्योपाया भवन्ति॥

**इति वेदान्तावतारप्रबन्धेऽनुबन्धो नाम प्रथम प्रकरणम्॥ १॥**

६ ससारनिवृत्तिलक्षणो मोक्षो नाम पुरुषार्थः। जीवात्मपरमात्मनोरेकत्वप्रतिपत्त्या भवति तदधिगमः। एषा ह्येकत्वप्रतिपत्तिर्नाम विद्या या खलु भवत्यात्मपरा भवति ब्रह्मपरा। न च तस्या ब्रह्मात्मभिन्न भवति किञ्चित् प्रतिपादनीयम्। सेय द्विविधा। तत्राद्या परा विद्या नाम। या सम्यग्दर्शनाय कल्पते, भवति च मोक्षफलाय। अथान्या विद्या नाम्ना भवत्यपरा। या खलु

ब्रह्मोपासनलक्षणा सती कर्मसमृद्ध्यभ्युदयफला क्रममुक्तये कल्पते। एव परब्रह्मविषया भवति परा विद्या। अपरा विद्या त्वपरब्रह्म विषयीकृत्य प्रवर्तते।

७ पर ब्रह्म भवति निर्गुण निर्विशेषं निराकार निरुपाधि। अपर ब्रह्म तु भवति सगुण सविशेष साकार सोपाधि। तदिद द्विरूप ब्रह्म श्रुतिप्रतिपाद्य प्रसिद्ध्यति प्रविभक्तम्।

८ न ह्येकमद्वितीय ब्रह्म गुणविशेषाकारोपाधिभिर्युगपत् सहित रहित च कल्पयितु शक्यम्। तस्माद् ब्रह्म स्वतो भवति गुणविशेषाकारोपाधिविरहितमेव। एतादृशं ब्रह्म अविद्यारोपितोपाधिक सद् भवत्यपर ब्रह्म। यथा स्वभावतो विशुद्धः स्फटिकमणी रक्तः प्रतिभाति रक्तवस्तुयोगेन तथैव विशुद्धमपि ब्रह्म तत्तदुपाधिसंसर्गेण तथा तथा प्रतिभाति। वस्तुतस्तु स्फटिके यथा रक्तादीना भ्रान्तिरेव तथैव ब्रह्मण्यपि भ्रान्तिमात्रमेव ते त उपाधयः।

९ यदिदं पर ब्रह्म निर्गुण निराकार निर्विशेषं निरुपाधिकं तदेवं श्रुत्याऽऽख्यायते—"अस्थूलमनण्वह्रस्वमदीर्घम्" [ बृहदारण्यक० ३।८।८ ] इति, "अशब्दमस्पर्शमरूपमव्ययम्" [ कठ० ३।१५ ] इति, "नेति नेति" [ बृहदारण्यक० २।३।६ ] इति च। तस्मात्—"अन्यदेव तद्विदितादथो अविदितादधि" [ केन० १।३ ] इति ततः—"वाचो निवर्तन्ते अप्राप्य मनसा सह" [ तैत्तिरीय० २।४ ]। अत एव बाष्कलिनाऽनुयुक्तो बाध्वः ( बाह्वः ) केवल तूष्णीं बभूव, मौनेनैव ब्रह्म प्रोवाच। द्वितीयमप्यनुयुक्तस्तथैव तूष्णीं तस्थौ। तृतीयमनुयुक्त उवाच—"ब्रूमः खलु त्व तु न विजानासि, उपशान्तोऽयमात्मा" [ ब्रह्मसूत्रे ३।२।१७ इत्यत्रोद्धृता श्रुतिः ] इति[1]।

१० तदेतन्निर्गुण ब्रह्म नासदित्यस्मिन्नर्थे सदित्युच्यते। तदेतत् सद् ब्रह्म नार्थक्रियाकारिलक्षण व्यवहारसत्, प्रत्युत सर्वथा व्यवहारसद्विरोधि परमार्थसत्। व्यवहारदृष्ट्या तु तदेतदसदेव। न केवल परमार्थसल्लक्षण ब्रह्म, प्रत्युत चिल्लक्षणमपि तद्भवति। यथा लवणपिण्डो यतो यतो रस्यते लवणरसो हि स भवति। तथैव ब्रह्म यतो यतो स्पृश्यते चिद्घन एव स्पृष्टो भवति। आभ्या सच्चिद्विशेषणाभ्या निर्गुण ब्रह्म न सोपाधिकं भवति। यतः सच्चिदोरन्यत्वं वा

---

१ अत्र तुलनीयानीमानि बौद्धशास्त्रवचनानि—
"परमार्थो हि आर्याणां तूष्णींभावः" [ माध्यमिकवृत्तिः–पृ० ५६ ]।
"न मौनैस्तथागतैर्भाषितम्। मौना हि भगवन्तस्तथागताः" [ लङ्कावतारसूत्रम् ]।
"यस्यां च राव्यां धिगमो यस्यां च परिनिर्वृतः।
एतस्मिन्नन्तरे नास्ति मया किञ्चित्प्रकाशितम्॥" [ लङ्कावतारसूत्रम्–पृ० १४४ ]

द्वैतं वा भेदो वा नास्ति । सच्चिल्लक्षणमिदं ब्रह्म 'आनन्दम्' अपि भवति । स चायमानन्दो यदा शान्तिरिति विवक्ष्यते तदा सच्चिद्विशेषणवदानन्दविशेषणमपि न तदुपाधिर्भवति । सर्वविध-दुःखादिविक्षेपाभावद्योतकमेव तद्भवति । यदा त्वानन्दपदेन समृद्धेविवक्षा भवति तदैत-दानन्दपदं भवति ब्रह्मण उपाधिः । ब्रह्मणो हि स्वरूपलक्षणेऽभिप्रेतमानन्दपदं दुःखाद्यभावरूपाया शान्तेर्द्योतकं भवति । तथा च श्रुतिः—"अतोऽन्यदार्तम्" [ बृहदारण्यक० ३।४।२ ] इति ।

११ निर्गुणं हीदं ब्रह्म भवति सर्वेषामन्तरात्मा । सर्वो हि खल्वात्मास्तित्वं प्रत्येति । न च कस्यापि 'नाहमस्मीति' भवति प्रत्ययः । एवं सत्यपि न तस्य भवति प्रत्यक्षम् । न हि सर्वेषां साक्षिणो ब्रह्मणः कथमपि गोचरता भवति । योगिनस्तु तदिदं संराधने पश्यन्ति [ ब्रह्मसूत्रे ३।२।२४ ] । तदेतादृशस्य निर्गुणस्य ब्रह्मणो ज्ञानान्नामरूपात्मकद्वैतप्रपञ्चस्य मिथ्यात्वप्रत्ययाद् भवति मोक्षः ।

१२ परब्रह्म विशुद्धेन निरतिशयेन वोपाधिना प्रतिसयुक्तं सद् भवत्यपरब्रह्म । यत्र ब्रह्मणि उपाधिर्वा, विशेषो वा आकारो वा भेदो वा समारोपितो भवति तत्र शास्त्रमपरब्रह्मपरं भवत्युपासनार्थम् । उपासनाऽभ्युदयार्था स्वर्गसुखार्था कर्मवदेव न भवति निःश्रेयसाय मोक्षाय । न च विरुणद्धि संसारं जन्ममरणपरम्पराम् । तथापि सेयं न कर्मवद्भवति बन्धाय । प्रत्युत तया द्वारभूतयाऽपरब्रह्मोपास्य देवयानपथा स्वर्ग्यमैश्वर्यं क्रममुक्तये कल्पमानं भवति ब्रह्मज्ञानाय मोक्षफलाय । तथा चोपासना चिरेण ब्रह्म गमयति । अपरब्रह्मोपासकस्या-विद्या सावशेषा तिष्ठति । उपाधिसमारोपद्वारा सेयमविद्या परम्परं विदधातीति सावशेषाविद्यस्य यावत् सा न नश्यत्यविद्या तावच्चिरायितो भवति मोक्षः । तदेतदपरब्रह्म यद्यपि परब्रह्मैव तथापि रक्तकुसुमयोगेन स्फटिकवत् , जलतरङ्गेषु सूर्यबिम्बवत् विकृतमनुभूयते । अस्यापरब्रह्मणो भवति त्रिविधो विभागः—विश्वात्मा, शरीरात्मा, पुरुषविधमहेश्वरश्च ।

१३ तत्रेमा अपरब्रह्मपराः श्रुतयः—"सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाकी (= मौनः) अनादरः (=अभयः)" [ छान्दोग्य० ३।१४।२ ] इति, "अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः । वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा ।" [ मुण्डक० २।१।४ ] इति, "न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ।।" [ मुण्डक० २।२।१०, कठ० ५।१५, श्वेताश्वतर० ६।१४; अत्र द्रष्टव्यम्–ब्रह्मसू० १।३।२२-२३ ] इति, 'अथ यदतः परो दिवो ज्योतिर्दीप्यते ' ··· यदिदमस्मिन्नन्तःपुरुषे

ज्योतिः" [ छान्दोग्य० ३।१३।७ ] "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते, आकाश प्रत्यस्तं यन्ति, आकाशो ह्येवैभ्यो ज्यायान् , आकाशः परायणम्" [छान्दोग्य० १।६।१] इति, "आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृत स आत्मा" [छान्दोग्य० ८।१४।१ ] इति, "सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते" [ छान्दोग्य० १।११।५ ] इति, "यदिद किञ्च जगत् सर्व प्राण एजति" [ कठ० ६।२ ] इति, "अन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः" [ बृहदारण्यक० ३।७।३ ] इति, "य आत्मा स सेतुर्विधृतिरेषा लोकानामसभेदाय अपहतपाप्मा ह्येष ब्रह्मलोक तद्य एवैत ब्रह्मलोक ब्रह्मचर्येणानुविन्दति तेषामेवैष ब्रह्मलोकस्तेषा सर्वेपु लोकेषु कामचारो भवति" [छान्दोग्य० ८।४।१–३] इति, "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः, एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः, एतस्य वा अक्षरस्य प्रशासने गार्गि निमेषा मुहूर्ता अहोरात्राण्यर्धमासा मासा ऋतव. सवत्सरा इति विधृतास्तिष्ठन्ति" [ बृहदारण्यक० ३।८।६ ] इति, "यस्य ब्रह्म च क्षत्र च उभे भवत ओदनः। मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ॥" [ कठ० २।२४ ] इति च। इत्येवमाद्याः सन्ति विश्वात्मनिरूपणपराः श्रुतयः।

१४ 'अरा इव रथनाभौ कला यस्मिन् प्रतिष्ठिताः। तं वेद्य पुरुषं वेद यथा मा वो मृत्युः परिव्यथाः ॥" [ प्रश्न० ६।६ ] इति, "यः पुनरेत त्रिमात्रेण अक्षरेण पर पुरुषमभिध्यायीत स एतस्माज्जीवघनात् परात्पर पुरिशय पुरुषमीक्षते" [ प्रश्न० ५।५ ] इति, "यदिदमस्मिन ब्रह्मपुरे दहर पुण्डरीक वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यम्" [ छान्दोग्य० ८।१।१ ] इति, "ऊर्ध्वं प्राणमुन्नमयत्यपान प्रत्यगस्यति। मध्ये वामनमासीनं विश्वेदेवा उपासते ॥' [ कठ० ५।३ ] इति, "यस्त्वेतमेव प्रादेशमात्रमभिविमानमात्मान वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति" [ छान्दोग्य० ५।१८।१ ] इति, "अङ्गुष्ठमात्र. पुरुषो मध्य आत्मनि तिष्ठति। ईशानो भूतभव्यस्य न ततो विजुगुप्सते ॥" [ कठ० ४।१२ ] इति, "एष म आत्मान्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद्वा सर्पपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वा" [ छान्दोग्य० ३।१४।३ ] इति, "वालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते ॥" [ श्वेताश्वतर० ५।८ ] इति, "प्राणोऽस्मि प्रज्ञात्मा 'यावद्ध्यस्मिन् शरीरे प्राणो वसति तावदायुः" [ कौषीतकि० ३।२ ] इति। प्राण एव प्रज्ञात्मानन्दोऽजरोऽमृतः। न साधुना कर्मणा भूयान् नो एवासाधुना ( कर्मणा ) कनीयान्" [कौषीतकि० ३।८] इति, " द्वा सुपर्णा सयुजा सखाया समान वृक्ष परिषस्वजाते।

तयोरन्यः पिप्पल स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति" [ मुण्डक० ३।१।१.] इति, "य एषोऽन्तरक्षिणि पुरुषो दृश्यते स ब्रह्म" [छान्दोग्य० १।७।५ ] इति, 'य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मा' एतदमृतमभयमेतद् ब्रह्मेति" [ छान्दोग्य० ४।१५।१ ] इति च। इत्येवमाद्याः सन्ति **शरीरात्मनिरूपणपरा** श्रुतयः।

१५ "ईशावास्यमिद सर्व यत्किञ्च जगत्या जगत्। तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद्धनम्॥" [ ईश० १ ] इति, "स वा एष आत्मा" सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपति स न साधुना कर्मणा भूयान नो एवासाधुना कनीयान् एष सर्वेश्वर एष भूताधिपतिरेष भूतपालः" [ बृहदारण्यक० ४।४।२२ ] इति, "एष ह्येवैन साधु कर्म कारयति त यमेभ्यो लोकेभ्य उन्निनीषते, एष उ एवैनमसाधु कर्म कारयति त यमधो निनीषते, एष लोकपाल एष लोकाधिपतिरेष सर्वेशः" [ कौषीतकि० ३।८ ] इति, "त दुर्दर्श गूढमनुप्रविष्ट गुहाहित गह्वरेष्ठ पुराणम्। अध्यात्मयोगाधिगमेन देव मत्वा धीरो हर्षशोकौ जहाति॥" [ कठ० २।१२] इति, "तमीश्वराणा परम महेश्वरं त देवताना परम च दैवतम्। पति पतीना परम परस्ताद् विदाम देव भुवनेशमीड्यम्॥" [ श्वेताश्वतर० ६।७ ] इति च। इत्येवमाद्याः सन्ति **पुरुषविधमहेश्वरनिरूपणपराः** श्रुतयः।

उपासनार्थोऽय पुरुषविधेश्वरो द्वैतभावे प्रवर्तमान एवानुभूतिगम्यो भवति। द्वैतभावस्य मिथ्यारूपत्वात् तद्वशादनुभूयमानः पुरुषविधेश्वरोऽपि न परमार्थसन् भवति। तथा च श्रुतिः— "अल वा अर इद विज्ञानाय। यत्र हि द्वैतमिव भवति तदितर इतर जिघ्रति, तदितर इतर पश्यति, तदितर इतर शृणोति, तदितर इतरमभिवदति, तदितर इतर मनुते, तदितर इतरं जानाति; यत्र वा अस्य सर्वमात्मैवाभूत् तत्केन क जिघ्रेत्, तत्केन कं पश्येत्, तत्केन क शृणुयात्, तत्केन कमभिवदेत्, तत्केन कं मन्वीत, तत् केन क विजानीयाद् येनेद सर्व विजानाति त केन विजानीयात्, विज्ञातारमरे केन विजानीयात्" [ बृहदारण्यक० २।४।१३-१४ ] इति।

**इति वेदान्तावतारप्रबन्धे ब्रह्मविद्या नाम द्वितीयं प्रकरणम्॥ २॥**

१६ यथा ब्रह्मविद्या परापरभेदेन द्विधा विभज्यते तथैव जीवतत्त्वोपसंहित सर्वमिद जगद् द्विधा विभज्यते व्यवहारपरमार्थभेदेन। तत्र व्यवहारावस्थाया ब्रह्मसृष्टेऽत्र जगति ब्रह्मभूतोऽपि जीव उपाधिपरिच्छिन्नत्वात् ससरतीति प्रतिपाद्यते। परमार्थावस्थाया तु जीवो ब्रह्मैवेति प्रतिपाद्यते। प्रतिषिध्यते च सर्ग-स्थिति जीव ससरणादि सर्वविध नानात्वम्। एव परमार्थतया व्यवहारार्थं उपेक्षितेऽपि नानालक्षणस्य व्यवहारप्रपञ्चस्य सापेक्षसत्त्व न प्रतिषिध्यते। अपरा

विद्या हि सर्गप्रक्रिया प्रतिपादयन्ती सर्गस्य वस्तुसत्त्व प्रतिजानाति । किञ्च, कार्यकारणनियमस्य कार्यकारणाभेदनियमे परिणतिं विधाय तन्मुखेन सर्गस्य ब्रह्मरूपता दर्शयति । जीवमधिकृत्य तु जीवस्य ब्रह्माभेद एव परमार्थदृष्ट्युपसहित प्राधान्येन शास्त्रप्रतिपादितो दृश्यते । तत्र तत्र श्रूयमाणो भेदस्तु विद्यामपरामुपजीव्योपासनार्थो वेदितव्यः ।

१७ व्यवहारसत्यपरमार्थसत्ययोर्भवति परस्पर पूरकत्वम् । तथा हि–ब्रह्मैवैक तत्त्वमिति परमार्थप्रतिपादनपरा परा विद्या जीवजगद्रूपे व्यवहारार्थद्वये यदस्ति किमपि परमार्थतस्तद् ब्रह्मैवेति वदन्ती भवति परमा विद्या, उत्तमा विद्या, लोकं त्तरा विद्या । अविद्योपसहित जीवजगद्रूप व्यवहारार्थद्वय प्रतिपादयन्त्यपरा विद्या क्रमेणोपासनाया द्वारेण ब्रह्मैकत्वप्रतिपद गमयन्ती भवति लोकाचरितव्यधर्ममार्गः । तत्र ह्यपराविद्योपजीव्यमपर ब्रह्मैव भवति सृष्टिकृत्, तस्य सर्वधर्मकत्वात् । न हि निर्धर्मक किमपि कारण भवद् दृश्यते । पर ब्रह्म च भवति निर्धर्मकम् । तेन कारणातीत तत् । यदस्ति कारण तत्सर्वधर्मकमपरं ब्रह्मैव । तथा च श्रूयते–"मनोमयः प्राणशरीरो भारूपः सत्यसकल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः" [ छान्दोग्य० ३।१४।२ ] इति ।

१८ "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" [ छान्दोग्य० ६।३।२ ] इति, "स इद सर्वमसृजत····तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य अभवद् यदिद किञ्च" [ तैत्तिरीय० २।६ ] इति चेत्येवमादिभिः श्रुतिभिर्विज्ञायते यज्जगदिदं ब्रह्मणा सृष्ट सृष्ट्वा तदेवात्र जीवरूपेणानुप्रविष्टम् । तथा च जीवब्रह्मणोरभेदो यदस्ति पारमार्थिक तत्त्वम्, ब्रह्मकृतः सर्गो योऽस्ति नामरूपप्रपञ्चात्मको व्यवहारार्थ इति द्वावपि परमार्थव्यवहारार्थौ शास्त्रसमतौ । तज्जलानिति [ छान्दोग्य० ३।१४।१ ] पदेन नामरूपात्मकस्य सर्वस्यास्य प्रपञ्चस्य ब्रह्मणो जातत्व ब्रह्मणि प्रलयभावो ब्रह्मण्येव च तस्य स्थिति प्रतिपादयति । सा चैषा सर्गस्थितिलयपरम्पराऽविच्छेदेन प्रवर्तमाना ससारः ।

१९ अनादिः संसारः । ससारे ब्रह्मभूतोऽपि जीव उपाधिवश उपाधिपरिच्छिन्नः संसरति । उपाधयो नाम कर्म कुशलाकुशलमिन्द्रियाणि मनो मुख्यप्राणः सूक्ष्मशरीर च । तान्येतान्याससार जीवानुबन्धीनि । स्थूलशरीरोपाधिस्तु ससरणे जातौ जातौ जायते । च्युतौ च्युतौ परिच्यवते । कुशलाकुशलाना कर्मणा विपाकमनुभवितुमेवाब्रह्मस्तम्बो जीवराशिर्भूत्वा भूत्वा प्रैति । प्रेत्य प्रेत्य भवति । ज्ञानेन कर्मबीजे दग्धे तु सोऽय प्रेत्यभावो विनिवर्तते ।

२० नामरूपात्मकप्रपञ्चोऽयं जीवेऽध्यारोपितस्य [ बादरायण० ४।१।९, ३।१४ ] कर्मणो विपाक एव। स एष प्रपञ्चः क्रियाकारकफलात्मकः [ शाङ्कर० १।३।२२, ३।१८, २।१।१४, ३।४।१६ ] भोग्यरूपः। जीवस्तु भोक्ता च कर्ता च। पौर्विककर्तृत्वानुकूलोऽय भवति भोक्तृभोग्यभाव.। कर्मणो विपाकफल कः प्रयच्छति ? अचेतनमदृष्टं तु तत्फलं दातुं न प्रभवति। तेन चेतन ईश्वरः पुरुषविध ब्रह्म फल प्रयच्छतीति स्वीक्रियते। चेतनोऽयमीश्वरो व्यवहारार्थ एव न तु परमार्थः। अयमेव जीवान् तत्तत्कर्मानुसार तेषु तेषु योनिषु जात्यायु भोगादिफलैः सयोजयति। एव शुभाशुभकर्मानुसारं जीवा ईश्वरायत्ता. ससरन्ति। प्रलये कर्मबीजसहिताना जीवाना ब्रह्मणि विलयः। कर्मबीजानि तानि यदा फलदानोन्मुखानि भवन्ति तदेश्वरप्रेरणया पुन. सर्गः प्रवर्तते। पुनश्च प्रलीना जीवा. कर्मबीजबलात् तत्तद्योनिषु ससरन्ति।

२१ सृष्टौ पूर्व ब्रह्मण आकाश जायते। आकाशाद् वायुः। वायोरग्निः। अग्नेरापः। अद्भ्यः पृथिवी। एव ब्रह्म पञ्चभूतरूपेण परिणमते। प्रलये तु पृथिव्यप्सु लीयते। आपोऽग्नौ लीयन्ते। अग्निर्वायौ लीयते। वायुराकाशे लीयते। आकाश ब्रह्मणि लीयते। तत्र शब्देनाकाशस्य प्रत्ययो भवति। शब्दस्पर्शाभ्या वायोः। शब्दस्पर्शरूपैरग्नेः। शब्दस्पर्शरूपरसैरपाम्। शब्दस्पर्शरूपरसगन्धैः पृथिव्याः। तान्येतानि तत्त्वानि सृष्टौ न स्वकीयेन परिशुद्धेन रूपेणोपलभ्यन्ते प्रत्युत तत्त्वान्तरसकीर्णेनैव रूपेणोपलभ्यन्ते। संकीर्णभावप्रक्रियेय श्रुतिषु त्रिवृत्करणमिति व्यपदिश्यते। परस्तात् सेय पञ्चीकरणप्रक्रियारूपेण विकासमुपगता वेदान्ते प्रसिद्ध्यति।

२२ तत्त्वगण सृष्ट्वा तद् ब्रह्म तेषु जीवात्मनानुप्रविष्ट भवति। स एषोऽस्ति संसारी जीवः। प्रलयेऽप्येष शक्त्यात्मना ब्रह्मणि वर्तते। स एष सर्गे सप्रवृत्ते लयाभिधाना मायामयी महासुषुप्ति परित्यज्य प्रबुध्यति। स्वपूर्वकर्मविपाकभूतान् देवमनुष्यतिर्यग्वनस्पत्यादिनिकायानुपादत्ते। तत्तद्योनिनिकायोपादाने सूक्ष्मशरीर तत्त्वबीजभूत ससरद्भिस्तत्र तत्र जीवैरनुगत भवत्यङ्ग हेतुर्निमित्तम्। तदित्थमुपात्तेषु तत्तद्योनिनिकायेषु सूक्ष्मशरीरे सपिण्डितानि मुख्यप्राणमनइन्द्रियाणि ह्येकतो विवृतानि भवन्ति। अन्यतस्तदेव सूक्ष्मशरीरमालम्ब्य स्थूलभूतसयोगेन निर्वर्ततेऽय कायश्चर्ममासास्थिरुधिरमज्जामयः। तस्यैतस्य तत्त्वेभ्यो विनिर्वृत्तस्य नामरूपकृतकार्यकारणसंघातस्य शरीरस्य स्वामी जीवः। शरीरमेतत् तत्त्वान्युपजीव्योपचयं प्राप्नोति। शरीरे मलमासमनसा हेतुर्निमित्त कारण पृथिवी। मूत्ररुधिरप्राणानामापः। अस्थिमज्जावाचामग्नि.। यद्यपि सूक्ष्मशरीरस्य सर्वदैव जीवानुगतत्वात् सूक्ष्मशरीरान्तर्गता मनःप्राणवाचोऽपि सर्वदा जीवानुगता एव भवन्ति, तेन न तत्त्वेभ्यस्तासामिय नूतनाभिनिर्वृत्तिः प्रत्युत बीजरूपेण सूक्ष्मशरीरान्तर्गता-

नामेव तासामेषा भवत्युद्भूतिरुपचितिः। शरीरस्थानि सर्वाणि तत्त्वान्याहारात् स्वं स्वं तत्त्व समाहृत्य यदोपचितानि भवन्ति तदा शरीरमुपचितमित्युच्यते। शरीरिणः सत्त्वनिकाया उद्भिज्जाः सस्वेदजा अण्डजा जरायुजा वा भवन्ति। आहारद्वारानुप्रविष्टः पितृवीर्ये सश्लिष्ट उत्पत्तिबीज-रूपसूक्ष्मतत्त्वपरिगतो जीवो मिथुनभावकाले मातुर्गर्भे सप्रविष्टस्तस्या रुधिरेणोपचितेन स्थूल-शरीरेण सङ्गतो भवति। मरण नाम च्युतिः, जीवस्य शरीराद्वियोग। पूर्वकर्मविपाकानुकूलमेव सत्त्वनिकाया दीर्घायुष्का अल्पायुष्का वा भवन्ति। कर्मफलभोगार्थमेव भवति पुनः पुनः प्रेत्यभावः। यावत्कर्माणि तिष्ठन्ति तावत्प्रेत्यभावपरम्परापि प्रवर्तते। तत्र मनुष्यपशुवनस्पत्यादिषु जायमाना मर्त्या यद्यपि सन्तोऽल्पायुष्का एकस्मिन्नपि सर्गेऽनेकशः प्रेत्य प्रेत्य भवन्ति तथापि सन्ति देवनिकाया अमर्त्या अधिकारिणो जीवा यावत्प्रलय स्थिताः पुनः ससरन्ति। तेषामधि-कारपदेऽन्ये सत्त्वनिकाया विनियुक्ता देवा भवन्ति।

२३ यथा मृण्मयेषु द्रव्यनिकायेषु—"मृत्तिकेत्येव सत्यम्" [छान्दोग्य० ६।१।४] भवति। अन्यत्तु सर्वं केवल भवति—"वाचारम्भण विकारो नामधेयम्" [छान्दोग्य० ६।१।४]। एवमेव जगदिद ब्रह्मव्यतिरेकेण 'असत्' एव भवति। तथा च श्रुतिः—"सर्वं खल्विद ब्रह्म नेह नानास्ति किञ्चन" [बृहदारण्यक० ४।४।१९] १ इति। किञ्च, सर्वोऽय नामरूपप्रपञ्चः सर्वोऽय रूपभेदः सर्वोऽय नानात्वभावो भवत्यविद्याकल्पितः, अविद्याप्रत्युपस्थापितः, अविद्याध्यारोपितः, मिथ्याज्ञानविजृम्भितः, केवलोऽभिमानः, सम्यग्दर्शनविहेयः, यथा नाम सर्पो रज्ज्वाम्, पुरुषः स्थाणौ, जल मरीचिकासु भवति केवलो भ्रमः सुपरीक्षणेन प्रत्याख्येयः। असतोऽप्यस्य जगत उत्पत्तिकारण ब्रह्म। तथा हि—मायावी यथेन्द्रजाल प्रसारयति तथैव ब्रह्म प्रसारयति जगदिद 'असत्' एव वस्तुतः। तत्र वस्तुसद्रूपेण प्रत्ययो भ्रम एव। यथैन्द्रजालिको मायावी वितन्वन्न पीन्द्रजाल नात्मना विक्रियते, तथैव मायीदं ब्रह्म जगत्प्रसारणपरमपि न भवति विकृतम्। यथेन्द्रजालात्मिका माया प्रतीत्यैन्द्रजालिको मायावी बहुरूपः प्रतिभाति, तथैवाविद्या प्रतीत्य ब्रह्म विभाव्यते बहुरूपम्। यथेन्द्रजालस्यैन्द्रजालिक विना न स्थितिः, तथैव जगतोऽस्य स्थिति-रपि नान्तरेण ब्रह्म भवतीति जगत्स्थितिकारणं ब्रह्म। अस्य जगतो ब्रह्मणि लयो भवति नान्यत्र। यथा पृथिवी स्वात्मन्येव वृक्षवनस्पत्यादीन्युपसहरति, एव भवति ब्रह्म स्वात्मन्येवोपसहारकारणम्। स्थिते जगति सर्वोऽयं भेदव्यवहारोऽविद्यानिर्मित्तो मिथ्याज्ञानहेतुकः। भेदशक्तिरपि जगतः पूर्वम्, जगतः परतश्च भवत्यविद्यानिश्रितैव मिथ्याज्ञानहेतुकैव। न हि मिथ्याज्ञानस्य, अविद्याया वा किमपि मूल ज्ञायते। कथ वा ज्ञायेत नाम। यामाश्रिता वयमसदपीदं जगत्पश्यामः, यथा

नेत्रातुरा असदपि चन्द्रद्वयम्, ता सर्वव्यवहारप्रपञ्चस्य प्रवृत्तिनिमित्तभूता विहाय कथ प्रवृत्ति-परायणा अवगन्तु पारयामो वयं किञ्चिदपि तदुत्तरम्। नानाभावो योऽय नामरूपप्रपः . स माया। सेय तत्त्वान्यत्वाभ्या भवत्यनिर्वचनीया। यथा स्वप्ने नामरूपप्रपञ्चस्तावत्काल सत्यो भवति यावत्काल स्वप्नावस्था तिष्ठति, प्रबोधे तु तस्य मिथ्यात्वप्रत्ययो भवति, एव व्यव-हारार्थोऽय नामरूपप्रपञ्चो नापि ब्रह्म नापि च ब्रह्मेतरत् तिष्ठत्येवाविज्ञाते परमार्थे। ज्ञाते परमार्थे तु तस्य मिथ्यात्वप्रत्ययो भवति। केवलमेकमद्वितीय ब्रह्मैवावभासत। तस्य केवलस्यैव ब्रह्मण एष परिणामो वा विवर्तो वा यदेष व्यवहारार्थो नामरूपप्रपञ्चो जगदाख्यः। तस्य प्रपञ्चस्य ब्रह्मानन्यत्व ब्रह्मतादात्म्य कार्यस्य कारणात्मकत्वात् सिद्धयति। दृश्यते हि कारणस्य मृत्तिकाया बहुधा विकृतेषु मृण्मयेषु भाण्डेषु मृत्तिकेति सत्य रूपमव्याहतम्। एवमेव कारणस्य ब्रह्मणो विकृतेऽपि प्रपञ्चे ब्रह्मेति सत्यं रूप न व्याहन्यत इति द्रष्टव्यम्॥

इति वेदान्तावतारप्रबन्धे सर्गो नाम तृतीय प्रकरणम्॥ ३॥

२४ यद्यपि जगदिदं मिथ्या तथाप्यत्र संसरन्नात्मा सत्य एव। एष आत्मा न प्रमाण-गम्यः। प्रमाणजातमेनमात्मानमाश्रित्य वर्तते न त्वेष प्रमाणजातमाश्रित्य वर्तते [ब्रह्मसू० २।३।७ शाङ्कर०]। नापि चायमात्मा प्रतिषेद्धु शक्यम्। प्रतिषेध्यस्यात्मनो भवत्येव यस्मात् प्रतिषेधात् पूर्वमवस्थानम् [ब्रह्मसू० २।३।७ शाङ्कर०]।

२५ ब्रह्मणोऽविकृतत्वान्नायमात्मा ब्रह्मविकृति। ब्रह्मणोऽनवयवत्वान्नायमात्मा ब्रह्मा-वयवः। प्रत्युतैष ब्रह्मैव। ब्रह्मैवेद सर्वम्। सदात्मकं ब्रह्म सदात्मक एष आत्मा। ब्रह्मव्यति-रिक्तस्यासत्त्वात्।

२६ चैतन्य ब्रह्म। चैतन्यमात्मा। तदिद परिशुद्ध चैतन्य भवति—विभु, सर्वगतम्, सर्वज्ञम्, सर्वशक्ति, अकर्तृ, अभोक्तृ।

२७ परिशुद्धमिद चैतन्य मिथ्याज्ञाननिश्रितोपाधिवशात् ससारि भवति। अपरिशुद्ध-मिद यदिद ससारि चैतन्य तदिदमविभु भवति हृदयाकाशवर्ति। असर्वत्रगमिद भवत्यणु, यथा मनः। उपाधिपरिच्छिन्नज्ञानशक्ति न भवति सर्वज्ञम्। तत एव न च सर्वशक्ति। उपाध्यावरणा-देव भवति कर्तृ। तत एव च भोक्तृ। अय संसारी चैतन्यात्मा यथा करोति तथा भुङ्क्ते। भोगार्थ पुनः पुनर्जायते। जायमानो न केवल भुनक्ति करोति चापि। कुर्वाण पुनः कर्मफल-भोगाय जायते। सोऽय प्रेत्य प्रेत्य पुनः पुनर्भावो जन्म = उत्पत्तिर्नाम संसारो भवचक्रम्। स चायमनादिः ससार आमुक्तेः प्रवर्तते।

२८ अविद्यानिश्रितोपाध्यालम्बन एषोऽनादिरनन्तः ससारः। उपाधिवशादेव भवति ससारी पुरुषः कर्ता भोक्ता शरीरी। शरीर प्रतिजन्म नूतन स्थितिवृद्धिशालि च्युतौ विशीर्ण सद् भूतेषु लीयते। उपाधयो नाम मन इन्द्रियाणि मुख्यप्राणः सूक्ष्मशरीर कर्माशयश्च।

२९ कार्यकरणसघात्मके स्थूलदेहे परिच्युतेऽपि करणाना वृत्तयो नात्मना वियुज्यन्ते। यथोर्णनाभस्तन्तुसन्ततिं विसृजति सहरति च तथैवात्मा सृजतीन्द्रियगण च्युतिकाले स्वात्मन्येव सहरति। इन्द्रियाश्रय हि भवति ज्ञान कर्म च। जीवाख्यस्यात्मनो भवन्ति पञ्च ज्ञानेन्द्रियाणि—दर्शनश्रावणघ्राणरसनस्पर्शनाख्यानि। पञ्च कर्मेन्द्रियाणि—ग्रहणगमनवचन-जननविसर्जनव्यापारपराणि। दशेमानीन्द्रियाणि स्थूलशरीरान्वयलब्धप्रवृत्तिनिमित्तनामानि मन सैव व्यापारवन्ति भवन्ति। तथा च श्रूयते—"मनसा ह्येव पश्यति मनसा शृणोति" [ बृहदार-ण्यक० १।५।३ ] इत्येवमादि। शरीरव्यापीनि हि भवन्तीन्द्रियाणि। मनस्त्वेकदेशि। अणु-परिमाणमिद मनो हृदयाकाशे वर्तते। तदिद मनोऽभिव्याप्य सर्वतो वर्तमानो जीवात्मा केवलं मोक्षकाले तेन मनसा विरहितो भवति। मनःसहित इन्द्रियगण एव करोति भुङ्क्ते च। जीवात्मा तु तत्र बद्धोऽपि न करोति न भुङ्क्ते। केवलमुदासीनवदासीनस्तिष्ठति। कर्तृत्व भोक्तृत्वव्यवहारस्तु मनइन्द्रियाश्रयोऽपि जीवात्मन्यज्ञानकृताभेदाध्यवसायमूलक एव, न तु वास्तविकः।

३० जीवात्मनो यथा मनइन्द्रियाभ्यामैकात्म्य न तथा मुख्येन प्राणेन। मुखे भवः प्राणो मुख्यः प्राण इत्यस्मिन्नर्थे उपनिषत्सु प्रयुक्तोऽप्येष शब्दः सुप्रतिष्ठिताया वेदान्तपद्धतौ विकासमुपगतः प्रधान स्वामिभूत प्राणमाह। यथा मन इन्द्रियाणि च प्रत्यक्षकृद्वृत्तयो मुख्यप्राणाश्रिता वृत्तिभेदेन भिन्नाः पदार्था भवन्ति, तथा मुख्यप्राणो देहाधारभूत. पञ्चशाखो वृत्तिभेदेन विभज्यते। तत्र प्राण उच्छ्वास नियमयति। अपानः श्वासम्। व्यानः श्वासोच्छ्वास-विरामे शरीर धारयति। समानो जठराग्निदीपकः। त एते चत्वारः प्राणा जीवनधारकाः। उदानश्च्युतिकाल एकशतनाडीनामन्यतमया जीवात्मान शरीराद् बहिर्नयन् भवति जीवनस्यै-हिकस्यान्तकरः। जीवात्मना सह मन इन्द्रियाणि मुख्यः प्राणश्चेति सर्वाणि शरीरमुत्सृजन्ति। यथा भवे जीवनकाले शरीरधारणेनैतानि जीवात्मान न कदापि त्यजन्ति, तथा मरणानन्तरमपि बीजरूपेण जीवात्मानुगानि भवन्ति। बीजरूपैस्तैस्तत्र तत्र भवे जीवात्मा लभते शरीरम्।

३१ यथेन्द्रियरूपेण भौतिकानि करणानि जीवात्मानमनुगच्छन्ति, तथैव भौतिको देहः सूक्ष्मशरीररूपेण जीवात्मानमनुगच्छति। सूक्ष्मशरीर नाम भूतसूक्ष्माणि देहबीजानि। तदिद सूक्ष्म-

शरीर प्रतनु च भवति स्वच्छ च। तत एवोत्क्रमणकाले न दृश्यते। एतत्सूक्ष्मशरीर यावत्पर्यन्तं स्थूलशरीरेण न वियुज्यते तावत्पर्यन्तमेव स्थूलशरीरमुष्ण तिष्ठति। सूक्ष्मशरीरवियोगे तु तच्छीत भवति।

३२ सततमात्मानुबन्धीनि भौतिकानीमानि मनइन्द्रियाणि भूताशयलक्षण सूक्ष्मशरीरं च भवन्ति धर्माधर्मलक्षणकर्माशयोपहितानि। कर्माशयो नाम कर्माश्रयः। स भूताशयेन सूक्ष्मशरीरेण सह जीवमनूत्क्रान्तो जीवस्य गतिं निर्धारयति शुभाशुभकर्मविपाकभूताना सुखदु.खानाम्, कर्मणा च करणाय शुभाशुभलक्षणानाम्।

३३ ससारिणो जीवस्य सन्ति चतस्रोऽवस्था जाग्रत्स्वप्नसुषुप्तिमरणाख्याः। जाग्रद-वस्थाया जीवो हृदि स्थितो मनसा सयुक्तो मनइन्द्रियद्वारा जानन् कुर्वश्च शरीरं शास्ति। स्वप्ने इन्द्रियाणि निर्व्यापाराणि भवन्ति, केवल मन एव सव्यापार तिष्ठति। तत्र मनः पूर्वमिन्द्रियाणि स्वस्मिन् सहृत्य वृणोति जीव ततो नाडीद्वारेण शरीरमभिव्याप्य जाग्रद्वासना-वशेन स्वप्न पश्यति। सुषुप्तौ तु मनश्चेन्द्रियाणि च निर्व्यापाराणि नाडीप्रविष्टानि सव्यापार मुख्यप्राणमाश्रित्य तिष्ठन्ति। एव न केवलमिन्द्रियेभ्यः प्रत्युत मनसोऽपि विप्रयुक्तो जीवस्तस्मिन् क्षणे निर्वृतो निरुपाधिर्हृदयाकाशे स्वं रूपं सपद्य विहरन् जीवभाव परित्यज्य ब्रह्मैव भवति। सुषुप्तेः प्रबुद्धः पुनरपि ब्रह्मभाव विस्मृत्य ससारी भवति यथापूर्वः॥

**इति वेदान्तावतारप्रबन्धे जीवात्मा नाम चतुर्थं प्रकरणम्॥ ४॥**

३४ शरीराच्च्युतौ प्रविशन्तीन्द्रियाणि मनसि। मनः मुख्यप्राणे। मुख्यप्राणो धर्माधर्म-प्रभाविते जीवे। ततो जीवः सूक्ष्मशरीर प्रविशति। एव हृदये सहृतेष्वेतेषु हृदयाग्र प्रदीप्त भवत् प्रकाशयति मार्गम्। उदानश्च सोपाधिक जीव नयति शरीरादस्माद्बहिः। तत्र 'अपरा-विद्यावान्' जीवः सुषुम्नाभिधाया मूर्धन्यनाड्या बहिर्भवति। अज्ञानी तु सुषुम्नेतरशतसख्याभ्यो नाडीभ्यो निष्क्राम्यति। विद्यावतस्तूत्क्रान्तिरेव न भवति। कर्मपरायणा अज्ञानिनः पितृयानेन गच्छन्ति। अपराविद्यावन्तो देवयानेन। विद्याकर्मविहीनास्तु पापा नान्यतरेण यानेन गच्छन्ति, तेऽगतिका दुर्गतिकाश्च भवन्ति।

३५ परापरविद्याविहीनाः कर्मिणः पितृयानमार्गेण चान्द्रमसं लोक यावद्गच्छन्ति ततो निवर्तन्ते। तत्रायं गमनक्रमः—धूमः, रात्रिः, कृष्णपक्षः, दक्षिणायनम्, पितृलोकः, आकाशम्, चन्द्रमा इति। चन्द्रमस गत्वा देवैः सह मोदमाना जीवाः पुण्यक्षये कर्मानुशयबलात् ततः प्रति निवृत्यात्र भूमौ जायन्ते। तत्रैष प्रतिनिवर्तनक्रमः–आकाशम्, वायुः, धूमः, मेघः, वर्षम्, ओषधि-

वनस्पतयः, रेतः, गर्भ इति । गर्भमुपसक्रम्य स्वकृतकर्मबलाद्भूयोऽस्मिन् भवे समुपजायन्ते । तत्र रमणीयाचरणा द्विजेषु जायन्ते । कपूयाचरणाः श्वशूकरचाण्डालादिहीनयोनिषु जायन्ते ।

३६ अथ सर्वथैव भ्रष्टाः केचन नरकादिषु वा पच्यन्ते । केचन सर्वथैवागतिका इहैव जायन्ते म्रियन्ते च । सेयमगतिस्तृतीय स्थानमित्युच्यते । तदपेक्षया नरकाख्या दुर्गतिः स्थानान्तरमिति भवितव्या ।

३७ अथ कर्मिणोऽपि, अप्रतीकोपासनापरा अपि ज्ञानिनः केचनात्मैकत्वमनुपलब्धवन्त सगुण ब्रह्मोपास्य शरीरात् प्रच्यवन्ते । ते देवयानमार्गेण सगुण ब्रह्म गच्छन्ति । तत्राय गमनक्रम अर्चिः, अहः, शुक्लपक्षः उत्तरायणम्, सवत्सरः, [ देवलोकः, वायुलोकः ], आदित्यः, चन्द्रमाः, विद्युत् । विद्युद्द्वारा च क्रमेण वरुणलोक इन्द्रलोकः प्रजापतिलोकः, अन्ते ब्रह्मलोकः । ब्रह्मलोकस्यास्य प्रलयान्ता भवति स्थितिः । अस्मिन् लोके जीवो भुनक्त्यैश्वर्यम्, परन्त्वपरब्रह्मवत् तस्य स्वातन्त्र्य न भवति । जीवस्यात्र स्थितिकालो ब्रह्मलोकस्थितिकालपरिमितो भवति । अत्र गतो जीवो न भूमौ पुनरावर्तते प्रत्युत तत्रैव सम्यग्दर्शनं लब्ध्वा यदा सलोकमपरब्रह्म परे ब्रह्मणि निलीयते, तदायमपि तेन सह तत्र निलीनो ब्रह्मभूतो भवति । क्रममुक्तिरेषा भवति ब्रह्मोपासनफला ।

**इति वेदान्तावतारप्रबन्धे प्रेत्यभावो नाम पञ्चमं प्रकरणम् ॥ ५ ॥**

३८ ब्रह्मणो-"ऽन्यदार्तम्" [ बृहदारण्यक० ३।४।२ ] इति श्रुतेर्ब्रह्मोपलब्धिः परमः पुरुषार्थः । तदेवैतस्मादार्ताद् बन्धान्मोक्षः । स मोक्षः कथ भवति ? यतः कर्म सुकृतदुष्कृतलक्षण भवति भवान्तरहेतुक ततः कर्मणो नैव भवति मोक्षः । नापि सङ्क्लेशाना व्यवदानात (=शोधनात्, सस्कारात् ) भवति मोक्षः । न हि सततमपरिवर्तनशीले व्यवदाते परिशुद्धे आत्मनि भवन्ति सङ्क्लेशाः, येन तेषा व्यवदानकथा प्रवर्तेत । "तमेव विदित्वातिमृत्युमेति" [ श्वेताश्वतर० ३।८ ] इत्येवमादयः श्रुतयो ज्ञानान्मोक्षो भवतीति विज्ञापयन्ति । तच्च ज्ञान न कादाचित्क कृतकारितरूपेण कृत्रिमं सान्त भवति प्रत्युत नित्यम् "अनन्तम्" [ तैत्तिरीय० २।१ ] भवति । तादृश ज्ञानम्–'तत्त्वमसि" [ छान्दोग्य० ६।८।७ ] इत्युक्तदिशा ब्रह्मैकत्वविज्ञानाद् भवति । लब्धे ज्ञाने तथाभूते जीवो ब्रह्मभूत एव भवति [ शाङ्कर० १।१।४ ] ।

३९ आत्मज्ञान हि मोक्षः । तद् विज्ञातृलक्षणम्, न तु विज्ञातव्यलक्षणम् [ बृहदारण्यक० ३।४।२ ] । अत एव यश्चात्मा यच्चात्मज्ञान तयोरभेद एव प्राप्नोति । एवमात्मैव मोक्षः । स च लब्ध एवास्ते । न तु लब्धव्यः । न ह्यात्मोपलब्धौ विहायात्मान भवति किमपि कारणान्तरम् ।

अत एवोच्यते—नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् ॥ [ कठ० १।२।२२ ] इति । अपरब्रह्मोपासनाया भेदबुद्धिस्तिष्ठति । उपास्योपासकभावेन तत्रात्मनो द्वैविध्यं भवति । तत्रापरस्योपास्यस्य ब्रह्मणो ज्ञानं तदनुग्रहाधीनं भवति । परायां विद्यायां त्वात्मनो विज्ञातव्यविषयाभावाद्विहायात्मानं नात्मज्ञानायान्यो हेतुप्रत्ययो भवितुमर्हति ।

४० आत्मज्ञानसाधनायां नित्यानित्यवस्तुविवेकः, इहामुत्रार्थभोगविरागः, शमादिषट्कसाधनसंपत्, मुमुक्षुत्वं चेत सन्ति चत्वार उपायाः । ते च कुशलकर्मोपासनाभ्यां भवन्त्युपकृताः । कर्म साक्षान्न ज्ञानजनकं किन्तु सहकारिमात्रम् । तदन्तरायाणां क्लेशानां व्यपोहनेन ज्ञानोत्पत्तौ साहाय्यमाचरति । तदिदं कर्म द्विविधम्–बाह्यं प्रत्यासन्नं चेति । तत्र बाह्यानि कर्माणि नाम वेदानुवचनं यज्ञो दानं तपोऽनशनं चेत्येवमादीनि [ बृहदारण्यक० ४।४।२२ ] । प्रत्यासन्नानि नाम शान्तिर्दमनमुपरतिस्तितिक्षा समाधिश्चेत्येवमादीनि [ बृहदारण्यक० ४।४।२३ ] । न ह्येभिर्दूरप्रत्यासन्नैः कर्मभिर्भूयान् कनीयान् वात्मा भवति । एतानि तु तदुपलब्धौ केवलमुपकारकाणि । उपासनं यद्यपि साक्षादपरब्रह्मज्ञानाय भवति, तथापि तत्त्वमसीत्यादिशब्दब्रह्मणः सततमभ्यासाच्छीघ्रं चिरेण वा ज्ञानं जायत एव । तथा च–"शाब्दे ब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति" इति वचनम् । लब्धे ज्ञाने नोपासनं प्रयोजनकरं भवति । अलब्धे तु यावज्जीवनं यावदन्तिमक्षणं कर्तव्यमेव, तस्य च्युतिकाले भवान्तरनिर्धारत्वात् । परब्रह्मज्ञानप्रयोजनकं निदिध्यासनं येन केनासनेन कर्तुं शक्यम् । अपरब्रह्मोपासनार्थं तूपविश्यैव निदिध्यासनं कर्तव्यं न तु शयानेन नापि स्थितेन ।

४१ जीवब्रह्मणोऽभेदाधिगमलक्षणं ज्ञानं भवत्यपरोक्षम् । ब्रह्माधिगमे कर्माणि क्षीयन्ते [ मुण्डक० २।२।८, छान्दोग्य० ४।१४।३, ५।२४।३ ] । ज्ञानिनः प्रक्षीणकर्मण एव भवति— "पूर्वसिद्धकर्तृत्वभोक्तृत्वविपरीतं हि त्रिस्वपि कालेष्वकर्तृत्वाभोक्तृत्वस्वरूपं ब्रह्माहमस्मि । नेतः पूर्वमपि कर्ता भोक्ता वाहमासं नेदानीं नापि भविष्यत्काले" [ शाङ्कर० ४।१।१३ ] इति । कर्तृत्वस्य मिथ्यात्वेन प्रतिषेधात् तत्फलभूतस्य देहस्य मिथ्यात्वं भवत्येव । अत एव ज्ञानी स्वशरीरसुखदुःखाभ्यां तथैवानभिभूतो भवति यथा ज्ञानी परकीयाभ्यां सुखदुःखाभ्याम् । यश्च शरीरमात्मीयं मत्वा तत्सुखदुःखाभ्यामभिभूतो भवति तस्य ज्ञानमपरिनिष्पन्नमपरिपूर्णं च तिष्ठति ।

४२ ज्ञानिनो नास्ति संसारः, न देहः, न दुःखम्, नापि च किमपि कर्तव्यम् । सुकृत-

दुष्कृते समतिक्रान्तस्य तस्य शुभमपि करणीय न भवति । अशुभस्य तु कथैव का । सर्वथै वोदासीनस्य ज्ञानिनः कर्माणि कुर्वतोऽपि कर्मबन्धो न भवति ।

४३ ज्ञानाग्निना दग्धेषु कर्मसु न भवति प्रेत्यभावप्रसङ्गः । इदं शरीर तु प्रारब्ध-कर्मविपाकभूत ज्ञाने लब्धे प्रबुद्धस्यापि तथैव ध्रियते यथा निष्पन्ने पात्रे भ्रमच्चक्रम् । यथा वा नेत्रदोषेण पश्यन्नपि धीमान् चन्द्रद्वयं तदपनोदनायामसमर्थोऽपि द्वय न निश्चिनोति तथैवोद्वहन्नपि शरीर ज्ञानी तदपनोदनायामसमर्थोऽपि न तेन वञ्चितो भवति न तेन विप्रलब्धो भवति ।

४४ ज्ञानिनोऽनारब्धकर्मणा ज्ञानेन प्रहाणे, प्रारब्धकर्मणा च भोगेन विप्रणाशे सत्यस्य शरीरस्य च्युतौ–"न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति" [बृहदारण्यक०।४।४।६] । किञ्च,

यथा नद्यः स्यन्दमानाः समुद्रेऽस्त गच्छन्ति नामरूपे विहाय ।
तथा विद्वान् नामरूपाद्विमुक्त परात्पर पुरुषमुपैति दिव्यम् ॥ इति ।
[ मुण्डक ०१।२।८ ]

इति वेदान्तावतारप्रबन्धे मोक्षो नाम षष्ठ प्रकरणम् ॥६॥

परिनिष्ठितोऽयं प्रबन्धः ॥ कुशलम् ॥

# साक्षिस्वरूपविचारः

श्रीमुरलीधरमिश्रः, राजकीयसंस्कृतमहाविद्यालय., काशी ।

सर्वेषा मनसि विचिकित्सेय जायते यत् कोऽहम् , किञ्चेद जगत् , कुत आयातम् , केनेदं निर्मीयत इति । तत्र मीमास्यमाने स्वभाववादः, आरम्भवादः, परिणामवादः, विवर्तवादश्चेति चत्वारो वादाः समुपलभ्यन्ते । तत्र स्वभाववादे स्वीक्रियमाणे न हि कश्चित् किञ्चित्प्रयोजनमुद्दिश्य कुत्रचित् प्रवर्तेत, सर्वेषा कार्यमात्राणा स्वभावसिद्धत्वात् तत्तत्कारणसंघटनाय प्रवृत्त्यादेर्वैयर्थ्यात् । तस्मात्कारणादेवासतः कार्यस्योत्पत्तिरिति तत्तत्कार्यार्थं कारणविषयिणीं पुरुषाणा प्रवृत्तिं दृष्ट्वाऽनुमीयते । तत्रापि सतः कारणसमवायादसतः कार्यस्योत्पत्तिस्वीकारे सर्वतः कारणेभ्यः सर्वे पदार्था उत्पद्येरन् , अविशेषात् । ततो घटार्थी तन्तूनपि गृह्णीयात् । स्वभाव एष केषाञ्चित्कारणाना यत्केषाञ्चिदेव कार्याणामुत्पादकतेति चेत्; तदा पुनरपि स्वभाववादगर्ते प्रपातः । अतोऽकामेनाप्यनायत्या सत एवोत्पत्तिं स्वीकृत्य परिणामवाद एष्टव्यः ।

तत्र परिणामस्य भावविकाररूपत्वाद् विकारवता च पदार्थानामनित्यत्वाद् अनित्याना च नाशदर्शनात् कार्यकारणसमुदायस्य विनाशित्वेन स्वत एव ससारोच्छेदात्तदर्थमुद्युयुक्षैव न स्यादतो विवर्तवादः सुदृढमास्थेयः सर्वैः । तत्र वादे नित्यस्यैकस्य स्वभावतश्चितः स्वाधिष्ठितानिर्वचनीयाज्ञानमायादिशब्दवाच्यस्योपाधेराश्रयणेन सर्वस्य प्रपञ्चस्य भासनाद् रज्जुतत्त्वज्ञानादज्ञानवशेन भातस्य सर्पादेरिव तत्तच्छास्त्रद्वारा ज्ञाते वस्तुतत्त्वेऽज्ञानवशेन सतामिवेतस्ततो लोलुठ्यमानाना प्रपञ्चभूताना पदार्थाना नाशान्न शास्त्रोपदेशानामानर्थक्यम् ।

तत्र परमार्थतः सत्याया अपि प्रकाशमानायाश्चितोऽनाद्यनिर्वचनीयाविद्याया आवरणविक्षेपशक्तिविशिष्टाया आवरणशक्त्या तिरोभावादप्रकाशेव सा भवति । इन्द्रियादिसहकारेणान्तःकरणस्य विषयाकारवृत्तिरूपेण परिणामात्तदवच्छिन्नाविद्याया नाशात् संकोचाद्वा तद्देशस्थायाश्चितोऽन्तःकरणप्रतिफलिततत्तादात्म्यापन्नप्रमातृद्वारा भानम् । अविद्यावृत्तेरन्तःकरणधर्मस्य सुखादेश्च साक्षिद्वारा भानम् ।

तत्र साक्षी[1] कः कीदृशश्चेति विचिकित्सायाम्—"एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । सर्वाध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च ॥", "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिद विभाति", "न दृष्टेर्द्रष्टार पश्येः", "नान्योऽतोऽस्ति द्रष्टा",

१ साक्षाच्छब्दात् 'साक्षाद् द्रष्टरि सज्ञायाम्' इति सूत्रेणेनिप्रत्यये निष्पन्नो भवति साक्षिशब्द. । साक्षाच्छब्दश्च प्रत्यक्ष एव लोके प्रसिद्ध.–साक्षाद् दृष्ट साक्षाच्छ्रुत इति । मनुनाप्युक्तम्—"समक्षदर्शनात्साक्ष्य श्रवणाच्चैव सिद्ध्यति" इति । तत्र द्विविधः साक्षी–एको लोके राजनीतौ प्रसिद्ध , परो वेदान्तेषु तत्सादृश्याद् गौणतया प्रसिद्धि गत. । तत्र लोके राजनीतौ स साक्षिपदेनोच्यते य. किञ्चित्कर्म पश्यति शृणोति वा, परन्तु तदर्थं व्यापारं न करोति, केवलमन्येन स्वव्यापारात्प्रयत्नेन निष्पाद्यं कर्म ताटस्थ्येन पश्यन्नन्यस्मै प्रकाशयति। एवमेव वेदान्तप्रसिद्धोऽपि साक्षी कर्तृभोक्तृद्वारा कारणसूक्ष्मस्थूलशरीरैः संपृक्तात्मना कृतं भुक्तं वा कर्म प्रकाशयति ताटस्थ्येन, न तु तस्य किञ्चित्करोति । तत्र राजनीतौ प्रसिद्ध साक्षी कीदृश इति जिज्ञासायामुक्तं याज्ञवल्क्येन—"तपस्विनो दानशीला. कुलीना सत्यवादिनः । धर्मप्रधाना ऋजव. पुत्रवन्तो धनान्विता ॥ त्र्यवरा. साक्षिणो ज्ञेया श्रौतस्मार्तक्रियापरा. । यथाजाति यथावर्णं सर्वे सर्वेषु वा स्मृता. ॥" इति । असाक्ष्यपि शास्त्रेण प्रतिपादित· । यदाह नारद – असाक्ष्यपि हि शास्त्रेषु दृष्ट· पञ्चविधो बुधैः । वचनाद्दोषतो भेदात्स्वयमुक्तिर्मृतान्तरः ॥" इति । तत्रासाक्षिकथनमुक्तसाक्षिभ्योऽन्येषामप्यनिषिद्धानां साक्षित्वप्रदर्शनार्थम् । तत्र वचनादसाक्षिणः—"श्रोत्रियास्तापसा वृद्धा ये च प्रव्रजितादय. । असाक्षिणस्ते वचनान्नात्र हेतुरुदाहृतः ॥" इति । दोषादसाक्षिण.—"स्तेना. साहसिकाश्चण्डाः कितवा वञ्चकास्तथा । असाक्षिणस्ते दुष्टत्वात्तेषु सत्य न विद्यते ॥" इति । भेदादसाक्षिण.—"साक्षिणां लिखितानां च निर्दिष्टाना च वादिनाम् । तेषामेकोऽन्यथावादी भेदात्सर्वे न साक्षिणः ॥" इति । स्वयमुक्तिस्तु—"स्वयमुक्तिरनिर्दिष्ट. स्वयमेवेत्य यो वदेत् । सूचीत्युक्तः स शास्त्रेषु न स साक्षित्वमर्हति ॥" इति । मृतान्तरस्तु—"योऽर्थः श्रावयितव्य. स्यात्तस्मिन्नसति चार्थिनि । क्व तद्वदतु साक्षित्वमित्यसाक्षी मृतान्तरः ॥" इति । "त्र्यवराः साक्षिणो ज्ञेयाः" इत्युक्तेऽपि यदि वादिप्रतिवादिभ्यामनुमत· स्यात्तर्ह्येकोऽपि साक्षित्वमर्हति । यदुक्तम्—"उभयानुमत. साक्षी भवत्येकोऽपि धर्मवित्" इति । स च साक्ष्येकादशविधो भवति—पञ्चविध. कृत., षड्विधोऽकृतः । "लिखितः स्मारितश्चैव यदृच्छाभिज्ञ एव च । गूढश्चोत्तरसाक्षी च कृत. पञ्चविधः स्मृतः ॥" इति । अकृतमपि नारद आह—"ग्रामश्च प्राड्विवाकश्च राजा च व्यवहारिणाम् । कार्येष्वधिकृतो यः स्यादर्थिना प्रहितश्च य. ॥ कुल्या. कुलविवादेषु विज्ञेयास्तेऽपि साक्षिणः ।" इति । तत्र प्राड्विवाकग्रहणं लेखकसभ्योपलक्षणम्—"लेखकः प्राड्विवाकश्च सभ्याश्चैवानुपूर्वशः । नृपे पश्यति तत्कार्यं साक्षिणः समुदाहृता.॥" इति । एवमत्र प्रसङ्गाल्लोकप्रसिद्धसाक्षिविषये दिङ्निर्देश कृतः, वेदान्तप्रसिद्धसाक्षिविषये तु मूल एव विचारः प्रक्रम्यते ।

"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥" इत्याद्याः परःशतं श्रुतयः कर्तृत्वभोक्तृत्वादिधर्मविशिष्टादन्यं साक्षिणमवबोधयन्ति। विवरणकारा अपि—"अज्ञाततया ज्ञाततया वा सर्वं साक्षिभाष्यम्" इत्यादिना शब्देन साक्षिणं प्राचीकटन्। वेदान्तपरिभाषायामप्यन्तःकरणस्य तद्धर्माणां च साक्षिवेद्यत्वमुक्तम्। किञ्च, साक्षिभेदेन प्रत्यक्षस्यापि द्वैविध्यमुक्तम्।

तस्य च साक्षिणः स्वप्रकाशत्वमवश्यं वाच्यम्। यदुक्तम्—"अप्रत्यक्षप्रकाशस्य नार्थदृष्टिः प्रसिद्ध्यति" इति। स्वप्रकाशत्वं नाम ज्ञानाविषयत्वे विनैव संशयादिविषयत्वायोग्यविद्यमानस्वरूपत्वम्। तदुक्तं तार्किकैः—"न हि जानन्नेव जानामि न वेत्याद्यनुभवति" इति। न च प्रमातुरेव ज्ञानाश्रयस्य नित्यस्य सत्त्वाज्ज्ञानादीनां धर्माणां विकारित्वेऽपि तस्याविकारित्वं स्वीकार्यमिति वाच्यम्, धर्मधर्मिणोस्तादात्म्यस्वीकारेण धर्मस्य विकारित्वे धर्मिणोऽपि विकारित्वस्य निष्प्रपञ्चत्वात्। तदुक्तम्—"उपयन्नपयन् धर्मो विकरोति हि धर्मिणम्" इति। अग्निपुराणेऽप्युक्तम्–"अहं साक्षी च चिन्मात्रो जाग्रत्स्वप्नादिकस्य च" इति। तथा भागवतेऽपि—"न नामरूपे गुणजन्मकर्मभिर्निरूपितव्ये तव तस्य साक्षिणः" इति।

स च साक्षी न कर्तृत्वभोक्तृत्वविशिष्टः, अवभासकत्वात् सूर्यादिवत्। तदुक्तं संक्षेपशारीरके—

> व्यापारं सकलस्य भासयति यो भास्वत्करो भास्करो
> नासौ कर्तृतया जनस्य विदितो भूमौ द्युलोकस्थितः।
> एवं स्वे महिमन्यवस्थितवतः संघातमुत्पश्यतः
> स्वव्यापारसमन्वितं तव कुतः कर्तृत्वमुत्प्रेक्ष्यते॥
>
> भूतानि पञ्च तव मोहसमुद्भवानि संघातरूपपरिणाममुपागतानि।
> कुर्वन्ति कर्मफलमश्नुवते च तेषां साक्षी त्वमन्तरविलुप्तचिदेकरूपः॥

किञ्च, कर्तृत्वादिविशिष्टत्वे तस्य दृश्यवर्गपतितत्वाद् द्रष्टृत्वानुपपत्तिः, लोके दृश्यवर्गात् समुद्रपर्वतादेरतिरिक्तस्य द्रष्टुरनुभवात्। दृश्यत्वं च कर्तृत्वादेस्तेन तेन रूपेण परिणामाद्, आत्मनश्चापरिणामित्वात्। यदि च स्वाभाविकी कर्तृता स्यात् तदा स्वप्नेऽपि प्रतीयेत। यद्यपि स्वप्नेऽपि करोमीत्यादिप्रतीतिर्भवति परन्तु सा न वास्तविकी, तत्तत्कालोचितदेशकालादेरभावात्; स्वशिरश्छेदादेरपि प्रतीत्या तत्कर्तृत्वस्यापि वास्तविकत्वापत्तेः। तदुक्तं ब्रह्मसूत्रे—"मायामात्रं तु, कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्" इति। यद्यपि सिद्धान्ते जाग्रत्सृष्टेरपि मायामय-

त्वमेव, तथापि व्यावहारिकत्वेन व्यवहारकाले सत्यमिव प्रतिभासते। स्वाप्नस्य तु व्यावहारिकत्वमपि नास्ति। अत एव सूत्रकारेण पूर्वोक्तसूत्रे मात्रशब्दोपादानं कृतम्।

लोके यद्विषये यः साक्षी स तद्विषये उदासीनस्तद्विषयकज्ञानवांश्च गृह्यते। एवमयमपि सर्वव्यवहारातीतः सर्वव्यवहारभासकश्च। स्थूलसूक्ष्मशरीरात्मकदेहद्वयेऽन्तःकरणावच्छिन्नचैतन्यप्रतिबिम्बगस्यान्तःकरणस्य देहद्वयाकारवृत्तिभिर्भासन भवति। सा च वृत्तिर्विच्छिद्य विच्छिद्य जायते। ततश्च मध्ये वृत्त्यभावेन यद्देहद्वयभासनं तत्साक्ष्यधीनम्। अत एवाहङ्कारादीना सर्वदा भानम्। एकविषयकज्ञानद्वययोरनुसन्धान च–एतावन्त कालमिदमह पश्यन्नेवाहमासमिति। जीवकूटस्थयोरन्योन्याध्यासेन च साक्षिभास्येनापि वस्तुना प्रमातुर्व्यवहारः प्रसिद्ध्यति। जीवस्य व्यवहारकर्तृत्वादेव न साक्षित्वम्। अत्रैव दृष्टान्तत्वेन नृत्यशालास्थदीपो दर्शितः। तथा हि—

नृत्यशालास्थितो दीपः प्रभु सभ्यांश्च नर्तकीम्।
दीपयेदविशेषेण तदभावेऽपि दीप्यते॥ इति।

एव साक्षी चिदाभासविशिष्टाहङ्काररूप जीव प्रमातारं विषयभोगसाकल्यवैकल्याभिमानप्रयुक्तहर्षविषादवत्वान्नृत्याभिमानिप्रभुतुल्यम्, प्रभुवद्धर्षविषादादेरभावात् सभ्यवद्विषयान्, नानापरिणामित्वादनेकरूपधारिणीं नर्तकीमिव बुद्धिम् वादकादीनिवाक्षाणि दीपयन् तेषा मभावेऽपि स्वयमपि प्रकाशते। एव चैतन्मते शुद्धचिदेव जीवेश्वरादिभिन्नः जीवाभेदमापन्नो जीवाधिष्ठानत्वेन जीवतादात्म्यापन्नः प्रतिशरीर भिन्नः साक्षी कूटस्थपदवाच्यः।

कौमुदीकारमते यथेद रजतमिति ज्ञाने शुक्तेरेव रूपमिदमशः। स च न शुक्तिरूपः किन्तु शुक्तेः पृथक्, अन्यथा शुक्तिवत्तस्याप्यज्ञातत्वप्रसङ्गात्। रजतवदध्यस्तत्वाभावेन रजताद्भिन्नोऽपि प्रतिभासतो रजताभेदेन प्रतीयमानो रजतकोटावेवान्तर्भवति। तथैवेश्वरस्य स्वरूपमपि साक्षी जगत्सृष्टिस्थितिप्रलयकर्तृत्वादिरूपादीश्वराद्भिन्नः स्वय प्रकाशरूपो जीवगताज्ञानाद्यवभासयन् जीवस्यान्तरङ्गो जीवगतप्रवृत्तिनिवृत्त्योरनुमन्ता सुषुप्तिकाले केवलाज्ञानादेश्च भासकः प्राज्ञशब्दितः।

तत्र परमेश्वरस्योभयरूपत्वे प्रमाणं तूभयविधा श्रुतिरेव। तत्र जगत्सृष्ट्यादिकर्तृत्वे— "यतो वा इमानि भूतानि जायन्ते यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व" इत्यादिप्रश्ने–"आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते" इत्याद्याः श्रुतयस्तथान्या अपि सृष्टिप्रतिपादिकाः श्रुतयः प्रमाणम्। साक्षिरूपत्वे तु–"एको देवः", "अनश्नन्नन्यो अभिचाकशीति" इत्याद्याः श्रुतयः प्रमाणम्। न च शुद्धचिद्रूपः स संभवति, देवत्वादिश्रुतिविरोधात्। "ईश्वरः सर्वभूताना हृद्देशेऽर्जुन तिष्ठति" इति स्मृत्यनुसारेण सर्वभूतान्तरात्मत्वस्य तत्रैव सभवात्। स एव च साक्षी

सुषुप्त्युत्क्रान्त्यवस्थयोर्जीवभेदेन परमेश्वररूपेण प्राज्ञशब्देन प्रतिपादितः—"तद्यथा प्रियया स्त्रिया सपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्, एवमेवाय पुरुषः प्राज्ञेनात्मना सपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्", प्राज्ञेनात्मनाऽन्वारूढ उत्सर्जन् याति" इति श्रुतिभ्याम्।

केषाञ्चित्खल्वेवं मतं यद्बिम्बरूप ईश्वरोऽविद्याया प्रतिबिम्बरूपो जीवोऽप्येकस्तत्तदन्तः-करणतादात्म्यापत्त्या भेदे सति तत्तत्कर्तृत्वभोक्तृत्वादिविशिष्टभेदेन प्रतिभासते। स एवाविद्या-प्रतिबिम्बो जीवः साक्षी, अकर्तृत्वात् सर्वस्य पदार्थस्य द्रष्टृत्वाच्च। नन्वेव तत्र देवत्वादिधर्मा-भावात्—"एको देवः" इत्यादिमन्त्रविरोधः, इति चेन्न; ब्रह्मणः परमेश्वरस्यैव जीवभावापन्नस्य साक्षित्वरूपेण तेन मन्त्रेणाभिधानात्।

केषाञ्चिन्मतेऽविद्योपहितो जीवः साक्षी। तस्य सर्वेषा पुरुषाणामन्तःकरणसबन्धा-विशेषेण पुरुषान्तरस्यापि पुरुषान्तरान्तःकरणधर्माणा प्रत्यक्षत्वापत्तिः, अन्तकरणधर्माणा प्रमा-त्रादेश्च साक्षिभाष्यतयैव प्रत्यक्षत्वस्वीकारात्। अतोऽन्तःकरणोपहितो जीवः साक्षी। एव चान्तःकरणभेदेन साक्षिणोऽपि भेदान्न पुरुषान्तरान्तःकरणधर्माणा पुरुषान्तरस्य प्रत्यक्षम्। सुषुप्त्यवस्थायामन्तःकरणस्य लीनत्वेऽपि सूक्ष्मरूपेणावस्थानान्न साक्ष्यभावः। अत एव तस्या-मप्यवस्थाया साक्षिणाऽज्ञानप्रतिभास। प्रमाणमत्र सुषुप्तोत्थितस्य मूढोऽहमस्वाप्स न किञ्चि-दवेदिषमिति परामर्श एव। सुषुप्तावन्तःकरणस्य साक्षिणः सत्त्वेऽपि तद्विशिष्टस्य प्रमातुरभावान्न विशेषरूपेण ज्ञानम्। अन्तःकरणस्य विशेषणोपाधिभ्यामेव तयोर्भेदादिति।

अस्तु तावत् साक्षी। परन्तु चैतन्यमात्रमज्ञानेनावृतम्, अन्यथा सर्वस्य सर्वदा प्रमाण-मन्तराऽपि सर्वज्ञाम स्यात्। तच्चाज्ञानावरण प्रमाणद्वाराऽन्तःकरणवृत्त्याऽपोद्यते। तथा च साक्षिणो वृत्तिविषयत्वाभावेनावरणाभावस्य विद्यमानत्वेन कथमविद्याहङ्कारादीना साक्षिवेद्यत्व-मिति चेच्छृणु। यथा राहुणावृतस्य सूर्यस्यान्यानवभासकत्वेऽपि राहोर्भासकत्वम्, तथैवाज्ञाने-नावृतेन साक्षिणा प्रमाणद्वारा वृत्तिमन्तरेण घटादीनामनवभासकत्वेऽप्यनाद्यनिवचनीया-विद्याहङ्कारादीना भासकत्वे न काचित्क्षतिः। न चैवमपि राहुवदविद्यावभासकत्वेऽप्यहङ्का-रादीनामवभासकत्वं कथमपि न स्यादिति वाच्यम्; तथा सति साक्षिणोऽज्ञानानावृतत्वस्यैव युक्तत्वात्। अन्यथाऽहं जानाम्यहं सुखीत्यादिनिर्विचिकित्सप्रत्ययो न स्यात्। तदुक्तं वेदान्त-सूक्तिमञ्जर्याम्—

अविद्याबुद्धितद्धर्मभासकाशेतरावृतिः।
कल्प्यते वस्तुतस्तेषु संशयादेरदर्शनात्॥ इति।

न चैवं साक्षिणोऽनावृतत्वे चैतन्यमिवानन्दत्वस्यापि भानं स्यादिति वाच्यम्; आत्मनि परप्रेमास्पदत्वरूपसुखस्य भासनं सर्वदा भवतीति प्रमाणमूर्धन्याभिः श्रुतिभिरपि स्वीकारात्। तथा च श्रुतिः—"आत्मनस्तु कामाय सर्वं प्रियं भवति" इति, "तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात् सर्वस्मादन्तरतरम्" इति च। विवरणकारा अप्याहुः—"भासत एव परमप्रेमास्पदत्वलक्षणं सुखम्" इति।

नन्वेवमपि संसारदशायामप्यानन्दप्रकाशे मुक्तसंसारिणोरविशेषप्रसङ्गः, तदर्थं मुक्तिप्रतिप्रतिपादकवेदान्तज्ञानस्यापि वैयर्थ्यमिति चेन्न, संसारदशायामानन्दस्य सातिशयत्वेन परिच्छिन्नत्वेनातृप्तत्वात्, मुक्तावस्थायां च निरतिशयानन्दस्यापरिच्छिन्नत्वेन नित्यतृप्तत्वाद्विशेषोपपत्तेः। तथा हि—एकस्यैव सूर्यादिकस्य मालिन्यतारतम्ययुक्तेष्वनेकेषु दर्पणेषु प्रतिबिम्बे उपाधितारतम्येन प्रतिबिम्बतारतम्यम्, एवं वस्तुतो निरतिशयस्याप्येकस्यानन्दस्यान्तःकरणप्रतिबिम्बतया साक्ष्यानन्दभावे तत्तद्विषयविशेषसंपर्कजन्यशुद्धितारतम्यवदन्तःकरणप्रतिबिम्बतया संसारदशायां प्रकाशमानेऽप्यानन्दे उपाधिगतापकर्षाद्यध्यस्ततारतम्ये सातिशयत्वम्; मुक्तिदशायां च निखिलापकर्षाध्यासनिवृत्तेर्निरतिशयत्वम्। केषाञ्चिन्मते मय्यानन्दो नास्ति न प्रकाशत इत्याद्यनुभवबलात् साक्ष्यंशं विहाय चैतन्यांशवत् तत्तत्सुखरूपवृत्तिकवलितं विहायानन्दमप्यावृणोति। एवं च न संसारदशायां ब्रह्मानन्दाविर्भावः, वृत्त्या तत्तद्विषयानन्दस्यैव भानात्। तथा च पूर्वोक्तरीत्या साक्षिणोऽनावृतत्वं सिद्धम्।

नन्वेवमपि ज्ञाननाशस्यैव संस्काराधायकत्वेन संस्कारस्य ज्ञाननाशरूपत्वेनाहमाकारान्तःकरणवृत्तिरूपस्य ज्ञानस्याभावात् साक्षिणश्च नित्यत्वात् संस्काराधानाभावेनाहङ्कारस्य सुखादीनां च स्मृतिर्न स्यादिति चेन्न, स्वगोचरवृत्त्यैव स्वगोचरसंस्काराधानमिति नायं नियमः, अपि तु यद्वस्तुगोचरवृत्त्यवच्छिन्नचैतन्ये यावन्तः पदार्थाः प्रकाशन्ते तद्वस्तुगोचरवृत्त्या तावत्सु पदार्थेषु संस्काराधानमित्येव नियमः। तथा च घटादिज्ञानेऽहङ्कारस्यापि भासनात् तद्विषयकसंस्काराधानस्य निर्विवादत्वात्। ज्ञानसुखादिस्थले ज्ञानरूपवृत्तेरभावेऽपि क्रियारूपवृत्तेस्तप्तायःपिण्डाद् विस्फुलिङ्गा इव सत्त्वेन स्वावच्छिन्नेन वह्निनेव साक्षिणो नित्यत्वेऽपि स्वस्वावच्छिन्नेनानित्येन साक्षिणा तेषां भासनात्, तेषामनित्यतया तदवच्छिन्नसाक्षिणोऽप्यनित्यतया संस्काराधानस्य सुष्ठूपपादनीयत्वात्।

ननु जीवचैतन्येनैव घटादीनामवभासादन्तःकरणवृत्तेर्भ्रमस्थलेऽविद्यावृत्तेश्च किं प्रयोजनमिति चेन्न, जीवचैतन्यस्याविद्योपाधिकत्वमते तस्य व्यापकत्वेऽप्यसङ्गित्वेन घटादेः

संबन्धाभावात् तेन तस्यावबोधासंभवात्। गोत्वस्य व्यापकत्वेऽपि गोव्यक्तावेव यथा संसर्गो न महिषादिव्यक्तौ स्वभावात्, तथैव जीवचैतन्यस्यान्तःकरणेनैव संसर्गो न घटादिना। एवं चान्तःकरणद्वारा घटादिभिः संबन्धार्थं वृत्तिरावश्यिकी। जीवचैतन्यस्यान्तःकरणोपाधिकत्वपक्षे परिच्छिन्नतया विषयादिना संसर्गाभावात् तत्संसृष्टविषयावच्छिन्नब्रह्माभेदसिद्ध्यर्थं वृत्तेरावश्यकत्वात्। अथवाऽविद्योपाधिकस्य जीवस्यापरिच्छिन्नत्वपक्षेऽप्यज्ञानेनावृतत्वान्न तस्य सर्वदा भानम्। किन्त्वन्तःकरणस्य स्वच्छतया तेनावरणस्याभिभवादन्तःकरणावच्छेदेनात्मनः प्रकाशो भवति। अत एवान्तःकरणावच्छेदेनैवाहमिति प्रतीयते। एवं च विषयावच्छिन्नचैतन्यस्याप्यावृतत्वात् तदपनयनार्थमन्तःकरणसंबन्ध आवश्यकः। स च वृत्तिमन्तरा न संभवतीत्यावरणाभिभवार्था वृत्तिः। तथा च चिदुपरागार्थत्वेन विषयचैतन्याभिव्यक्त्यर्थत्वेनावरणाभिभवार्थत्वेन चान्तःकरणस्य वृत्तिरवश्यमेवापेक्षणीया।

ननु चिदुपरागार्था वृत्तिरिति पक्षे वृत्त्या विषयचैतन्ययोः कीदृशः संबन्धः स्थाप्यते? समवायस्यास्वीकारात् तादात्म्यस्य संयोगादेश्च निष्क्रिययोरेतयोरसंभवात्, इति चेन्न; विषयविषयिभावसंबन्धस्य स्वीकृतत्वात्। यद्यपि विषयविषयिभावरूपसंबन्धस्वीकारे तादृशविषयविषयिभावस्य वृत्तेः पूर्वमपि सत्त्वेन वृत्तेर्वैयर्थ्यं स्यादतो विषयसंयोगे तत्तादात्म्यापन्नचैतन्यस्यापि परम्परया संयोगात् संयोगसंबन्धस्वीकारस्यैव युक्तत्वात्। अथवा वृत्तिद्वारा कार्याकार्यवृत्तिविषयसंयोगात् कारणाकारणचैतन्यविषययोः संयोगः संबन्धः, तथा च संयोगजसंयोगः संबन्धः।

विषयचैतन्याभिव्यक्तिपक्षे विषयावच्छिन्नचैतन्यं विषयप्रकाशकम्। विषयाणां चैतन्य एव कल्पिततया कल्पितस्य चाधिष्ठानसत्तातिरिक्तसत्ताकत्वाभावेन तद्रूपत्वात्। जीवचैतन्यस्य तु विषयप्रकाशो वृत्त्या विषयावच्छिन्नचैतन्येन जीवचैतन्यस्य तादात्म्यापन्नत्वात्। केषाञ्चिन्मते बिम्बप्रतिबिम्बभूतयोर्जीवब्रह्मणोरैक्यासम्भवः, किन्तु विषयावच्छिन्नं ब्रह्मचैतन्यं विषयसंसृष्टवृत्तौ प्रतिबिम्बं समर्पयति। प्रतिबिम्बेन सह जीवचैतन्यस्यैकीभावः।

वस्तुतो बिम्बप्रतिबिम्बयोर्भेदेन बिम्बेन विषयस्य संबन्धे प्रतिबिम्बेनापि संबन्धः स्यादित्युक्तिर्न समीचीनतामर्हति। अतः केचिदेवमभेदाभिव्यक्तिं स्वीकुर्वन्ति यद् विषयाधिष्ठानचैतन्यमेव बिम्बप्रतिबिम्बभावेन स्थितम्। तत्र बिम्बभूतचैतन्येन न विषयस्य संबन्धः संभवति, तस्य कल्पितत्वात्। किन्त्वाध्यासिकः संबन्धः। तत्रोपाधिविशिष्टबिम्बप्रतिबिम्बचैतन्ययोर्भेदेऽपि

तदुपहितस्याभेदेन तेनापि सबन्ध उपपद्यत एव । न चात्र जीवब्रह्मणोः साकर्यम् , उपाधिविशिष्ट-योस्तयोर्भेदस्य सर्वैः सिद्धान्तितत्वात् । बिम्बात्मना तस्य सर्वज्ञत्वादिसिद्धेः ।

अथावरणाभिभावार्था वृत्तिरिति पक्षे को नामावरणाभिभव इति प्रश्ने केषाञ्चिन्मते साक्ष्यतिरिक्तचैतन्यमात्रमावृणोत्यज्ञानम् । तत्र विषयदेशे वृत्त्या ज्ञानेनाज्ञानाभिभवे प्रदीपादि-प्रकाशेन महान्धकारस्यैकदेशनाश इवाज्ञानस्यापि नाशः । अथवा यथा विस्तृतः कटः समये सवेष्टयते हस्तादिना तदा कटस्य सकोचो भवति, पुनरपि प्रसारणे विस्तारो भवति तथैव ज्ञाने-नाज्ञानरूपस्य महान्धकारस्य सकोचविस्तारौ । किं वा, यथा प्रतिभटमतिबलवन्तं दृष्ट्वा ततो भीतोऽन्यो भटस्तत्स्थानात्पलायते गते च प्रतिभटे पुनरायाति तथैव तद्देशादज्ञानस्य पलायनमिति ।

साक्षिणः सत्त्व विद्यारण्यस्वामिकृतपञ्चदशीग्रन्थेऽपि प्रतिपादितम्—"मृन्मयो मान-मेयः स्यात्साक्षिभास्यस्तु धीमयः" इति । बुद्धिस्थपदार्थाना साक्षिणैव भासमानत्वात् । किञ्च, सर्वेभ्यः वस्तुभ्यः प्रेयान् साक्ष्येव । एतदपि तत्रैवोक्तम्—"साक्ष्येव दृश्यादन्यस्मात्प्रेयानित्याह तत्त्ववित् । तस्मात्पुत्रादिधीरेव भोक्त साक्षीति मूढधीः ॥" इति । तत्र सिद्धान्तबिन्दुटीकाया न्यायरत्नावल्यामुक्तम्—"अज्ञानगतचिदाभासाविविक्तचैतन्य साक्षी" इति । सक्षेपशारीरकेऽपि—"अज्ञानोपहतबिम्बचैतन्य साक्षी" इत्युक्तम् । सिद्धान्तबिन्दौ—अविद्याप्रतिबिम्बेश्वरपक्षे बिम्बचैतन्य साक्षी । बिम्बेश्वरपक्षे बिम्बप्रतिबिम्बमुखानुगतमुखस्वरूपवजीवेश्वरानुगतसर्वानु-सन्धातृचैतन्य साक्षीत्यादिना साक्षिभेदः प्रपञ्चितः ।

एवमत्र सक्षेपेण साक्षिस्वरूपविचारदिक्प्रदर्शिता । विशेषजिज्ञासुभिरुपर्युद्धृता ग्रन्था एव शरणीकरणीया इति शम् ॥

---

# षष्टितन्त्रम्

श्रीमामरराजदत्त' कापिल', राजकीयसंस्कृतमहाविद्यालय., काशी ।

प्रस्तुतेऽस्मिन् निबन्धे साख्यवाङ्मये प्रथितचरेण प्राचीनतमेन षष्टितन्त्रनामकेन ग्रन्थेन संबद्धाः काश्चन जटिला महत्त्वपूर्णाश्च समस्या विवेचयिष्यन्ते। तासा चेत्थ स्वरूपतो निदर्शनम्—

१ षष्टितन्त्रनाम्ना प्रसिद्धः कश्चिद् ग्रन्थविशेषो विद्यते, अथवा षष्टिपदार्थाना विवेचकस्य शास्त्रस्येद नाम ?

२ को हि परमाचार्यः षष्टितन्त्रस्य प्रणेता ?

३ साख्यशास्त्रविचारपरम्परासु कीदृगस्य स्थानमिति ।

आसा समस्याना समाधानोपस्थापनवेलायामनेके प्रश्नाः प्रोद्भवन्ति, ये हि महतीं शोध-सामग्रीं समपेक्षन्ते ।

षष्टितन्त्रस्य नाम सर्वप्रथममाचार्येश्वरकृष्णविरचिताया साख्यकारिकाया प्रामाणिकरूपेण समुपलभ्यते । तदित्थम्—

> सप्तत्या किल येऽर्थास्तेऽर्थाः कृत्स्नस्य षष्टितन्त्रस्य ।
> आख्यायिकाविरहिताः परवादविवर्जिताश्चापि ॥ ७२ ॥

अस्याः कारिकायाः परिशीलनेन प्रतीयते यदाचार्येश्वरकृष्णात्पूर्व षष्टितन्त्रनामकः कश्चिद् ग्रन्थ आसीत्, यस्य ह्याख्यायिकाः परवादाश्च विहाय सर्वो मौलिकः साख्यसिद्धान्तोऽत्रेश्वरकृष्णेन सगृहीत इति ।

सर्वतन्त्रस्वतन्त्रा आचार्यवाचस्पतिमिश्रास्तु मतमेतन्नैव समन्वते ।

> प्रधानास्तित्वमेकत्वमर्थवत्त्वमथान्यता ।
> पारार्थ्य च तथानैक्य वियोगो योग एव च ॥
> शेषवृत्तिरकर्तृत्वं मौलिकार्थाः स्मृता दश ।
> विपर्ययः पञ्चविधस्तथोक्ता नव तुष्टयः ॥
> करणानामसामर्थ्यमष्टाविंशतिधा मतम् ।
> इति षष्टिः पदार्थानामष्टाभिः सह सिद्धिभिः ॥

इति राजवार्त्तिकमुद्धृत्य कथयन्ति ते—"सेयं षष्टिपदार्थी कथितेति सकलशास्त्रार्थ-कथनान्नेदं प्रकरणम्, अपि तु शास्त्रमेवेदमिति सिद्धम्" [ साख्यतत्त्वकौमुदी ७२ ] इति। अनेन स्पष्टं प्रतीयते यदाचार्यवाचस्पतिमिश्रा राजवार्त्तिकसरण्या साख्यकारिकामेव षष्टिपदार्थी मन्वते। तेषा मते हि षष्टिपदार्थाना विवेचकस्य शास्त्रस्यैव नाम षष्टितन्त्रम्, न तु कस्यचिद् ग्रन्थविशेषस्य। अन्यच्च, साख्यकारिका नैव प्रकरणग्रन्थः, अपि तु समग्रषष्टिपदार्थाना साङ्गोपाङ्गाना समुपोहनात् साख्यशास्त्रस्याकरग्रन्थोऽयमित्यपि वाचस्पतिवचनस्याभिप्रायः।

माठराचार्याः—येषा हि स्थितिसमयः पञ्चशतकस्य परार्द्धमनुमीयते—विषयेऽस्मिन् स्पष्टमेव कथयन्ति—"षष्टिपदार्था यस्मिन् शास्त्रे तन्त्र्यन्ते तत् षष्टितन्त्रम्, न तु ग्रन्थनाम" इति। चीन-भाषाया माठरवृत्तेर्योऽनुवादः समुपलब्धः सोऽपि पक्षमेनं समर्थयति।

'षष्टितन्त्रम्' साख्यशास्त्रस्य मौलिको ग्रन्थ इति पक्षेऽपि कतिपयप्रमाणानि समुपलभ्यन्ते। अहिर्बुध्न्यसहिताया [ई० पू० २ शतकम्] षष्टितन्त्रस्योल्लेखो विद्यते, तत्र प्रतिपादिताना पदार्थानामपि तत्र विस्तरेण विवेचनमवलोक्यते। गुणरत्नरचिताया तर्करहस्यदीपिकाया [ द्रष्टव्यम्—पृ० १०६ ] षष्टितन्त्रोद्धारनामा ग्रन्थः समुद्धृतः। अत आसीत् षष्टितन्त्रनामकः कश्चित्प्राचीनो ग्रन्थः, यस्य हि समुद्धारः पश्चादन्येन केनचिदाचार्येण कृतः स्यादिति स्वाभाविकमनुमान नायुक्तिसगतम्। गुणरत्न एव साख्यदर्शनस्य मौलिक्य-उत्तरनामिके द्वे विचारसरणी इति समुल्लिखितवान्। जैनसप्रदायस्यानुयोगद्वारसूत्रं कापलषष्टितन्त्रयोः 'काविलम्' इति, 'षट्ठितन्तम्' इति च नाम समुद्धरति, अनुपपादिकसूत्रं च 'काविला' इति, 'साख्यजोगन्' इति च शब्दौ [1]चर्चयति। सुप्रसिद्धो भारतीयः पुरातत्त्वज्ञः श्रीगार्वेमहोदयोऽपि षष्टितन्त्रं स्वतन्त्रं ग्रन्थं [2]मन्यते। साख्यकारिकाया उपर्युद्धृताऽऽर्या स्वत एव षष्टितन्त्रस्य स्वतन्त्रग्रन्थत्वानुमानमेव द्रढयति। यतो हि—सप्तत्या किल ये पदार्था विवेचिताः, सम्पूर्णे सुविस्तृते षष्टितन्त्रेऽपि तेषामेव विवेचनं विद्यते, न त्वितोऽधिकाः पदार्थास्तत्र विवेचिताः सन्ति। इयानेव विशेषोऽत्र—यत् साख्यकारिका षष्टितन्त्रापेक्षया संक्षिप्ततरा, षष्टितन्त्रस्थानामाख्यायिकाना परवादाना चात्र परित्यक्तत्वादिति हि तस्याः कारिकाया भावार्थः। अनेन स्पष्टं प्रतीयते—'सप्तति.' इति, 'षष्टितन्त्रम्' इति च स्वतन्त्रयोर्द्वयोर्ग्रन्थयोर्नामनी, षष्टितन्त्रं च प्राचीनतरः प्रामाणिकश्चाकरग्रन्थ इति।

---

१ द्रष्टव्यम्—F O Shroeder, Z D M G LXVIII pp 101-110

२ द्रष्टव्यम्—Samkhya Philosophie pp 58-59

सप्ततिशब्दस्यार्थोऽत्र व्याख्यासापेक्षो विद्यते। व्याख्याते तस्मिन साख्यदर्शनेतिहास आचार्यविन्ध्यवासिनोऽपि सुप्रतिष्ठा भविष्यति।

वस्तुत ईश्वरकृष्णविरचिताः कारिकाः सप्ततिसख्याका एवासन्, अत एवात्र सप्तति शब्दव्यवहार। गौडपादाचार्या. स्वकीये साख्यकारिकाभाष्ये सप्ततिसख्यकानामेव कारिकाणामुल्लेख कृतवन्तः—

> साख्य कपिलमुनिना प्रोक्त ससारविमुक्तिकारण हि।
> यत्रैताः सप्ततिरार्या भाष्य चात्र गौडपादकृतम्॥ इति।

साम्प्रत साख्यकारिकापुस्तकेषु प्रायशः ७३ कारिका. समुपलभ्यन्ते। किमेता अधिकास्तिस्रः कारिकाः प्रक्षिप्ताः? कृते ह्यन्तरङ्गपरीक्षणे तिस्र एव न, अपि त्वन्तिमाश्चतस्रः कारिकाः प्रक्षिप्ता इति प्रतीयते। ६९ तमकारिकापर्यन्तमेव गौडपादाचार्यस्य भाष्य विद्यते। गौडपादभाष्ये कारिकैका विद्यते यत्र सर्वप्रथम लोकमान्यबालगङ्गाधरतिलकमहोदयैरवहितम्, विद्वत्सु प्रसिद्धि चानीता। वस्तुत. सैव कारिका साख्यकारिकाया ६२ तमकारिकात्वेन परिगणनीया। इय सा कारिका—

> कारणमीश्वरमेके पुरुष काल परे स्वभाव वा।
> प्रजाः कथं निर्गुणतो व्यक्तः कालः स्वभावश्च॥ इति।

इत्थ साख्यकारिकाया अधस्तात् कृतनिर्देशा सप्ततिः परिपूर्णा भवति।

इयं च सप्ततिर्हिरण्यसप्ततितो भिन्ना। केषाञ्चिन्मते साख्यकारिकायाः सप्ततिर्हिरण्यसप्ततिश्चाभिन्नैव। त एवेश्वरकृष्ण एवाचार्यो विन्ध्यवासीत्यपरा भ्रान्ता धारणामाविर्भावयन्ति। आचार्यपरमार्थेन षष्ठशताब्दयास्तृतीये चरणे माठरवृत्तिसहिता साख्यकारिका चीनभाषाया मनूदिता। एष चानुवादः साम्प्रतमप्युपलभ्यते। बौद्धग्रन्थाना चीनभाषानुवादैः परिज्ञायते यद् विन्ध्यवासिना स्वगुरोर्वार्षगण्यस्य ग्रन्थ सक्षिप्य हिरण्यसप्ततिनामा ग्रन्थो विरचितः। अस्या एव हिरण्यसप्ततेरालोचनाऽऽचार्यवसुबन्धुना स्वकीयाया परमार्थसप्ततौ कृता। ईशवीये चतुर्थे शतके वसुवन्धुर्विद्यमान आसीत्। षड्दर्शनसमुच्चये आचार्यविन्ध्यवासिन एका कारिकोपलभ्यते, सा च साम्प्रतिकसाख्यकारिकासु नैव दृश्यते। तत्र ह्युक्तम्—"विन्ध्यवासी त्वेवमाचष्टे—पुरुषोऽविकृतात्मैव स्वनिर्भासमचेतनम्। मनः करोति सान्निध्यादुपाधिस्फटिकं यथा॥" इति। एतदेव

न, गुणरत्न ईश्वरकृष्णविन्ध्यवासिनौ पृथगाचार्यत्वेन [1]निर्दिशति । अपि च, आचार्य कुमारिलभट्टेन[2] विन्ध्यवासिनोऽनुमानविषयकाणा येषा सिद्धान्तानामुल्लेखः कृतस्त ईश्वर-कृष्णस्यानुमानसिद्धान्तैः साख्यतत्त्वकौमुद्या वाचस्पतिमिश्रेण सविस्तरं व्याख्यातैर्नैव संव दन्ति। अत. प्रतीयते साख्यकारिकायाः सप्ततितो भिन्नैव हिरण्यसप्ततिरिति । विन्ध्यवासी चेश्वरकृष्णतो भिन्न स्वतन्त्रः साख्याचार्यः । तस्य हिरण्यसप्ततिनामा ग्रन्थ आचार्यवार्षगण्य ग्रन्थस्य सक्षिप्त रूपमासीत् । अस्यैवाचार्यविन्ध्यवासिनो मुख्यं नाम [3]रुद्रिल इति स्यात् ।

योगसूत्रकैवल्यपादस्य त्रयोदशसूत्रभाष्ये महर्षिव्यासेन षष्टितन्त्रस्यैष श्लोकः समुद्धृत.—

गुणाना परम रूप न दृष्टिपथमृच्छति ।
यत्तु दृष्टिपथ प्राप्त तन्मायेव सुतुच्छकम् ॥

एष एव श्लोक आचार्यवाचस्पतिना भामत्याम् [ २।१।३ ] आचार्यवार्षगण्यनाम्ना समुद्धृत । महर्षिपतञ्जलिना [ १४७ ई० पू० ] महाभाष्ये [४।१।३] समुद्धृतम्—"अतिसन्नि-कर्षादतिविप्रकर्षान्मूर्त्यन्तरव्यवधानात्तमसावृतत्वादिन्द्रियदौर्बल्यादतिप्रमादात्" इत्युद्धरणं साख्यकारिकाया. सप्तम्या कारिकया सवादमञ्चति । साख्यकारिकायाः पूर्वभवात् कस्माच्चिद् ग्रन्थादे-तदुद्धृत स्यात्, यदाधारेण हि साख्यकारिकापि निर्मिता । स च ग्रन्थ सभवतः 'षष्टितन्त्रम्' एव भवितुमर्हति ।

भागवतमतानुसार साख्यसप्रदायस्यानेके ग्रन्थाः कालविप्लुता अभवन् । तेषामल्पीया-नेवाशोऽस्माभिरुपलब्धः । आचार्यविज्ञानभिक्षुणाप्येतदेव तथ्य स्वकृताया साख्यप्रवचनभाष्य-भूमिकायामाविष्कृतम् । कथयन्ति ते—"कालार्कभक्षित साख्यशास्त्रम्" इति ।

वार्षगण्यस्य षष्टितन्त्र सेश्वरसाख्यप्रतिपादक स्यादिति परम्परया ज्ञायते । अहिर्बुध्न्य-सहिताया विवेचिताः षष्टितन्त्रसिद्धान्ता एनमेव निष्कर्षमापादयन्ति । एतदेव न, चरकाचार्येण (ईश्वरकृष्णात्प्राक्तनेनायुर्वेदाचार्येण) प्रतिपादित साख्य सेश्वरसाख्यमेवास्ते । ईश्वरकृष्णात्प्राक्तनो

१ द्रष्टव्या—तर्करहस्यदीपिका–पृ० १०२–१०४

२ अन्यच्च—"अन्तराभवदेहस्तु निषिद्धो विन्ध्यवासिना" [ श्लोकवा० आत्म० ] इति ।

३ द्रष्टव्यम्—"यदेव दधि तत्क्षीरं यत्क्षीरं तद्दधीति च । वदता रुद्रिलेनैव ख्यापिता विन्ध्य-वासिता ॥" [तत्त्वसंग्रहे] इति । एष च श्लोकस्तत्र विन्ध्यवासिन. परिणामवादपरीक्षणवेलायां परमार्थसप्तति. समुद्धृत ।

बौद्धाचार्योऽश्वघोषो गौतमबुद्धगुरोररदाचार्यस्य साख्यशास्त्र विवेचितवान्, तच्च सेश्वरसाख्यमेव। महाभारते, श्रीमद्भागवते, श्रीमद्भगवद्गीतायाम्, मनुस्मृतौ, विज्ञानभिक्षुग्रन्थेषु च यत् साख्यदर्शनसम्बन्धि प्रकृष्ट तत्त्वज्ञान प्रतिपादित तच्चापि सेश्वरसाख्यमेव। आचार्यप्रवरा गौडपादा वाचस्पतिमिश्राश्च सम्भवत. सेश्वरसाख्यवादिन एवासन्। वाचस्पतिसमये षष्टितन्त्रस्य मूलग्रन्थोऽलभ्य एवासीत्। आसुरिणोपदिष्ट साख्य परमर्षिकपिलोपदिष्टसेश्वरसाख्यपरम्परानुवर्ति। प्रतीयते यत्पञ्चशिखाचार्येण बौद्धाना प्रभाववृद्धि मनसि निधाय विनैवेश्वरापेक्षा साख्यस्य सृष्टिरचना विवेचिता। "तेन च बहुधा कृतं तन्त्रम्" इत्येषा कारिकाऽस्मिन्नेवार्थे सम्यग् व्याख्याता स्यात्। साख्यकारिकाया रचयिताऽऽचार्यश्वरकृष्णोऽस्यैव पञ्चशिखाचार्यस्य प्रकाण्ड: शिष्यस्तन्मतानुवर्ती चासीत्। सेश्वरसाख्यस्य मौलिकसिद्धान्ताना प्राचीनवैष्णवतन्त्र-विकासक्रमे महान् प्रभाव इति नाविदितचरं वैदिकदर्शनानुशीलनपरायणाना मनीषिप्रवराणामिति शम्॥

अनुवादक.

**श्रीव्रजवल्लभद्विवेद:**

# राहुग्रासः

ब्रह्मचारी गिरिजाप्रकाशः, भारतधर्ममहामण्डलम् , काशी ।

नैतदस्वीकार्यमसत्य वा यच्चन्द्रार्कोपरागकारणानुसन्धित्सूना बहूना ज्योतिर्विदा मतानुसारतश्चन्द्रग्रहणसमये पृथिव्याश्छाया चन्द्रमस सूर्यग्रहणसमये शशधरच्छाया सूर्यदेव चाशतः पूर्णतो वाऽऽच्छादयतीति । तेषामिय छायापातकल्पना शास्त्रयुक्तिसमता न वेत्यत्र विचार्यो विषयः । किमेतच्छायावादानुकूलमस्ति किञ्चिच्छास्त्रप्रमाणम् । न । श्रुतिस्मृतिपुराणानि नैतत् समर्थयन्ते । पाद्मे स्वर्गखण्डे षष्ठाध्याये ग्रहणविषय एतदुक्तमस्ति । यथा—

ततो राहुर्महाबाहो त्रयोदशसहस्रकम् ।  
योजनाना प्रविस्तार मण्डल तस्य कथ्यते ।।  
स्मरन् वैर पुराप्राप्त यः पर्वणि महाग्रह. ।  
ग्रासाय धावति क्रोधात् पुष्पवन्तौ महीपते ।।  
तदैव भगवच्चक्र सहस्रार्कोपमद्युति ।  
उपतिष्ठति तद्भीत्या पुनरेव निवर्तते ।।  
उपरागं वदन्त्येव पुण्यकालश्च कथ्यते ।  
लक्षयोजनतो भानुर्भूमेरेषा व्यवस्थितिः ।  
भानो. सकाशादुपरि लक्षे लक्ष्यः क्षपाकर. ।। इति ।

तथा श्रीमद्भागवते पञ्चमस्कन्धे चतुर्विंशतितमाध्याये च—"यददस्तरणेर्मण्डल प्रतपतस्तद्विस्तरतो योजनायुतमाचक्षते द्वादशसहस्र सोमस्य त्रयोदशसहस्र राहोर्यः पर्वणि तद्व्यवधानकृद्वैरानुबन्धः सूर्याचन्द्रमसावभिधावति ।। २ ।। तन्निशम्योभयत्रापि भगवता रक्षणाय प्रयुक्त सुदर्शन नाम भागवत दयितमस्त्र तत्तेजसा दुर्विषहं मुहु परिवर्तमानमभ्यवस्थितो मुहूर्तमुद्विजमानश्चकितहृदय आरादेव निवर्तते । तदुपरागमिति वदन्ति लोकाः ।।" इति । किमेतत् सर्व कल्पनाविलसितमात्रमेव ।

यत श्रुतिस्मृतिपुराणाननुगृहीतमनाना सारवत्तासपादनचेष्टाया प्रबलयुक्तिसमाश्रय सभावना विद्यते, अतो ग्रहणसबन्धिनी छायापातकल्पनेय तर्कोपपत्तिभ्यामत्र परीक्ष्यते ।

प्रथमतः शशिसूर्योपरागसिद्धये ये पार्थिवचान्द्रमसच्छाये कल्पिते भवतस्तच्छायास्वरूपोत्पत्त्यादिकं भूतले चन्द्रसूर्यादिकिरणेषु या वस्तुच्छाया दृश्यन्ते ततो भिन्नरूपं तत्तुल्यं वा। भिन्नरूपत्वं तु कथमपि न सिध्यति, छाययोश्छायात्वहानिप्रसङ्गात्। यदि तत्तुल्यं स्यात्, यदि भूपृष्ठेऽस्मद्दृष्टछायावत् पृथिव्याश्चन्द्रमसश्च छायोद्गता भूत्वा तच्छाया शशिनि भास्करे च निपतति, तर्हि ग्रहणतत्त्वनिरूपणे राहुकल्पना किं व्यर्थैव न स्यात्? अतश्छायोत्पत्तिविचारोऽत्र कर्तव्य एव।

कथं भूपृष्ठे छायोत्पद्यते। आलोकं विना छाया नोत्पन्ना भवति। अत. शशिसूर्यादिकिरणेषु वस्तुच्छाया दृष्टिगोचरा भवति। किन्तु सूर्यादिकिरणदातॄणामभिमुखं वस्तुच्छाया कदापि न प्रसृता भवति। यत्र तु तेषामेकोऽन्येनाभिभूतो भवति तत्र प्रबलकिरण एव वस्तुच्छाया दृश्यते नान्यत्र। इत्थं हि वस्तुच्छाया चन्द्रसूर्यादीनां विपरीतदिशि यथाकिरणपातमायतनादिकं गृहीत्वा भूतले निपतति। एतद्दृष्टान्तावष्टम्भेन किं चन्द्रसूर्ययोश्छायापात आस्थीयते।

भूतलं वस्तुच्छायोपाताधिकरणमिति सर्वेषां प्रत्यक्षमेव। किन्तु ग्रहणसिद्ध्यर्थं पार्थिवच्छाया चान्द्रमसच्छाया वा कस्मिन्नधिकरणे पतिष्यति। पृथिवीच्छाया किं चन्द्रमसं गमिष्यति, शशधरच्छाया किं दिवाकरम्। पृथिवीचन्द्रयोश्चन्द्रसूर्ययोर्मध्ये वा किं केवलः शून्य आकाशो वर्तिष्यते येन च्छायाया निर्बाधं लक्ष्यप्राप्तिर्भवेत्। किञ्च, भूतल एव वस्तुच्छायापातो भवति न केवलसूर्यादिकिरणेषु, अतश्छाया दृष्टिगोचरा भवति। अतश्चन्द्रोपरि सूर्योपरि वा छायापातो भवेच्चेत् तच्छायया चन्द्रमसः सूर्यस्य वाभिभव. कथं संभवति? तयोरनभिभवे तु ग्रहणासिद्धिरित्यत्र न सन्देहः। चन्द्रात् सूर्याद्वा दूरेऽपि तत्किरणे छाया सूर्योदयानन्तरं चन्द्रकिरणे निपतितवस्तुच्छायावत् क्षीणतां विलीनतां वा प्राप्तुमर्हति कैव कथा चन्द्रसूर्यसन्निधौ यत्र किरणस्य प्रखरता विद्यते। तत्राधिकरणे छायाया विनाशं गताया कथं चन्द्रोपरि सूर्योपरि वा छायापातेन ग्रहणं सेत्स्यति। अतश्छायालोकयोः परस्परविरुद्धस्वभावत्वं छायापातेन ग्रहणसिद्धिं विरुणद्धीत्यवश्यमेव स्वीकार्यम्। अत्र यद्येतदुक्तं स्यात्, यथा वस्तुच्छाया सूर्यादिकिरणोद्भासितभूतलस्यांशविशेषात् तत्किरणमपसार्य स्वयमेव तत्र विराजते न तु विनाशं गच्छति तथा पार्थिवच्छाया चन्द्रांशविशेषं चन्द्रं वा चान्द्रमसच्छाया सूर्यांशविशेषं सूर्यं वा किरणहीनं सपाद्य कथं न ग्रहणरूपेण चन्द्रे सूर्ये वाऽधिष्ठिता भवेदिति। अत्रोच्यते—समाधानं तु प्रागेवोक्तं तथापि स्पष्टीकरणाय पुनस्तदिह प्रपञ्च्यते। वस्तूपरिभागे सूर्यादिमरीचयः

पतन्ति ततश्छायोत्पद्यते। छाया तु भूतले निपतति, तत्र स्थितवस्त्वन्तरोपरि वा। न तु कस्मिश्चि-त्तेजोमयवस्तुनि। इह तु पृथिव्याश्छायोत्पन्ना भवेच्चेत् तच्छायायाः किरणमये चन्द्रमसि पतनमिष्यते तथा चन्द्रच्छायायाश्च पतन किरणमये सूर्ये। अतो भूतले पतितायाश्छायाया विलीनत्वाभावेऽप्यङ्गमति चन्द्रे सूर्ये वा निपतितायाश्छायाया ध्वसो न केनापि वारयितु शक्यते।

द्वितीयतो ग्रहणसिद्धये छायोत्पत्तिरावश्यकतामावहति चेत् पूर्णिमाया भूच्छाया कि चन्द्रकिरणालोकितभूपृष्ठात्, तथाऽमावस्याया चन्द्रच्छाया किं सूर्यकरोज्ज्वलच्चन्द्रपृष्ठादुत्पत्स्यते ? असभवमेतत् प्राग्दर्शितयुक्त्यनुसारतः। तत् कि पृथिव्याश्चन्द्रमसो वाऽनालोकितापरपृष्ठात् छायोत्पन्ना भूत्वाऽऽकाशे चन्द्रकिरणे सूर्यकिरणे वा न विलीनता गतोड्डयनशीलविहङ्गवत् प्रदीप्त चन्द्रमण्डल सूर्यमण्डल वाऽऽरोक्ष्यति। तत्रापि चन्द्रग्रहणरात्रौ चन्द्रकिरणानालोकित-भूपृष्ठदेशः पृथिव्यधोदेशगतसूर्यकिरणपातेनोद्भासितो भवतीत्यभ्युपगम्यमानेऽपि सूर्यग्रहणदिवसे सूर्याभिमुखीनचन्द्रपृष्ठाच्छायोद्गमासभवात्, तद्विपरीतपृष्ठदेशाद्वा छायोत्पत्तिः कथ सभवेत्। वस्तूपरिभागे यदाऽऽलोको निपतति तदैव च्छायोत्पत्तिः सभवति। किन्तु चन्द्रपृष्ठ-देशेऽस्मिन् कुतः सूर्यकिरणाभिभवक्षमालोकपातो भविष्यति। सूर्यग्रहणकाले यदि चन्द्रमा सूर्या धोदेशे पृथिवी चन्द्राधोदेशे चावतिष्ठते यथा श्रुत्यादिमतविरोधिछायावादिनो मन्यन्ते तर्हि तदा पृथिवीचन्द्रयोर्मध्ये को महाकायस्तेजोमयः पदार्थ आगमिष्यति यस्य दिवाकरकरादपि प्रबलतराः प्रखरकिरणाः शशधरोपरि पतित्वा सुविशालचन्द्रच्छायामुत्पादयिष्यन्ति तच्छाया च गगन भित्वा सूर्यमण्डलमाच्छादयिष्यति च। ज्योतिर्विदापि केनचिदेतादृशज्योतिष्कस्य कस्यचिद्ग्रहणकाल आविर्भावो नोक्तः। तस्मात् सूर्यग्रहणकाले कथ चन्द्रच्छायोत्पत्स्यते। पार्थिव-चान्द्रमसच्छाये त्वेवमुत्पद्येयाता न वा, ग्रहणकाले चन्द्रे सूर्ये वा छायापाते तच्छायाया विलय एव ह्यनुमातव्यः।

तृतीयतश्छायापातेन ग्रहण भवेच्चेद् ग्रस्तोदय. कथ सभवेत्। निशानाथे दिननाथे वा यदि काचिच्छाया निपतति सा छाया किरणप्राखर्यात् क्षय हि गमिष्यतीत्यतो ग्रहणदर्शनात् पूर्वं चन्द्रः सूर्यो वा छायाग्रस्तो भवतीति येषा मतं तेऽपि किमीदृशमतस्य युक्तियुक्तता प्रतिपादयितुं समर्थाः। तेषा ग्रहणारम्भकालनिरूपणादिकमपि व्यर्थमेव, यदि छायापातो हि ग्रहणकारण स्यात्।

एव यथा यथा छायावादः परीक्ष्यते तथा तथैव तस्यानुपादेयत्व स्फुट भवति। अतो ग्रहणसम्बन्धी छायावादो निरस्त एव। न पतति भूच्छाया चन्द्रोपरि चन्द्रच्छाया वा सूर्योपरि ग्रहणकाले। अत एव ग्रहणस्य कारणान्तरमनुसन्धेयमिति।

छायावादनिराकरणेन ग्रहणकाले पृथिव्या याऽऽलोकक्षीणतोपलभ्यते सा केनचिद् बृहद्वस्तुना चन्द्रसूर्याच्छादनफलस्वरूपैव भवितुमर्हति। केवलबिम्बाच्छादनार्थं यदाच्छादकस्य बृहत्त्वं न प्रयोजनीयम्। येन केनापि स्वकरतलेन वस्त्वन्तरेण वा चन्द्रबिम्बं सूर्यबिम्बं वाऽऽच्छादयितु तेन च्छाया रचयित्वा भूतलस्य क्षुद्रैकभाग क्षीणालोक संपादयितुं च शक्यते। अतो ग्रहणसमये सूर्यस्य शशिनो वा कश्चित् तत्सन्निधिप्रेप्सुर्बृहदाच्छादक आविर्भवतीत्येव हि युक्तं वय पश्यामः। इत्थं हि ग्रहणकाले भूतल स्तिमितालोकं तमोमयं वा भवतीत्यत्र न विरोधावकाशः। अत एव श्रुतिस्मृतिपुराणाद्युदितो राहुग्रासः केवल कल्पनाविजृम्भितमिति मत्वा तत्रोपेक्षाप्रदर्शन न युक्तमिति।

इदानी क एव स सूर्यचन्द्राच्छादक इति परिज्ञातु प्रयत्नः क्रियते। यतः सपूर्णग्रहणकाले भूतलमन्धकाराच्छन्न भवत्यतस्तस्याच्छादकस्य बृहदायतनत्व हि कल्पनीयम्। पुराणादिषु यद्राहुवर्णनमुपलभ्यते ततो राहुसूर्ययो राहुचन्द्रयोर्वा राहुरेव बृहत्तर इत्यवगम्यते। तर्हि ग्रहणसमये कुत्रैव राहोरवस्थितिः स्यात्? पृथिव्या ऊर्ध्वं रवेरधो राहुरवतिष्ठते, चन्द्रस्तु रवेरूर्ध्वं विराजत इति पुराणादिमतम्। अतो राहुणा रविशशिनौ पूर्णतोंऽशतो वाऽऽच्छादयितुं शक्येते इत्यत्र न कश्चित् सशयावकाशोऽस्ति। अत एव राहुरेव हि स चन्द्रसूर्याच्छादक इत्यङ्गीकर्तव्यम्। पुनश्च ग्रहादीना गतिरस्तीति ज्यौतिषिका वदन्ति। चला पृथ्वी स्थिरा भातीति ज्यौतिषशास्त्र उक्तम्। एवं राहोर्गतिकल्पनाऽपि नासङ्गता स्यात्। विशेषावस्थाया स राहुः पृथिवीचन्द्रयोः पृथिवीसूर्ययोर्मध्ये चावतिष्ठते, ततश्चन्द्रः सूर्यो वाऽऽच्छादितो भवति भूतलस्थप्राणिना दृष्टया चेत्यत्रास्ति न किञ्चिदसभाव्यत्वम्। विशेषावस्थेयं शास्त्रेऽप्येवमुक्ता। यथा—

भत्रिपादान्तरे राहोः केतोर्वा सस्थितो रविः।
चतुष्पादान्तरे चन्द्रस्तदा सभाव्यते ग्रहः॥
यस्मिन्नृक्षे रविस्तस्माच्चतुर्दशगतः शशी।
पूर्णिमाप्रतिपत्सन्धौ राहुणा ग्रस्यते शशी॥
कृष्णपक्षे तृतीयायां मासर्क्षे यदि जायते।
ततस्त्रयोदशे सूर्यो राहुणा ग्रस्यते रविः॥ इति।

गतिवशाद् ग्रहादयः प्रत्येकं कदा कीदृशावस्थाया स्थास्यन्तीति सम्यग्रूपेण ज्ञातुं सूक्ष्मगणनादिकमावश्यकमित्यत्र कः सन्देहः? तत्र केषाञ्चिद् ग्रहादीना भूवासिजीवनयात्रा-

निर्णीत स्यात्तर्हि को वा तत्र विस्मयप्रकाशहेतुर्यतो भारतीयप्राचीनज्यौतिषशास्त्रज्ञाः प्रागेव परवर्तिनामाधुनिकाना वा कृते मार्ग सुगम कृतवन्त इत्यवश्यमेव स्वीकार्यम् ।

किञ्च, पाश्चात्त्यगणकैर्ग्रहणस्य यथार्थकालादिनिरूपणाय या सूक्ष्मगणना समाश्रिता तत्रैव वातिप्रशसायाः किं कारणमस्ति यद्यपि तेषा श्रमः प्रशंसनीय इत्यत्र न सन्देहः । प्रथमतस्तेषा कालविभागात् सूक्ष्मतरः कालविभागोऽस्माकं शास्त्र उपलभ्यते । यथा—

लघ्वक्षरचतुर्भागस्त्रुटिरित्यभिधीयते ।
त्रुटिद्वयं लवः प्रोक्तो निमिषस्तु लवद्वयम् ॥ इति ।

विपलानुपलपलदण्डादिकालविभागोऽपि वर्तते । अतः पाश्चात्त्यगणनातः कुतो ग्रहणस्य यथार्थकालनिरूपणं भवति । द्वितीयतो दूरवीक्षणादियन्त्रव्यवहारकारिणा कृत ईदृशी सूक्ष्मकालादिगणनाऽऽनन्दकारण भवेच्चेदन्ये तु ग्रहणस्य कालादिक स्थूलरूपेण ज्ञात्वा हि परितोक्ष्यन्तीत्यत्र वैमत्यकारणं किञ्चिदस्ति केषाञ्चिदिति नास्माक कल्पनायामधिरूढ भवति ।

परन्तु पाश्चात्त्यैराधुनिकैर्वा ज्योतिर्विद्भिर्भारतीयप्राचीनज्यौतिषशास्त्रतो न कश्चिदुपकारः प्राप्त इति न संभाव्यम् । पाश्चात्त्यसभ्यताविकासप्राप्तेर्बहुपूर्वकालादारभ्याद्यपर्यन्तमस्मद्देशे यद् ग्रहणगणनादिक प्रचलितमस्ति तदर्थ किमस्माकं प्राचीनज्योतिर्विदो न श्रद्धा प्रशसा वाऽर्हन्ति ।

भारतवर्षात्तु ज्यौतिषशास्त्रं विदेशमगमदित्यैतिहासिकाना मतम् । सत्यमेतत्, यतः सर्वज्ञानभाण्डारभारतवर्षात् सर्वासु दिक्षु ज्ञान विकीर्णमभूत् । तस्माद्भारतीयज्यौतिषशास्त्राद् वैदेशिका न लाभवन्त आसन्, स्वस्वदेशे ज्योतिर्विद्यासमुन्नतिसाधनाय ते भारतीयज्यौतिषशास्त्रसहायता न गृहीतवन्त इति नास्माक कल्पनामारोहति । विशेषतो यतः प्रागुक्तेभ्यः–"भत्रिपादान्तर" इत्यादिशास्त्रवचनेभ्यो भारतीयज्योतिर्विदा सुदूरातीतकालात् प्रचलिता ग्रहणकालादिनिरूपणप्रणाली स्पष्टमवगम्यते । एवं भारतीयप्राचीनज्योतिर्विज्ञानविशारदैः कृताद्ग्रहणकालादिनिर्णयात्पाश्चात्त्यगणकेभ्यो ग्रहणकालादिनिरूपणार्थ सूक्ष्मगणनादिक सुकरमेवाभूदित्यत्र कः सन्देहः ? अतः पाश्चात्त्यसूक्ष्मग्रहणगणना भारतीयगणनायाः स्थूलायाः सूक्ष्माया वा विच्छिद्य प्रशसामर्हतीति येषा मत तैः सत्यमपह्नूयत इत्यत्र न संशयलेशः ।

ग्रहणगणना सम्यगालोचिता । इदानीं राहुग्रासविषये पुनः किञ्चिदुक्त्वा विचारोऽय समाप्तिं नीयते । छायावादिनामाच्छादिकायाश्छायायाः स्वतन्त्रं गत्यादिकं किञ्चिदस्तीत्यत्र न किञ्चित्प्रमाण केनाप्युपस्थापयितु शक्यते । वस्तुच्छाया वस्तुना सहैव वर्तते । अतः पृथिव्या गत्यादिनिरूपणेनैव हि तच्छायागत्यादिक निरूपित भवितुमर्हति । तथा चन्द्रच्छाया चन्द्रेण

सहैव सबद्धा भविष्यति यदि तत्र च्छाया कल्पिता स्यात्। एव यद्याच्छादनकृद्वत्यादीना पृथग्गणनायाः प्रयोजन म विद्यते न वा तादृशी पृथग्गणना सभवति तर्हि चक्षुरिन्द्रिया-तीतराहोराच्छादकत्वं कथमसभव स्यात्। यदि पृथिवीचन्द्रयोर्गत्यादिनिरूपणेन चन्द्रसूर्या-च्छादिकयोस्तच्छाययोर्गत्यादिकं निरूपित सत् ग्रहणकालादिनिरूपक भवेत्तर्हि ग्रहणकालादि-निर्णयो गतिशीलौ पृथिवीचन्द्रावेव ह्यपेक्षते न तु तच्छाये। छायावादिभिः किमत्रान्यत्किञ्चि-दास्थातु शक्यते॥ अतो राहोरदर्शनेऽपि राहुग्रासरूपग्रहणसिद्धौ न काञ्चिद्बाधा वय पश्यामः, चक्षोरविषयत्वेऽपि वस्त्वस्तित्वसिद्धेर्ग्रहादीना समानगतित्वाभावात् पृथिवीचन्द्रसूर्याणा चलत्वाद् राहुग्रासरूपविशेषावस्थोपपत्तेश्च।

किञ्च, राहोरस्तित्व केवलमनुमानगम्य तस्य कार्यादिभ्य इत्यपि न समीचीनम्, यतः पुरास्मिन्नध्यात्मविद्योन्नतिसाधकबहुलभारतवर्षे योगकुशलैर्योगाभ्यासलब्धासाधारणदृष्टिसम्पन्नैर्योगज-धीशक्तिशालिभिश्चर्षिमुनिभी राहोरस्तित्वानुभवः कृत इत्यत्र न काचिदसभावना विद्यत इति।

निबन्धोऽयमिदानीन्तनविज्ञानप्रणयिना केवलबहिरिन्द्रियशक्तिवर्द्धकनानाविधयन्त्राद्या-विष्कारमुग्धचेतसा श्रुतिस्मृतिपुराणान्यवमन्यमानानामाधुनिकभारतीयानामन्येषा वा मनोरञ्जको भवतु न वा निम्नोद्धृता भारतीयज्यौतिषाचार्यप्रवरोक्तिस्तैरेकान्तस्थितैः स्थिरधीरभावेन पुनः पुनर्ध्येयेत्युक्त्वैव वय विरमाम इति।

अथ किमु पृथुतन्त्रैर्धीमतो भूरियन्त्रैः स्वकरकलितयष्टेर्दत्तमूलाग्रदृष्टेः।
न तदविदितमान वस्तु यद्दृश्यमान दिवि भुवि च जलस्थ प्रोच्यतेऽथ स्थलस्थम्॥

इति शम्॥

# नवभारते वर्णाश्रमव्यवस्था आवश्यकी न वा ?

पण्डितराजराजेश्वरशास्त्री द्राविडः, साङ्गवेदविद्यालयः, काशी ।

उच्चैर्गतिर्जगति सिद्ध्यति धर्मतश्चेत्
तस्य प्रमा च वचनैः कृतकेतरैश्चेत् ।
तेषां प्रकाशनदशा च महीसुरैश्चेत्
तानन्तरेण निपतेत् क्व नु मत्प्रणामः ॥

वर्णाश्रमव्यवस्था आवश्यकी न वेत्यमु विषयमधिकृत्य काश्चित्तर्कानुपस्थापयत्यय महाराजभोजनिर्मितः श्लोकः । ब्राह्मणप्रणामेन हि वर्णाश्रमव्यवस्था स्पष्टमेवात्र निर्दिश्यते । एतेषां तर्काणां हेत्वाभासरहितत्वे नवभारतेऽपि स्वीकरणीयत्वं प्राप्तमेव । उच्चैर्गतिर्जगति सिद्ध्यति धर्मतश्चेदिति प्रथमस्तर्कः । "प्रत्यक्षपरोक्षानुमानलक्षणप्रमाणत्रयनिर्णीतायां फलसिद्धौ यथा-साध्यमुपायानुष्ठानलक्षणा क्रिया नीतिर्नयः" इति नीतिलक्षणानुसारेण वस्तुनिर्णयस्य कर्तव्यत्वात् त्रिवर्गसमृद्धिरूपा राष्ट्रस्य समुन्नतिरेव उच्चैर्गतिपदार्थः ।

तथा हि नीतिसारव्याख्या जयमङ्गला "राजाऽस्य जगतो हेतुर्वृद्धेः" इति श्लोके— "वृद्धिर्लोकस्य त्रिवर्गप्राप्तिः" इति । सेयं वृद्धिरूपा उच्चैर्गतिः परराष्ट्रेण सह सन्धिविग्रहादिषाड्-गुण्यप्रयोगद्वारा संपाद्यते राजनीत्या । सन्धिविग्रहयानासनद्वैधीभावसमाश्रयाख्येषु षड्गुणेषु मध्ये सन्धिरेव प्रधानतमं लक्ष्यमन्येषां पञ्चानां गुणानामित्यपि स्पष्टीकृतं जयमङ्गलायां षाड्गुण्य-प्रकरणे । एवंरीत्या राष्ट्रस्य त्रिवर्गसमृद्धिः सन्ध्यायत्तेति स्थितम् । सन्धिस्वरूपं च कौटिल्येन एवमुक्तमर्थशास्त्रे–"शमः, समाधिः, सन्धिरिति पर्यायाः । राज्ञां विश्वासोपगमः सन्धिः" इति । "अयं मदिष्टं साधयिष्यत्येवेति निश्चयो विश्वासः" इति विश्वासलक्षणमुक्तं सिद्धान्तबिन्दुव्याख्यायां न्यायरत्नावल्याम् । एवंविधनिश्चयात्मकविश्वासप्राप्तिरेव समस्तायां राजनीतेः प्रधानमुद्देश्यं यदि भवति तर्हि तत्स्थैर्यसंपादकानि साधनानि नोपेक्ष्यतामर्हन्तीति दण्डापूपिकयैवागच्छति ।

चलसन्धेः स्थिरसन्धेश्च विमर्षः कौटिलीयार्थशास्त्रे तट्टीकायां नयचन्द्रिकायां चैवं कृतः —

"सत्यं शपथो वा चलसन्धिः । प्रतिभूः प्रतिग्रहो वा स्थावर इत्याचार्याः । नेति कौटिल्यः, सत्यं शपथो वा परत्रेह च स्थावरः सन्धिः, इहार्थ एव प्रतिभूः प्रतिग्रहो वा बलापेक्षः । सहिताः स्म इति सत्यसन्धा पूर्वे राजानः सत्येन सन्दधिरे" इत्यादि ।

अत्र नयचन्द्रिका—"विश्वासोपगमस्य कारणभेदात्सन्धिभेदमाचार्यमतेन तावदाह—सत्यमित्यादिना । सत्यमिति सत्यमिदमित्यर्थकथनम् । शपथ इति स्वर्णादिस्पर्शनार्थकथनम् । आभ्यां कृतः सन्धिश्चलः, अव्यवस्थितः, अविश्वसनीय इत्यर्थः । प्रतिभूरिति प्रमाणीकृतः, मुख्यादिकृतः । प्रतिग्रहोऽनतिक्रमणार्थमर्पितः पुत्रादिः । आभ्यां कृतः स्थावरः, विश्वास्य इत्यर्थः । आचार्योक्तिविपरीतं युक्तिगर्भं स्वमतमाह—सत्यमित्यादि । सत्यादयश्चत्वारोऽपि स्थावरा एव । किञ्च, दीर्घदर्शितया पारलौकिकैहिकयोरनर्थयोरवेक्षणात् पूर्वपूर्वातिक्रमे सत्युत्तरापेक्षा । सत्यशपथयोरतिक्रमे परलोकभयं तावत् '"इह चासत्यश्चादैष्टिकश्चेत्यविश्वास्यतेत्युभयतो भयं सत्यशपथयोरतिक्रमे । प्रतिभूप्रतिग्रहयोस्तु दृष्टभयमेव, तदपि बलापेक्षम् । बलाभावे हि बलवताऽवध्यतिक्रमे दुर्बलप्रतिभूः किं कुर्यात् ? एव सन्ध्यर्थमर्पितो मत्पुत्रो मुच्यतामिति बलवतोक्ते दुर्बलस्य तन्मोचनमेव कार्यमिति व्यवस्थितेरित्याशयः" इति ।

अत्र हि टीकाया दीर्घदर्शिताकृतं परलोकभयं स्थिरसन्धेः कारणमुक्तम् । दीर्घदर्शितागुणश्च—

> दीर्घदर्शित्वमुत्साहः शुचिता स्थूललक्ष्यता ।
> विनीतता धार्मिकता गुणाः साध्वाभिगामिकाः ॥

इति स्वामिप्रकृतिगुणत्वेन नीतिसारेऽर्थशास्त्रे च उक्तः । पूर्वोत्पन्नकार्यविभागज्ञानेन दीर्घकालभाव्यर्थानुमानाद्दीर्घदर्शीति दीर्घदर्शिपदं विवृण्वता जयमङ्गलाकारेणानुमानविशेष एव परलोकविषयकः शास्त्रकृतो दीर्घदर्शित्वमित्युक्तम् । एतादृशदीर्घदर्शिताकृतः सन्धिरेव स्थिर इति राजकीयसंस्कृतमहाविद्यालयोट्टङ्कितेनानेन सुभाषितेनापि दृश्यते—

> मृद्घट इव सुखभेद्यो दुःसन्धानश्च दुर्जनो भवति ।
> सुजनस्तु कनकघटवद् दुर्भेद्यः सुकरसन्धिश्च ॥ इति ।

सोऽयं काञ्चनसन्धिरेव पाश्चात्त्यानामस्माकमपि च लक्ष्यभूत इति तदीयवचनैरेव व्यवस्थापयितुं शक्यते ।

"चोदनालक्षणोऽर्थो धर्मः" इति धर्मलक्षणे चोदनानुमितेष्टसाधनताकत्वं धर्मत्वमिति परिष्कुर्वद्भिर्मीमांसकैर्दीर्घदर्शितारूपमिदमेवानुमानं धर्मलक्षणजीवातुत्वेन व्यवस्थापितम् । अतः स्थितमेतत्—प्रोक्तानुमानघटितेन धर्मेणैव राष्ट्रस्य त्रिवर्गसमृद्धिरूपोन्नतिर्भवितुमर्हतीति । उक्त सुभाषिते तादृशानुमानविशिष्टः पुरुष एव सज्जनपदवाच्य इति च सुजनपदार्थोऽपि दुर्भेद्य-

सन्धित्वसामर्थ्यादवसीयते । अत एव—"प्रणिपातेन हि गुरून् सतोऽनूचानचेष्टितैः" इति नीतिसारश्लोकव्याख्यायाम्-"सतो विद्यावृद्धान्" इति व्याचक्षाणेन जयमङ्गलाकारेण पूर्वोक्तानुमानविशेषरूप विद्यावृद्धत्वं लक्ष्यीक्रियते । अयमेवाशः—"तस्य प्रमा च वचनैः कृतकेतरैश्चेत्" इति द्वितीयचरणे विवृतो भोजमहाराजेन । इदमनुमानमपौरुषेयैर्वैदिकैर्विधिवाक्यैरेव भवति हेतूक्रियमाणैर्न पौरुषेयीभिः कल्पनाभिः, परलोकविषये पुरुषबुद्धेरस्वतन्त्रत्वादित्यावेद्यते—"तस्य प्रमा च वचनैः कृतकेतरैश्चेत्" इति द्वितीयचरणेन तर्कविशेषः । कथ वाक्यसमूहात्मकस्य वेदस्यापौरुषेयत्व सभवतीत्ययमशः साङ्गवेदविद्यालयीयरजतजयन्तीस्मारकपुस्तके विस्तरेण वर्णितः । इह तु सग्रहेण एको वैदिको मन्त्रः प्रमाणतयोपन्यस्यते—

देवीं वाचमजनयन्त देवास्ता विश्वरूपाः पशवो वदन्ति ।
सा नो मन्द्रेषमूर्ज दुहाना धेनुर्वागस्मानुपसुष्टुतैतु ॥ इति ।

इत्यय मन्त्रः, अत्र हि पशूना वाच दृष्टान्तीकृत्यानादिप्रवाहायातत्वमावेद्यते वेदवाचः । न हि गोषु विद्यमानो हुम्भारवोऽन्यत्र वा पशुजातिषु विद्यमानास्तत्तज्जातिप्रसिद्धा ध्वनय इदप्रथमतया कस्मिंश्चित्काले प्रवृत्ता इति केनापि सचेतसा वक्तु शक्यते । तेनैव न्यायेन वेदवाचोऽप्यनादिप्रवाहायातत्वं मन्तव्यम् । इति प्रतिज्ञायमानोऽर्थो हेतूपदर्शनेन साध्यते सा नो मन्द्रेत्यनेनाशेन । अत्र सङ्गीतशास्त्रप्रसिद्धिरालोचनीया भवति । तत्र ह्युक्तम्—

सरी वीरेऽद्भुते रौद्रे धो बीभत्से भयानके ।
कार्यौ गनी तु करुणे हास्यशृङ्गारयोर्मपौ ॥ इति ।

एव च मन्द्राविशेषणेन षड्जऋषभप्रधाना दैवी वागभिलक्ष्यते । सा च रौद्राद्भुतयोरपि यद्यपि सभवति, तथापि "इषमूर्जं दुहाना" इति विशेषणेन परिपालनोपायभूता धर्मप्रधाना वीररसात्मिकैव वागभिलक्ष्यते । सा हि पुरुषबुद्धिकल्पिता न कथमपि सभवति, अपि तु दैवी । सा च धेनुरूपा वाणी अस्मान् रक्षतु इति ह्याशास्यते मन्त्रेणानेन । एव चाविच्छिन्नपरम्परायातो वेद एवास्माक रक्षक इति सिद्धम् । ये त्वर्थकामप्रधानास्तेषामेतादृशवाग्लाभोऽशक्य एवेत्युक्त मनुना—

अर्थकामेष्वसक्ताना धर्मज्ञानं विधीयते ।
धर्मं जिज्ञासमानाना प्रमाणं परमं श्रुतिः ॥ इति ।

वीणा सयोज्य तया सह सवाद्यमानेषु स्वकीयस्वरेषु मन्त्रोक्तोऽयं विशेषः स्वसंवेदनसिद्ध एवेत्यत्र नाधिक किञ्चिद्वक्तुमीहामः ।

भारतवर्षमधुना स्वतन्त्रमभूत् । एतदीयस्वातन्त्र्यरक्षणमर्थकामेष्वसक्तैरेव कर्तुं शक्यते, परराज्येषु भारतीयादर्शप्रतिष्ठापनं चेति हि माननीयराष्ट्रपतिप्रभृतीनां भाषणेभ्योऽवगम्यते । राजकीयसंस्कृतमहाविद्यालयस्यायमेव महानुपयोगः, न यथाकथञ्चिद्वेतनभोगिपण्डितसमूहनिर्माणम् ।

दक्षता भद्रता दार्ढ्यमापत्क्लेशसहिष्णुता ।
सन्तोषः शीलमुत्साहो मण्डयन्त्यनुजीविनम् ॥

इति नीतिसारोक्तदिशाऽर्थकामप्रधानानां नित्यमसन्तुष्टचित्तानां राजकीयमूलपदलाभोऽप्युत्तरोत्तरं दुष्कर एव प्रतिभाति । तत्रापि विशेषेण भद्रतागुणो लोकसंग्राहकतयाऽपेक्षित एव । लोकसंग्राहकत्वं च—

शुचिरास्तिक्यपूतात्मा पूजयेद्देवताः सदा ।
देवतावद् गुरुजनमात्मवच्च सुहृज्जनम् ।
प्रणिपातेन हि गुरून् सतोऽनूचानचेष्टितैः ॥

इत्यादिनीतिसारोक्तदिशा—"अनूचानः प्रवचने साङ्गेऽधीती गुरोस्तु यः" इति लक्षणलक्षितानामनूचानानामाचारानुसरणमन्तरा न सम्भवति, इति सर्वथा उच्चैर्गतिर्जगतो वैदिकधर्माधीनैव भाति ।

तदिदं वेदस्य यथार्थज्ञानं तत्प्रकाशनं च तदधिकृतान् ब्राह्मणानन्तरेण न संभवतीति हेतोर्ब्राह्मणप्रधाना वर्णाश्रमव्यवस्था जगदभिवृद्धये आवश्यकी सर्वथैवेति तर्कमुद्रयैवाविष्कृतं भोजराजेनोक्तश्लोकान्त्ये भागे—

"तेषां प्रकाशनदशा च महीसुरैश्चेत्तानन्तरेण निपतेत्क्व नु मत्प्रणामः" इति ।

वेदरूपेयं कामधेनुः पाश्चात्यानामपि स्थायिशान्तिप्रदानेनोपकारिणी धेनुरिव बालानां दुग्धदानेन । तस्या हननं यदि ते विवेकिनस्तर्हि न कुर्युरेव, यद्यपि केचिदविवेकिनस्तस्या हननाय यतन्तेऽपि । यथा—"सिंहो व्याकरणस्य कर्तुरहरत्प्राणान् प्रियान् पाणिनेः" इत्यादि । तथापि तावता हन्तुः सिंहस्य न कापि कीर्तिरभूत्, न वा पाणिनेः कीर्तिलोपेऽद्यापि दृश्यते । अतः कीर्तिकामै रक्षणीयैवेयं वैदिकी वर्णाश्रमव्यवस्थेत्यस्माकं [1]मतम् ॥

---

*[1] अस्य महाविद्यालयस्य सप्तमोपाधिवितरणोत्सवावसरे वादविवादप्रतियोगितायां सभापतिपदमलङ्कुर्वतो विदुषो भाषणमिदम्-सम्पादकः ।*

# हिन्दूधर्मसंहिताविमर्शः

श्रीरघुनाथशर्मा, राजकीयसंस्कृतमहाविद्यालय., काशी ।

प्रस्ताविते हिन्दूविवाहतद्विच्छेदविधेयकनाम्नि नियमकदम्बके हिन्दूबालतत्संरक्षकविधाने च सामान्यतो विशेषतश्च विचारोऽस्य निबन्धस्य विषयः । तत्र विचारमूलभूता इमे विकल्पाः प्रागुपतिष्ठन्ते—

१ हिन्दूना तत्तच्छाखीयधर्मग्रन्थेषु जाग्रत्स्वस्य नव्यस्य सृज्यमानस्य नियमकदम्बकस्याधुनाऽपेक्षाऽस्ति न वा ।

२ यद्याद्यः कल्पः, तदैतन्नियन्तव्या विषयाः के ये धर्मशास्त्रेष्वनियन्त्रिताः ।

३ लौकिको वा कश्चन स्वार्थोऽस्त्येतन्नियमनिर्माणे येन सर्वेऽपि हिन्दूपदभाजो नानाशाखाश्रिता एकसूत्रनद्धाः स्युः ।

४ यद्वा धर्मशास्त्रीयनियमानामधुनाऽशक्त्या परिस्थितिवशादपाल्यत्वम् ।

५ यद्वा परिवर्तिनि ससारे वर्तमानकाले प्राक्तनधर्मशास्त्रनियमाना तत्कालापेक्षया विहितानामनुष्ठाने दुःखावहत्वेन परिवर्तनावश्यकता ।

६ यद्वा धर्मशास्त्राणाम्—''न स्त्री स्वातन्त्र्यमर्हति'' इत्यादिवाक्यै सर्वदा नारीपारतन्त्र्यप्रतिपादकत्वेन तासा समानाधिकारज्ञापनाय नवीननियमनिर्माणावश्यकता ।

७ यद्वा धर्मशास्त्राणा परस्परविरोधित्वेनानियामकत्वान्नवीननियमनिर्माणस्यावश्यकत्वम् ।

८ एतन्नियमकदम्बकस्य धर्मशास्त्रमूलकत्व न वा ।

९ इयं च नवीना विवाहतद्विच्छेदव्यवस्था किमिति हिन्दुष्वेवापेक्ष्यते नेतरजातिष्वेतद्देशवासिनीषु ।

१० किमितरजातिषु शाखाभेदा उच्चनीचजातिभेदा वा न सन्ति ।

## तत्र विचारसामान्यम्

तत्र प्रागुक्तेषु विकल्पेषु सत्सु वय तु युक्तं विमृशामस्तत्तच्छाखीयधमग्रन्थेषु जाग्रत्सु न नवीननियमनिर्माणस्यावश्यकता वर्तते । नहि धर्मशास्त्रनियन्तव्यविषयेभ्योऽतिरिक्ता विवाहविवादसदाचारप्रायश्चित्तातिरिक्ता विषया नवीननियमनियन्तव्या इदानीमुपस्थिताः । नानीदृशं जगत्कदापीति मीमासासिद्धान्तात् ।

नापि हिन्दूनामेकसूत्रनद्धत्व नवीननियमनिर्माणप्रयोजनम् । यथा प्रागिदानीं च शाखा-मत्त्वभिन्नेऽप हिन्दूधर्मे सर्वानुगतसामान्यहिन्दूधर्मदेशसमाजकुलाचारवेषभूषादिभिर्हिन्दूत्वेन समनुगतो व्यवहारस्तथाग्रेऽपि भविष्यतीति ।

धर्मशास्त्रीयनियमाना प्राक्तनानामशक्त्या परिपाल्यत्वाभावे न परिपाल्यन्ता ते तत्रभवता सामर्थ्याभावेनाधिकाराभावात्, अर्थी समर्थोऽपर्युदस्तश्चाधिकारी भवतीति न्यायात् । ये तु शक्या परिपाल्यास्त एव पाल्यन्ताम । दृष्टाश्चाशक्त्यवसरे आपद्धर्मा धर्मशास्त्रेपु सुबहुशः । अगम्यागमनाभक्ष्यभक्षणानुचितक्रियादिरूपा यथेष्टचेष्टास्तु परलोकदेशसमाजकुलभ्रशहेतुत्वान्नि-रोद्धव्या एव । अन्यथा नवीननियमोऽपि यत्किञ्चिद्यथेष्टचेष्टानिरोधकत्वादनुपादेयतामापत्स्यत एव । वय तु साधूत्पश्याम इद दृढ नियमबन्धनमेव सहस्राधिकवर्षपरतन्त्राया हिन्दूजनताया दास्यकालेऽपि स्वधर्मादप्रच्युतिबीजम् । अत एवैना कोऽपि धर्मः स्वधर्माच्च्यावयितु नाशकत् ।

धर्मशास्त्रेपु परिवर्तनावश्यकत्वेऽप्यापद्धर्मकलिधर्मादिरूपैः परिवर्तनानि प्रागेव कृतानि तत्रास्माक न काचिदपेक्षा। किञ्च भो', इद न विस्मर्तव्यम्—यथा धर्मशास्त्रीयशासनधर्मे परिवर्तन स्वेच्छयाऽनिच्छया वा स्वीकृत्य तत्तद्राजसत्ताया शासनधर्माव्यवस्थया महद्दुःखमस्माभिरनु-भूयते इद रम्यमिदमरम्यमिति कलहेन तथैव विवाहादिष्वार्षनियमातिवृत्तावनर्थपरम्परा पति-ष्यतीति सावधान विमृश्यताम् ।

नारीणा समानाधिकारस्तु धर्मशास्त्रेष्वस्त्येव, अधिकोऽपि वर्तते । तथा हि—"नारी पुरुषस्यार्धम्" इति मनुशतरूपोपाख्याने श्रूयते । स्मर्यते च भगवतः शिवस्यार्धनारीश्वरमूर्तिः । विवाहे सति नारीयुक्तत्वात् पुरुषः पूर्णो भवतीत्यर्धवृगलदृष्टान्तेन छान्दोग्ये श्रूयते । प्राक् तु नारीसंबन्धादपूर्णः । अत एव नार्या सहैव पुरुषस्य सर्वधर्मानुष्ठानम्, न तु वियुक्तस्य ।

तस्या तु रोचमानाया सर्व तद्रोचते कुलम् ।
तस्या त्वरोचमानाया तत्कुल न प्ररोहति ॥ इति,
भार्या त्वर्ध शरीरस्य पुत्रः स्वात्मैव केवलम् ।
आश्रितो भृत्यवर्गस्तु दुहिता कृपण परम् ॥
तस्मादेतैरधिक्षिप्तः सहेतासज्वरः सदा । इति च मनुः ।

नार्याः क्वचिदाधिक्यमपि । यथा—क्षेत्रिणः पुत्र इति, न तु बीजिनः । यथा च व्यवहारे मातापितराविति मातुः पूर्वमुल्लेखः । यथा वा—"पितुर्दशगुण माता गौरवेणाति-रिच्यते" इति ।

यत्कुक्षिप्रभवा ह्येते वस्तुपाल भवादृशाः ॥

इति कश्चिज्जैनकविः । शास्त्रेऽपि शक्तेरेव मुख्यं सृष्टिस्थितिसंहारकर्तृत्वं पुरुषे तु शक्तिसंबन्धादेव ।

पिता रक्षति कौमारे भर्ता रक्षति यौवने ।
पुत्रास्तु स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति ॥

इत्यादिवचनानि त्वप्रमादेन नारीरक्षापराणि । अन्यथा पुरुषान्तरसंपर्के रक्तविकृतेः संतानपरम्परा भ्रश्येत । अत एव योगियाज्ञवल्क्यः शास्त्रीयदारसंग्रहस्य फलमाह—

लोकानन्त्यं दिवः प्राप्तिः पुत्रपौत्रप्रपौत्रकैः ।
यस्मात्तस्मात्स्त्रियः सेव्याः कर्तव्याश्च सुरक्षिताः ॥ [ विवाहप्रक० ७८ ] इति
भर्तृभ्रातृपितृज्ञातिश्वश्रूश्वशुरदेवरैः ।
बन्धुभिश्च स्त्रियः पूज्या भूषणाच्छादनाशनैः ॥ [ विवाहप्रक० ८२ ]

इति च स्त्रीणां सेव्यत्वं रक्ष्यत्वं पूज्यत्वं चाह । न चाधुना पुरुषाणां स्वातन्त्र्ये नारीणामपि स्वातन्त्र्यमस्त्विति साम्प्रतम् । पुरुषस्वातन्त्र्यस्यैव निरोधावश्यकत्वात् । श्रूयते स्मर्यते च रामचन्द्रचरितादिष्वेकनारीव्रतम् । तदेव प्रयत्नेन राजशासने उपादीयताम् । एवं च धर्मशास्त्रेषु नारीस्वातन्त्र्यमपहृतमिति वाक्यं नारीणां प्रतारणायैवेत्युक्तप्रायम् । नारीणां नराणां च यथेष्टचेष्टा निरोद्धव्या एवेति विविधपद्धत्या विमर्शे नास्ति नवीननियमकदम्बकनिर्माणस्यावश्यकता, यतो ह्याद्यनियमच्युतौ नियमानवस्थैव स्यात्, 'भिन्नरुचिर्हि लोकः' इति न्यायादिति ।

धर्मशास्त्राणां परस्परविरोधाभासे प्रतीयमानेऽप्युदितानुदितहोमविधायकश्रुत्यादिवचनवन्मीमांसापद्धत्या कृतैव व्यवस्था सर्वेषां विरोध्याभासवचनानां विज्ञानेश्वरादिभिः । किञ्च, श्रुतिमूलकत्वेन स्मृतीनां प्रामाण्यमत एव प्रत्यक्षं श्रुतिः, स्मृतिस्त्वनुमानमिति । अत एव प्रत्यक्षश्रुतिविरोधे स्मृतिर्बाध्यते । तथा च स्मृतीनामप्रामाण्ये त्यागे वा तन्मूलश्रुतीनामपि तत्प्रसङ्गः । स च हिन्दूधर्मग्रहिलैर्न ग्रहीतव्यो भविष्यति महत्यामप्यापदि ।

एतन्नियमकदम्बकस्य धर्मशास्त्रमूलकत्वे वैयर्थ्यम् । तदमूलकत्वे चाप्रामाण्येन धर्मनियामकत्वम् । तर्कमूलकधर्मनियमानाम्–"तर्काऽप्रतिष्ठानात्" इति व्याससूत्रेण, "यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः । अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते ॥" इति तदनुवादिन्या हरिकारिकया चाप्रतिष्ठितत्वबोधनात् ।

किञ्च,'मुस्लिमजातावपि व्यापिकाया व्याप्यानेकशाखासु जुलाहापठानशेखशैयदेत्यादि-विविधाचाररूढिवादिनीषु च सतीषु यदि नवीना धर्मव्यवस्था तासु केनापि हेतुना न प्रस्तूयते न निबध्यते नापन्यस्यते तर्हि तमेव हेतु पुरस्कृत्य हिन्दूधर्मव्यवस्थाऽप्येषा नोपन्यासार्हा ।

## अथ विचारविशेषः

### तत्र हिन्दूपदार्थनिर्णयः

ये हिन्दूशाखासु विशेषतो विभक्तान् धर्मान् सामान्यधर्मांश्च सर्वशाखास्वनु-गतान् हिन्दूना सदाचाराश्च कुलाचाराश्च समस्तान् व्यस्तान् वाऽऽश्रयन्ते, वर्णान्तर्गता वर्ण-बाह्या वाऽधुनापि वा ये स्वात्मनैव न तु कुलक्रमेण हिन्दूधर्मान् श्रयन्ते, अत्र वसन्ति विदेशे वा विदेशाद्वाऽऽगत्य किञ्चित्कालादत्र वसन्ति ते, सर्वेऽपि हिन्दूपदभाजः । अवान्तर-भेदस्तु तेषा प्राचीनो नवीनो वास्त्येव भविष्यत्येव च पूर्वकाल इव । सामान्यधर्मेण तेषा सर्वेषामैक्यम् । शाखाधर्मैस्तु भेद इति यावत् । कि बहुना—वनदुर्गसमाश्रिताः किराता-दयोऽपि हिन्दव एव ।

### सापिण्ड्यनिर्णय

सापिण्ड्यं तु–"पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा" [ विवाहप्रक० ५३ ] इति याज्ञवल्क्यवचनादेतत्सवादिमनुवचनाच्च मातृतः पञ्चपुरुष पितृतः सप्तपुरुषमेव युक्तम् । "त्रीनतीत्य मातृतः पञ्चातीत्य च पितृतः" इति पैठीनसिवचनं तु "अर्वाङ्निषेधार्थम्, न तु तत्प्राप्त्यर्थमिति सर्वस्मृतीनामविरोधः" इत्युक्त्वा विज्ञानेश्वरेण मिताक्षराया व्यवस्थापितमिति न त्रिपुरुष पञ्चपुरुषं च यथाक्रम मातृतः पितृतश्च सापिण्डयम् । ये त्वेकपितृका भिन्नजातीय-मातृकाश्च तेषा तु त्रिपुरुषं सापिण्डय भवति—

> यद्येकजाता बहवः पृथक्क्षेत्राः पृथग्जना ।
> एकपिण्डाः पृथक्शौचाः पिण्डस्त्वावर्तते त्रिषु ॥

इति शङ्खवचनात् ।

### विवाहनियममीमांसा

"अस्मिन् नियमे स्वीकृते धर्मशास्त्राणा नोपयोगो भविष्यति" इति हिन्दूसहिता-वचनमपि नियमानवस्थाप्रसङ्गदोषाद् दूषित सामान्यतो विचारावसर एव । जीवत्पतिकाया

जीवत्पत्नीकस्य च न विवाहान्तरमिति नियमवाक्येनानुमन्यमानो मृतपतिकाया विवाहस्त्रैवर्णिकेषु नोचितः, शास्त्रविरुद्धत्वात्। तथा च मनुः—

नान्यस्मिन् विधवा नारी नियोक्तव्या द्विजातिभिः।
अन्यस्मिन् हि नियुञ्जाना धर्मं हन्युः सनातनम्॥ इति,
न विवाहविधौ दृष्टं विधवावेदनं क्वचित्॥ इति च।

यत्तु—"अपुत्रां गुर्वनुज्ञातो देवरः पुत्रकाम्यया। सपिण्डो वा सगोत्रो वा घृताभ्यक्त ऋतावियात्॥" [ याज्ञवल्क्य० विवाहप्रक० ६८ ] इत्यादिनियोगवचनं स्मर्यते तत्तु वाग्दत्ता विषयम्, "यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः। तामनेन विधानेन निजो विन्देत देवरः॥" इति मनुवाक्यात्, व्यवस्थापितं च मिताक्षरायां तत्रैव तथैव च। न च-"नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ। पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते॥" इति स्मृत्यन्तराद्युक्त एव विधवायाः पत्यन्तरसबन्ध इति वाच्यम्; प्रागुक्तमनुवाक्यानुरोधेनास्यापि वाग्दत्तामात्र परत्वात्। तथा हि–पताविति रूपं मुख्यार्थकपतिशब्दसदृशस्य पतित्वेनाख्यातार्थकस्य पतिशब्दस्य रूपम्। पतिरित्याख्यातः पतिः। आख्यानणिजन्तात्कर्मणि 'अच इः'इत्यौणादिक इप्रत्ययः। अत एव 'पतिः समास एव'इति नियमानाक्रान्त्या पत्याविति न रूपम्, "अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः" इति न्यायात्। किञ्च, प्रागुदाहृतत्रैवर्णिकविधवानियोगनिषेधकस्मृति-विरोधेन शूद्रविधवापरत्वमस्य युज्यते। सर्वविधवाविषयकत्वेन विधिनिषेधयोर्विकल्पस्तु न, त्रैवर्णिकविधवानियोक्तॄणां प्रागुदाहृतनिन्दाश्रवणात्। किञ्च, अत्र—"पतिरन्यो विधीयते" इति रागतः प्राप्तस्य भूतार्थस्यानुवादो न तु विधिः, विधिबोधकलिङाद्यभावात्। स च निषेध विधिना–"न नियोक्तव्या द्विजातिभिः" इति प्रागुदाहृतेन बाध्यते।

उन्मत्तमूर्खयोरज्ञानाद्विवाहे सपन्नेऽपि सोऽविवाह इत्यपि न युज्यते। यतः—

क्लीबोऽथ पतितस्तज्जः पङ्गुरुन्मत्तको जडः।
अन्धोऽचिकित्स्यरोगाद्या भर्तव्याः स्युरनंशकाः॥
अपुत्रा योषितश्चैषां भर्तव्याः साधुवृत्तयः।
निर्वास्या व्यभिचारिण्यः प्रतिकूलास्तथैव च॥

[ याज्ञवल्क्य० विवाहप्रक० १४०, १४२ ]

इत्यनेन वचनद्वयेन क्लीबादिपत्नीनामपि विवाहान्तरं नास्तीति लभ्यते। न च पत्यन्तर-विधायकं वचनमुपलभ्यते, 'नष्टे मृते'इत्यादिवाक्यस्य वाग्दत्तामात्रपरत्वेन प्राग्व्यवस्थापितत्वात्।

पञ्चदशवर्षवयस्ककन्यकाया एव न तु न्यूनवयस्काया अष्टादशवर्षवयस्कवरेणैव विवाह इत्यपि—"लक्षण्यामुद्वहेत् कन्या हृद्या द्वादशवार्षिकीम्" इति विवाहप्रकरणस्थवचनविरोधात् स्वसाधकवचनानुपलब्धेश्च हेयम्। वधूवरयोः समागमकालस्त्वय भवितुमर्हति वधूप्रवेशव्यवधानेन। तथा च शास्त्रस्वार्थयोरविरोधः।

उपोप मे परामृश मा मे दभ्राणि मन्यथाः।
सर्वाहमस्मि रोमशा गान्धारीणामिवाविका ॥

इति श्रुतावपि सम्भोगयोग्यताप्राप्तेः प्रागेव विवाहोऽवधार्यते। सम्भोगस्तु योग्यताप्राप्तौ।

प्रागुक्तसापिण्ड्यस्य निरासे तद्विषयकः परिहार्यत्वापरिहार्यत्वविचारोऽपि निरस्तो वेदितव्यः, आलम्बनाभावात्।

यद्यपि षोडशवर्षात्प्राक् संरक्षकस्य कन्याया विवाहे सम्मतिरनिवार्या। अतः परं कन्या स्वतन्त्रेत्येष नियमः—"त्रीणि वर्षाण्युदीक्षेत कुमार्यृतुमती सती। ऊर्ध्वं तु वर्षत्रितयात् कन्या कुर्यात् स्वयंवरम्॥" इति शास्त्रानुमोदित इति पित्रादीनामुपेक्षा युज्यते, तथापि शास्त्रं तु वरणसजातीयत्वसत्कुलजत्वाद्यर्थं कन्ययाऽपेक्षितव्यमेव। नहि शिष्यापराधे गुरोर्दण्डः। अतः कन्यया सगोत्रासवर्णादिवरस्वीकाररूपा यथेष्टचेष्टा न कार्या। तस्यामवस्थायां शास्त्रत्यागस्य शास्त्राननुमतत्वात्। "गम्यं त्वभावे दातॄणां कन्या कुर्यात् स्वयंवरम्" [ याज्ञवल्क्य० विवाह० ६४ ] इति वरस्य गम्यत्वं विशेषणं स्मर्यते।

संरक्षकाणां कन्याप्रदातॄणां क्रमोऽप्येतन्नियमस्वीकृतो न शास्त्रसम्मतः। तथा हि—

पिता पितामहो भ्राता सकुल्यो जननी तथा।
कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः॥ [याज्ञवल्क० विवाहप्रक० ६३]

इति कन्याप्रदातृक्रमः स्मर्यते। शास्त्रसम्मतः संरक्षकक्रमोऽप्येष एव भवितुमर्हति। एतच्चाग्रे स्पष्टीभविष्यति।

वरकन्ययोरन्यतरकुलरीत्या विवाह इत्यपि शास्त्रपद्धतिविरुद्धमाचारविरुद्धं च। तथा हि—पित्रादिः कन्यां विवाहात्पूर्वं प्रदत्ते। वरस्तु तां विधिवत्प्रतिगृह्य स्वकुलाचारपद्धत्या संस्करोतीत्येषा शास्त्रमर्यादा। यतो विवोढा वर एव वहति, अतस्तस्य स्वकुलोचितपद्धत्या विवाहसंस्कारकर्तृत्वमेव युक्तम्।

हिन्दूविवाहस्य राजेष्टीकरणम्, तदभावे शतमुद्रादण्डनमित्यपि न साम्प्रतम्, दोषजालजटिलत्वात्। तथा हि—पूर्वं तावद्गणतन्त्रे जनतास्वातन्त्र्यापहारः, अनपेक्षितव्ययाधिक्यम्,

वैयर्थ्यं च, राजेष्टीकरणेऽपि रागाभावे परस्पर दोषारोपेण परस्परत्यागसंभवात्। परस्पर रागे सति तु वैयर्थ्य स्पष्टमेव। किञ्च, राजेष्टीकरणेन धार्मिकस्य स्वभावदृढस्य हिन्दूविवाहसंस्कारस्य महत्त्व हीयेत।

## दाम्पत्यविच्छेदविषयको विचारः

सत्सु केषुचित्कारणेषु पत्न्यास्त्यागो धर्मशास्त्रेषूपलभ्यते। तत्र त्यागविषय उक्त विज्ञानेश्वरेण—"त्यागश्चोपभोगधर्मकार्ययोः, न तु निष्कासन गृहात्तस्याः। 'निरुन्ध्यादेकवेश्मनि' इति नियमात्" [ विवाहप्रकरणे ७२] इति। पत्न्यास्त्यागविषये चेमे श्लोकाः—

हृताधिकारा मलिना पिण्डमात्रोपजीविनीम्।
परिभूतामधःशय्या वासयेद् व्यभिचारिणीम्॥
व्यभिचाराहृतौ शुद्धिर्गर्भे त्यागो विधीयते।
गर्भभर्तृवधादौ च तथा महति पातके॥
सुरापी व्याधिता धूर्ता वन्ध्यार्थघ्न्यप्रियंवदा।
स्त्रीप्रसूश्चाधिवेत्तव्या पुरुषद्वेषिणी तथा॥

[ याज्ञवल्क्य० विवाहप्रक० ७०, ७२, ७३ ]

अधिवेदन भार्यान्तरपरिग्रहः। अधिवेदनेऽपि भरण विहितम्—

अधिविन्ना तु भर्तव्या महदेनोऽन्यथा भवेत्।
यत्रानुकूल्य दम्पत्योस्त्रिवर्गस्तत्र वर्धते॥

[ याज्ञवल्क्य० विवाहप्रक० ७४]

व्याख्यात च विज्ञानेश्वरेण—"साऽधिविन्ना पूर्ववदेव दानमानसत्कारैर्भर्तव्या। अन्यथाऽभरणे महदपुण्य वक्ष्यमाणो दण्डश्च" इति।

चतस्रस्तु परित्याज्याः शिष्यगा गुरुगा च या।
पतिघ्नी च विशेषेण जुङ्गितोपगता च या॥

इति च त्यागे व्यासः। जुङ्गितः प्रतिलोमजश्चर्मकारादिः। पुरुषस्याप्येतादृश एव त्यागः, किन्तु सावधिको धर्मशास्त्रेषु दृश्यते। तद्यथा—

स्त्रीभिर्भर्तृवचः कार्यमेष धर्मः परः स्त्रियाः।
आशुद्धेः सप्रतीक्ष्यो हि महापातकदूषितः॥

[ याज्ञवल्क्य० विवाहप्रक० ७७]

पत्युः सर्वथा त्यागपुरस्सर पत्यन्तरकरण तु न श्रूयते स्मर्यते वा कस्याञ्चिदप्यापदि। अत्यागे पत्यन्तरकरणाभावे तु वचनान्युपलभ्यन्ते। तानि यथा मनुस्मृतौ पञ्चमाध्याये—

उक्तो वः सर्ववर्णाना स्त्रीणा धर्मान्निबोधत ॥ १४६ ॥
यस्मै दद्यात् पिता त्वेना भ्राता वानुमते पितु'।
त शुश्रूषेत जीवन्त सस्थित च न लङ्घयेत् ॥ १५१ ॥
अनृतावृतुकाले च मन्त्रसस्कारकृत्पतिः।
सुखस्य नित्य दातेह परलोके च योषित. ॥ १५३ ॥
विशीलः कामवृत्तो वा गुणैर्वा परिवर्जित ।
उपचर्यः, स्त्रिया साध्व्या सतत देववत्पतिः ॥ १५४ ॥
पाणिग्राहस्य साध्वी स्त्री जीवतो वा मृतस्य वा।
पतिलोकमभीप्सन्ती नाचरेत् किञ्चिदप्रियम् ॥ १५६ ॥
काम तु क्षपयेद्देह पुष्पमूलफलैः शुभै.।
न तु नामापि गृह्णीयात्पत्यौ प्रेते परस्य तु ॥ १५७ ॥
आसीतामरणात्क्षान्ता नियता ब्रह्मचारिणी।
यो धर्म एकपत्नीना काङ्क्षन्ती तमनुत्तमम् ॥ १५८ ॥
मृते भर्तरि साध्वी स्त्री ब्रह्मचर्ये व्यवस्थिता।
स्वर्गं गच्छत्यपुत्रापि यथा ते ब्रह्मचारिणः ॥ १६० ॥
अपत्यलोभाद् या तु स्त्री भर्तारमतिवर्तते।
सेह निन्दामवाप्नोति पतिलोकाच्च हीयते ॥ १६१ ॥
नान्योत्पन्ना प्रजाऽस्तीह न चाप्यन्यपरिग्रहः।
न द्वितीय च साध्वीना क्वचिद् भर्तोपदिश्यते ॥ १६२ ॥
पतिं हित्वापकृष्ट स्वमुत्कृष्ट या निषेवते।
निन्द्यैव सा भवेल्लोके परपूर्वेति चोच्यते ॥ १६३ ॥ इति।

स्मर्यते च मार्कण्डेयपुराणे माण्डव्योपाख्याने वेश्याकामुकः कुष्ठी भर्ता साध्व्याऽनुकूलाचरणेनोपचरित इति। तदनेनार्थवादेन महारागदूषितः कामवृत्तोऽपि पतिः श्रद्धयोपचरितव्य इति विधिः कल्प्यते। तदेष दाम्पत्यविच्छेदो हिन्दूधर्मबाह्यो धर्मान्तरेऽनुसृतोऽपि रम्या हिन्दूसमाजव्यवस्था समूलमुन्मूलयिष्यन् न कटाक्षेणापीक्षणीय इति।

अवलोक्यते च दाम्पत्यविच्छेदव्यवस्थामूलको यादृशः कुटुम्बकलहो विधर्मिषु विदेशेषु देशे चात्र न तथा हिन्दूकुटुम्ब इति न शक्यापलापम्। किञ्चेदमन्यद्विचारास्पदम्—यथाऽस्या व्यवस्थाया सपिण्डं परिभाष्य तत्परिहारः कृतस्तथा सगोत्रसप्रवरपरिहारः कुतो न कृत.। यद्युच्यते सगोत्रसप्रवरविवाहो दृष्टप्रमाणविरोधित्वान्न परिहार्यः शास्त्रे परिहृतोऽपि, तदा भवत्परिभाषितसपिण्डविवाहोऽपि न परिहार्यस्तत्त्वादेव। दृश्यते हि भवत्परिभाषितसपिण्डविवाहो मुस्लिम-समाजे। न च काचन हानिस्तैरस्माभिर्वा प्रत्यक्षीक्रियते।

एकस्मिन् दाम्पत्यसंबन्धेऽक्षते संबन्धान्तरकरणे दण्डव्यवस्थाविधायकोऽष्टादशो नियमोऽपि शास्त्रविरुद्धो हिन्दूस्वार्थविरुद्धो लोकविरुद्धश्च। तथा हि—"सुरापी व्याधिता धूर्ता" इत्यादिपत्नीसत्त्वे पत्न्यन्तरकरणरूपमधिवेदनं स्मर्यते। न च नार्या नरान्तरसंबन्ध इव नरस्य विधिवन्नार्यन्तरकरण निषिध्यते। दृश्यते च श्रुतौ याज्ञवल्क्यस्यानेकभार्यत्वम्। स्मर्यते च पुराणेपु सगरदशरथकृष्णार्जुनादीना बहुभार्यत्वम्। अधुनापि हिन्दूसमाजेऽनेकभार्यत्वं दृश्यते। हिन्दूना स्वार्थविरोधस्तु सर्वोच्छेदभीषणः प्राप्नोति। तथा हि—मुसलिमसमाजस्यानेकभार्याकरणनिषेधाभावे हिन्दूना चानेकभार्याकरणनिषेधे सतत वेगेन प्रवर्धमाना मुसलिमजातिः साम्यमाधिक्यं वा प्राप्स्यतीति हिन्दूना सर्वथा स्वार्थघातिकेय धारा।

## हिन्दूबालतत्संरक्षकनियममीमांसा

हिन्दूबालतत्सरक्षकसंबद्धप्राक्तनधर्मान् धर्मशास्त्रोदितानशतोऽपहायाशतः परिवर्त्यापूर्वाश्च काश्चिन्निवेश्याधुना केचित्तान् राजधर्मत्वसपत्त्यै प्रस्तुवन्ति। यत्र त्रयोदशधारा मुख्या अवान्तर-धाराश्च द्वे तिस्रो वा क्वचित् क्वचिदुपनिबद्धा आशु बुद्ध्यारोहाय। अत्रेद वक्तव्यम्–किमासा धाराणा पुरुषबुद्धिप्रभवत्वं धर्मस्मृतिमूलकत्व वा? तत्र पुरुषबुद्धिप्रभवत्वेऽनवस्थादौस्थ्यम्, "तर्काऽप्रतिष्ठानात्" इत्यादिना ब्रह्मसूत्रकृद्भिरनादरणात्तर्कस्य; "यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः। अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते ॥" इति हरिवचनाच्च। धर्मस्यादृष्टपदवेदनीयस्य "चोदनालक्षणोऽर्थो धर्मः" इति जैमिनिमुनिना चोदनामात्रगम्यत्वस्य ( शब्दमात्रप्रमितस्यैव ) आस्थानाच्च। एवं च हिन्दूबालतत्सरक्षकसबद्धधर्मेऽपि स्मृतिषु जाग्रतीषु किमिति पुरुषबुद्धिप्रभवा धर्मा प्रस्तूयन्त इति न विद्म ऋते पाश्चात्यपद्धत्यनुकरणरागात्। पाश्चात्यसभ्यतायास्त्वतिनव्यत्वात्तत्र व्यवस्थिताः प्राक्तनधर्मा नासन्निित्यनियताः कल्प्यन्ते कल्पयिष्यन्ते च।

किञ्च, याज्ञवल्क्यस्मृतिदर्शनेन धर्माणा त्रैविध्यं प्रतीयते। प्रथमं तावद्धर्मो द्विविधः–निजधर्मः सामयिकश्चेति। सामयिकोऽपि द्विविधः–प्रजाकृतो राजकृतश्चेति। तत्र श्रौतस्मार्त-

निजधर्माविरोधेनैव सामयिको धर्मो राजकृतोऽपि पालनीयो न तु निजधर्मविरोधेनेति याज्ञवल्क्यस्मृतावादेशः । तथा हि—

> निधधर्माविरोधेन यस्तु सामयिको भवेत् ।
> सोऽपि यत्नेन सरक्ष्यो धर्मो राजकृतश्च यः ॥ [ व्यवहारा० १८६ ]

तत्र सामयिकधर्माणा कालभेदेन राजधर्माणा च सामयिकाना राजभेदेनानियतत्वात् स्मृतिष्वनुल्लेखः । निजधर्माणा तु ब्राह्मणादिवर्णक्रमेण नियतत्वात्तत्र नियमनम् । सामयिकधर्मा एव तत्र संवित्पदेनाप्युच्यन्ते–"गणद्रव्य हरेद्यस्तु सविदं लङ्घयेच्च यः" [याज्ञ० व्यव० १८७] इत्यादौ । अतः प्रजाविरोधपरिहाराय राज्ञापि धर्मशास्त्रोदितहिन्दूधर्माविरोधेनैव राजधर्मः सामयिकः कर्तव्यो न तु तद्विरोधीति युक्तमुत्पश्यामः ।

यद्यपि वर्तमानराजधर्मे ब्रिटिशशासनसमयात्प्रवर्तमाने स्वधर्मानुसरणाद्वाऽज्ञानाद्वा हिन्दुषु विद्वेषाद्वा क्वचित् क्वचिदशे विरोधो दृश्यते तथापि वर्तमानशासनसमये हिन्दूधर्मरक्षा-बद्धपरिकरैः स परिहर्तव्यो न त्वधिक. सपादयितव्यः । दृश्यन्ते चैतत्प्रस्तावे बहवो धर्म-शास्त्रविरोधाः । तथा हि—

अष्टादशवर्षेभ्योऽर्वाग् बालो भवतीत्यत्र प्रस्तूयते । धर्मशास्त्रेषु तु षोडशवर्षाण्येव बालस्यावधिर्दृश्यते । तथा हि—

> बालदायादिकं रिक्थ तावद्राजानुपालयेत् ।
> यावत् स स्यात् समावृत्तो यावच्चातीतशैशवः ॥ [ मनु० ८।२७ ]

इति श्लोकव्याख्यावसरे–"बाल आषोडशाद्वर्षात्" इति नारदवचनांशमुद्धृत्य कुल्लूक-भट्टेन तथैव व्यवस्थापनात्,

> गर्भस्थसदृशो ज्ञेय आष्टमाद्वत्सराच्छिशुः ।
> बाल आषोडशाद्वर्षात् पोगण्डश्चेति कथ्यते ॥
> परतो व्यवहारज्ञः स्वतन्त्रः पितरावृते ।
> जीवतोर्न स्वतन्त्रः स्याज्जरयाऽपि समन्वितः ॥

इति पराशरमाधवीये व्यवहारकाण्डे कात्यायनवचनाच्च ।

किञ्च, अत्र प्रस्तावे पञ्चमधाराया बालसरक्षकत्व स्वाभाविक मातापित्रोरेव प्रतीयते । "तयोरपि पिता श्रेयान् बीजप्राधान्यदर्शनात् । अभावे बीजिनो माता तदभावे तु पूर्वजः ॥"

इति पराशरमाधवीयव्यवहारकाण्डस्थकात्यायनवचनात्तु पूर्वजस्यापि स्वाभाविकसंरक्षकत्व कण्ठोक्तं प्रतीयते। वस्तुतस्तु—

पिता पितामहो भ्राता सकुल्यो जननी तथा।
कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः॥

इति व्यवहारकाण्डस्थयोगियाज्ञवल्क्यवचनात् कन्याप्रदातृणा कन्यासरक्षकत्वमर्थसिद्धम्, अनधिकारे दानासंभवात्। ( अत्र प्रकृतिस्थ उन्मादादिदोषरहित इति मिताक्षराकारः। प्रकृतौ स्वभावे तिष्ठतीति व्युत्पत्तेः। मिताक्षरायामादिपदेन लोभादयोऽपि गृह्यन्ते। ) तुल्यन्यायाच्च पुत्रेष्वपि बालेष्वेत एव संरक्षकाः।

पिता पितामहो भ्राता ज्ञातयो गोत्रजाग्रजा.।
उपानयेऽधिकारी स्यात् पूर्वाभावे परः परः॥

इति वीरमित्रोदय उपनयनप्रकरणे वृद्धगर्गवचनाच्च। अत्र भ्राता पितुर्भ्रातेति व्याख्येय मिति वीरमित्रोदयकारः।

पितैवोपनयेत् पुत्र तदभावे पितुः पिता।
तदभावे पितुर्भ्राता तदभावे तु सोदरः॥

इति तत्रैव पितामहस्मरणाच्च। पूर्वोक्तकात्यायनवचनेषूत्तरमीमासोक्तपद्धत्या गुणोपसंहार-न्यायेनैषामुपसहारः। "वैवाहिको विधिः स्त्रीणामौपनायनिकः स्मृतः" इति वचनात्कन्यापुत्रयो-र्विवाहोपनयनयोः साम्यप्रदर्शनाच्च।

किञ्च, अत्रैवोपधाराया तृतीयाया परिणीतकन्यायाः पतिरेव संरक्षक इति प्रतिज्ञायते। तच्च पराशरमाधवीयव्यवहारकाण्डस्थनारदवचनविरुद्धम्। तथा हि—

एतान्येव प्रमाणानि भर्ता यद्यनुमन्यते।
पुत्रः पत्युरभावे वा राजा वा पतिपुत्रयोः॥

इत्यत्र पत्यभावे पुत्रस्तदभावे राजेत्येषा सरक्षकत्वं दृश्यते। स्त्रियाः सर्वथैव स्वातन्त्र्यं च निषिध्यते। तथा हि पराशरमाधवीये व्यवहाराध्याये हारीतवचनम्—

दाने वाऽऽधमने वापि धर्मार्थे वा विशेषतः।
आदाने वा विसर्गे वा न स्त्री स्वातन्त्र्यमर्हति॥ इति।
पिता रक्षति कौमारे भर्ता रक्षति यौवने।
पुत्रास्तु स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति॥ इति मनुवचनाच्च।

अत्रायं निष्कर्षः—उढकन्यायाः पतिः संरक्षकः, पत्युरभावे षोडशवर्षेभ्यः प्रागूर्ध्वं च पत्युः सरक्षका एव तस्या अपि सरक्षका भवितुमर्हन्ति, शास्त्रेषु तस्या पत्यर्द्धाङ्गत्वेन स्वीकारात् । तथा च मनुवचनम्—"भार्या त्वर्द्धं शरीरस्य पुत्रः स्वात्मैव केवलम्" इति । बृहदारण्यके च श्रूयते—"तस्मादिदमर्द्धवृगलमिव" [ १।४।३ ] इति । तथा चार्द्धभागस्य सरक्षका एवापरार्द्ध-भागस्यापि सरक्षका भवितुमर्हन्तीति युक्तमुत्पश्यामः । सर्वाभावे राजैव संरक्षकः पूर्वोक्तनारद-वचनात् । कस्यामपि चावस्थाया नार्याः स्वातन्त्र्य धर्मशास्त्रासमतमिति ।

एव चाय निष्कर्षः—हिन्दूधर्मशास्त्रप्रतिपादितधर्माविरोधेनैव सामयिका राजधर्मा राज्ञा प्रवर्तयितव्या न तु सर्वथाऽशतो वा तद्विरोधिनः, प्रजाकलहपरिहाराय । किञ्च, धर्मग्रन्थेष्वपि बालाना पुरुषाणा स्त्रीणा सजातीयाना सकराणा पतिताना पतितजाताना च कृते सन्त्येव व्यवहार-सबन्धिनो दायसबन्धिनश्च नियमाः, परीक्षितानेकसहस्रकालव्यवायेन । त एवाधुनापि प्रयोक्तव्याः । देशस्य समुन्नतिरवनतिश्चार्थशास्त्रप्रतिपादितोपायायत्ता न तदर्थं धर्मव्यवस्था परिवर्तनमपेक्ष्यत इति सत्यं हितं च वेदयन् सप्रार्थये—

परश्शतसहस्रेभ्यो वर्षेभ्यः सुपरीक्षिता ।
साध्वी व्यवस्था हिन्दूना नाभिभाव्या विभावकैः ॥

इति शम् ॥

# प्राचीनपाठनिर्णयकुञ्जिका

श्रीरामाज्ञापाण्डेयः, सरस्वतीभवनम्, काशी ।

लोके वनस्पतिबृहस्पतितारतम्य यस्याः प्रसादपरिणाममुदाहरन्ति ।
सा भारती भगवती तु यदीयदासी ता देवदेवमहिषीं श्रियमाश्रयामः ॥

साम्प्रतमहं किञ्चिद्विवक्षुः स्वतन्त्रेऽस्मिन् भारते प्राचीनतमशास्त्रैकतन्त्रा पक्षपात-कालुष्यासस्पृष्टा बुद्धिमवलम्ब्य तत्रभवता पुरस्तादेक विषयमुपस्थापयितुमिच्छामि । इमा पद्धतिमाश्रित्य यदि विपश्चितः स्वक ज्ञान परत्र संक्रमयितुं प्रयतिष्यन्ते तर्हि भूयान्नाम महानुपकारः सन्मार्गमार्गणे बद्धपरिकराणा नराणाम् । "न बुद्धिभेद जनयेदज्ञाना कर्मसगिनाम् । जोषयेत् सर्वकर्माणि विद्वान् युक्तः समाचरन् ॥" [भगवद्गीता ३।२६] इति, "यर्वाणस्तर्वाणो नाम ऋषयो बभूवुः प्रत्यक्षधर्माणः परावरज्ञा विदितवेदितव्या अधिगतयाथातथ्याः । ते तत्रभवन्तो यद्वानस्तद्वान इति प्रयोक्तव्ये यर्वाणस्तर्वाण इति प्रयुञ्जते, याज्ञे कर्मणि पुनर्नापभाषन्ते । तैः पुनरसुरैर्याज्ञे कर्मण्यपभाषित ततस्ते पराभूताः" [ महाभाष्ये १।१।१ वार्त्तिक ६ ] इत्यादि-वचनचयमनुरुध्य त्वया वर्तितव्यमिति मम केचन सुहृदो मामन्वरुन्धन्—यत्त्वं प्रचलिता सरणिं मा दूदुष इति ।

तान् प्रत्येतावदेवाह वच्मि—भगवन्तः, नाहं कर्मणि प्रवृत्तान् मनुजान् कर्मपथात् प्रच्यावयितु वाञ्छामि किन्तु कर्ममार्गे पतितान् लोष्टानपसार्य गमनिका तथा शोधयामि यथा सौकर्येण साधारणोऽपि जनो गन्तुं प्रभवेत् । मा भूवन्नाम बाधास्तेषा निःशङ्कप्रयाणे ।

बहुषु स्मृतिग्रन्थेषु पुराणेषु च किमुत वाल्मीकीयरामायणेऽपि प्रभूतानि वचनानि प्रक्षिप्तानि दृश्यन्ते । तान्यवलम्ब्यास्माक सनातने वैदिके मार्गे बहवो व्यवहाराः पश्चादाकर्षन्ति प्रगतिशीलानपि मानवान् । तादृशान्धपरम्परापतिताः प्रभूताः प्राणिनो ज्ञात्वापि तथ्य चिराद-भ्यस्ता पद्धतिं हातुं नोत्सहन्ते ।

अहमपि क्वचिदशे तथाभूतोऽस्मि । पर भाविनीवंशपरम्परास्तादृशे गर्ते मा पप्तदिति मनसि निधाय तत्त्वान्वेषिणो जनानभ्यर्थये—विपश्चितो भवन्तु भवन्तः सावधानाः, जानन्तु प्राचीनान् प्रक्षिप्ताशान् स्वकीयेषु ग्रन्थरत्नेषु ।

तत्र प्रथमम्—"शूद्राणामनिरवसितानाम्" [ २।४।१० ] इति सूत्रभाष्यमवलम्ब्य तत्त्व प्रदर्शयामि। तत्र हि भाष्ये—"अनिरवसितानामित्युच्यते, कुतोऽनिरवसितानाम्? आर्यावर्तादनिरवसितानाम्। कः पुनरार्यावर्तः? प्रागादर्शात्, प्रत्यक्कालकवनात्, दक्षिणेन हिमवन्तम्, उत्तरेण पारियात्रम्। यद्येव किष्किन्धगान्धिकम्, शकयवनम्, शौर्यक्रौञ्चमिति न सिद्धयति। एव तर्ह्यार्यनिवासादनिरवसितानाम्। कः पुनरार्यनिवास॰? ग्रामो घोषो नगर संवाह इति। एवमपि य एते महान्तः सस्त्यायास्तेष्वभ्यन्तराश्चण्डाला मृतपाश्च वसन्ति, तत्र चण्डालमृतपा इति न सिद्धयति। एव तर्हि याज्ञात् कर्मणोऽनिरवसितानाम्। एवमपि तक्षायस्कारम्, रजकतन्तुवायमिति न सिद्धयति। एव तर्हि पात्रादनिरवसितानाम्। यैर्भुक्ते पात्रं सस्कारेणापि न शुद्धयति ते निरवसिताः। यैर्भुक्ते पात्र सस्कारेण शुद्धयति तेऽनिरवसिताः" इति। अत्र प्रदीपः—"आदर्शादयः पर्वतविशेषा।" यद्येवमिति। एतेषामार्यावर्ताद्वाह्यत्वादिति भावः। ग्राम इति। एतेष्वार्या निवसन्तीति भावः। तत्र ग्रामः प्रसिद्ध॰। घोषो गोमहिष्यादिनिवासः। सवाहो वणिक्प्रधानः। सस्त्याया इति। निवासविशेषा इत्यर्थः। मृतपा डोम्बा इत्याहुः" इति। उद्योतः—"श्मशाननिकटे ये वसन्ति मृतवस्त्रचितिकाष्ठादिग्राहकाश्चण्डालसदृशास्ते 'डोम्बा' इत्युच्यन्ते" इति। प्रदीपः—"याज्ञादिति। शूद्राणा पञ्चयज्ञानुष्ठानेऽधिकारोऽस्तीति भावः" इति। उद्योत॰—"'तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः' इति श्रुतेः शूद्राणा यज्ञकर्मणोऽबहिष्कृतत्व विरुद्धमित्यत आह—शूद्राणामिति। पूर्वोक्तश्रुतिस्त्वग्निहोत्रादिविषयेति भावः" इति। प्रदीपः—"तक्षायस्कारमिति। तक्षादीना यज्ञेऽधिकाराभावादिति भावः" इति। उद्योतः—"तक्षादीनामिति। तेषा प्रतिलोमत्वादिति भावः। शूद्रशब्दोऽत्र सूत्रे त्रैवर्णिकेतरपर इति बोध्यम्" इति। प्रदीपः—"सस्कारेणेति। यः सस्कारः स्मृतिकारैर्द्रव्यशुद्धौ पठितस्तेनैव न तदधिकेनेत्यर्थः" इति। उद्योतः—"स्मृतिकारैरिति। 'भस्मना शुद्धयते कास्यम्' इत्यादि" इति।

अत्राय निष्कृष्टोऽर्थः—अत्र भाष्ये आर्यावर्तादनिरवसितानामित्युक्त्या, 'शकयवनम्' इति न सिद्धयतीत्युक्त्या च पतञ्जलिकाले शका यवना वाऽऽर्यावर्ते नासन्निति गम्यते। यद्यपि "अरुणद्यवनः साकेतम्, अरुणद्यवनो मध्यमिकाम्" इत्यादिप्रयोगदर्शनाद् यवनाना सत्ताऽऽर्यावर्ते समुपलभ्यते, तथाप्येतावता तेषामभियोगमात्रस्यैव सिद्धयाऽऽङ्ग्लानामिवा-नाऽऽर्यावर्ते निवासस्यासिद्धत्वात्।

परमधस्ताद्भाष्ये ग्रामे नगरे घोषे सवाहे वा त आसन्नित्यस्य कोऽर्थः? यद्यार्यावर्तान्तर्गतग्रामादिषु त आसन्नित्यर्थोऽभिप्रेयते तर्हि कथ त आर्यावर्तान्तर्गतग्रामवासिनः

सन्तोऽप्यार्यावर्ताद् बहिष्कृता भवेयुः । तस्मादार्यावर्तबहिर्भूतग्रामादिषु त आसन् , तत्र चार्या अप्यासन्निति च गम्यते । एव सति—महत्सु पत्तनेषु चण्डालमृतपादीनामपि सत्त्वात् 'चण्डालमृतपाः' इत्यत्रैकवद्भावप्राप्तौ याज्ञात् कर्मणोऽनिरवसितानामिति तदर्थस्वीकारे चण्डालमृतपाना तत्राधिकाराभावाच्छकयवनस्य तु याज्ञे कर्मण्यधिकारो दृढीक्रियते । अस्या स्थितौ—तक्षायस्कारादीना महाभाष्योक्ताना याज्ञे कर्मणि नाधिकार इति स्वायाति । तथा सति पतञ्जलिकाले शकयवनादयस्तक्षायस्कारतो रजकतन्तुवायतश्च श्रेष्ठा आसन्निति सिद्धयति ।

तत्र तक्षा वर्धकिः 'बढ़ई' इति ख्यातः । स च तक्षा द्विविधोऽमरकोशरीत्याऽऽयाति । तथा हि—यो हि ग्रामाधीनः स हि न स्वतन्त्रः स ग्रामतक्ष इत्युच्यते । यश्च कुट्या भवः स्वतन्त्रो न तु पराधीनः स कौटतक्ष इत्युच्यते ।

यद्यप्यमरकोशे—"तक्षा तु वर्धकिस्त्वष्टा रथकारश्च काष्ठतट्" इत्यादिना रथकारोऽपि तक्षपर्य्यायेष्वपि गणितस्तथापि वक्ष्यमाणस्मृतिप्रामाण्यादमरमतेन च रथकारस्यानुलोमसकरत्वात् प्रतिलोमसकरतक्षभिन्नत्वमपि सिद्धयति। "रथकारस्तु माहिष्यात्करण्या यस्य संभवः" इत्यमरकोशप्रामाण्याच्च रथकारोऽनुलोमसकरोऽप्यायाति । एवं स्थितौ रथकारो द्विविधः—एकस्तक्षपर्यायः, अपरस्त्वनुलोमसंकरजातीयः । द्विविधोऽप्यमरकोशे परिगणितः । शूद्रशब्दोऽत्र त्रैवर्णिकेतरपर इत्युद्योतोक्त्या तु सर्वेषामपि सकराणा द्वन्द्व एकवत् स्यात् । सैव पद्धतिरमरकोशेऽप्यादृता । अत एवाम्बष्ठादयः शूद्रवर्ग एव परिगणिताः ।

युक्त चैतत्प्रतीयते, यतो हि क्षत्रिया अपि शकयवनादयो भाष्यकारेण शूद्रत्वेनैव व्यवहृताः । तदानीं त आचारविहीनत्वाद्ब्राह्मणानामदर्शनेनातिक्रमणेन वा शूद्राः सपन्नाः ।

अपि च—"आयोगवस्तु शूद्रेण वैश्याया तु भवेच्च सः । तक्षा स्थपतिरित्युक्तो राज्ञा वेश्मकरः सदा ॥ दारुतक्षकस्तक्षा, पाषाणभेदकः स्थपतिरिति द्वावप्येतद्भेदौ" इति शूद्रकमलाकरोद्धृतस्मृतिप्रामाण्यात् प्रतिलोमजस्तक्षेति सिद्धयति । एव च रथकारो द्विविधः—एकस्तक्षपर्यायः, अपरस्तु क्षत्राद् वैश्याया माहिष्यः , वैश्याच्छूद्राया करणी तस्या माहिष्यादुत्पन्नः । तथा च याज्ञवल्क्यः—"माहिष्येण करण्या तु रथकारः प्रजायते" इति । अस्य वृत्तीराह वसिष्ठः—"रथकारस्य विधिज्ञान हस्त्यश्वसारथ्यवर्धनपोषणदमनादि" इति । शङ्खः—"क्षत्रियवैश्यानुलोमानन्तोत्पन्नजो रथकारस्तस्याध्ययनेज्यादानोपनयनसस्कारा अनिषिद्धा । रथसूत्रवास्तुविद्याध्ययनवृत्तिता च" इति । अयमेव रथकारोऽनुलोमजः । अस्यैव रथकारस्याग्न्याधानादिक शास्त्रेषु प्रतिपादितमस्ति

अयस्कारोऽप्यनेकविधः शूद्रकमलाकरे स्मृतिप्रामाण्याद्व्यवस्थापितोऽस्ति । तथा हि—एको लोहकार आयोगवः । यो हि शूद्राद्वैश्यायामुत्पन्नः प्रतिलोमसकरः "शूद्रादायोगव वैश्या जनयामास वै सुतम्" इत्यादिना याज्ञवल्क्येनोक्तः । अस्य लोहकारत्वम्—"आयोगवाना ताम्रायस्त्रपुसीसकायुधकरणम्, योजनम्, नगरकरण च" इति वसिष्ठस्मृत्या प्रतिपाद्यते ।

यद्यप्येको लोहकारो मागध्या क्षत्रियाज्जातोऽनुलोमसकरः—"यो मागधीक्षत्रिययोर्जात उल्मुकसज्ञकः । स लोहकर्मणा जीवेत्"इति कल्पतरुधृतहारीतस्मृत्या प्रतीयते, तथापि सोऽपि नहि शुद्धोऽनुलोमः, वैश्यात् क्षत्रियायामुत्पन्नाया प्रतिलोमजाया मागध्या जातत्वात् । तथा च कल्पतरौ हारीतः—

क्षत्रिया मागध वैश्याच्छूद्रात्क्षत्तारमेव च ।
शूद्रादायोगव वैश्या जनयामास वै सुतम् ।। इति ।

अपरोऽप्यस्त्रकारो लोहकारो वा कुकुटसज्ञः । तथा चोक्तमादिपुराणे —

निषाद्यामथ शूद्रेण कुक्कुटः स्यात् करोति सः ।
चक्रतोमरशूलासिल्कुटप्रासतोमरान् ।।
चक्राणि शस्त्रनालानि भिण्डिपालाश्च भूभुजाम् ।
कुकुटानां प्रहर्ता च राजकुक्कुटखेलनः ।। इति ।

एव सति लोहकारश्चतुर्विधः—मागध्या क्षात्रयादुत्पन्न उल्मुकसज्ञ एकः । वैश्याया शूद्रादायोगवो[1] द्वितीयः । ब्राह्मण्या वैश्याद् वैदेहकस्तृतीयः[2] । निषाद्या शूद्रेण कुक्कुटश्चतुर्थः । एतस्य कुक्कुटस्य विषये शूद्रकमलाकरोद्धृतजातिविवेके—

---

१ वैश्यस्त्रीशूद्रसंयोगादायोगवकसञ्ज्ञकः । स शूद्राद्धीयते धर्मे. पाषाणेष्टककर्मकृत् ॥ स कुर्यात्कुट्टिमां भूमिं चूर्णेनास्य च जीवनम् ॥ शूद्रकमलाकरे मनुः—मत्स्यघातो निषादानां तष्टिरायोगवस्य च ॥ तष्टिर्दारुतक्षण वर्धकिरित्यर्थः । तत्रैवोशनसा तु—"नृपायां वैश्यससर्गादायोगव इति स्मृतः । तन्तुवाया भवन्त्येते वसुकांस्योपजीविनः ॥ शीलिकाः केचिदत्रैव जीवनं वस्त्रनिर्मितम् ॥" इत्युक्तम् ।

२ शङ्खस्मृतौ वैदेहकाना वस्त्रच्छेदनसीवनरञ्जनावनिर्णेजनवापीतडागोदकपानारामावकरसंशोधनानि कर्माणि । कुक्कुटानां प्रहरणचक्रतोमरभिण्डिपालप्रासासिपरशुलगुडलोहजालिकासंधानानि । आयोगवानामयस्करणतक्षणकुम्भकरणानि, सुवर्णरजतलोहासिचर्मवृत्तिता च । अत्रैकस्य नानाकर्मणां विकल्पः समुच्चयो वेति शूद्रकमलाकरे ।

निषादकन्यका शूद्रसगाद् यं जनयेत्सुतम् ।
[1]सक्रोधकः कुक्कुटक इति प्रोक्तो द्विसज्ञकः ॥
स लोहकर्मणा जीवेदुत्तमश्चान्त्यजातितः ।
लोहकार इति ख्यातो लौहं कर्मास्य जीवनम् ॥
तेषा तु गुणसंयोग ज्ञात्वा शस्त्रविधायकः ॥ इत्युक्तम् ।

एतेन चास्य क्रोधकसज्ञापि लभ्यते । अस्यैव कुक्कुटस्य भार्या कुम्भकारेण सगता चेत् सा कुरुविन्द तन्तुवाय कुविन्दं वा जनयतीति तत्रैवोक्तं शूद्रकमलाकरे—

कुक्कुटस्येह भवति कुम्भकारेण सगता ।
तस्याः सूनुस्तु विख्यातः कुरुविन्द इति स्फुटम् ॥
कौशेयानि स वस्त्राणि रचयेदात्मवृत्तये ।
तुल्योऽसावन्त्यजातीना स्वधर्म स तु पालयेत् ॥ इति ।

अयमेव तन्तुवायः । तत्रैव कुक्कुटानाम्—"तन्तुवायवृक्षच्छेदनरोपणानि कुक्कुटानाम्" इत्यादिना तन्तुवायकर्माप्युक्तम् । सगता वेनवनिता कैवर्तेन यदा रहः । तस्याः शाबरिकाभिख्यः पुत्रोऽसौ लोकसंमतः ॥ स हीनस्त्वन्त्यजातिभ्यः शुचिवासोविधायकः । कुविन्द आभीरीकुक्कुटाभ्या यो जातः । आभीरीकुक्कुटाभ्या यो जातः सोखिरसज्ञकः । स कुर्यात्तु सरीणा हि वासासि स्वात्मवृत्तये ॥ एव सति तन्तुवायः पञ्चविधः-तत्र प्रथमः कुक्कुटभार्याया कुम्भकारादुत्पन्नः । द्वितीयस्तु कुक्कुटः[2] । तृतीयो वेनभार्याया कैवर्तादुत्पन्नः शाबरिकाभिधः । चतुर्थस्त्वाभीर्या कुक्कुटाज्जातः । पञ्चमस्तु नृपाया वैश्यससर्गेणायोगवः शूद्राद्वैश्यायामुत्पन्नादायोगवाद्भिन्नः ।

रजकस्तु त्रिविधः—तत्र प्रथमः [3]पारसव्यामुग्रादुत्पन्नः । द्वितीयस्तु वैदेह्यामुग्रादुत्पन्नो मञ्जूषाभिधो रजकः । तृतीयस्तु वैदेहक. । वैदेहकाना वस्त्रनिर्णेजनमपि प्रागुक्तम् । एताव-

---

१ "टङ्कशालासु सर्वासु नायकानां विधायक." इति च पाठः संकीर्णप्रकरणे तत्रैव ।

२ "पुल्कसः कुकुटो वेनश्च आरण्यवासिन·" इति सकीर्णप्रकरणे शूद्रकमलाकर उक्तम् । अयमेव कुकुटो राँचीप्रान्ते 'लोहरा'-पदेनोच्यते । अस्य जलं न गृह्यते तत्रत्यैः ।

३ उग्रात् पारसवीपुत्रो मौकलिस्तैलिको भुवि । रजको वर्णतो हीनः प्रथमश्चान्त्यजेषु सः ॥ वस्त्रनिर्णेजनं कुर्यादात्मवृत्त्यर्थमेव च । उग्रजातं तु वैदेह्यां मञ्जूषं रजकं विदुः ॥

स्पर्यन्तं तक्षायस्कारस्य रजकतन्तुवायस्य च विचारः कृतः। शूद्रकमलाकरेऽनया रीत्या सगृह्य जातिभेदो जन्मना तासा च स्वभावानुकूल्येन कर्मभेदोऽपि साधु प्रतिपादितोऽस्ति।

"ये यजामहे" इति श्रुतिरपि भगवती जन्मनैव जातिमुद्घोषयति, अन्यथा कर्मप्रयुक्त-जातिभेदस्वीकारे कर्मणः प्रत्यक्षत्वात् तत्प्रयुक्तजातेरपि प्रत्यक्षत्वे शङ्कालेशाभावात् "ये यजा-महे" इति श्रुतेरविषयत्वापत्तिः।

एतत्प्रसङ्गेनाह किञ्चित्कटुसत्य ब्रवीमि। याज्ञवल्क्यस्मृतौ—"जात्युत्कर्षो युगे ज्ञेयः सप्तमे पञ्चमेऽपि वा। व्यत्यये कर्मणा साम्य पूर्ववच्चाधरोत्तमम्॥" इत्युक्तम्। अस्यायमर्थः—जात्यु-त्कर्ष उत्कृष्टजातिप्राप्तिः। सप्तमे, अपिशब्दात् षष्ठे पञ्चमे वा ज्ञेयः। अर्थाद् विप्रोढा शूद्रा कन्या सूते सापि तदूढाऽन्यामिति सप्तम विप्र सूते। एव विप्रोढवैश्याजन्या षष्ठं विप्रम्। विप्रोढ-क्षत्रियाजन्या पञ्चम विप्रम्। क्षत्रियाच्छूद्रोत्पन्ना षष्ठं क्षत्रियम्। वैश्यजा पञ्चम वैश्यमिति पूर्वार्धार्थः। एव विप्रस्य क्षात्रवृत्त्याऽपत्यपरम्परयाऽनापदि जीवने पञ्चमः क्षत्रियः। वैश्यवृत्तिजीवने षष्ठो वैश्यः। शूद्रवृत्तौ षष्ठ. शूद्रः। वैश्यस्य शूद्रवृत्तौ पञ्चमः शूद्र इति। एतत्सर्वमनापदि, स्मृत्यन्तरप्रामाण्यात्।

अस्या स्थितौ बहवो ब्राह्मणब्रुवा अधुनाऽऽत्मान ब्राह्मण मन्यमाना बह्वीभिर्वंशपरम्पराभि-र्गर्हितवृत्त्या जीवन्तो राजशासनाभावाद् वास्तविकब्राह्मणानामुपेक्षया च धनेन कुल मन्य-मानैस्तादृशपण्डितमन्यै. प्रत्ता सुता प्रतिगृह्णन्तो ब्राह्मण्यप्रयोजकतपःश्रुतयोनिभिर्विशिष्टान् शिष्टानप्यधरयन्तः साम्प्रतमस्माभिरप्यगत्योपेक्ष्यन्ते। वाञ्छन्ति ते ब्राह्मणकर्तृकमभिवादनम्।

नमस्ते भगवन् कले तव महिम्ने। भवन्तु सावधानाः पण्डिताः, प्रचारयन्तु च स्वकीया प्राचीना पद्धतिं स्वतन्त्रेऽस्मिन् भारते। "अभय वै जनक प्राप्तोऽसि" इति श्रुत्यंशमवलम्ब्य पापेभ्यो भीता बहिरन्तश्च समभावा भवन्तु यथार्थवादिनः।

एतादृशवचनजातै रजकास्तन्तुवायास्तक्षायस्काराश्च शकयवनतो नीचा एव प्रतीयन्ते। यवनपदेन ग्रीकदेशीया एव ग्राह्याः। ये हि—"अरुणद्यवनः साकेतम्, अरुणद्यवनो मध्यमिकाम्" इत्यादिना भगवता पतञ्जलिना निर्दिष्टाः।

तत्र यवनपदेन 'मेलिन्डरस' एवैतिहासिकैर्गृह्यते, यश्च पालिभाषाया 'मिलिन्द मिलिन्द' इति पदेनोच्यते। अपरोऽपि यवनराजो वेसनगरस्थगरुडध्वजेऽङ्कितमिश्रितपालिभाषाया लिखिते शिलालेखे समुपन्यस्तः, यस्य 'अन्तलकित'-पदेन प्रसिद्धिरासीत्। अय हि 'अन्तलकितः' 'एन्ट ल्किडास् दी सेकेण्ड' आसीत्। द्वितीयोऽन्तलकित इति तदर्थः। तस्यैव दूतो 'हेलियोडोरसः'

तदानीं भागवतः सपन्नः, यो हि त गरुडध्वज प्रत्यतिष्ठिपत्। तदानीमार्याणामेतादृशी शक्तिरासीद् यत्ते वैदेशिकान् स्वात्मनि लीनानकार्षुः। ये ह्यधुना महामदीया भारते दृश्यन्ते ते नहि यवन-पदव्यपदेशभाजो भवितुमर्हन्ति। तेषा यवनानामेषा च मुसलमानपदवाच्याना स्वभाव आचारे च मेरुसर्षपयोरिव भेदसत्त्वात्। एषु प्राचुर्येणैतद्देशीयाना शूद्रकमलाकरोक्तप्रतिलोमसकराणामेव सत्त्वात्। ये हि केचनाङ्गुल्या निर्देष्टु शक्यन्ते ते हि कारणवशादत्रत्याः क्षत्रियादयः स्वधर्मात्प्रच्युताः सत्स्वभावाः सन्ति, तेषा मध्याद् यदि स्वय प्रवृत्ता य आर्यधर्मे प्रवेष्टु वाञ्छन्ति तर्ह्यवश्य ते प्रवेशनीयाः। नाहमिदानीमेतद्विषये बुद्धि व्यापारयितु समीहे, गवेषणकार्यस्यैव मदीयपद्धतेर्विषयत्वात्।

यच्च शूद्रकमलाकरे "मेदस्य वनिताकायात् सगतान्ध्रेण चेद्रहः॥ सा सूते यवन पुत्र तुरुष्कः स प्रकीर्तितः। प्रसिद्धो म्लेच्छदेशे यो गोवधेनास्य जीवनम्॥" इत्यादिना यवनस्यात्यन्तगर्हितत्व प्रतिपादित तत्सर्व स्मृतिषु कारणवशात् प्रक्षिप्तमित्यवधेयम्। एतानेव महामदीयानुद्दिश्य तदशस्य तत्र प्रक्षेपात्। एते हि नहि धर्मदृष्टिं पुरस्कृत्य प्रवर्तन्ते किन्तु तामसीं लोकविद्वेषिणी हिंसाप्रचुरा प्रवृत्तिमाश्रयन्ते। भगवानेतेषा बुद्धि शुद्धा विदधात्वित्येतावतैव सतुष्यते। एतादृशो विषयः सात्त्विक्या बुद्ध्या धृत्या च विचार्य व्यवस्थापनीयः।

योऽय विषयः शूद्रकमलाकरादौ समुपन्यस्तोऽस्ति स हि भाष्योक्तार्थतो विपरीतः प्रतीयेत तर्ह्यवश्य सोऽर्वाचीनो मन्तव्यः। शूद्रकमलाकरादौ समुद्धृतानि मूलवचनान्यप्य-र्वाचीनान्येव स्वीकर्तव्यानि। तादृश्यः स्मृतयोऽप्यर्वाचीना एव बोद्धव्याः। प्राचीनेष्वपि पुस्तकेषु भाष्याभिमतार्थतो विपरीतोऽर्थश्चेत्तदा सोऽशः प्रक्षिप्त एव ज्ञेयः।

एतावानुद्धृताशो विषयस्य स्वरूपप्रदर्शनार्थमेव मया सनिवेशितः। पूर्वोक्ता युक्तयः प्रक्षिप्ताशावबोधनसाधिका अवगन्तव्याः।

अपरामपि युक्ति प्राचीनत्वार्वाचीनत्वपरीक्षिका प्रदर्शयामि—चिरकालादस्माक देशे रव्यादयो वाराः परा काष्ठामाप्ता अस्माक कृत्येषु संनिविष्टाः सन्ति। ते च सप्त वासरा ग्रीकदेशीय-जनससर्गादस्मद्धर्मग्रन्थेष्वपि स्थानमलभन्त। नहि ते वेदे वाल्मीकीयरामायणे ब्राह्मणभागे महाभाष्ये श्रीमद्भागवते वा कालविभागे दृश्यन्ते, नापि तद्योगायोगाभ्या केषाञ्चित् कृत्याना कर्तव्याकर्तव्यत्वं तेषु प्राचीनग्रन्थेषु प्रतिपादितमस्ति। नापि तेषा सप्ताना दिवसाना वैज्ञानिक्या रीत्याऽभ्युपगमो युक्तः। यतो हि कालविभागे कल्पस्य युगैः, युगस्य वर्षैः, वर्षस्यायनाभ्याम्,

अयनस्य ऋतुभिः, ऋतोर्मासाभ्याम्, मासस्य पक्षाभ्याम्, पक्षस्य तिथिभिर्विभागो भवति। नहि रव्यादिभिर्दिवसैः प्रचलितः कालो विभक्तुं शक्यते।

यद्यपि ज्योतिर्विदोऽहर्गणार्थं तेषां दिवसानां कल्पनां स्वानुकूलां मन्यन्ते, तथापि ते ग्रीकदेशीयज्योतिर्विद्यासंस्कारसंस्कृता अस्माकं प्राचीनतमज्योतिर्विद्यास्वर्वाक्कालिकीं सप्ताह-सत्तामभ्युपागमन्। अनया पद्धत्या येषु पुराणग्रन्थेषु ज्योतिर्ग्रन्थेषु स्मृतिग्रन्थेषु वा सप्ताहघटक-रव्यादिवारप्रयुक्तो योगविशेषोऽदृष्टविशेषो वा समुद्घोष्यते ते ग्रन्थास्तद्ग्रन्थघटकास्तावन्तोंऽशा वा-र्वाचीना एव मन्तव्याः।

अन्यामेकां युक्तिं प्रक्षेपविषये प्रदर्शयामि। यथा वाल्मीकीयरामायणेऽयोध्याकाण्डे नवाधिकशततमे सर्गे—"यथा हि चौरः स तथा हि बुद्धस्तथागतं नास्तिकमत्र विद्धि। तस्माद्धि यः शक्यतमः प्रजानां स नास्तिकेनाभिमुखो बुधः स्यात्॥ ३४॥" इत्यादीनि पद्यान्यु-पलभ्यन्ते। तेषु पद्येषु बुद्धस्य नामोपलभ्य बहवः पाश्चात्या रामायणस्य बुद्धादर्वाक्काल-भाविता मन्यन्ते। परमत्र ये तत्त्वान्वेषिणस्ते तु प्राचीनानि रामायणपुस्तकान्यन्विष्य तत्र चैतादृशानि पद्यान्यनुपलभ्य प्रक्षिप्तैतादृशपद्यमूलकं रामायणस्यार्वाचीनत्वं दूषयन्ति। अयं हि वाल्मीकीयरामायणविषयो विस्तरेण श्रीसम्पूर्णानन्दाभिनन्दनग्रन्थे नागरीप्रचारिण्या सभया प्रकाशिते प्रदर्शितोऽस्तीति तत एवावसेयम्।

अपि च वाल्मीकीयरामायणे—

> न मांसं राघवो भुङ्क्ते न चापि मधु सेवते।
> वन्यं सुविहितं नित्यं भक्ष्यमश्नाति पञ्चमम्॥
> तां तथा दर्शयित्वा तु मैथिलीं गिरिनिम्नगाम्।
> निषसाद गिरिप्रस्थे सीतां मांसेन च्छन्दयन्॥
> इदं मेध्यमिदं स्वादु निष्टप्तमिदमग्निना।
> एवमास्ते स धर्मात्मा सीतया सह राघवः॥

इत्यादीनि बहूनि वचनानि रामकर्तृकमांसभक्षणसूचकानि रामायणे समुपलभ्यन्ते तानि सर्वाणि चिरादार्येषु प्रवृत्तां मांसभक्षणपद्धतिमवलम्ब्य प्रक्षिप्तान्येव मन्तव्यानि। नहि भगवान् रामचन्द्रः—"चतुर्दश हि वर्षाणि वत्स्यामि विजने वने। मधुमूलफलैर्जीवन् हित्वा मुनिवदा-मिषम्॥" इत्यादिना व्यक्तां मांसाभक्षणप्रतिज्ञां कथमपि जह्यात्। अपि च—"ऐङ्गुदं बदरीमिश्रं पिण्याकं दर्भसंस्तरे। न्यस्य रामः सुदुःखार्तो रुदन् वचनमब्रवीत्॥ इदं भुङ्क्ष्व महाराज प्रीतो

यदशना वयम् । यदन्नः पुरुषो भवति तदन्नास्तस्य देवताः ॥" इति पद्येनापि श्रीरामचन्द्रस्य मासभक्षणं रामायणतो नहि सिद्धयति । यदि नाम स मासमभक्षयिष्यत् तर्हि कथं दशरथाय पित्र इङ्गुदीफलपिण्याकमदास्यत् । न च मारीचं निघ्नता भगवता स्वकर्तृकमासभक्षण स्पष्ट व्यज्यत इति वाच्यम्, "एतस्य मृगरत्नस्य परार्ध्ये काञ्चनत्वचि । उपवेक्ष्यति वैदेही मया सह सुमध्यमा ॥" इत्युक्त्या चर्मार्थमेव तद्धननस्य स्पष्टतः प्रतिपादनात् । यद्यपि वनवासात्प्राङ् मासभक्षणं सूच्यत एव, तथापि क्षत्रियत्वात् त्रेतायुगतस्तेषा मासभक्षणस्य शिष्टैरनुमोदनात् ।

वस्ततस्त्वागमप्राधान्ये कृतयुगे नहि मासभक्षणं विड्भक्षणमिव मनसापि विचार-सहमासीत् । एतच्च मया निगमागमविवेके प्रसङ्गतः सक्षेपेणोपक्षिप्तम् । पुनरपि सत्यवसरे एतद्विषये कञ्चन प्रबन्धं पाठकाना पुरस्तादुपस्थापयिष्ये ।

रामायणटीकासु मासभक्षणसूचकश्लोकाना व्याख्यान स्वस्वाभिमतपद्धत्या कैश्चिद् ग्रन्थकारैः प्रदर्शितम् । तत्सर्व तेषा पाण्डित्याजीर्णताप्रयुक्तमेव मन्तव्यम् । स्वारस्येन तथा-विधार्थस्य तादृशसन्दर्भप्रणेतुरनभिमतत्वात् ।

अन्ते च प्रार्थये सहृदयान् यत्ते पक्षपातविरहिता मदीय लेख पठिष्यन्ति सूचयिष्यन्ति च मदीये लेखे पाटवमपाटव वा साधुत्वमसाधुत्व वा तर्हि सप्रमोदमादरिष्ये तदुक्तीः । व्याकरणदर्शनभूमिकापीठिकाप्रतिमानिर्माणार्थं प्रवृत्तेन मयैतादृशलेखोपस्थापनार्थं समयो न लभ्यते । नापि समीहे बुद्धिटङ्कोपयोग कदलीस्तम्भे कर्तुमिति प्रीयता गुरुवर्गः ॥

# कला तत्प्रयोजनं च

श्रीद्विजेन्द्रनाथमिश्र, राजकीयसंस्कृतमहाविद्यालय., काशी।

( सप्तमवर्षद्वितीयाङ्कतोऽनुवृत्तम् )

किं नाम कलायाः प्रयोजनमिति प्रश्नोऽयं चिरचर्चित., जातुचिदनन्तकालं यावच्च विचारयिष्यते। "काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये" इतीदृशानि पूर्वाचार्यैं प्रयोजनान्यभ्यधायिषत। "यशसे", "अर्थकृते" इति प्रयोजनद्वयमधुनापि जागर्ति। पूर्व-कालापेक्षया प्रयोजनद्वयमेतदधुना समधिकसिद्धिमपि प्राप्नोति। विश्रुतः कलाविदचिराल्लक्षपतिः सपद्यते, बहुविधान् मान्योपाधीनुपलभते। स हि राजसभासु विद्वन्मण्डलीषु च समधिका सामाजिकीं प्रतिष्ठां प्राप्नोति।

तथापि काव्यस्य कलाया वा धनमुद्देश्यमिति तु साम्प्रतिकयुगस्य नाङ्गीकरिष्यति पूरुषः। तादृशोद्देश्यं तु मुग्धसरलयुगस्य लक्षणम्। व्याकरणपरिज्ञानात् संगीताभ्यासाद्वा मोक्षावाप्तिरिति प्राचीना अमन्यन्त। जीवनस्य समेषां प्रश्नानां रहस्यप्रेक्षणक्षमा शक्तिः, सर्वान् विकासयितुं च सामर्थ्यं कलायाः संगीतसाहित्ययोश्चान्तर्निहिते। कला नाम स्वतन्त्रम्, स्वयंभूः, अन्यनिरपेक्षं च जीवनदर्शनम्। इयानत्र भेदः–प्राचीनैर्मोक्षसाधनमिदमभ्यधायि, साम्प्रतिकै-स्त्वात्मानुभवसाधनमेतदिति स्वीक्रियते।

इत्थं कलाप्रयोजनानि साम्प्रतं वर्ण्यन्ते—

| | | |
|---|---|---|
| १ | Art for art s sake | कलायै कला। |
| २ | Art for life's sake | जीवनाय कला। |
| ३ | Art as an escape | जीवनयाथार्थ्यात् पलायनाय कला। |
| ४ | Art as escape into life | विरसाद्विरम्य आनन्दाश्रयाय कला। |
| ५ | Art for service's sake | सेवायै कला। |
| ६ | Art for self realization | आत्मप्राप्तये कला। |
| ७ | Art for joy | आनन्दाय कला। |
| ८ | Art as recreation | विनोदाय कला। |
| ९ | Art as creative necessity | अदम्यसृजनवृत्तेस्तर्पणाय कला। |

"व्यवहारविदे" इति कलाया आदर्शमुपस्थापयतो मनसि किमासीदिति तु न जानीमः, परं काव्यनाटकादिपरिशीलनाद् व्यवहारो ज्ञायते, चातुर्यमेधते, कौशलं च वर्द्धत इत्येतावन्मात्रं तेषा नाभिप्रेतमिति तु निश्प्रचम्। चर्मचक्षुषा जडबुद्ध्या च हाटकीयः सासारिको व्यवहार-श्चलेत्, विज्ञानस्य साधारणप्रयोगाः क्रियेरन्, परन्तु विज्ञानजीवनयोरवगन्तुं रहस्यम्, आदर्शभूत व्यावहारिककौशलमवाप्तु च कलाकारस्य कलामयी दृक्, अलौकिकी प्रतिभा, वस्तुप्रसङ्गोभय-तलस्पर्शिनी च भेदकता काव्यशक्त्यैव, कलावृत्त्यैव प्राप्तु शक्यते। कथङ्कार कलादृशा विरहितो विश्वरहस्यमवबुद्ध्येत ?

आधुनिकास्तु सरलसरलमपि वस्तु डम्बरनिर्भरभाषया लिखन्ति, यदा महतोऽपि राद्धान्तान् प्राचीनाः सरलतरैः शब्दैरुपस्थापयन्ति स्म। अत एव कविनोक्तम्—"काव्यं व्यवहार-विदे" इति। यदेत्थमासीद्वक्तव्यम्—काव्यं लोकव्यवहारोद्दीपनार्थम्। व्यवहार इत्यस्य व्यवहार-रहस्यदर्शनम्, तद्दर्शनस्य दैवीकरणमित्येतदस्माभिर्योजनीयम्।

जीवनस्य विरसयाथार्थ्यादपसर्तुं कलेतिवादिनो नून कटुजीवनानुभविनस्तु भवेयुरेव, इतोऽप्यधिक ते जीवनपराजितेष्वन्यतमाः स्युः। दुःखान्यायदारिद्र्यासौविध्यजातात् त्रस्तेनापि नाङ्गीकार्यो ननु जीवनपराभवः। जीवनस्य प्रत्येक घटकात् पराक्रमप्रेरणा प्राप्यते, रसनिर्झरा झरन्तीत्येतदेव जीवनस्वरूपम्। परमाकण्ठ विषयान् सेवमानस्य निरर्थक नीरसमलस समयं यापयतोऽपमान्यते जीवनम्। ततश्च न विन्दति शान्ति क्वापि मनुजः। इष्यमाणमेव सदुपलभ्येत चेद्वस्तु तर्हि भारस्वरूपमेव जायेत मनुष्यजीवनम्। साधूदितं ननु कालिदासस्य दुष्यन्तेन—

औत्सुक्यमात्रमवसादयति प्रतिष्ठा क्लिश्नाति लब्धपरिपालनवृत्तिरेव। इति।

[ अभि० शाकु० ५।५ ]

किन्तु तेनैतदुपलब्धं कलाया न वेति नोदलेखि कालिदासेन। अयत्नप्रस्तुताहारकरणम्, सेवकेभ्यो यत्किञ्चिदादेशप्रदानम्, समस्त काल मनोरञ्जकसाहित्याध्ययनम्, सगीताकर्णनम्, नाटकच्चित्रपटावलोकनम्, सभासमेलनेषु चोपवेशनमित्येतावन्मात्रकार्यक्रमव्यापिजीवनाना कुण्ठिता भवति ननु कलाधारा, न ते कस्मिंश्चिदपि वस्तुनि रसमालभन्ते। शिष्टपर्याकुलत्व-मुपदर्श्य दीर्घ निःश्वसतामेतादृशामवलोकने कारुण्यं त्रासश्चोत्पद्यते। अवश्यमेतैर्जीवनात् पलायितुं कलाऽऽश्रिता, परमिहाप्यरुचिरुन्मनस्कता च नहि तान् विजहाति; साम्प्रतं क्व गम्येत ? वस्तुतस्तु विहाय जीवनद्रोह तैर्यथार्थजीवने प्रवेष्टव्यम्। ऋता कला तत्साहाय्यमाचरिष्यति। ईदृशा कोमलप्रकृतीना कृते नूनमुपकरणेनापि सुकुमारेण भाव्यम्। सगीतश्रवणमुपेक्ष्य यदि ते स्वयं

गानं वादनं वा शिक्षेरन्, नृत्यप्रेक्षणं परिहृत्य नृत्यप्रयं व्यायाममाकुर्वीरन् तर्हि तेषां कृते कला जीवनानन्दप्रवेशिका Escape into life सपद्यते। कथं कला जीवनद्रोहिणमुद्धरेत्?

सत्यस्वरूपा कला यथाऽऽत्मविकासं कुरुते, तथा जीवदया-करुणाप्रेरणाकृता समाजसेवा मानवस्यात्मविकासमातनुते। सिद्धे कलायाः सेवायाश्च साहचर्ये नूनमुभयोरुत्तरोत्तरं विकासः सपद्यते। अस्माकमाचार्यैर्भक्तिसाधनतयोपयुज्य कला सेवामयी संपादिता, भोगविलासा देवमन्दिरेषु सयोज्य तन्नग्नतामावरीतु प्रयतितम्। सोऽप्यासीत्समयो यदा कला वैयक्तिक-साधनायाः सामाजिकधर्माणा चोपकरणतयाऽमन्यन्त।

केवलं कलासाधनातः कस्याप्यात्मसाक्षात्कारः समजनीति नास्ति सुवचम्, परं साधनाया पीठिकात्वेन शुद्धकलाया उपयोगितेत्यत्र न कोऽपि विप्रतिपत्ति कुर्यात्। विनोदः कलायामस्त्येव, पर बाह्योऽयं लाभः। नहीमं चरमं कश्चिन्मनुते प्रयोजनम्। Art as creative necessity अर्थात् प्रत्येक मनुष्येषु "एकोऽहं बहु स्याम्" इति वर्तमानाया बहुलीभावादम्यवृत्तेस्तोषाय गूढतरानुत्कटाश्च हार्दभावान् साकारयितुं यदा मनुष्यः प्रेर्यते तदा किं तन्मनसि प्रयोजनं जायत इति समधिका तस्य मीमांसाऽपेक्ष्यते।

यथा स्वातन्त्र्याप्तये समाजसेवायै वा केचन परिनिष्ठितब्रह्मचर्यं जीवनमङ्गीकुर्वन्ति, तथैव केचन कलाकाराः स्वाः कला एव वरित्वाऽऽत्मनः कृत्स्नं कालं तत्परिषेवणे यापयन्ति, समस्त ध्यानम्, संपूर्णां च शक्तिमर्पयन्ति। कलानिषेवणतात्पर्यव्यतिरिक्तं ते नान्यत्किञ्चिद-पेक्षन्ते जीवनम्। मनुष्यनिहित वीर्यमवश्य केनापि पुरुषार्थरूपेणाभिव्यज्यत एव। केचन समस्तामात्मशक्तिं कलाभिव्यञ्जने परिणमयितुमेव बद्धकटयो दृश्यन्ते। नहि तेषां कृते कला रुचेररुचेर्वा विषयः। कश्चिद्बालकः पथि गच्छन् मन्दमन्दमुपगायति। राजपुरुषेणाक्षिप्तः स साश्चर्यं कथयति—"क्वाहं गानं करोमि। तत् खलु स्वयमेवोद्भवति" इति। न ते कलाया निर्माणं कुर्वन्ति, कलैव तद्द्वाराऽऽत्मानमभिव्यनक्ति।

इत्थमपौरुषेया कलेति चेद्वदेम, का स्यादिहापत्तिः? का च पुनरेतदेव Art for art's sake कलायै कला इतीत्थमुच्येत, तदेहापत्तिः स्यात्?

पर यदा कला विषयविलासार्थं निषेव्यते, एतदेवाभिलक्ष्य यदि कश्चिच्चमत्कृतिमयं नामारचयन् विद्रुह्य सदाचारं कलायै कलेति सूत्रमुपन्यस्यति, तदापत्तिर्जायते। वस्तुतस्तु Art for art's sake इति सूत्रं Art for market's sake आपणाय कला, Art for

vulgarity's sake अशिष्टत्वाय कला, यद्वा Art for dissipation's sake स्वेच्छाचाराय कलेत्यर्थकारि सपद्यते । अत एव सूत्रेऽस्मिन्नियानंशो विरुद्ध्यते ।

एतत्तु स्पष्टम्–यावद्वैयक्तिके कौटुम्बिके सामाजिके वा जीवने सस्कारिता संयमिता च न स्तस्तावदापत्पूर्णमेव सर्व ज्ञान समस्त सत्त्व कलायाश्च जीवनम् । कलाशुद्धे रक्षणाय कलाकारैर्जीवनशुद्धौ स्वच्छताया वाऽभिनिवेशः कार्य· । नहि जीवनशुद्धिर्जीवनात्पलायनम् । यया समृद्धमर्थमय वीर्यवच्च सपद्यते जीवनम्, साऽन्वेष्यते । एव हि सति Escape from life जीवनात् पलायनस्य वार्तामपि कश्चिन्न करिष्यति । ततश्च Art for life, Art through life, Art out of life जीवनकला, जीवनद्वारा कला, जीवनोद्भूता कलेति मान्यता विवेकमयी मंस्यते । निरर्थविवादश्च नोद्भविष्यति ।

निष्कामवृत्त्या यया कृतार्थतामेति जीवनम्, तथाऽऽपणवृत्तेर्धनकीर्त्यभिलाषस्यापाकरणे, दूरीकृतायामसस्कृतोपदेशप्रणाल्याम्, धर्माचार्योपदेशकराजपुरुषयन्त्राधिपतिधनपतिभ्योऽपहस्तिताया कलाया नून कला स्वयमात्मान रक्षितु प्रभविष्यति, तदेतच्च Art for art's sake इति कथयिष्यते । कलाद्वारा जीवनव्यापी सदाचारः पोषयितु पार्यते । तया धर्मस्य सूक्ष्मतरा वृत्तयो विकासयितुमवगन्तु च शक्यन्ते । तथैव च सामाजिकव्यवस्थासु सहयोगसमाधानसामर्थ्यसमृद्धिसुसंगतीना सगीतमापूरयितु पार्यते । यदीयदायोजन सार्वभौमिकरूपेण कलाक्षेत्रान्तर्गतमङ्गीक्रियेत तर्हि Art for art's sake इति कथने न कयाचिद् भाव्यमापत्त्या ।

लब्धसाफल्यः पक्षः सत्पक्ष इति नास्त्यद्यावधि सिद्धम् । साफल्येऽप्यन्ततः सफलः सफल इति मन्तु शक्यते । आदर्शकलाया प्राप्यमाणश्चरम आनन्दस्तद्धेतुः । येनास्वादितश्चरम आनन्दः, सहजनैसर्गिकस्तत्कृते सदाचारः । इह प्रसङ्गे कलाया ब्रह्मानन्दसहोदर आनन्द एव कलामुख्यप्रयोजनमिति वक्तुं शक्यते । सदाचारः सामाजिक सामर्थ्य च तस्यावश्यम्भावि गौणफलद्वयम् ( By products ) । एतस्मिन्नर्थे "कलायै कला" इत्युक्ते न केनाप्यापत्तिरुत्थापनीया । न ह्युक्तसूत्रे विवादः, केवल परिणाममेवावेक्ष्य परीक्षाऽस्माभिः करिष्यते । यदि शुद्धया कलया जीवनस्य सर्वे रसाः प्राप्येरन्, तर्हि नहि तन्निपातशङ्का जागर्ति । हानिस्तु तदा जायते, यदा रसनाम्नाऽन्यवस्तूनि वयमन्वेषयामः ।

———

# संस्कृतभाषायाः क्रमिको ह्रासः

श्रीअजयमित्रशास्त्री, राजकीयसंस्कृतमहाविद्यालयः, काशी।

जन्मसंस्कारविद्यादेः शक्तेः स्वाध्यायकर्मणोः।
ह्रासदर्शनतो ह्रासः सम्प्रदायस्य मीयताम्॥
[ न्यायकुसुमाञ्जलावुदयन. ]

कतिपयेषु पाश्चात्त्येषु प्रतीच्यशिक्षादीक्षितेषु भारतीयविपश्चित्सु च सुदृढं बद्धमूलेयं धारणा यन्मानवी जातिर्यथावसरमुन्नमन्ती परस्सहस्राब्दानां सुदीर्घं सघर्षकालमेवं च पाशविकीमवस्थामुत्तीर्य साम्प्रतिकीं संस्कृतावस्था प्रापदिति। सामान्येनैष समयस्तैः सर्वेष्वपि विषयेषु प्रयुज्यते। आदिमो मानवो (मानवी जातिः) ऽस्पष्टध्वनिभ्योऽथ चेङ्गितेभ्यः स्वीया दैनन्दिनीं व्यवहृतिं सपादयति स्म, अथ च कालक्रमेण पुरतो दृश्यमानविहगकुलकलकलनामनुसृत्य निसर्गत एव भाषा व्यचकासदिति ते [1]मन्यते।

एतदेव मनस्याधृत्य तेषां मतमस्ति यत्संस्कृतभाषायामपि यथासमयमनेकशः परिवर्तनानि जातानि, किञ्चास्मिन्नभ्युदये विश्वस्य प्राचीनभाषाभिरपि योगो दत्तः। एवं च संस्कृतभाषायाः साम्प्रतिकं स्वरूपं क्रमविकासस्य फलमेवेति ते मन्यन्ते।

किन्त्वद्यावध्यधिगतप्रमाणेभ्य एतस्मात् प्रतिलोम्न एवैकस्य सिद्धान्तस्य पुष्टिर्भवति। निबन्धेऽस्मिन् संस्कृतभाषाया परिलक्ष्यमाणभेदस्य प्रधानं कारणं संस्कृतभाषायाः (शब्दार्थयोः) सकोच एव, नहि क्रमविकास इति प्रमाणीकर्तुं लघु प्रयत्यते।

अतिप्राचीनकाले लौकिकवैदिकभाषयोः कश्चिदपि भेदो नासीत्[2]। जैमिनीयमीमांसायाः—"प्रयोगचोदनाभावादर्थैकत्वमविभागात् [ १।३।३० ] इत्यस्मिन् सूत्रे व्याख्याकारः शबरस्वामी लिखति—"य एव लौकिकाः शब्दास्त एव वैदिकास्त एवैषामर्थाः" इति। शब्दनित्यत्ववादं निरूपयन् यास्को ब्रवीति यन्नैगमशब्दानामर्था लौकिकशब्दसदृशा एवेति। तद्यथा—

---

१ द्रष्टव्यम्—तुलनात्मकं भाषाविज्ञानं डा० मङ्गलदेवशास्त्रिविरचितम्।
२ द्रष्टव्यः—संस्कृतव्याकरणशास्त्रस्येतिहासः प्रथमाध्यायः—युधिष्ठिरमीमांसकविरचितः।

"तेषा मनुष्यवद् [1]देवताभिधानम्" [ नि० १।२ ] इति। वैदिकशब्दाना शार्थक्यमुपपादयन् यास्को भूयोऽप्युपर्युक्तमतमेव समर्थयति। स निर्दिशति—"अर्थवन्तः शब्दसामान्यात्" [ नि० १।१६ ] इति। अस्यायमाशयो यद्वैदिकशब्दा लौकिकशब्दवदेवार्थवन्त इति।

कात्यायनीयवाजसनेयप्रातिशाख्यस्य व्याख्याता उव्वटोऽप्युद्घोषयति—"य एव वैदिकास्त एव लौकिकास्त एव तेषामर्थाः" [ १।३ ] इति। नैगमशब्दाना निर्वचनसरणिमुपदर्शयता यास्केनानल्पेभ्यो लौकिकेभ्यो धातुभ्यो दमूनसूक्षेत्रसाधमादिवैदिकशब्दनिष्पत्तिः, नैगमधातुभ्यश्चोष्णघृतादीना लौकिकशब्दाना सिद्धिः प्रदर्शिता। [2]नैगमलौकिकाभ्या धातुभ्यामुभयविधस्य शब्दस्य निष्पत्तिरुभयविधाना शब्दानामैक्यस्य सुदृढ प्रमाणमस्ति। अन्यथा लोकाप्रयुक्त धातुभ्यो निष्पन्नशब्दैर्लौकिकव्यवहारस्योपादेयता व्यर्थमभविष्यत्।

सर्वाण्यपि प्राकृतानि संस्कृतप्रभवाणीति विषये प्रायशः सर्वेऽपि विद्वासः संमताः। अतो यदि प्राकृतेषु नैगमत्वेन मतेभ्यो धातुभ्यः प्रयोगेभ्यश्चापभ्रष्टशब्दाना प्रयोगा उपलभ्येरन् तर्हि तेषा प्राकृतोत्पत्तिकाले लौकिकभाषाया प्रयोगविषये सन्देहलेशोऽपि न संभवति। इह केवलं द्वावेव प्रयोगौ निदर्शयिष्येते—

लौकिकौ—ददाति।　　वैदिकौ—दाति।　　प्राकृतौ—दाई।
अस्मभ्यम्।　　अस्मे।　　अह्मे।

एव चेद सुदृढ प्रमाण यद्धि लौकिक दिकशब्दयोरभेदमुद्घोषयति[3]।

पुरा संस्कृतभाषायाः प्रयोगक्षेत्रमपि नितान्त व्यवस्थितमासीत्। महामुनिना यास्केनोल्लिखितम्—"शवतिर्गतिकर्मा कम्बोजेष्वेव भाष्यते। विकारमस्यार्येषु भाषन्ते शव इति। दातिर्लवनार्थे प्राच्येषु, दात्रमुदीच्येषु" [ निरु० २।२ ] [4]इति। अस्य पुष्ट्यै द्वे उदाहरणे प्रस्तूयेते। पारसीकभाषाया स्वसृपरपर्यायो 'हमशीरा' शब्दः प्रयुज्यते, आङ्ग्लभाषाया 'सिस्टर'-शब्दः। संस्कृतभाषायामनयोर्द्वे भिन्ने प्रकृती स्तः। यथासख्यम्–समक्षीरा, स्वसृ च। पाणिनिना कानीनशब्दः कन्याशब्दस्य कनीनादेशं विधाय [5]व्युत्पादितः। पारसीकानामवेस्तानाम्नि धर्मग्रन्थे कन्यापरपर्यायस्य 'कइनीन'-शब्दस्य व्यवहार उपलभ्यते। वेदेष्वपि कनीनाशब्दस्य प्रयोगो

---

१ समन्त्रो वेदो देवताशब्देन गृह्यते–ऋग्वेदादिभाष्यभूमिका।　　२ निरुक्तम् २।२

३ शूद्रकप्रणीते मृच्छकटिके एतादृशा अनल्पाः प्रयोगाः प्राप्यन्ते।

४ पस्पशाह्निकभाष्येण तुलनीयमेतत्।　　५ 'कन्यायाः कनीन च' [ ४।१।११६ ]।

बहुशो लक्ष्यते, अतः कइनीनशब्दः कनीनाशब्दादपभ्रष्टः। एव च कनीनप्रकृतिः कानीनशब्दो न कन्यामूलः। एवं सर्वासा भाषाणा सम्यग्वर्गीकरणेन तासा प्राचीनार्वाचीनस्वरूपयोस्तुलनात्मकाध्ययनेन च प्रतीयते यत् सर्वा अपि भाषा. संस्कृतमूला [1]एवेति। एनमेव सिद्धान्तमनुमोदयता भाष्यकृता पतञ्जलिना सस्कृतभाषायाः प्रयोगक्षेत्र [2]सप्तद्वीपा वसुमतीत्यभिहितम्। किन्तु भूमण्डलस्य दवीयस्सु भागेषु मनुष्याणा विस्ताराद् स्थानसमयादिपारवश्याद् विपर्ययाच्च तेषाम्, सस्कृतभाषायाः ह्रासस्य सकोचस्य च युग आरब्धः।

उत्तरवर्तिभिराचार्यैरनेकेषा शब्दाना प्रयोगलोपात्तेषा तेषा शब्दाना नैगमत्वमङ्गीकृत्य तादृशप्रयुक्तशब्दास्तत्समेभ्योऽन्येभ्यो लौकिकशब्देभ्यो निष्पादिताः। कानीनशब्दस्य निदर्शनं तु प्रागेव प्रस्तुतम्। पाणिनिना लौकिकवैदिकभाषयोर्महान् भेदः स्थापितः। नैगमशब्दाना निष्पत्त्यै सर्वत्र 'छन्दसि'-शब्दस्तेन प्रायोजि। पाणिनिव्याकरणमनुसृत्याचोर्मध्ये यण्व्यवहितप्रकृत्याः साधुत्वसंपादनं न संभवति, किन्तु पाणिनिना ससभ्रम स्मृता व्याडिगालवादयोऽनूचाना एतादृक्प्रयोगान् साधून् मन्यन्ते। ते त्रियम्बक-त्र्यम्बक-दधियत्र-दध्यत्रसदृशाना शब्दाना साधुत्वमूरीकुर्वन्ति स्म। पुरातनसाहित्ये यण्व्यवहिता अनेके प्रयोगा अपि प्राप्यन्ते। बौधायनगृह्यसूत्रकैवल्योपनिषदोर्यथाक्रम त्रियहे स्त्रियन्नशब्दयोर्व्यवहारो दृश्यते। प्रतीयते यत् पाणिनियुगे यण्व्यवहिताः शब्दा विरलव्यवहाराः सजाताः, अतः स तेषा निष्पादनमुपादेयन्ना बोधि। किन्तु 'भूवादयो धातवः' [ १।३।१ ] इति पाणिनीयसूत्र परोक्षतया यण्व्यवहितप्रयोगाणा साधुत्वमुद्घोषयति। कात्यायनकाले तु यण्व्यवधानवता प्रयोगाणा सपूर्णमदर्शन जातम्, अतः 'तन्व पुषेम तनुवं पुषेम'-प्रभृतीना प्रयोगाणा साधुत्वसपादनाय स्वतन्त्रस्यैकस्य वार्त्तिकस्य रचना तेन कृता। भाष्यकृतापि कस्यचित् प्राचीनस्याचार्यस्य वार्त्तिकमेकमुद्धृतम्-"य्वोरचि वृद्धिप्रसङ्ग इयुवौ भवतः" इति[3], एव च य्वाभ्यामादेशाभ्या वैयाकरण. सौवश्व इत्यादिप्रयोगाणा सिद्धिर्भवति। एतदपि तमेवोक्तसिद्धान्तमनुमोदयति। पाणिनिपूर्ववर्ती आपिशलिर्न्यङ्कुशब्दाद् विकारेऽञ् प्रत्ययं संयोज्य न्याङ्कवमिति निष्पादयति, पाणिनिस्त्वैचमागमय्य नैयङ्कवमिति साधयति। प्राङ्निर्दिष्टनियम मनस्याधृत्य विचारणे यण्व्यवधानाव्यवधानवतोर्द्वयोर्भिन्नयोर्मूलयोरनुमान जायते। पाणिन्युत्तरवर्तिना कवीना कृतिष्वप्येतादृशा. प्रयोगा उपलभ्यन्ते[4]।

---

१ रघुनन्दनशर्मप्रणीतायां वैदिकसम्पत्तेर्भाषाविज्ञानप्रकरणम्। २ महाभाष्ये पस्पशाह्निके। ३ महाभाष्यम् १।४।२ ४ कुमारसम्भवम् ३।४४

निघण्टुव्याख्याया यास्केन 'त्रयाणि' इति प्रयुक्तम्[1]। दयानन्दस्वामिनाऽप्यस्य प्रयोगः कृतः[2]। पाणिनीयव्याकरणानुसार त्वय प्रयोगोऽसाधुरेव। वस्तुतस्त्रिसख्यावाचिनौ त्रित्रयेति द्वौ भिन्नौ शब्दौ प्राचीनानामभिमतौ। वेदेष्वप्यनयोः प्रयोगा बहुत्र उपलभ्यन्ते। लोके त्रिशब्दस्य षष्ठीबहुवचने त्रयाणामिति प्रयुज्यते। अत एव पाणिनिः 'त्रेस्त्रयः' [ ७।१।५३ ] इति त्रयादेशविधान कर्तुं बाध्योऽभवत्। वेदेषु त्रयाणा त्रीणामित्युभयोरपि शब्दयोर्बहुलः प्रयोगोऽस्ति। पालिसाहित्येऽपि त्रीणामित्यस्य विशदः प्रयोगः परिलक्ष्यते। अतोऽस्माभिर्निर्धार्यते यल्लोके पाणिनिकाले षष्ठ्यतिरिक्तविभक्तिषु त्रयशब्दस्य प्रयोगो लुप्त इति।

पाणिनिना 'लोहितादिडाज्भ्यः क्यष्' [ ३।१।१३ ] इति लोहितादिगणाधीतशब्देभ्यः क्यष विधाय वैकल्पिकमात्मनेपदं विहितम्, येन तेषामुभयपदिनः प्रयोगा निष्पद्यन्ते। वार्त्तिककृता त्वलोहिताना गणाधीताना परस्मैपदप्रयोगमदृष्ट्वा तेभ्य. परस्मैपदवारणाय 'लोहितडाज्भ्यः क्यष्वचन भृषादिष्वितराणि' इति वार्त्तिक प्रणिन्ये।

भाष्यकृता बहुत्राऽविरविकन्यायः प्रयुक्तः, अथ चावेर्मांसमिति विग्रहेऽविकशब्दादेव ताद्धित उत्पादितः[3]। किन्तु परवर्तिकालेऽविशब्दस्यैव व्यवहारेऽवशिष्टत्वात् साम्प्रतं वैयाकरणैरविशब्दादेव ताद्धित उत्पाद्यते नाविकशब्दात्। वेदेषु स्त्रियामविकाशब्दस्य प्रयोगोऽनेकत्रोपलभ्यते, अतो निश्चप्रचमेव पुंस्यविकशब्द आसीदित्यत्र न सन्देहलेशः।

तृजकाभ्या षष्ठ्यन्तस्य समासः पाणिनिना निषिद्धः[4], किन्तु स्वयमेव स उक्तं निषिद्धसमास प्रयुनक्ति—'जनिकर्तुः प्रकृतिः' [ १।४।३० ], 'तत्प्रयोजको हेतुश्च' [ १।४।५५ ] इति। अनुमीयते यत् पाणिनिसमये तृजकाभ्या षष्ठीसमासव्यवहारो विरलप्रयोगोऽभवत्। भाष्यकारो निर्दिशति—"नैकं प्रयोजनं ( विशिष्टं ) योगारम्भ ( सामान्ययोगारम्भम् ) प्रयोजयति" इति।

पाणिनीयव्याकरणानुसार वधधातोः प्रयोग आशीर्लिङ्लुङोः क्तुन्प्रत्ययेन सहैव च भवति, नान्यत्र। महाभाष्यकृताऽपि स्वतन्त्रस्य वधधातोर्विद्यमानताऽस्वीकृता। किन्तु वैशेषिके 'वधति, वध्यन्ते' इति प्रयोगौ दृश्येते। काशिकाकारस्तु—"वधिः प्रकृत्यन्तर व्यञ्जनान्तोऽस्ति"

---

१ धामानि त्रयाणि भवन्ति—स्थानानि नामानि जन्मानीति [ निरु० ९।२८ ]।

२ ब्रह्मणो नामानि त्रयाणि [ उणादिकोष. १।१३९ ]।

३ महाभाष्यम् [ ४।१।८८ ]।

४ 'तृजकाभ्यां कर्तरि' [२।२।१५] इति।

[ काशि० ७।३।३५ ] इत्युक्त्या स्वतन्त्रस्य वधधातोः सत्तामङ्गीकरोति । एव च सर्वलकारेषु व्यवह्रियमाणस्य स्वतन्त्रस्य वधधातोः सत्ता निर्विवादैव ।

'पतिः समास एव' [ १।४।८ ] इति समास एव पतिशब्दस्य घिसज्ञा पाणिनेरभिमता, किन्त्वसमासेऽपि घिसज्ञकस्य पतिशब्दस्य प्रयोगो दृश्यते । यथा—

नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ ।
पञ्चस्वापत्सु नारीणा पतिरन्यो विधीयते ।। इति ।

अपि च, द्वित्ववाचिनो द्विशब्दस्य नित्य द्विवचनता वैयाकरणानामभिमता । किन्तु द्विद्वयेति द्वे भिन्ने प्रकृती द्वित्ववाचिन्यावास्ताम् । किञ्च, बहुवचनेऽपि द्वयशब्दस्य प्रयोग उपलभ्यते । दीक्षितेन शब्दकौस्तुभ उक्तम्—"चाक्रवर्मणा द्वयशब्दस्य सर्वनामत्वम् (अङ्गीकृतम्), न पाणिनीयाध्येतृभिः" इति । एतस्योदाहरणमपि दृश्यते—"व्यथा द्वयेषामपि मेदिनीभृताम्" इति । एव द्विद्वयेति द्वे भिन्ने प्रकृती आस्तामुभयोश्च सर्वनामत्वमप्यङ्गीकृतमेवासीत् । किन्तु पाणिनीयकाले द्वयशब्दो विरलव्यवहारो जातः ।

समासे उत्तरपदाद् [1]राजन्शब्दाट्टच्प्रत्यये सति तस्य नकारान्तप्रयोगः पाणिनिव्याकरणानुसारमसाधुरेव । किन्त्वेतादृशा अनेके प्रयोगा वाल्मीकीये रामायण उपलभ्यन्ते । यथा—"युवराजानम्" [अयो० का० २।२] इति । भासीयनाटकेषु महाभारते चोत्तरपदराजन्शब्दस्य नकारान्तप्रयोगाणा [2]बाहुल्यमुपलभ्यते ।

प्रदीपकृता कैयटेन स्थापितम्—"यस्य प्रयोगो नोपलभ्यते तल्लक्षणानुसारेण सस्कर्तव्यम्" [ महाभा० २।४।३४ ] इति । एतेन प्रतीयते यदनेकेषा पाणिनीयप्रयोगाणामपि व्याख्याकारसमये व्यवहारलोपो जातः, येन विदुषामपि साधुत्वासाधुत्वभ्रमोऽभवत् । देवबोधो महाभारत व्याख्याप्रस्तावनाया निरदिशत्—

न दृष्ट इति वैयासे शब्दे मा संशय कृथाः ।
अज्ञैरज्ञातमित्येव पद नहि न विद्यते ।। इति ।

वाल्मीकीये रामायणे त्वनल्पा अपाणिनीया अथ च वैदिकाः प्रयोगा लक्ष्यन्ते । इतरशब्दस्य चतुर्थ्यामितरायेति[3] सर्वनामकार्याभावः, [4]"स्मरताम्" इत्यडागमाभावः, [5]"उष्य"

---

१ 'राजाहःसखिभ्यष्टच्' [ ५।४।९१ ] इति ।
२ युधिष्ठिरमीमांसककृतः संस्कृतव्याकरणशास्त्रस्येतिहासः ।
३ अयो० का० ४।७
४ अयो० का० ११।३
५ अयो० का० १५।२

इत्यत्रासमासेऽपि ल्यप्प्रभृतीनि बहुलान्यपाणिनीयानि कार्याणि दृश्यन्ते। बह्वोऽपाणिनीयाः सन्धयोऽपि तत्रोपलभ्यन्ते। यथा—[1]"दिवोल्काः" (दिव.=उल्काः) इत्यत्राद्गुणः, [2]'राघवोज्ज्वलितः" (राघवः = उज्ज्वलितः) इत्यत्राप्याद्गुणः। 'न लोकाव्यय०' [अष्टा० २।३।६९] इति सत्यपि निषेधे [3]"तव शुश्रूषमाणस्य" इत्यादयो कारकप्रयोगा अप्यपाणिनीया एव।

निरुक्तकृता यास्केनोल्लिखितम्—'अथाप्यस्या (गवि) ताद्धितेन कृत्स्नवन्निगमा भवन्ति" [निरु० २।५] इति। 'परश्च' [३।१।२] इति सूत्रव्याख्याया भाष्यकार उपस्थापयति—"प्रकृतिरर्थाभिधानेऽप्रत्ययिका दृश्यते। क्व स देवदत्त. क्व स यज्ञदत्तो बभ्रुर्मण्डुर्लमक इति। बाभ्रव्यो माण्डव्यो लामकायन इति प्रयोक्तव्ये बभ्रुर्मण्डुर्लमक इति प्रयुज्यते" इति। अनेन ज्ञायते यद्वोसदृशाना बहूनामन्येषामप्यतद्धिताना प्रयोगस्तद्धितार्थे भवति स्म। किन्तु पतञ्जलिकाले तेषा प्रयोगोऽसभ्येष्वेवावशिष्टः। भाष्यकृता तु पाणिनीयसूत्रेष्वपि—"छन्दोवत् सूत्राणि भवन्ति"[4] इति प्रतिपाद्यापाणिनीयानि कार्याणि विहितानि। अपरत्र च छन्दसीत्यनिर्देशेऽपि पतञ्जलिना तदीययुगेऽनुपयुक्तधातूना शब्दाना च छान्दसत्वमुद्घोषितम्—'इन्धिभवतिभ्या च' [महाभा० १।२।६] इत्यादौ[5]।

पाणिनिपूर्वकालिकयोरापिशलिशाकटायनयोर्धातुपाठयोर्बहूना पाणिनीयधातुपाठानधीताना धातूना पाठो दृश्यते। क्षीरतरङ्गिण्यां कतिपयाना पशूना ध्वनिभ्यो धातून् प्रदिश्य क्षीरस्वामिनोक्तम्—"कियद् व्याचक्ष्महे वयम्[6]" इति। निश्चप्रचमेव पुरा समेषामपि पशूना ध्वनिभ्यः स्वतन्त्रा धातव आसन्, किन्तु तानद्य वय न विद्मः।

एवं चोक्तप्रकारेण संस्कृतभाषाया ह्रासस्य सकोचस्य च सर्वतोमुखी प्रवृत्तिर्लक्ष्यते। प्रवृत्तिरियं न केवलं शब्दप्रयोग एवापि तु शब्दार्थयोरपि लक्ष्यते। कोपक्रोधयोरर्थे भेदः पाणिनेरभिमतः। एतत्स्वीकार एव च—'क्रुधद्रुहेर्ष्यासूयार्थाना य प्रति कोपः' [१।४।३७] इति सूत्रे पृथक्पठितयोः कोपक्रोधशब्दयोरर्थवत्ता सिद्ध्यति, अन्यथैकस्यार्थस्य व्यञ्जनाय पदद्वयस्य प्रयोगः कथमुपयुज्येत। किन्त्वमर उभयोः पर्यायवाचित्वं स्थापयति।

---

१ अयो० का० ४।१७।
२ अयो० का० १६।३१।
३ अयो० का० १२।३६।
४ महाभाष्ये १।१।१।
५ आदिपदेन ६।४।१२७–१२८ इत्यादीनि।
६ क्षीरतरङ्गिणी भ्वादिगणः।

# भारतशतकम्

श्रीमहादेवशास्त्री पाण्डेय, हिन्दूविश्वविद्यालयसाहित्यविभागाध्यक्षः, काशी।

आलोलां कुन्तलालिं गलमनुगलितां व्यूह्य धम्मिल्ललीलां
व्याधुन्वानं सटाग्रं मृगपतिमनिशं तीव्रयन्ती महोग्रा।
मुञ्चन्ती चन्द्रहासं खलबलनिकरे सैरिभं मृद्नती द्राक्
श्रीशक्तिर्भारतेऽस्मिन्नरि नरि विजया वस्तुतः साविरस्तु ॥ १ ॥

प्रत्यक्षं निर्जराणां सकलसुरगणाध्यक्षमात्मप्रतीक्ष्यं
संतक्ष्याक्षुद्रवेगः क्षतवरुणमदः क्षीणयक्षेशदाक्ष्यः।
विंशत्यक्षः क्षणेनाभजत समुचितां शिक्ष्यतां यस्य स द्राग्
रक्षेदक्षेमहारी हरिरमरवरैरीडितः पीडितं माम् ॥ २ ॥

यस्मादेते प्रसूता विविधतनुभृतो येन जीवन्ति भूता
यस्मिन् गच्छन्ति चैक्यं समधिकगुरुता यत्र मातुः पितुश्च।
विश्वं सर्वं बिभर्ति प्रकृतिरयमथो पूरुषश्च स्वतन्त्रो
देशं तं वा परेशं सुरवरझरिणीसुन्दरं कीर्तयामः ॥ ३ ॥

आ लोलोल्लोलमालाकलकलकलिताम्भोधिकूलाल्ललामाद्
यावन्नीहारभूमीधरधवलशिलालग्नभूसंविभागान्।
सीमान्तादा च बङ्गोपसरिदधिपतिं यावदस्त्येष सस्यैः
पत्रश्यामैर्द्रुमाग्रैर्वलयितवसुधो भारतं नाम देशः ॥ ४ ॥

इष्टो दिग्भ्यस्त्रयीभ्यः सरिदधिपतिभिः पादयोर्वीचिभङ्गैः
शृङ्गैर्लोकोपरिष्टादुदयमधिगतैः संनतः शैलराजैः।
पर्यायेणोद्भवद्भी रसऋतुविभवैर्मेदुरश्रीमनोज्ञो
रत्नै रम्यः सुवर्णाकरनिकरयुतो भारतोऽन्वर्थसंज्ञः ॥ ५ ॥

वङ्गैः संगीतकीर्तिः कलितकलकलश्चोत्कलैराम्ध्रबन्धु-
र्मद्रैरुन्निद्रमुद्रो जवजनितजयोद्गुर्जरः सिन्धुबिन्दुः।

पञ्चापैरञ्चितश्रीर्मधुमधुरधुरो मध्ययुक्तैर्विहारै-
रार्यावर्त्ताभिधानो जयति जनपदो मानिनां जन्मभूमिः ॥ ६ ॥

आद्योन्मेषाद्विधातुः प्रथमविकसितादाद्यपद्माग्रपत्रा-
दारब्धः पुण्यपुञ्जैः कलुषलवलवेनाप्यसंभिन्नगात्रैः ।
देवैरप्यात्मलाभं श्रयितुमतितरां वाञ्छिता विश्वमूर्ते-
र्निर्माणोत्कर्षसीमा परमसुषमया कापि नीराज्यते भूः ॥ ७ ॥

त्रैकोणी क्षेत्रभक्तिर्ज्ञपयति मधुरा विश्वचित्रे यमर्हं
यं संस्कुर्वन्ति रेखाः क्वचिदतिसरलाः क्वापि वामा मनोज्ञाः ।
देशानामुर्वराणां विपिननदनदीबाष्पयानादिकानां
स्थानं मानं च बोद्धुं भुवनहितविधौ बद्धकक्ष्यः स देशः ॥ ८ ॥

कृत्स्नाकूपारनीरव्रजजनितमहावृष्टिसंभारशोभः
केदाराभोगलेखाशतशतभरितासस्यसंपाददक्षः ।
वल्लीमालाललामद्रुमवलयलसन्मांसलश्यामलश्री-
र्लोकानां दर्शनीयः कृषकजनहितो भारताम्भोधरोऽयम् ॥ ९ ॥

गीर्वाणैः पुण्यपुञ्जो मधुमथनकलाकेलिनारिष्टसद्म
क्रीडारङ्गः प्रकृत्या मणिगणनिकरैः शेवधिर्वेदवाग्भिः ।
पूर्वाभावाविशिष्टाध्ययनगुरुकुलं शिक्षयारम्भभूमिः
संस्कृत्या सुप्रसूतिः सहजसुकृतिनामेष देशो गृहीतः ॥ १० ॥

चञ्चच्चार्वाकचर्चो दृशिविषयतया स्वीकृतान्तस्थबाह्यो
विज्ञैर्वैभाषिकाह्वैरनुमितचरमः प्राज्ञसौत्रान्तिकैश्च ।
योगाचाराभ्युपेताकृतिधृतिविलसद्विज्ञप्तिमात्रप्रपञ्चः
शून्याधिष्ठानतत्त्वोद्भवनिखिलतया मध्यसिद्धान्तसिद्धः ॥ ११ ॥

सांख्यैः संख्यातसख्यो यमनियममयो योगयोग्याङ्गसङ्गै-
र्गीतश्रीर्गौतमीयैः क्वणितकणकणः कोणकाणादवर्णैः ।
गीर्भिः कौमारिलीभिः कलितकुलकलो गौरवीमिश्रिताभिः
शान्तो वेदान्तदान्तः प्रगुणितगरिमा गीयते कोऽपि देशः ॥ १२ ॥

स्याद्वादो यावनैक्ये श्रुतिपथगमनैर्मुक्तकच्छैर्निरुक्त-
स्तन्त्रस्थैर्वाममार्गः सिततनुदयया दीयमाने स्वराज्ये।
कौटिल्यं राजकीयैः कलितमनुकलं देशरक्षाविधाने
यस्मिन्नृत्यन्ति भूयो विगतखलबलः स स्वतन्त्रः समस्तु ॥ १३ ॥

शुक्तीनां मुक्तिकेव त्रिदशसरिदिव स्रोतसां निर्मलानां
क्षौद्री धारेव हृद्या सरससुमनसां वज्रकाष्ठेव भूमेः।
रश्मीनामैन्दवानाममृतविपुलतेवास्ति संभासमाना
प्राचीना दिव्यधामा दृढतममहिमा संस्कृतिर्भारतीया ॥ १४ ॥

आम्नायाम्नानयोगो द्युसदसुदृढतापत्तिसौधोपयोगो
ज्यानिक्षेपप्रयोगो निजजनधरणोद्योगदैत्याभियोगः।
दुर्योगः क्षत्रजाते रजनिचरनृपश्रीवियोगः सुयोगो
गीताया जीवहिंसानिरसनकलुषक्रीडयोर्विप्रयोगः ॥ १५ ॥

सप्ताब्दानां शतानि प्रविकटमभितः पश्चिमातो विशद्भिः
पातिव्रत्ये सतीनां प्रहरणनिपुणैर्नैचिकीक्रव्यभक्षैः।
विध्वंसे मन्दिराणां कटुकृतिकुशलैर्म्लेच्छलुण्टाकधूर्तैः
केनाभाग्येन दूना धरणिरियमभूत् पादघातावधूता ॥ १६ ॥

द्वित्रा यद्राजयोगा नियतमिह नृणां भूपभूयं विदध्यु-
स्तद्दिग्भूपालयोगाः प्रबलनिपतिना यत्तनौ दिव्यदिव्याः।
एकैके लोकलक्ष्मीनिगडनपटवोऽखण्डहेवाकशोभाः
पूर्णस्वातन्त्र्यसिद्धौ स खलु निजकृतः संघचेष्टाविलम्बः ॥ १७ ॥

वाचालं काव्यलीलाकृतिकुशलपिकैर्गुञ्जितं शास्त्रभृङ्गै-
रङ्गैः सङ्गं विहङ्गैर्निखिलकलकलाकामिनीकेलिलोलम्।
श्रौतीभिः संविधाभिर्व्रततिभिरखिलं मञ्जुलं शालवृन्दै-
र्वागुद्यानं सुराणामिह खलु सुलभं लोभनीयार्थसार्थैः ॥ १८ ॥

और्जी ज्योत्स्नेव शुभ्रा सहृदयहरणी माधवश्रीः स्फुटेव
प्रातःसन्ध्येव रम्या प्रतपनशमनी ब्रह्मविद्येव हृद्या।

गङ्गेवादर्शदृश्या श्रुतिरिव मधुरा मङ्गलानां पवित्रा
नाम्नां धारेव विष्णोर्जगति विजयते भारती कीर्तिरेखा ॥ १९ ॥

देवैराप्यायितश्रीरपि सुरझरिणीनिर्झराम्भःपुनीतो
नीतः शिक्षां बृहत्याः पतिभिरनुदिनं कीर्तितो लेखवृक्षैः ।
मन्दारैः पारिजातादिभिरथ सहरिः पुण्यभोग्यः सुधाच्छो
गन्धर्वैर्गीयमानो विलसति सकलो भारतस्वर्गलोकः ॥ २० ॥

यन्नीरं जीवनार्थं कथयति निखिले भूतले लभ्यते त-
न्नैदाघोन्माथरक्षाविधिरथ शुचितापादनं तत्समस्ते ।
कीटैर्नो जातु दूष्यं क्वचिदपि निहितं बुद्धिवर्धिष्णु हृद्यं
पुण्यं तद्गाङ्गमम्भः प्रवहति धरणीं प्लावयद्भारतीयाम् ॥ २१ ॥

पारं पङ्कोद्गमानां सुहृदयमखिलाम्नायमूलागमानां
वासः पौराणवाचां निधिरयमतुलः श्रेयसां सन्मणीनाम् ।
चारित्र्यस्योच्चदीक्षा सुजनजनघनव्रातसाङ्गत्यशिक्षा
धर्मद्रोरालवालं भरतवसुमतीभूषणं तीर्थसार्थः ॥ २२ ॥

तथ्यं कथ्यं तथाहि स्वयमनिशमलं कष्टजम्बालजालं
संवित्सिद्धिं विधित्सन् पितृवनवसतेर्भृत्यतामादधानः ।
गृह्णन् सूनोः पटार्धं प्ररुदितरमणीमन्त्यसंस्कारमूल्यं
धर्मादर्शव्यवस्थां व्यरचयदतुलां भूपतिर्गीतकीर्त्तिः ॥ २३ ॥

वासो गीर्वाणवाण्या निखिलजनिजुषां मोक्षभूमिर्मृताना-
मार्यायाः सभ्यतायाः प्रथमनिषदनं मन्दिरं विश्वमूर्तेः ।
दुर्भेद्यो रागबन्धः किल सुरसरितो जन्मभूः शान्तिदेव्याः
सान्द्रानन्दाटवीयं जगति विजयते सर्वलोकैलक्ष्म्याः ॥ २४ ॥

यद्वीर्योपज्ञमासीद्रजनिचरपतेस्त्यागसीमावदानं
यस्यारण्यान्यबोधि प्रथमकविगुरोर्येन चीर्णं चरित्रम् ।
अद्याप्यार्याभिगुप्त्यै प्रभवति सकलद्वापरोत्तीर्णकर्मा,
राज्यादर्शप्रतिष्ठाप्रभवपरिवृढः कुत्र रामावतारः ॥ २५ ॥

श्रीरामे कृत्यशक्तिर्विपुलविलसिता लोक्यते लोकलोकै-
र्बुद्धो निध्यायतेऽद्धा धृतधिषणधृतिर्धीः समृद्धा विवृद्धैः।
ताभ्यां द्वाभ्यां श्रितात्मा नृपनयनिपुणो भारतोद्धारकर्ता
श्रीकृष्णः सर्वशक्तिः सकलनरवरः सोऽत्र पूर्णावतारः ॥ २६ ॥

श्रीकाध्यक्षं विजिग्येऽद्भुतरणनिपुणैश्चाणकामात्ययोगात्
संजह्ने युद्धयज्ञे कुसुमपुरनृपं प्राज्यसाम्राज्यकर्ता।
व्यूहे जित्वा स सेल्यूकसमयतनयां हेलनां रम्य-रम्यां
श्रीमान् वीराग्रगण्यः प्रथितगुणगणः स्मर्यतां चन्द्रगुप्तः ॥ २७ ॥

यत्साम्राज्यं वरिष्ठं शशिकरशिशिरं भारते सुप्रतिष्ठं
मूकाः स्तम्भाः सुधर्मप्रवचनपटवोऽद्यापि तिष्ठन्ति यस्य।
त्यागी यद्भिक्षुसंघोऽकृषत बहुतरान्दूरदेशान् स्वशिष्यान्
सोऽशोकः क्लिष्टशोकक्कथितमृदुमनाः सौगतैराहृतोऽभूत् ॥ २८ ॥

चित्रं चित्तौरदुर्गे खलयवनबलैर्वीवधारोधदूने
युध्यद्भिः क्षत्रवीरैः पुनरगमदृढैः क्षीयमाणे क्रमेण।
भीमेऽप्यन्ते प्रशान्ते पतिचरणरता पद्मिनी म्लेच्छशङ्का
दीप्तेऽग्नौ संजुहाव स्वतनुमलमसौ सार्द्धमालीसहस्रैः ॥ २९ ॥

धन्यास्ते राजपुत्रा निजविषयगुरुत्वावने लब्धदीक्षा
अल्पीयांसोऽपि धीरा यवनपरभटैः संप्रहारेऽवसन्नाः।
नित्यं योयुध्यमाना रिपुदलदलने सत्प्रतापप्रतापा
विश्वस्मिन् स्वेतिहासं कनकलिपिमयं नित्यमस्थापयंस्ते ॥ ३० ॥

योऽगौप्सीद् गाः शरण्यः खलबललुलितान्ब्राह्मणान्सम्यगावीत्
स्वारक्षीन्मन्दिराणि प्रयुतशतशिखाः पाट्यमाना अपासीत्।
आर्यक्षोणीं समाधाद् यवननृपमदं प्रव्यधावीत् समर्थो
दिल्लीमार्द्रां विडालीं व्यधित शिवविभुः सोऽस्तु भूयोऽवतीर्णः ॥३१॥

राहुग्रस्तां सुधांशोस्तनुमिव विमलां वारणेन्द्रावधूतां
रम्यामम्भोजराजीमिव वनपटलीं लङ्घितां वह्निनेव।

म्लेच्छैराक्रान्तपूर्वां प्रविततसुषमां तां महाराष्ट्रभूमिं
जित्वाऽकार्षीत्स्वतन्त्रां तरुणगणनुतौ सिंहदुर्गेश्वरस्तात् ॥३२॥

पङ्कातङ्काङ्कितात्मा निरयरयगतत्राससंजातकम्प-
श्चैतन्यानन्यभावानभिमुखहृदयः संगमे देवनद्योः ।
निर्वाति स्नानमात्राच्छ्रुतिरियममला यं विशिष्टं शिनष्टि
त्रिस्रोतः क्षीणयक्ष्मा प्रविततमहिमा सोऽस्तु भूत्यै प्रयागः ॥ ३३ ॥

चत्वारः स्तम्भभूपा शुभनिकरकरा दिक्षु विभ्राजमानाः
केदारद्वारवत्यावथ समजगतां नाथरामेश्वराद्यौ ।
यन्निष्ठं धर्मसौधं सुदृढमधिगता वैजयन्ती जयन्ती
पुण्याया आर्यजाते रिपुवशमनिता गीयतेऽनन्तकालात् ॥ ३४ ॥

पूर्णप्राचीप्रतीचीप्रचुरसुरुचिराशेषविद्यानिधानं
स्वातन्त्र्यत्यागदीक्षाविहितपरिकरो हिन्दुताप्राणभूतः ।
आर्यावर्त्तप्रकाशो हिमकरधवला मालवीयस्य कीर्त्ति-
र्धर्मस्यैको निवासः स्मरहरनगरीविश्वविद्यालयोऽयम् ॥ ३५ ॥

ग्रामान् विध्वंसय द्राग् धुनु वरनगराण्यग्निसाद्भावयस्वा-
शेषान् सांग्रामिकार्थान् रिपुकरपतितान् सेतुबन्धाँल्लुनीहि ।
स्कन्धावारार्थमेतान् विघटय विततान् क्रोशतां क्षेत्रवर्गान्
निश्शस्त्रान् भारतीयान् कुरु बत विदधे शासकः क्षोभमित्थम् ॥ ३६ ॥

प्रध्वंसो दासतायाः कथमपि निवसन्प्रागभावो विनश्यन्
सामर्थ्यस्याखिलास्तेः समसमयभवाभावसत्ता समग्रा ।
धौरेयस्वामितायाः प्रसभनिपतितान्मित्रराज्याद्विभेदो
देशेऽस्मिन् सुस्वतन्त्रेऽनुभवपथगताः खण्डनीयाः कुतस्ते ॥ ३७ ॥

जाग्रज्जाज्वल्यमानानलपटलललज्ज्वालमालावलीढ-
व्यालोलस्फोटनिर्यज्ज्वलनकणगणादग्धपूः क्षेत्रवृक्षाः ।
छिन्नार्था रिक्तशस्त्राः परित इह वृता घोरशस्त्रास्त्रसज्जैः
प्राणांस्त्यक्त्वापि भूमिं प्रबलपरबलैर्मा मुचन् भारतीयाः ॥ ३८ ॥

भीष्यन्तां व्योमयानैर्ज्वलदनलवलद्गोलघोरावमर्दै-
र्दोह्यन्तां वह्न्यगारैरभित इह चलद्वङ्कमुख्यायुधेद्धैः ।
रुद्ध्यन्तां योधलक्षैः क्षपितपरबलैः पूर्वतः पश्चिमाद्वा
स्वातन्त्र्यं संलभेरन् निजतनुहवने पण्डिता भारतीयाः ॥ ३९ ॥

कस्मै हन्तास्ति कथ्या निजविषयभवा पारतन्त्र्यप्रसूता
संकष्टेयं दशा भो गृहनगरभवद्दाहलुण्ठाभियोगैः ।
वेत्राघातैः कशाभिर्विशसनजनितत्रासविक्षोभणाभि-
र्व्यग्रस्त्रीबालवृद्धातुरनिखिलजना कस्य पुंसो विनाश्या ॥ ४० ॥

दान्तो दाहैर्गृहाणां हरणविशसनैस्त्रासितः सर्वनाशै-
र्नीतो विक्षोभदैन्यं गगनडयनकैर्यानसार्थैः पतद्भिः ।
गोलाङ्गारैर्निदग्धो विकलविलुलितो घातकैस्तैरुपायैः
स्वाधीनत्वाय मार्गं प्रतिदिनमयतेऽथापि कोऽप्यार्यदेशः ॥ ४१ ॥

ऐशान्यामुग्ररूपो ग्रसति वसुमतीं भारतीयां रणाग्नि-
र्व्यादायास्यं करालं कवलयति भृशं पूर्वतोऽकालकालः ।
सर्वे कष्टं सहन्ते प्रतिदिनमनिशं वर्द्धितैर्वस्तुमूल्यै-
रेकस्मिन्मासि गावः प्रयुतसमधिका हन्यमाना भवन्ति ॥ ४२ ॥

दूरं नीता विदेशे समरहुतवहे हूयमाना मुधैवं
सम्प्रत्यार्याः प्रवीरा निजनिजजननी रोदयन्तोऽतिलक्षाः ।
छिन्नः सौवर्णराशिर्यवननृपधरास्वाम्यपस्पर्शजातीः
संभेद्यास्तेऽद्य नीतिर्निगडितमतयो राष्ट्रभक्ता निबद्धाः ॥ ४३ ॥

दारिद्र्योद्दामदावादहनदरदलद्दानवैर्दूयमाना
दुर्वारद्वेषदुःखोदयदमनदृढद्योतनैर्दान्तदीनाः ।
दुर्दैवोद्योगदीर्णा दितदितिजदयोदन्तदूरप्रपद्या
माद्यन्मान्द्यैर्दुरीशैः प्रतिदिवसमहो हिन्दवो नाद्रियन्ते ॥ ४४ ॥

लोलूय्यन्ते ललामाः प्रतिकलमतुलान्दोलनैः शालमाला-
लीलावल्लीमतल्लीवलयवलयिताः सत्फलास्ते रसालाः ।

लोक्यन्ते ह्यार्यलोकैः कलितविकलितैस्तत्स्थले लङ्घितानि
बार्बूराणि क्रमेलाकुलहृदयतलान्यालवालानि तानि ॥ ४५ ॥

ऊर्जाभिस्तर्जनाभिर्जयजनितजयोद्गर्जितस्फूर्जिताभि-
र्भर्जाभिर्जर्जराभिर्ज्वरजनितजराजीर्णनिर्ज्वालनाभिः ।
जङ्गालैर्ज्वालजालैरगजजगदखिलं भूर्जभर्जं सृजद्भिः
खर्जूरा नैव सर्जा जितजनिमनुजा निर्जरास्तैर्विवर्ज्याः ॥ ४६ ॥

स्वातन्त्र्यं क्वापि लीनं विजयसहभवा शूरतास्तं प्रपन्ना
सोत्सेधोत्साहभूमा विलयमुपगता श्रीः समन्नान्तमाप्ता ।
नो पुंस्त्वस्याद्य चर्चा सुचरितनिकषो मान उच्चैर्विभग्नो
भूयांसस्तानभङ्गा भरतभुवमिमां यद्विभेत्तुं प्रवृत्ताः ॥ ४७ ॥

हंसायन्तेऽद्य काका मलिनसहयुजः केसरीयन्ति कोला
बाष्पायन्ते श्वसन्तः पुरुषतनुभृतः सर्वतो रुद्धचेष्टाः ।
साम्राज्यं वीणयन्ति प्रततबलमदोन्माथदम्भा महीशाः
क्षीरस्यन्ति प्ररुग्णा अधरचिकुरिताश्चाधुनोत्पुच्छयन्ते ॥ ४८ ॥

कोटीनां विंशती द्वे मनुजतनुभृतां पादपद्मावनम्रे
विंश्यामस्यां शताब्द्यां समुचितविविधास्त्रावसज्जे कदा नु ।
स्वातन्त्र्योत्साहपूर्णे द्विगुणबलभृते स्वर्णसिंहासनस्थां
वन्दे तां देशलक्ष्मीं मृदितविलुलितद्वेषिवाहीकसैन्ये ॥ ४९ ॥

चत्वारिंशत्सदर्पाः सहजबलभृतः कोट्यो भारतीया
गङ्गौघाः प्रावृषेण्या इव लुलिततटा व्यश्नुवानाः समन्तात् ।
स्वातन्त्र्यप्राप्तिकामा निगडितचरणां मातरं मोचयन्तो
जातैक्या उत्पतेयुः किमिव परबलं वारयेत् त्यक्तदेहान् ॥ ५० ॥

दृष्यद्ध्वान्तावमग्ना प्रखररविकरात्तप्तकेदारखण्डे
श्राम्यन्त्युत्थापिताभ्रिर्धरणिनिखनने तत्परा क्षामवर्ष्मा ।
वक्राङ्के वसन्ती विनमितपटले धूलिपूर्णे निकाय्ये
ग्रामाणां सप्तलक्षी हृतसमविभवा साम्प्रतं भारतेऽस्मिन् ॥ ५१ ॥

ग्रामाणां सप्तलक्ष्मी वसति बत निजेऽप्यास्पदे प्रोषिताऽस्मिन्
यस्मै कस्मैचिदिच्छावशत इयमभूद्दीयमाना धनाय।
स्कन्धावारार्थमेषा हृतगृहविभवोत्सार्यते नाथहीना
देशस्य प्राणभूता मृगयुवशगता गौरिव क्लिश्यतीह ॥ ५२ ॥

स्यात्कश्चित्तन्निमेषश्चतसृषु परितो दिक्ष्वपूर्वां वितन्वन्
जागर्ति संहरन्तीं सरभसमखिलांस्त्रासलोभादिदोषान्।
प्राणान्तत्यागधैर्यं निजविषयवलद्भक्तिमापूरयन्तीं
स्वातन्त्र्यप्रापणश्रीः सकलजनमतौ भावपूर्तिं दधानः ॥ ५३ ॥

ये वा के वा भवेयुः पुनरधिपतयस्त्रासयित्वात्यसह्याः
कांश्चिन्मासान् समा वा पुनरधिकमिमे नात्र देशेऽधिकुर्युः।
सद्यो भावी स्वतन्त्रः सुरिसरदखिलोद्योगसंभारपूर्णो
विज्ञानोद्गीतकीर्त्तिस्तडिदतिधवलः शौर्यवीर्योर्जितात्मा ॥ ५४ ॥

कारावासप्रसोढोत्कटविकटमहायातनोग्रा भुशुण्डी-
गर्ज्जन्तीस्ताः शतघ्नीर्ज्वलनकणमुचो निर्भयं संप्रविश्य।
वामं चाधाय पादं रिपुशिरसि बलाद् बद्धहेवाकभावा
संसत्काचिद् विजेत्री भजतु निजभुजैः प्राज्यसौराज्यलक्ष्मीम् ॥५५॥

सत्यासक्तः सितात्मा कविकृतिनिपुणो वृत्तगोवर्धनश्रीः
कृत्वा चक्रं कराग्रे गतिविगतिजुषां नेत्रदानैकशक्तः।
एको यः कर्मयोगी निखिलहितविधौ बद्धकक्ष्यः श्रितेशः
सोऽव्यादव्याजभव्यः सकलनरवरो मोहनो देशमेनम् ॥ ५६ ॥

पर्जन्यो यस्य जन्यं घृतमनलहुतं लिप्सतेऽभीष्टवृष्ट्यै
शुद्धं संमुग्धदुग्धं रचयति रुचिरां सत्त्वसम्पत्तिवृत्तिम्।
आयुर्भुक्तं समानां शतमिह तनुते प्राज्यमाज्यं प्रजानां
सानन्दं वल्गदास्तां प्रतिदिशमतुलं धैनुकं भारते तत् ॥ ५७ ॥

देवेन्द्रः पूर्वदेवैरसकृदधिजितो न प्रियोऽभूत् स्वभक्तः
कैलासो रावणेनोल्लसित इति पदे स्वेप्यतृष्णोऽखिलेशः।

नेपालाधीश्वरेणानिशमुदयजुषा निःसपत्नेन तुष्ट-
श्चाश्चल्यातङ्कमुक्तः पशुपतिरवतात् काठमाण्डूनिविष्टः ॥ ५८ ॥

सूर्याचन्द्रप्रकाशस्थगयदतिघनध्वान्तसच्छादितान्धे
द्यावाभूमी समग्रे विदधत उरवो मेघषण्डा अखण्डाः ।
धारासंपातवर्षास्रवदमललसद्बिन्दुभिः प्लावयन्तः
सृष्टिं नूत्नां विधातुः पुनरतुलबलाः कर्तुमेते सुसज्जाः ॥ ५९ ॥

आपः संपादयन्ती वरविमलतरा सुन्दराम्भोरुहाण्यु-
त्फुल्लानि द्योतयन्ती त्वरितगतिवहा आपगा मन्दयन्ती ।
तारातारैः प्रदीप्रं वलयितसुषमं साधयन्ती विहायो
वीरानुत्साहयन्ती लसति दिशि दिशि क्रीडनीया शरच्छ्रीः ॥ ६० ॥

गोधूमादभ्रभागाः सहजसहयुजां क्षेत्रमालाढकीनां
केदाराः सर्षपाणां यवचणकजुषाः सन्मसूराभिभाजः ।
भक्तिः सातीनकानां विलसदतसिका श्यामिकाश्यामलश्रीः
साश्चर्यैश्वर्यसीमा प्रमुदितमहिमा हैमनी भाति भूमिः ॥ ६१ ॥

श्रीपञ्चम्यां तपःश्रीस्तुहिनजडतया नाम्रपुष्पाणि सूते
न स्पन्दन्ते समीराः सुरभिततनवो नालयो यान्ति मोदम् ।
नोद्दीप्तः सूनधन्वा भुवनजयमहः कर्तुमिच्छां बिभर्त्ति
नाक्री संक्रान्तिरेषा परभृतविरुतैरर्च्यतां कस्य हेतोः ॥ ६२ ॥

अत्यन्तोत्तप्तपांसुक्षितितलमखिलं व्याकुलं कल्पयद्भि-
र्निःशेषां निःशलाकां तृषितमृगकुलोल्लासनीमादधानैः ।
श्रोत्रोत्तोदंस्तनद्भिः सकलमिह जनं क्षोभयित्वोष्णवातै-
र्मध्याह्नोच्चण्डसूर्यस्तपसि विजयते स्वातपैः सप्रतापैः ॥ ६३ ॥

चञ्चच्चन्द्राभ्रदीर्घोज्ज्वलविमललसद्वर्त्ति दीव्यद्वितान-
स्वाध्यायाचार्यसौधाकरकिरणगणाश्लिष्टसर्वाङ्गगौरम् ।
मल्लीमालाललामं विकसितपटलापाटलामोदमुग्ध-
मौद्यानं चक्रवालं हरति निशि हृदां प्राणिनां भारतीयम् ॥ ६४ ॥

उन्माद्यच्चन्दनश्रीसुरभितसुरभिप्रत्युषःशान्तिकान्त्या
किर्मीरैर्लोलकीरैर्ललितखगकुलानीरयद्भिः समीरैः ।
औन्नाघ्यं वेलयद्भिः पृथुकयुववयोऽतीतलोकाः प्रबुद्धा
खेलन्त्युद्गीरयन्ते निजविषयनिजायत्ततां भावयन्ति ॥ ६५ ॥

चन्द्राङ्कात्संगृहीतं नवजलदकुलादाहृतं पुष्कराद्वा
संनीतं कृष्णिमानं धृतवति परितो व्यश्नुवाने तमिस्रे ।
ह्लादिन्या दर्शयन्त्या कनककषलसत्स्निग्धया वर्त्मभेदान्
वर्षाक्षेत्राभिगुप्त्यै निशि कृषकगणाः साभ्रयः संचरन्ति ॥ ६६ ॥

एतादृक्षेऽन्धकारे न ददति किमपि द्रष्टुमन्धे नितान्तं
दौर्बल्ये जाग्रति द्राक् प्रसरति परितः स्वान् स्वकीयान् समस्तान् ।
आस्थायैकं त्रिलोकीभरणपरिवृढं स्वप्रकाशं परेशं
योद्धव्यं सर्वशक्त्या सकलसमुदितैर्हिंसयाऽहिंसया वा ॥ ६७ ॥

धर्मस्यात्यन्तनिष्ठा सहजसुचरितस्यैकमात्रप्रतिष्ठा
सत्यस्योत्कर्षकाष्ठा नयविनयमहारम्भनीतिर्वरिष्ठा ।
धैर्यप्रेष्ठार्यरीती रिपुविजयमहाश्चर्यचर्या पटिष्ठा
श्रेष्ठा स्फेष्ठा गरिष्ठा पवनसुतगुरोः कापि दृष्टिः शुचिष्ठा ॥ ६८ ॥

भोगावासोऽपि मोक्षाद्भुतसदनमलं देवभाषाप्रियोऽपि
नानापभ्रंशनिष्ठो यवनगणवृतोऽप्यार्यजातिप्रतिष्ठः ।
स्वातन्त्र्यप्राप्तिकामोऽप्यतुलविघटितानेकलोकाभिभूतो
देशोऽयं सार्वभौमीं कथमिह लभतामादिमां कीर्तिरेखाम् ॥ ६९ ॥

निर्वार्य्याः शङ्कशुक्ला निकृतनिरसितानन्दना शिश्विदाना
नीत्यन्तर्वाणिकार्मा विसृमरयशसो वाग्मिनो जागरूकाः ।
साम्राज्योन्माथहाराः कृशतनुसहजस्फीतवित्तप्रभावा-
श्चार्वाघाटाः कुशास्तेभरतवसुमतीमातृपूजानदीष्णाः ॥ ७० ॥

स्वातन्त्र्योज्ज्वालमालानलसुहुतनिजप्राणसर्वस्वशौण्डाः
कारायां जग्मिवांसस्तदनु च विपदां साहयः स्वायतीनाम् ।

भूयांसः क्षीणकायक्षयगदमृदिताः पेस्वराः कष्टमार्गे
श्रद्धेया भारतीयाः सुखविभवभृतो भस्त्रिकाश्चापरे स्युः ॥ ७१ ॥

गुञ्जद्भृङ्गालिगीतैः श्रुतिसुखमधुरैः कूजदालोहिताक्षै-
श्चूतास्वादातिरिक्तस्वरमुखरपिकैर्माद्यदामोदवाहैः ।
पुष्पाणां पावमानैः प्रकृतिवरवधूनूतनाक्रीडमुग्धं
दिग्धं शोभाभिरामं कुशलकृतिकलोल्लासितं भारतं नः ॥ ७२ ॥

भायाद्भूयः प्रभूयाद्भवविभवभरैः संश्रियाद्भूतिभावै-
र्भूष्याद्भव्यैः स्वभावैर्भुवनमुभयतो भावनां भूरिभासम् ।
भज्याद्भज्यात्प्रभावोद्भवभरितभुवो भूपतीन् भूतभाषान्
भुज्याद्भोगान् प्रभूतान् भविकभरतभूर्भाग्यभूमा प्रभूता ॥ ७३ ॥

यत्तप्तं नम्रतायै प्रभवति सततं लोहमेतत् प्रसिद्धं
भूमिस्तप्तैव सद्यो जनयितुमखिलानङ्कुरान् शाश्वतीति ।
तस्मादन्तर्दधाना ज्वलनखरशिखा एव सद्भारतीयाः
स्वातन्त्र्यं साधयेयुः स्वसुखनवसुधामोदमोहान्निवृत्ताः ॥ ७४ ॥

आर्यावर्त्ताभिधाने वसुमति मधुरे मातरुन्निद्रलीले
त्वां सम्यक् सर्वभूतिं निखिलकलकलाज्ञानविज्ञानपूर्णाम् ।
शास्त्रैरस्त्रैर्विमानैर्निजजनजनितैर्जातरूपां भवानीं
कुल्याभिः सिच्यमानां दिशि विदिशि शुभां श्यामलां भावयामः ॥७५॥

न स्यात् कश्चिद् दरिद्रो वसनविरहितो नैव मूर्खो न लुब्धो
जात्या कश्चित् समाजे न भवतु पुरुषः स्त्री तथा मानहीनः ।
सर्वे स्युः सुस्वतन्त्राः सकलसुखभृतः पूर्णविद्याः प्रसन्नाः
सोत्साहाः स्वस्थदेहा भवविभवभरैः संभृताः संस्फुरन्तः ॥ ७६ ॥

शान्ते दान्ते नितान्तं शशधरधवले धैर्यधुर्ये धरित्रि !
पूते पूतप्रतापे मणिजटिलमहासिंहपीठप्रतिष्ठाम् ।
स्वायत्तां स्वस्थचित्तां सुचरितनिकषोच्चैश्चरित्रां विचित्रां
मातस्त्वां चिन्तयामो नवनवलसितोद्योगसंभारपूर्णाम् ॥ ७७ ॥

कुल्याभिः कूपषण्डैर्वहदमलजलैर्नालिकाभिः सुसिक्तां
केदाराभोगभव्यां दलकुसुमफलोल्लासिवल्लीद्रुमाग्राम् ।
कुण्डोध्नीचर्व्यमाणैः शिशुतृणनिचयैर्वत्सभद्राभिरामै-
रोरुच्याचान्तसीमां परविषयनुतां द्रष्टुमीहामहे त्वाम् ॥ ७८ ॥

यन्त्रव्यूहैर्नदद्भिश्चलदलविसरैर्विश्वतो व्याप्तशोभै-
र्वस्त्रव्रातांस्तथास्त्रव्रजगगनचरस्यन्दनान् बाष्पयानम् ।
संख्यातीतं विचित्रं निखिलजनमनोऽपेक्ष्यवस्तूनि नाना
तन्वानैर्मातृभूमे ! भगवति ! भवतीमीश्महे जात्ववाप्तुम् ॥ ७ ॥

आकाशं व्योमयानैः स्थगितवति महादीर्घकायैः सहस्रै-
र्बाष्पैः सौदामनीभिर्विरचितगतिभिर्भूविभागाननोभिः ।
पोतैरब्धीन् स्रवन्तीर्विधुतवति रिपुस्तोममात्माधिपत्ये
ध्यायामस्त्वां जनानां जगति निवसतां पञ्चमांशेन पूर्णे ॥ ८० ॥

अर्थाधिक्याभिसाध्यायुधवररचनाघोरसामर्थ्यसम्प्र-
द्योगावाप्यान्यदेशोन्नतपदमहिमोत्कर्षसंभावितत्वात् ।
उन्मूल्योद्दण्डशत्रुप्रतिभटजनतायोग्यसंख्याश्रयत्वाद्
यस्याखण्डत्वमिष्टं विमलमतिमतां श्रद्धया तं स्तुवीमः ॥ ८१ ॥

श्रद्दध्मस्तत्र पूजां चिरमभिलषितां तस्य कुर्मः परस्माद्
वाञ्छामो नैव तस्मादमृतमपि शुभान्यर्थयामोऽथ तस्मै ।
तेनोत्कर्षं श्रयामस्तमिह जनपदं साधुवादं वदामः
स स्यात्सर्वा विभक्तीर्दधदमलतरा मे सुवाचां समासाम् ॥ ८२ ॥

पारोक्ष्यं केचिदीयुर्निजनुतिविषयं केवलं मुक्तिसिद्ध्यै
प्रात्यक्ष्यं चैकमन्ये कवनसमुचितं भुक्तिलाभार्थमापुः ।
विद्वांसो वस्तुतस्तु प्रवचनरचनाचारुचातुर्ययोग्यं
स्वं देशं जन्मभूमिं मतिसकलबलैः सर्वथा संश्रयन्ते ॥ ८३ ॥

कीरा हेम्नोऽपि बद्धाः शुचिरुचिरुचिरे पञ्जरे नात्र तुष्टा
मुक्ताः सद्यो विहायःपरिचरणममी प्रारभन्ते स्वतन्त्राः ।

यत्सत्यं भारतीयाः कति कति च शतीः पारतन्त्र्येण नीत्वा
स्वं राज्यं साधयन्ते वसुपशुधरणीजीवनं वास्तुमूल्यम् ॥ ८४ ॥

सम्पूर्णो वेदराशिर्ध्रुवमयमधुना मन्त्रविप्रद्वयात्मा
त्यागास्तोषास्तपस्याश्चिरतरनिचिता नूननेषोऽवभाति ।
धर्म्या राजन्यनीतिर्विपुलितमहिमा कर्मशक्तिः समग्रा
पुण्यं वै कल्पकोटिप्रततमतिलसद्भारते धर्मसंघः ॥ ८५ ॥

गावः सर्वोपकाराः प्रकृतिसुमधुराः पुण्यनद्यः समस्ताः
पूताः शैलाः समग्राः शुचिरुचिरुचिरा नैकभेदा अटव्यः ।
पारावाराः पवित्रा अखिलमतिमहन्मण्डलं तीर्थसीम्नां
देवागाराण्यनन्तान्यमितनिधिरयं भारतस्याविरस्तु ॥ ८६ ॥

सृष्टिस्थित्यन्तकर्ता चिदमलमहिमा, ज्योतिषां ज्योतिरेकं
सर्वाधिष्ठानमूर्तिर्विघटितघटनाशक्तयानन्तशक्त्या ।
कोटीर्ब्रह्माण्डखण्डान् क्षणत इह समाभासयन्नैकरूपां
क्रीडां तन्वन् विभाति प्रभवतु स विभुर्भूतये भारतस्य ॥ ८७ ॥

स्वातन्त्र्यैकान्तनिष्ठा प्रचुरशुचिरुचिर्दूरदृष्टिर्गभीरा
धीराऽऽभेद्या महाब्धीन् नुतसततकृतिः पारयित्वा फलन्ती ।
एका विस्रम्भभूमिर्निखिलविषयिणां जागरां संसृजन्ती
राष्ट्रेषु प्राक्तनेषु प्रबलसमुदिता भारती राजनीतिः ॥ ८८ ॥

पारेवाग्वर्त्तिरूपं विपुलविलसितं ज्ञानविज्ञानगर्भं
पारावाराभिरामं त्रिदशगणमहाभारतीसंनिबद्धम् ।
प्रागैतिह्यैकगम्यं समसमयहितं विश्वभाषाप्रभावं
राजद्विद्यालयश्रीः किमपि विजयते वाङ्मयं भारतीयम् ॥ ८९ ॥

दूरे दुर्भिक्षवार्त्ता जनगणविषमा केति भीतिर्निरस्ता
न श्रूयन्ते कदापि क्वचिदपि सहसा दास्यवाः सन्निपाताः ।
नाऽन्यायस्य प्रवृत्तिं द्विषदपि सहते नैव मिथ्याभियोगः
स्वातन्त्र्ये जातमात्रे प्रगुणितगरिमा द्योतते भारतश्रीः ॥ ९० ॥

लोकेष्वाकालमृत्युर्न चरति न भवन्त्याधयो व्याधयो वा
नैवाऽऽलस्यादिदोषास्तरुणिमनि नृणां वृद्धिसिद्ध्यन्तरायाः ।
न द्यूतं नापि मद्यं मलिनगुणगणा नापि दोषप्रवृत्ति-
र्दिव्येऽस्मिन्नार्यदेशे प्रथितमहिमनि भ्राजते धर्मलक्ष्मीः ॥ ९१ ॥

सौराज्येऽस्मिन्प्रतिष्ठां गतवति चरमां स्वर्णसिंहासनस्था
नीराज्येताऽऽर्यलक्ष्मीस्तरुणपरिवृढैः साधितार्थोल्लसद्भिः ।
अस्त्रैः शस्त्रैर्विमानैरुडुपशतशतैरन्तराहित्यसैन्यै-
र्न च्छेद्यैर्नापि भेद्यैः सुचरितनिकषै रक्षिता दुष्प्रधर्षा ॥ ९२ ॥

प्राज्यैराज्यैः पयोभिः प्रतिगृहमनिशं जायमानैरमेयैः
खाद्यान्नैः क्षेत्रवर्गेष्वतिविपुलमहाराशिभिः संभवद्भिः ।
धन्या स्वातन्त्र्यलक्ष्मी सुवसननिचयैर्यन्त्रसंघातसिद्धै-
रत्नैर्नानाखनिभ्यः प्रतिदिशमतुलैर्निःसृतैरद्य दृश्या ॥ ९३ ॥

विद्याविद्योतमानैर्नयविनयतपस्त्यागवाग्मित्वभाग्भि-
र्निर्भीकैर्न्यायनिष्ठैः सुचरितविभवैः सत्यसन्धैः प्रशस्तैः ।
शूरैर्वीरैर्बहुज्ञैरतिविमलयशोराशिभिर्धर्मशीलैः
सभ्यैः पूर्णाविरास्तां सततविजयिनी भारती लोकसंसत् ॥९४॥

स्वाराज्यं स्यात्स्वराज्यं भरतवसुमती स्यादखण्डा प्रपूर्णा
दिव्यप्रज्ञासमज्ञाः प्रबलविजयिनो भान्तु सर्वे युवानः ।
विद्यावासा समस्ताः सुचरितविभवैश्छात्रवर्गैः समृद्धा
ग्रामे ग्रामेऽभिरामा हरिततृणभृतो गोचराः सन्तु गोभिः ॥ ९५ ॥

शान्तिः कान्तिर्नितान्तं प्रमुदितजनतासत्प्रवृत्तिर्विनीतिः
साध्वी रीतिः समीची कृतिरतिविमला प्रीतिरास्तिक्यवृत्तिः ।
नीतिः शस्या शुभंयुः प्रकृतिरथ सिता सौम्यकीर्तिर्विभूति-
र्लोकश्लाघ्या चिरस्य स्थितिमिह तनुतामार्यदेशे स्वतन्त्रे ॥ ९६ ॥

येयं वीथी चलन्ती हरति जनिमतो लोक्यते या समस्तै-
र्यस्यां यान्तो हसन्तः पुरत उपनतं नैव पश्यन्ति कूपम् ।

तां जानन्तोऽप्यसक्ताः प्रखरपरिचयास्तत्परस्यां विभूतौ
शश्वद्भास्वत्प्रभायां भरतभुवमिमे शोभयन्त्वध्वनीनाः ॥ ९७ ॥

चारित्र्याणां विधानं मनुजतनुभृतां संविधानं शुचीनां
मर्यादानां निधानं विमलमतिमतां योगिनां संनिधानम् ।
आधानं दिव्यभासां प्रकृतिविलसितागारमेकं प्रधानं
राष्ट्रं न्यायावधानं प्रतिपदमयते भारतोच्चाभिधानम् ॥ ९८ ॥

विश्वेशः सर्वशक्तिर्गिरिवरतनयासाहचर्यार्चितश्रीः
सान्द्रानन्दामृताम्भोनिधिरमरसरिद्वीचिवाचालमौलिः ।
स्वातन्त्र्योल्लासलीलां विलसितविभवां सर्वशोभाभिरामां
भव्यां भव्यैकभावां भरतभुवमिमां सर्वदा संबिभर्तु ॥ ९९ ॥

पैलायग्रामजन्मा व्रजितरसयुगक्रोशनीरेशमार्गः
सौमित्रिः काशिवासी शतकसुमनसामम्बिकादत्तसूनुः ।
श्रीविश्वेशप्रसादोपनतकविकृतिप्रातिभाश्चर्यशक्तिः
प्रालम्बं मञ्जुलीलं सुनयति तदुरः श्रीमहादेवशर्मा ॥ १०० ॥

# मायाजालम्

सौ० क्षमादेवी राव, मुम्बापुरी।

अस्ति किल किञ्चिद्रमणीयोत्तुङ्गशैलशिखरे लोकलोचनानन्दप्रदं गुर्जरावनिमण्डले विराजमानमाबुनाम पर्वतावृत ग्रीष्मविहारस्थानम्। व्यराजत तत्र गोवर्धनोद्धारिणो दारुणदानवविदारिणो भगवतः सृष्टिसुन्दरीचूडायमानातिसुन्दरशिखरमण्डित मन्दिरम्। परितो देवागारमस्य व्यलसन् नानाविधा विटपिनः सुगन्धपुष्पाढ्याः। सुरालयस्यैकस्मिन् विविक्तकोणे बधिरमूकः कश्चिद् दैवज्ञो नित्यमुपाविशत्। विलक्षणान्तर्बोधसपन्नस्यास्य सविधे नानादिग्भ्यो बालस्त्रीपुरुषाणा समूहाः स्वस्वदैवगतिजिज्ञासया समाययुः। नैसर्गिके वैक्लब्ये सत्यपि मूकाभिनयेनैवात्मेङ्गितं जनाय बोधयामास ज्यौतिषिकोऽसौ विचक्षणः।

स सत्यगवेषी देवतागारस्य पृष्ठभागवर्तिनि विजने तमोमये प्रकोष्ठे रजन्या ध्यानजपादिसाधनैर्भगवन्तमाराधयन् स्वाश्रितजनैरुपास्यत। अथैकदात्र चतस्रः प्रमदाः काश्चन गवेष्यमाणस्यात्मनः प्रियजनस्य नामधेयं प्रसूनैश्चित्रयितु दैवज्ञेन मूकबधिरेणादिष्टा बभूवुः। अतो देवमन्दिरस्याङ्गणमनवरतनिपतद्वकुलकुसुमकदम्बसुरभीकृतमवारुह्य लेखार्थं स्वस्वदयितनाम्नः पर्याप्तानि प्रसूनानि संचित्य प्रदोषस्य सुवासितपवनमासेवमाना विटपिनामभ्यन्तरे शब्दायमानं मरुत्सूत्कार शृण्वन्त्यो विश्रान्तिसुखमुपाभुञ्जन्। देवतायतनात् पुरोहितानामादौ स्तोत्रगायनमश्रूयत। ततश्च घण्टातालभेरीमृदङ्गवीणादीनामाकर्णितो मन्द्रस्तारोऽपि श्रोत्रमनोहरो निनादः।

अथाङ्गनासु चतसृषु सजातपरस्परालापास्वेकतमा ज्येष्ठा दया नाम्नी निजगाद—प्रत्यैकयास्मासु यथाक्रममात्मीयकथा निवेद्यतामिति। तासु कनिष्ठा मुग्धानाम्न्यभ्यधात्—भवतु, रम्यतमाया राकाशर्वर्यामस्या परस्परवार्ताश्रवणेन प्रायोऽस्मदीयव्यथा शिथिलीभवेत्, सर्वासामस्माकं किञ्चित्परिसान्त्वनमपि भवितेति। तत्प्रारभ्यता कनिष्ठया भवत्या स्वकथेत्यन्याभियुंगपदभ्यर्थिता मुग्धा स्वचरिताख्यान कथयितुमुपाक्रमत्।

मुग्धा—गुर्जरदेशे क्वचित्पयोनिधेस्तटवर्तिनि डुमसनामनि ग्रामे मम पितृपादा न्यवसन्। ते च यथासंप्रदाय वंशपरम्परया प्रतीता अभूवन् यदुद्वाह एव प्रयोजन प्रमदाया जीवनस्येति। पठनलेखनाभ्यामन्तरोच्चशिक्षणं स्त्रीणा नावश्यकमिति तैर्दृढ प्रत्यपद्यत। अतोऽनाक्रान्तशैशवाया

एव मे कुमार कश्चिदनाथाश्रमादवृणवन् तातचरणा मत्पाणिग्रहणोद्देशात्। षोडशवर्षदेशीयेन सार्धमनेन युवकेन यथाविधि विवाहत्वाङ्निश्चयो व्यधायि च। दिव गताया मे मातरि कचित्कचित्कुमारकोऽयमस्मदुपवने निभृत मामभिलत्। अस्मद्भवनमभितस्तथाभूतमुद्यान रमणीयं तथा व्यलसन्निजसौन्दर्येण निर्जितनन्दनवन यथा तापसस्य विषयव्यावृत्तस्यापि चित्तमभिनन्दयेत्तत्। उद्यानेऽस्मिन् नानाविधाः शाखिनः कदलीनारिकेलाम्रदाडिमीनारङ्गाञ्जीरपनसादयो व्यराजन्त। पुरातनवटपादपानामधो विश्रान्तिसुखोपभोगार्थं वेद्यः कल्पिता आसन्। सर्वतः कुसुमलतिका. समुल्लसिता अनुत्तमामोद प्रास्तारयन्।

अथैकदा सायमावामुपवनेऽस्मिन् पिककूजननादिते निभृत परस्परसमागमामन्दानन्दसुखमुपभोक्तु मिलितावास्व। धवलयति वसुधातल धवलकरे निशाकरे करैः सुधाधवलैर्बकुलमल्लिकादिसुमनस्सु सौरभमातन्वत्सु मन्द मन्दं वाति गन्धवाहे यामिन्या सौन्दर्यशालिन्या वृद्धिं गतः प्रमोद आवयोः परा कोटिमारुक्षत्। व्यस्मरं साकल्येनाहं पितुः शासनमुपदेशं धात्रीदेव्या निद्रितायाश्च। चुम्बन प्रथम वल्लभस्य मे राकाया मनोहारिण्यां तस्या पुलकिताङ्गयष्टिं मा व्यमोहयत्तराम्। नैकवर्षेषु व्यतीतेष्वपि तत्स्मरणेनावर्णनीयभावं मय्युत्पाद्येदानीमपि रोमाञ्चयति मे शरीरम्।

समाप्ताध्ययनः कुमारोऽयमष्टादशवर्षदेशीयस्तातपादैर्मे पाश्चात्यदेशमुच्चशिक्षणोपलब्धये प्रेषितोऽभूत्। सपाद्य कार्यं शीघ्र निवर्तिष्ये स्वदेशमिति प्रतिश्रुत्य परदेशं प्रति स प्रतस्थे। अलेखीत् सोत्साह तरुणोऽसौ प्रणयपत्राणि, पर न चिरादेव पत्रव्यवहाराद् व्यरसीत्। अत्यन्तचिन्ताकुलस्तस्मै जनकदेवो मे तन्त्रीसदेशान् प्रेषितवान्, पर नोपलभ्योत्तर चिराय नैराश्यात्तत्पुनर्दर्शनाशामपि व्यजहात्। कियत्यसह्या व्यथा सोढा मया तत्समय इति वर्णयितु न प्रभवेत् कोऽपि जनः। प्रियकरस्य पुनर्दर्शनसुखमाशु मे भवेदित्येकयैवाशया गृहीतान्तरात्मा स्थितास्मि। तदारभ्य च गतभर्तृकेव जीवनयात्रा नीतासीन्मया, परं स पुनर्मत्सविधं ध्रुवमायास्यतीति बद्धाशयावास्थिषि चिरात्। पर च दैवज्ञोऽय बधिरमूकोऽपि तथ्य बोधयिष्यति मामिति समुपस्थिताहमत्रेति समाप्तात्मकथाया युवत्याः स्वरध्वनिर्मन्दीभूय यवनपुरोहितस्य सायन्तनिकाह्वानस्य भक्तेभ्यः प्रतिध्वनिपर्यवसानमिव सस्वने।

अथ तिसृष्वन्याङ्गना कृशाङ्गी श्यामवर्णापि प्रियदर्शना सामिविहितमन्दाक्षी अमन्दशोकाकुलमन्दस्वरा मन्दा नाम्नी न्यगदत्।

मन्दा—अयि सखि तव प्रेमवल्लरी सौन्दर्यामोदविषये लज्जितनन्दनदिव्यलता स्वप्ने दृष्टेवादृश्यतां गता विना दंशं तद्गुल्मान्तर्गतशोकभुजङ्गिन्याः किल।

इत्युक्तवती मन्दाऽन्याभिस्तिसृभिर्नोदिता निजवार्ता निवेदयितुमारप्सीत् ।

मन्दा—महानगर्यां मोहमय्यां चिरात्कृतावासाभ्यां पितृभ्यां साकं न्यवसम्। प्राक्तनरूढ्यनुसारं संवर्धिता ताभ्यां बाल्ये प्राथमिकपाठशालायां केवलं कृताध्ययनाऽऽसम्। उच्चशिक्षणविरोधी जनको मेऽब्रवीद्यदनिष्टमेव स्त्रीणामत्यभ्यासाज्जायत इति । तद्विचारपरिणामतो हन्ताज्ञप्रायाहमवास्थाम् । निखिलाहनि च बन्दीकृतेव सदने कांश्चन बान्धवान् विना न कोऽपि मे दृष्टिगोचरोऽभूत् । अथ सामाजिकमण्डले कस्मिंश्चिन्ममाग्रजानां सह सुदर्शनेन केनचित्तरुणेन यदृच्छया परिचयोऽभूत् । कृतार्धमहीपर्यटनोऽयं युवा वर्णेन गौरो विशालनयनः शिष्टाचारेऽधिगतपाश्चात्त्यसंस्कारः स्वदेशाचारविद्वेषी विदेशानभिज्ञान्मे बन्धून् भृशमाचकर्ष । पाश्चात्त्यविविधदेशेषु वाणिज्यव्यवहारे समधिगतदीर्घानुभवेन मया वाणिज्यनियोगोऽन्वेष्यत इति ममाग्रजानकथयत् । तत्क्षणे सहकारिणं व्यवहारदक्षं कञ्चिन्मार्गयन्तो जनकचरणा मे कुमारमिमं स्वकार्यालये द्रुतं न्ययोजयन् । अथ गच्छति काले संप्राप्तपरिणेयवयसि मयि योग्यवरान्वेषणपरावभूतां पितरौ, परं मदीयकुरूपताकारणान्न कोऽपि मामुद्वोढुं प्रत्यपद्यत । पर्यन्ते चिन्ताकुलो मे जनिता सहकारिणोऽस्य सविधे मद्विवाहविषयमधिकृत्य व्याजहार। दैववशान्न चिरात्तरुणोऽयमदृष्टपूर्वां मां परिणेतुं प्रत्यपद्यत । विस्मयस्य परां कोटिमारूढः प्राप्तस्वर्गद्वारमिवात्मानममन्यत जनको मे । प्रहर्षोद्रेकपूरप्लावितः सुमहत्सम्पत्तिभागिनीं मां विधाय युवानमेकमेव विधायकं व्यवास्थापयत् । अहं च नितान्तपरितुष्टा वशंवदा मदीयभाविपतिं तोषयितुमयतेतरां प्रत्यहम् ।

अथ निर्वर्तिते विवाहे यथाविधि वरो मां वीक्ष्य प्रथमतः शयनागारे न बभौ भग्नाशो नातिबीभत्सितो वा । पादयोस्तस्य प्रणिपत्याहमनुरागनिर्झरेण प्लावितात्मा प्रमोदाश्रुपूरेण तावप्लावयम् । स च किमप्यनुक्त्वा समुत्थापयामास माम्, चिरं च निशायां तूष्णीमवास्थिष्वहि । अपाङ्गदृशा लावण्यजितमारं कुमारं दर्शं दर्शं पुलकिताङ्गयष्टिर्विस्मयसागरे न्यमज्जम् । क्व मदनभिज्ञता, क्व च तस्य वैचक्षण्यम्, क्व मत्कुरूपता, क्व च तस्य सुरूपातिशय इति ध्यायं ध्यायं गाढं तमालिङ्गितुमुत्कण्ठिताभवम् । परं मत्तः स जुगुप्सितः स्यादिति भिया कम्पमानाऽवातिष्ठं नतानना निःशब्दापि ।

इत्थमुक्त्वा सहसेयं सगद्गदितस्वरा व्यरमत् । अथान्याभिर्युवतिभिः पुनः प्रणोदिता पुनरुपाक्रमन्निवेदयितुमवशिष्टवृत्तान्तम् ।

मन्दा—अथ मोहमय्यामेव पयोनिधेस्तटे दयितेन साकमत्यल्पनिलये न्यवसमहम् । प्रारम्भाद् भृशं संभाविताऽऽसं तेन । वसनाभरणाङ्गरागादिप्रसाधनसाधनानि परिधानोचितो-

पानत्पादुकाश्चाक्रीणात् स स्वय मदर्थम्। अह च सहर्ष सगौरव सर्वमेव तेन क्रीतमुररीकरवम्। अपरिहितपरदेशीयोपानत्पूर्वाया मे पादौ सपीडितौ भृशमास्ताम्, परं नाथ प्रीणयितुकामया सर्वा वेदना असह्यत मया। प्रत्यहं सामाजिकक्रीडामण्डल स मामनैषीत्। विवाहात्पूर्वं गृहाद्बहिर्निर्गमनानभ्यासवशात् समाजव्यवहारानभिज्ञामाधुनिकशिष्टाचारं मामशिक्षयत्। पाश्चात्त्य-देशानुकारिणोऽस्य साम्प्रतिकरीतिमतादिभिर्वशीकृताऽऽसमचिरात्। अथ काले प्रसूतार्भकाहं शिशुवर्धनादिकार्यबाहुल्याद्विहाराय सह तेन बहिर्गमनं परित्यज्याखिलाहो मन्दिरेऽवास्थिषि। क्रमेण मदवस्थितिमपि गृहे पतिर्मे न केवलमवागणयत् किन्तु डिम्भमपि, नौ कृत्स्नश उपैक्षत। दिवा कार्यालये व्यापृतः सन्न न्यवर्ततालयमामध्यरात्रम्। कुतो विलम्बः क्रियते प्रतिदिनं गृहं प्रत्यागम इति क्वचित्पृष्टो मया तिरस्कारात्तूष्णीं स्थितवान्। अथैकदा सूर्यास्तमनात्प्रागेव गेहं प्रत्यागत्य ससंभ्रममभ्यधात्—इतः सत्वरमेव गन्तव्यं मया। मदीयपितृपादा हि मरणोन्मुखा इति समुपलब्धवृत्तान्तस्तत्सविध विना विलम्बं यास्यामि। पितृगेहं समापन्नमात्रस्त्वा पत्रं लिखिष्या मीति मुहुर्मुहुः प्रतिश्रुत्य सदन व्यसृजत्प्राणेश्वरः। न कदापि पूर्वं निजपितरमधिकृत्याक्षरमपि प्रोक्तमासीत्तेन। अतः पितृहीनः स्यादेष इति तर्कितमद्यावधि मया। अथ प्रत्यहं तत्पत्र प्रतीक्ष-माणा सोत्कण्ठं सोत्साहमवास्थामहम्। परं नासीन्नैराश्यं विना फल प्रतीक्षाया मे। तस्य वृत्त-विशेषोपलब्धये मम पितृचरणैर्यथाशक्ति प्रययते किन्तु नैष्फल्यमेव प्रापुः प्रयत्नास्तेषाम्। व्यतीता इदानीं पञ्चषाः सवत्सरास्तस्य निर्गमस्य गेहात्। विना परेश च न कोऽपि मनुजो जानाति क्व वर्ततेऽसौ किं सवृत्तं तस्य वेति। दैवेन च प्रेरिताहमत्र समायातास्मि। दैवज्ञोऽत्र तथ्यं कथयेदिति। ओम्।

समीरविधूतसुरुनामकशाखिविशेषस्य मन्दरुतमिव मन्दायाः स्वरो मन्दमन्दो भूत्वा श्रवणपथस्यागोचरता ययौ। क्षणमात्र यावदत्र विलक्षणनिःशब्दता विराजते तावत्सर्वासु तासु मनोहारिणी मोहिनी नाम्नी तृतीयाङ्गना लावण्यतिरस्कृतानङ्गजाया सरोजनयना सुललिताङ्गयष्टिः सुवर्णवर्णा व्याहरत्। अयि युवामुभे अपि दैवेन प्रतारिते स्थः खलु; मदीयविषये त्वहमेव दोषास्पदीभूताऽस्मि। कस्यचिच्छ्रेष्ठिनो महानगर्या निवासिनः कुलेऽह प्राप्तसभवाऽऽसम्। पितृ-भ्यामतीव लालिता प्राप्तयौवना बहवो युवानो मामुद्वोढुमहमहमिकयाभ्यार्थयन् मदीयजनकम्। परं धनिकस्यात्मजा धनिकायैव देयेति कृतनिश्चयौ नवयौवनचुम्बितमात्रा मा पितरौ मध्यवय-स्केन केनचिद्धनाढ्येन मौक्तिकवणिजा सह पर्यणाययताम्। वाणिज्यव्यवहाराय भर्ता मे मुहुर्मुहु-र्भूतलेन्द्रभवनायित रमणीयतम प्यारिसनगर गच्छति स्म। एकदा च सह तेन तन्नगरमद्भुत-

मगममहम् । नगरीयममरावतीसौन्दर्याधरीकारिणी, वसुधातलनिखिलनगरीललामभूता, बुवाद-बुलोयन्-तुलरीनामकविविधरम्यतमोपवनजितनन्दनवनरामणीयकशोभिता, कूजन्नानाविधसुन्दराण्डजनीलोत्पलविलसितजलाशयसुषमातिशयनिधेर्देवता, आर्कदत्रियोम्फनामकविशालाष्टपथसगमभूता, विजयतोरणा, शान्झलीझनामकदेदीप्यमानविस्तीर्णराजमार्गविराजमाना, निखिल महीतलदेशीयाश्रयभूता, नाट्यसगीतनृत्यचित्रशिल्पादिकलाकलापधाम, असंख्यबुलेवार्डाख्य-महावीथिजनगुञ्जिता, नोत्रदाममाद्लनसाक्रेकराद्यद्वितीयदेवतालयपूजिता, शिल्पसौन्दर्यसमलंकृता, विपणीवातायनरचितरुचिराम्बररजतहैमपात्ररत्नखचितालङ्कारादिभूषिता मा नितान्तं व्यमोहयत् । विद्यते कश्चिद् विख्यातो मार्गो नगर्यामस्या रुद्लापेनामा बहूत्कृष्टाहारगृहसंपन्नः । एकस्मिन्नेतेषा प्रतिरात्रमाहारमुपभुज्य निवास निवर्तमानयोरावयोः पतिर्मे द्रुत मा विसृज्याप्रातर्बहिरेवास्त । दैनिकक्रमोऽय विलक्षणः प्रावर्तत बहुतिथ कालम् । पर्यन्ते चिरादाचरितदुराचारमस्यातर्कयम् । अथैकदा भोजनावसरे कश्चित्पत्रवाहकः पत्रमेकमानीय हस्ते मम पत्युः समर्पितवान् । पठित्वाशु तद् विवर्णवदनः सहसासनादुत्थाय प्रतीक्षस्व क्षणं तावच्छीघ्रमेव निवर्तिष्य इति प्रतिश्रुत्यैकाकिनी मा तत्र विसृज्य ससभ्रम भोजनालयान्निर्ययौ । तमहमेकहोरा प्रतीक्षमाणा तत्रैवोपविष्टाऽऽसम् । न तु प्रत्यागमद्वञ्चकोऽयम् । अत्रान्तरे यथा यथा बुभुक्षवो जना अधिकाधिका आययुस्तथा तथा मत्पतेरनागमादुद्विग्नाभवम् । आवाभ्या परिसेवितभोजनस्य क्रयमूल्यस्य प्रदित्सया धनकोशमात्मनो यावदावृणोमि तावत्सेवकाय पारितोषिकप्रदानाय पर्याप्तमपि धनं न विलोकयामीति नितान्तं लज्जिताभवम् । आसीद्दिष्ट्या भारतीयस्तरुणः कश्चिन्मत्समीपवर्तिभोजनफलकान्तरसविधमाहार भुञ्जान उपविष्टः । सोऽय समानदेशी प्रत्यहमदर्शि मयात्र । प्रसङ्गेऽस्मिन् विलोक्य सभ्रान्ता मा शीघ्र स मदन्तिकमुपेत्य साहाय्य चिकीर्षुर्ममानुज्ञामयाचत । उपकृतास्मि भवतेत्युक्ते मया नतशिरा भोजनमूल्यं प्रदाय गृहस्वामिने मन्निवास सादर मामनैषीत् । तद्दिनमारभ्य दर्शनीयशरीराकृतिर्दृढाङ्गो गौरवर्णो युवासौ प्रतिदिनमादौ भोजनालये तदनु विहारभूमौ उपवने वा माममिलत् । ततश्च परस्परसंगतिसुखमावामन्वभवाव । न चिराच्च परिचयश्चावयोर्वृद्धि गतः । मिथः सभाषणसहवासविनोदक्रीडादिना प्रेमबन्धो नौ सलीलमधिकाधिक गाढोऽभूत् । अथ मासाभ्यन्तरे यद्यदासीन्मत्सविधे तत्सर्वमपि सगृह्य प्रणयिना सार्धम् ईजीप्तदेशं प्रति निभृतपलायनमकरवम् । प्राप्य तत्र कस्याश्चित् समुद्रतटवर्तिन्यामविख्यातग्रामटिकायामावाममन्दानन्दतुन्दिलौ मासषट्क न्यवसाव । सोद्दीप सोत्कट स मा चकमेतराम् । अमितप्रेम वल्लभस्य मे क्वचिन्मयि भयमजीजनत् । तथा हि प्रेमशङ्का तत्प्रेमापेक्षयापि बलीयसी

बभूव। प्रेमशङ्काशीलः स क्वचिदकारयदात्मानमेतावद् हास्यास्पद यत्तमुपहासार्थमेव पीडयितुमसकृदक्रीडि मया। अथैकदाम्बुनिधेस्तीरे स्नानार्थं याते तस्मिन् सुहृदा केनचित्कैरो-नामिका राजधानीं प्रति यामीति सदेश पत्रे लिखित्वा मन्दिरान्निरगमम्। सर्वमिदं विनो-दार्थमेव चेष्टितमासीन्मया। परेद्युः प्रेमनिलयं नौ निवर्तमाना तदनाथीभूतमवालोकयम्। अस्मद्रवस्थानदेशीयसेवको मदतर्कितनिर्गमजन्यविप्रलम्भाभिभूतस्य वल्लभस्य मे नैराश्याग्नि-ज्वालामज्जनं न्यवेदयत्। अथानुतापानलसतप्तया मया सर्वतस्तमन्वेषयन्त्या न नैराश्य विना फलमुपालभ्यत। पर्यन्ते गतिमन्यामपश्यन्ती स्वदेश पुनरागमम्। मदागमात्प्रागेव हन्त पितरौ मेऽपरिमितसंपत्तिभागिनीं मा विधाय दिव गतौ। पर धनसपन्नाया अपि मे सुखलेशमपि न विद्यते। विनानुराग हि प्रणयिनः प्रमदाया जीवन व्यर्थमेव खलु। सर्वतः शून्यतैव प्रतिभाति मे। वार्धक्य चासन्नप्रायमिति कथयन्त्यास्तस्या वचो यत्स्फुटचरमासीत्तदिदानीं शिथिलीभूय शनैराकाशे विलीनतामयासीत्।

अथ ज्येष्ठा तासु योषित्सु दया नाम्नी व्याहरत्—"अयि कथ वृद्धा स्यास्त्वम्। वयसाहं त्वत्तो ज्यायस्यपि प्राणनाथस्य मे सदर्शनपिपासया व्यथितास्मि" इत्याख्यायाङ्गणस्य समीपवर्तिनः स्तम्भस्य पृष्ठभागे विलीय पुनर्दृश्यता यदागतासीत्तदा प्राप्तरूपान्तरा सा बभौ। तदीयसान्द्र-मेचककेशकलापस्य स्थाने धूसरवर्णमयविरलविरलकेशतन्तव एवासन् शिरसि तस्याः। तदानना कारो निम्नभागनिमग्नः सद्यो विमृष्टकज्जलं निस्तेजश्च तन्नेत्रयुगलम्। तदीयसहचर्यस्तस्या बद्धदृष्टयः काष्ठविग्रहा इव चित्रलिखिता इव संवृत्ताः। क्षणोत्तर निजकथानिवेदनमुपाक्रमद् दया।

दया—कस्याश्चित् सगीतकुशलाया गणिकायाः कुले गृहीतजन्माहम्। गायनशिक्षकमेक प्रवयसमन्तरा न केनापि पुरुषेण सह परिचयमनुमेने प्रसूर्मे। षोडशवर्षकल्पाऽभव यदा तदा मदीयाम्बा बहुभिस्तरुणैर्धनाढ्यैः सार्धं कुभोगार्थं मत्समर्पणसन्धान कर्तुं समुद्यताऽभवत् पर गणिकाजीवनमसहमाना नैसर्गिकबीभत्सया तन्मनोरथानुवर्तने पराङ्मुखी सनिश्चयमवास्थाम्। तथापि मत्सङ्कल्पमविगणय्य केनचिद्धनिना क्षेत्रपतिना सार्धं मद्देहविक्रयव्यवहारः समपद्यत तया। अथावयोः प्रथमसगमात्प्रागेव मातुरालयान्निभृतं पलायिताहम्। ततश्च पुरात्पुरमटन्त्या दीनदीनाया मे वार्ता श्रुत्वा दयालुः कश्चित्पुरोहितो भृशमार्द्रीभूय स्वगृहे प्रदाय संश्रय मे, क्रमेण मा पुत्रीकृतवान्। दश वर्षाणि महानुभावेन करुणानिधिना तेन स्वकन्यानिर्विशेषं पाल्यमाना लालिता तेनाध्यापिता कोङ्कणावनिमण्डले ग्रामटिकाया कस्याश्चित्पयोनिधेस्तटवर्तिनि गृहे सुखं न्यवसम्। मामन्तरा नासीदन्यः कोऽपि तमुपासितुम्। यतः प्रसूतिसमये तद्गेहिनीदेवी

विंशतिवर्षीया सार्भका कालवश गतासीत्, न चान्यामुपायसीद् भूसुरवरोऽयम्। अथ गच्छति काले समारूढनिर्भरयौवना मा परिणाययितु सुतरा प्रायतन्त पितृपादा., परमाकर्ण्य कर्णपरम्परया संभव मे न कोऽपि तरुणो मत्पाणिं ग्रहीतु प्रत्यपद्यत। विव्यथेतरा पूज्यतमजनकदेवस्य हृदयं दर्शं दर्श मामनूढा प्रतिवर्ष वर्धमाना च वयसा। सर्वापेक्षया बलीयस्याशेति मद्विवाहविषये सप्रत्याशोऽवतस्थौ स आजीवम्। अतिक्रान्तषड्विंशतिवर्षीयाया मयि पितृपादा दिवं गता विसृज्य मे सर्वमेव स्वार्जित वित्तमालय च। ततः पर विनष्टैकावलम्बनाह चिर पितृदेवाना मृत्यु विलपन्ती नामशेषाना तेषा स्मृतिं पूजनीया निरन्तर दधाना हृदि तन्मदिरे न्यवसमेकाकिन्यहम्। अथैकदा साय समुद्रतटे शतपदीं कुर्वाणा गण्डशैले शयितं कश्चिन्मूर्च्छाभिभूत युवानमद्राक्षमहम्। सोऽयं गौरवर्ण आयतललाटो दीर्घबाहुस्तरुणस्त्रिंशद्वर्षदेशीयो दृढकायो लुप्तसञ्ज्ञो म्लानमुखो मन्द मन्दमश्वसीत्। यथा यथा तदीयगण्डस्थलमस्पृश तथा तथाऽपूर्वविविधमिश्रभावनातरङ्गाभिभूताऽहम्। चिराद्विनष्टोपलब्धबालका प्रसूरिव परितोषस्य परा कोटिमारुक्षम्। तदीययौवनचुम्बिताननमालोकयन्त्या मे वक्षःस्थल सरभसमस्पन्दत। अथ स केषाञ्चिन्मत्स्यजीविना साहाय्येनानीयत मद्गेहम्। झञ्झावातेन प्रोच्चकैराक्षिप्तः कल्लोलमालिकाभिः प्रहृतः पोत क्वचित्सागरस्याम्भस्यमज्जत्। दैवगत्या तु तरुणोऽय प्रभाते तीरभूमिमगमदिति तैर्निवेदिताऽऽसमहम्। द्वित्रघटिकोत्तर लब्धसंज्ञस्य तस्य स्मितमविस्मरणीय मा न्यवेदयत्प्रभूतवस्तुजातम्। तदनु स कियन्तो दिवसान् सामिमूर्च्छादशायामवतस्थे। क्रमेण च प्रकृतिमापन्नोऽभाषताल्पमेव। साम्रेडमनुयुक्तोऽपि यथा स्वपूर्ववृत्तान्तनिवेदनेन मत्कुतूहल परिपूरयितुं स्मृतिभ्रंशान्न स प्राभवत्। अह च तत्पारतन्त्र्यादधिकाधिक तस्मिन् स्नेहबद्धाभवम्। कदाचित्सभ्रान्तमनाः प्रच्छन्नाधिं स्मृतिफलकात् परिमार्ष्टुं यतते स्म। अथ गच्छत्सु मासेषु मामवधातुमारप्सीत्। मदीयवसनाभरणनयनाञ्जनपाणिरुहरागादिकलापः क्रमेण तद्दृष्टिविषयोऽभूत्। ततस्तस्मिन् प्रेमाङ्कुरोदयलक्षणान्यपश्यम्। तदवलोकनेन सुतरा मनसिजशरविद्धेव रोमाञ्चिताङ्गी स्वान्तर्भावविकारमगोपयमह सप्रयत्न तत.। सोऽपि पृथग्भावमाश्रित्य चिन्तापरो नित्यमास्त। अथैकदा सायमुद्याने विहरतोरावयोरवादीत्स कुमारो गन्तव्यमिदानीमितो मयेति। वचस्तस्याकर्ण्य सुतरामवदीर्णहृदयेव विषण्णान्तरात्मा गात्रस्खलिताऽवोचम्। क्व प्रस्थास्यते त्वयेति। यत्र कुत्रापि, अल चिन्तया मदर्थमिति सविशिथिलवचनविन्यासं सशोकं च स प्रत्युवाच। इत्थ ब्रुवाणमेनं परिसान्त्वयितुमालिङ्गितुं च भृशमैच्छम्। पर लज्जया तदप्रसादभिया चावरुद्धा क्षणं जोष स्थित्वाऽप्राक्षमहम्—किमितो निर्गन्तुमुद्यतोऽसि। अपि नास्ति क्षेमं तवात्रेति पृष्टः कृतज्ञतासूचक हस्तनिक्षेपं कुर्वाणो निरुत्तरोऽ-

वतस्थे स युवा। अपि स्ववृत्ति पुनर्ग्रहीतुमिच्छसि प्रायः, किं निकटबान्धवानाहोस्विद्दिदृक्षुरसीति मयानुयुक्तः प्रत्युत्तरमदत्त्वा सकन्धरकम्प तूष्णीं स्थितवान्।

अत्रान्तरे धवलयति वसुधातल धवलकरैर्धवलरश्मौ धवलोज्ज्वलतामसीप्लावितमुद्यान-मिदम्। चरणपथेषूत्पलखण्डानि देदीप्यमानान्यग्न्युपलानीव विलक्षणभावोत्सेक मय्यजीजनत्।

स एव क्षणो निश्चायको मज्जीवनस्येति प्रतीताभवम्। शनैः सभय तत्करमादाय समार्दवं परामृशम्। निजपारतन्त्र्यमाविष्कुर्वन् सविश्वास सविनय चान्वमंसि तेन मा ग्राहयितु हस्त-मात्मनः। क्वचिदुत्कण्ठिता क्वचित्सम्भ्रान्ता क्वचित्कम्पमाना क्वचित्सन्त्रस्ताह कियत्क्षणानि जोषमत्रास्थाम्। अब्रवीच्च स तावत्—अहो भवत्परमसौजन्यभारेणाभिभूतोऽस्मि किल। न खलु भवत्याः प्रेमपात्र भवितुमर्हति जनोऽयम्। वचनं तन्निशम्य मदीयकरो निःसत्त्व इवागल-त्तदीयहस्तात्। अभाणि च कथमपि मया—"भवन्त परिसेवमानामन्दानन्दतुन्दिलास्मि। एकाकिन्येवास्मि मन्दिरेऽस्मिन्। सदैव भवता पदाब्जयुगलमुपासितुमनुमोद्यता जनोऽयम्। अस्ति पर्याप्त धनं मत्सविधे उभयोरावयोः पोषणाय" इत्युक्त्वा रुद्धकण्ठा व्यरमम्। स च मा सदयमालोकयन्मत्कर परामृशत् समार्दवम्। पूर्वनैजकथास्मरणाग्निना तप्यमान इव स प्रत्यभात्। कयापि निर्दययाङ्गनया क्वचित्प्राग्वञ्चितः स्यादिति व्यतर्कि मया। पर नाक्षरेणापि तेन किञ्चिदपि व्यक्तीकृतम्। मौनमस्य तावन्मा किञ्चिदाश्वासयामास। चिर च पतत्रिकुलकूजित दविष्टजलाशयनिर्झरध्वनिं श्राव श्राव चन्द्रिकाया रामणीयकेन प्रहृष्टान्तरङ्गौ कुन्दकुसुमैः सुवासिते लतामण्डपे जोषमवास्थिष्वह्यानिशीथम्।

परेद्युः प्रातस्तरा यदा जागृताऽऽस तदा हृदयवल्लभस्य शयनागार रिक्तमलोकि मया। दुग्धापूपादिकप्रातराशं परिवेषयितु तस्मै गृहतल यावदवारोह तावन्मुखशालाया मध्यस्थ-फलकोपरि स्थापितं तद्धस्तलिखितं पत्रमेकमद्राक्षम्। सवेपथुरवसन्नगात्री सचकितं सभय पत्रं तदपठ यथा—"भवत्याः सौहार्दातिशयभारेण सुतरा निमज्जितोऽस्मीति वचन पुनरुक्तिरेव स्यात्खलु। अयोग्यो जनोऽय भवत्या विस्मरणीयः। सन्ति मदपेक्षया परश्शतं जना भवत्सौ-जन्याहाः। अज्ञातक्षुद्रजनस्यास्यानेकनतिततयोऽङ्गीक्रियन्तामिति प्रार्थये। स्वस्ति भवत्यै" इति स्वल्पसंदेशं हृदयेश्वरस्येम पठित्वा निश्चला चिरमवातिष्ठमहम्। निखिलाहनि सर्वतस्त गवेषया-मासुर्ग्रामवासिनः पर हन्त न केनापि विलोकितोऽसौ आप्रभातादासूर्यास्तमनम्। ततश्च तन्त्रीद्वारा संदेशाः प्रेषिता मया समीपवर्तिनगररक्षाधिकारिभ्यस्तरुणस्योदान्तोपलब्धये। महार्हपारितोषिक-प्रदाने शोधकाय प्रतिश्रुतेऽपि नैष्फल्यादन्तरा नान्यत्फलमुपानत गवेषणस्य। अहं च पाताल-

तलमवतीर्णेव क्वाहमगम किमकरव क्वास्वप किं भुक्तं किं पीतं केन सेवितेति न किञ्चिदप्यज्ञासिषम्। अनेकापत्सहिष्णोर्मम कस्य जन्मान्तरोपात्तस्य कर्मणः फलेन भाव्यमिति। आदौ हि कामवराको मामपारानन्दपयोनिधौ विनिमज्य ततो हृदयेश्वरसमागमसुखनगशिखरात्तद्विरहान्धकूपे न्यपातयत्।

इत्युक्त्वा दीना रुद्धकण्ठा शिथिलवचनविन्यासा विललाप सकरुणं दया। निशम्य च दयाया दयनीयकथा स्वस्वदयितार्थिन्योऽङ्गनास्तिस्रस्ता. सदयाम्बुनयना बभूवुः। न चिरात्सर्वा इमाश्वतस्रः स्वस्वकल्पितस्थान बकुलकुसुमगुच्छहस्ता देवमन्दिर प्राविशन्। दैवज्ञस्यादेशानुरूप स्वस्वहृदयेश्वरस्य नामाक्षररेखाः पुष्पैरालेख्य परेद्युस्तत्र पुनरागमननिश्चितास्ततो निर्ययुः। अथ प्रातस्तरा दैवज्ञेनालोकितेषु नामाक्षरकुसुमालेख्येषु प्रतिस्थल सममार्जि। तदन्वेकेनैव पद्येनालकृतमासीत्प्रत्येकाङ्गनायाः स्थानं निभृतम्। सदेशोऽस्याभूद्यथा—

पतङ्गो रसमास्वाद्य चतुस्सुमनसा पृथक्।
मायाजाले गृहीतः सन् विमुक्तोऽपि तिरोऽभवत्॥

परेद्युर्भानूदये चतुष्टयं योषिता स्वस्वगुह्यस्थान पुनरुपेत्य मूकबधिरस्य पद्यमयं संदेशमपठत्पर तद्गूढार्थमवगन्तु नैकापि तासु प्राभवत्। पश्चाद्दैवज्ञो मायाजालसदृश जीवन सम्प्रश्नात्येव प्राणिन इति हस्तचेष्टया योषितो निवेदयितु प्रायतत।

तास्तु सभ्रान्ता अधिकाधिक भग्नमनोरथाश्च सुरागारान्निर्ययुः। परं नाज्ञासत ता यत्ताभिश्चतसृभिरभ्यन्विष्यमाणो रमण एक एवासीद्युवेति॥

---

# न्यायनये शब्दार्थसम्बन्धविचारः[1]

श्रीबदरीनाथशुक्लः, राजकीयसंस्कृतमहाविद्यालयप्रधानाध्यापकः, काशी।

अनादिकालादनन्तकर्मपाशयन्त्रिता जीवा भोगेनात्मतत्त्वसाक्षात्कारेण च पूर्वजन्मार्जितं कर्मजात मिथ्याज्ञान च निरन्वयमुन्मूल्यात्यन्तिकाखिलदुःखनिवृत्तिलक्षणमपवर्गमासाद्य कृतकृत्या भवेयुरिति कान्तकामनया सर्वविषयकनित्यज्ञानेच्छाप्रयत्नसम्पन्नः परमेश्वरः कृत्स्नानिमॉल्लोकानरचयत्। पर निर्मितेऽपि निखिले यदि व्यवहारानुगुणः शब्दराशिः सृष्टो नाभविष्यत्तदा न कश्चित्स्वाभिप्राय प्रकटयितु पराभिप्रायमवगन्तुं वा प्राभविष्यदिति समग्रं जगदेव मूकं प्रगतिहीन च भवन्न कथञ्चिदपि वर्तमानामवस्थामध्यरोक्ष्यन्न वा जगद्रचनोद्देश्यं मनागप्यसेत्स्यदिति स शब्दानसृजत्। सर्वज्ञेन सर्वसमर्थेन च परमात्मनाऽसाधूनामसंस्कृतशब्दानामुत्पादनमनुचितमिति तत्तदर्थबोधौपयिकाः साधवः संस्कृतशब्दा एव तेन सृष्टाः। ततस्तानेवोपजीव्य सस्कृतभाषा ता च समाश्रित्य बहुविध विस्तृतं विपुलं सस्कृतसाहित्य प्रावर्तत। परमेश्वरोच्चारितशब्दानामयथातथाभ्या श्रवणानूच्चारणाभ्या च सस्कृतेतरभाषाः प्रासरन्नित्येव निरवद्यो निश्चयः।

तत्र न सर्वः शब्दः सर्वमर्थं बोधयति किन्तु कश्चिदेव शब्दः कञ्चिदेवार्थमिति शब्दः स्वसम्बद्धमेवार्थं विज्ञापयतीति नियमो नूनमभ्युपेयः। स च सम्बन्धो न संयोगस्तस्य द्रव्यमात्रनिष्ठत्वात्, शब्दस्य च न्यायनयेऽद्रव्यत्वात्। नापि समवायस्तत्र शब्दानुयोगिकत्वेन जातीतरप्रतियोगिकत्वस्य शब्दप्रतियोगिकत्वेन वा गगनेतरानुयोगिकत्वस्याभावाज्जातिगगनातिरिक्ताना शब्दासम्बद्धत्वप्रसङ्गेन शब्दवेद्यत्वानुपपत्तेः। नापि तादात्म्य प्रभूतवैधर्म्यालिङ्गितयोः शब्दार्थयोस्तदभ्युपगमासम्भवात्। नापि भेदसहाभेदपर्यवसायि विलक्षण तादात्म्यं तादृशे प्रमाणाभावात्। नापि कालिको वर्तमानेन शब्देनातीतानागतयोरप्यर्थयोर्बोधात्। नापि दैशिको विरुद्धदिक्कयोरप्यर्थशब्दयोर्बोध्यबोधकभावात्। नापि स्वरूप तत्तच्छब्दस्य तत्तदर्थमिवार्थान्तर प्रत्यपि स्वरूपाविशेषात्। अतस्तयोः सम्बन्धः क्लृप्तसम्बन्धव्यतिरिक्त एव कश्चिदित्यकामेनापि मन्तव्यम्।

---

१ आचार्यपरीक्षामुत्तितीर्षूणामन्तेवसता निबन्धरचनाऽऽदरमूतौ द्वौ लेखावत्र प्रकाश्येते। यथावसरं निबन्धान्तराण्यप्यत्र प्रकाशयिष्यन्ते—सम्पादकः।

स च सम्बन्धः शब्दार्थसम्बन्धविज्ञैर्वृत्तिशब्देन व्यवह्रियते। वृत्तिश्च शक्तिलक्षणान्यतररूपा। शक्तिश्चाभिधासामर्थ्यवाचकतादिप्रचुरपर्याया परमेश्वरेच्छारूपा। सा च विनिगमकविगमेन "अयं शब्द एतदर्थबोधको भवतु", "अयमर्थ एतच्छब्दबोध्यो भवतु", "एतदर्थबोध एतच्छब्दाद् भवतु" इत्यादिरूपाऽऽकारतोऽनेकापि स्वरूपत एकैव। शब्दविशेषादर्थविशेषबोधोदयस्य व्यवस्थितस्य वाच्यवाचकत्वव्यवहारस्य चान्यथानुपपत्त्यास्याः सम्बन्धत्वं तदनुगुणं च शब्दार्थानुयोगिप्रतियोगिकत्वं शब्दार्थप्रतियोग्यनुयोगिकत्वं वा कल्प्यते।

तत्राद्याकारायाः शब्दानुयोगिकत्वे स्वीयार्थबोधजनकत्वनिष्ठप्रकारतानिरूपितविशेष्यतायास्तदनुयोगितानियामकत्वम्, स्वीयशब्दनिष्ठविशेष्यतानिरूपितजनकत्वनिष्ठप्रकारतानिरूपितबोधप्रकारतानिरूपितविषयित्वसम्बन्धावच्छिन्नप्रकारतायास्तत्प्रतियोगितानियामकत्वम्, अर्थानुयोगिकत्वे चोक्तप्रकारताया अनुयोगित्वस्योक्तविशेष्यतायाश्च प्रतियोगित्वस्य नियामकत्वम्।

द्वितीयाकारायाः शब्दानुयोगिकत्वे स्वीयार्थनिष्ठविशेष्यतानिरूपितविषयत्वनिष्ठप्रकारतानिरूपितबोधप्रकारतानिरूपितजन्यत्वसम्बन्धावच्छिन्नप्रकारताया अनुयोगितानियामकत्वम्, स्वीयशब्दनिष्ठप्रकारतानिरूपितबोधप्रकारतानिरूपितविषयत्वप्रकारतानिरूपितविशेष्यतायाः प्रतियोगितानियामकत्वम्, अर्थानुयोगिकत्वे तूक्तविशेष्यताया अनुयोगितानियामकत्वमुक्तप्रकारतायाश्च प्रतियोगितानियामकत्वम्।

तृतीयाकारायाः शब्दानुयोगिकत्वे स्वीयबोधनिष्ठविशेष्यतानिरूपितजन्यत्वप्रकारतानिरूपितप्रकारताया अनुयोगितानियामकत्वम्, स्वीयतादृशप्रकारतानिरूपितबोधनिष्ठविशेष्यतानिरूपितविषयित्वसम्बन्धावच्छिन्नप्रकारतायाः प्रतियोगितानियामकत्वम्, अर्थानुयोगिकत्वे त्वनुपदोक्ताया द्वितीयप्रकारताया अनुयोगित्वस्य प्रथमप्रकारतायाश्च प्रतियोगित्वस्य नियामकत्वम्।

इत्थं च प्रथमाकारायाः परमेश्वरेच्छायाः शब्दार्थसम्बन्धत्वे तदीयाया उक्तविशेष्यतायास्तत्सम्बन्धेन तदिच्छाया वा वाचकत्वस्य तदीयाया उक्तप्रकारतायास्तत्सम्बन्धेन तदिच्छाया वा वाच्यत्वस्य, द्वितीयाकारायास्तस्यास्तत्त्वे तु तदीयाया उक्तप्रकारतायास्तत्सम्बन्धेन तदिच्छाया वा वाचकत्वस्य तदीयाया उक्तविशेष्यतायास्तत्सम्बन्धेन तदिच्छाया वा वाच्यत्वस्य, तृतीयाकारायास्तस्यास्तत्त्वे तु तदीयायाः प्रथमोक्तप्रकारतायास्तत्सम्बन्धेन तदिच्छाया वा वाचकत्वस्य तदीयाया अनन्तरोक्तप्रकारतायास्तत्सम्बन्धेन तदिच्छाया वा वाच्यत्वस्य व्यवस्थापकत्वम्। गगनं न पारिमण्डल्यादित्यादिप्रामाणिकप्रयोगशतानुरोधेन वृत्त्यनियामकस्यापि प्रतियोगितावच्छेदकसम्बन्धताया अवश्यमभ्युपगमनीयतया "पटो न घटपदवाच्यः" इत्यादेश्च नानुपपत्तिगन्धोऽपि।

ईश्वरेच्छायाः शब्दार्थसम्बन्धत्वे तथाविधस्येश्वरज्ञानस्यापि विनिगमनाविरहेण तत्त्वमवश्यमङ्गीकार्यं स्यादित्यतो हेयोऽय पक्ष इति तु न संशयितव्यमधुनातनैर्निर्मितेषु यन्त्रग्रन्थगृहादिषु तदीयाना तादृशेच्छानामेव तत्तन्नामव्यवहार्यत्वनियामकतयाऽनादिपरम्पराप्राप्तशब्दार्थ व्यवहारस्यापीच्छानिर्वाह्यत्वस्वीकारस्यैवौचित्यात् सम्बन्धतावच्छेदकशरीर इच्छात्वादेरप्रवेशेनानुगमस्य सम्भवतया ज्ञानस्यापि तत्त्वोपगमे बाधकाभावाच्च।

अत्र प्रयोज्यप्रयोजकवृद्धव्यवहारं पश्यता बालेन प्रयोज्यस्य प्रवृत्त्या तस्य ज्ञानमनुमाय ज्ञानस्य चोपस्थितत्वाच्छब्दमेव कारणत्वेन गृहीत्वाऽसम्बद्धस्य कारणत्वानुपपत्तिज्ञानपूर्वक कल्प्यमानस्य सम्बन्धस्य स्वयमनुपपद्यमानत्वेन गृहीतजनकत्वघटितस्य ग्रहणमशक्यमिति केषाञ्चित्कथनं न कमनीयम्, तत्तच्छब्दे तत्तदर्थबोधजनकत्वप्रकारकेश्वरेच्छाविषयत्वस्य ग्रहे यदंशे यः प्रकारस्तदशे तद्विपरीतप्रकारकज्ञानस्यैव विरोधितया तस्य च प्रकृतेऽभावेन तद्ग्रहोत्पत्तेर्निरुपद्रवत्वात्। अनुपपद्यमानतया गृहीतायास्तत्तदर्थबोधजनकताया उपपादकत्व तद्घटितस्यानुपपन्न मनुपपद्यमानघटितस्य स्वयमनुपपन्नत्वादित्येषापि शङ्का न शोभना, अन्यत्र तस्याः सम्भवेऽप्यत्रासम्भवात्, ईश्वरेच्छाया नित्यतया विषयानधीनत्वेन तदुपपत्तौ तत्र प्रकारविधया स्फुरन्त्या अर्थबोधकतायाः प्रागनपेक्षणात् तत्प्राक्त्वस्यैवाभावात्, विसवादितायास्तूदीच्ययाऽपि तन्निष्पत्त्या प्रतीघातसम्भवात्। किञ्च वाच्य नित्येच्छाया जनकत्वानपेक्षणे, जन्येच्छाया अपि जनकत्वप्रकारिकायास्तदनपेक्ष्यैव निष्पद्यमानत्वात्। अत एव तदर्थबोधजनकत्वप्रकारकेच्छाविषयत्वस्य तदर्थबोधजनकत्वतन्त्रत्वेन तदर्थबोधजनकत्वस्य तादृशेच्छाविषयत्वतन्त्रताङ्गीकारेऽन्योन्याश्रय इत्युक्तिरपि न प्राप्यास्पदा।

ईश्वरेच्छाया तत्तच्छब्दे तत्तदर्थबोधकत्वप्रकारकत्वस्य तत्तच्छब्दनिष्ठतत्तदर्थबोधकत्वतन्त्रत्व नूनमुपगन्तव्यमन्यथा तदर्थावाचकेऽपि तदर्थबोधजनकत्वप्रकारकत्वस्य तत्रापत्तेः; इत्यप्याशङ्का न सङ्गता, तत्र तस्य निसर्गसिद्धताया एव स्वीकर्तव्यत्वादन्यथा शक्तिभ्रमेण लक्षणया वा तदर्थबोधकेऽपि तस्यास्तदर्थबोधकत्वप्रकारकत्वस्यापरिहार्यत्वापत्तेः।

तत्तदर्थबोधजनकत्वस्य तत्तदर्थबोधजनकत्वभ्रमाप्रयुक्ततत्तदर्थबोधजनकत्वप्रकारकेच्छाविषयत्वव्यापकतया तादृशजनकत्वाभावेन तादृशेच्छाविषयत्वाभावस्य सुग्रहतया तत्तच्छब्दे तत्तदर्थबोधजनकत्वाभावग्रहदशाया तादृशेच्छाविषयत्वग्रहो दुर्घट इत्यपि भणितमभव्यमेव; तत्तच्छब्दे तत्तदर्थबोधजनकत्वाभावग्रहदशाया तत्तच्छब्दे तत्तदर्थसम्बन्धग्रहाकल्पनात्, किन्तु तत्तदर्थसम्बन्धे तत्तदर्थबोधजनकत्वाभावव्यापकाभावप्रतियोगित्वरूपान्यथानुपपत्तिज्ञाने सति तादृशग्रहदशायामेव तत्कल्पनात्।

शब्दस्यार्थबोधकताया ईश्वरेच्छानियम्यता स्वीकृत्य तयोः सम्बन्धान्तरकल्पनाया निरर्थकीकरणे जन्यजनकयोर्बोध्यबोधकयोः सम्बन्ध. क्वापि स्वीकार्यो न स्यात्सर्वत्र "इदमस्माद्भवतु" "अयमनेन साक्षात्कार्यो भवतु", "असावस्मादनुमेयो भवतु" इत्येवमाकारया परमेश्वरेच्छयैव सामञ्जस्यसम्भवादित्यापत्त्युद्भावनमपि न समीचीनम् ; "दण्डादितः कपालयोः कलशो भवतु" इतीच्छायास्तज्ज्ञानस्य च सत्त्वेऽपि तयोरसम्बन्धे कलशस्य, "चक्षुषा घट. साक्षात्कार्यो भवतु" इतीच्छायास्तज्ज्ञानस्य च सत्त्वेऽपि तयोरसन्निकर्षे घटचाक्षुषस्य, "धूमाद्वह्निरनुमेयो भवतु" इतीच्छायास्तज्ज्ञानस्य च सत्त्वेऽपि धूमे वह्नेरव्यभिचाराग्रहे व्यभिचारग्रहे वा वह्न्यनुमितेश्चानुत्पादेन तत्र तत्रापेक्षितसम्बन्धस्य तादृशेच्छया व्यर्थीकरणासम्भवात् । शाब्दस्थले तु शब्दार्थयोर्न कश्चित्सम्बन्ध एतादृशोऽनुभवसिद्धो यस्य यज्ज्ञानस्य वाऽभावे "अमुकशब्दादमुकोऽर्थो बोद्धव्यः" इतीश्वरेच्छागोचरज्ञानसत्त्वेऽप्यर्थबोधो न समुन्मिषेत् ।

सम्बन्धस्य सम्बन्धिभिन्नत्वविशिष्टद्विष्ठतानियमेन शब्दार्थयोरविद्यमानाया ईश्वरेच्छायास्तयोः सम्बन्धत्व न सङ्गच्छत इत्यपि वचन नोचितम् ; "यो यः सम्बन्धः स वस्तुविशिष्टः, वैशिष्ट्य च स्वभिन्नत्व-स्ववृत्तित्व-स्वप्रतियोगिकत्व-स्वभिन्नवस्तुमत्त्वैः । स्वभिन्नवस्तुमत्ता च स्वभिन्नत्व-स्ववृत्तित्व-स्वानुयोगिकत्वैः" इत्येतद्रूपे पर्यवसन्नस्योक्तनियमस्येश्वरेच्छाया विषयतया शब्दार्थनिष्ठत्वोपगमेन निर्वाहात् । सयोगमात्रस्य विस्पष्टद्विष्ठताया दर्शनेन केवलतत्सादृश्यसरक्षणानुरोधात् स्वत्व स्वामित्व-जन्यत्व जनकत्व स्वरूप-तादात्म्य-कालिक-दैशिक-प्रकारता विशेष्यता-ससर्गताऽऽधेयताऽऽधारता-प्रतियोगिताऽनुयोगिता-निरूपितत्व-निरूपकत्वादीनामनेकेषा सम्बन्धतोपेक्षाया अनौचित्यात् सामान्यस्य ज्ञानस्य चेन्द्रियसन्निकर्षत्ववादिभिः सम्बन्धस्य निरुक्तद्विष्ठतानियमस्य नितरामेव हेयत्वाच्च ।

"विशिष्टबुद्धिनियामकः सम्बन्धः" इति नियमोऽपि नात्र बाधकतया सम्भाव्यः, "घटशब्दो घटीयः, घटो घटशब्दीयः" इत्यादिविशिष्टबुद्धीनामीश्वरेच्छात्मकसम्बन्धनियम्यतोपगमात् । एतादृशी विशिष्टबुद्धिर्नानुभवसिद्धेति तु न शङ्कनीयम् ; सम्बन्धान्तरवादिनाप्येतादृश्या एव विशिष्टबुद्धेरङ्गीकार्यत्वात्, "घटशब्दो घटवान्, घटो घटशब्दवान्" इत्याद्याकारायास्तस्याः केनापि सम्बन्धेन स्वाभाविकीत्वस्योपपादनासम्भवात् ।

प्रमाणाना जनकत्वतद्घटितसम्बन्धातिरिक्तसम्बन्धेनैव प्रमेयसम्बद्धाना ज्ञानजनकत्वदर्शनेन शब्दार्थयोरपि तादृश एव सम्बन्धो युक्त इत्यपि न वाच्यम्; प्राचीनैश्चक्षुरादिनिष्ठलौकिकचाक्षुषजनकतावच्छेदकसन्निकर्षविशिष्टविशेष्यकचक्षुरादिजन्यज्ञानप्रकारतापन्नधूमत्वादिरूपेण जनकता-

घटितसम्बन्धेन चक्षुरादेर्धूमादिग्राहकत्वस्वीकारात्, प्रकारतादीन् स्वरूपेऽन्तर्भाव्य सम्बन्धत्वे द्रव्याद्यन्यतमत्वनैयत्यं चाभ्युपेत्य शब्दार्थयोः पदार्थान्तरात्मकसम्बन्धकल्पनाया अपि कण्टकाकीर्णीकरणसम्भवाच्च।

गङ्गाया घोष इत्यादौ गङ्गादिपदेन तीरादेर्बोधात्तदौपयिकज्ञानगोचरीभूतो गङ्गादिपद-तीराद्यर्थयोरपि सम्बन्धोऽवश्यं स्वीकार्यः। स च न शक्तिः, तीरादौ गङ्गादिपदप्रयोगाप्राचुर्यात्। किन्तु सामीप्यादिरूपः शक्यसम्बन्ध एव। अप्रसिद्धा शक्तिरेव लक्षणेति तु न शोभनम्; लाक्षणिक-शब्देषु लक्ष्यार्थशक्तेस्तज्ज्ञानस्य कारणतायाश्च कल्पने गौरवात्, शक्यसम्बन्धस्य लक्षणात्वे तु स्वरूपतस्तस्य क्लृप्ततया तज्ज्ञाने कारणत्वमात्रस्य कल्पनीयतया लाघवात्। तल्लक्षणं तु शक्ति-ग्रहाजन्यशाब्दज्ञानौपयिकशब्दार्थसम्बन्धत्वम्।

लक्षणा च स्वारसिकी निरूढा चेति द्विविधा। तत्राधुनिकतात्पर्यविषयार्थनिष्ठा स्वारसिकी, अनादितात्पर्यविषयार्थनिष्ठा च निरूढेति विवेकः। द्विरेफादिशब्दस्य भ्रमरादौ स्ववाच्यरेफद्वय-घटितपदवाच्यत्वरूपा लक्षितलक्षणापि निरूढायामन्तर्भवन्ती न पृथग्गणनार्हा। उक्तयोराद्या जहत्स्वार्थाऽजहत्स्वार्था चेति द्विविधा, अन्तिमा तु प्रायो जहत्स्वार्थैव। आलङ्कारिकास्तु स्वारसिकीं प्रयोजनवतीसञ्ज्ञया व्यपदिश्य तस्याः—गौणी शुद्धेति, गौण्याश्च—सारोपा साध्यवसानेति, शुद्धायाश्च—जहत्स्वार्थाऽजहत्स्वार्था सारोपा साध्यवसाना चेति भेदं वर्णयन्ति। वेदान्तिनश्च शुद्धाभेदेषु जहदजहत्स्वार्थां भागत्यागापरनाम्नीमामनन्ति। तत्सर्वं तैः स्वस्वाभिमतप्रयोजना-नुरोधादुपगम्यत इति नात्र तत्तन्मतानामौचित्यानौचित्यचर्चाऽऽचर्यते।

आलङ्कारिकाः शक्तिलक्षणातो व्यतिरिक्तां व्यञ्जनामपि शब्दार्थसम्बन्धतया गणयन्ति, गङ्गाया घोष इत्यादौ गङ्गादिपदेन तीरादिबोधोत्तरमनुभवसिद्धस्य तीरे शैत्यपावनत्वप्रत्ययस्य प्रकारान्तरेण दुरुपपादत्वात्। परं न्यायनये व्यञ्जनात्मकः सम्बन्धो नावश्यककल्पनाकः, तदुपपादनीयतयाऽभिमतानां प्रतीतीनां क्वचिल्लक्षणया क्वचिल्लिङ्गेन क्वचिच्च ज्ञानलक्षण-सन्निकर्षसम्पन्नेन मनसा चोपपादनसम्भवादिति कृतं विस्तरेण॥

# शाब्दिकमते शब्दशक्तिस्वरूपम्

श्रीभूपनारायणझा, राजकीयसंस्कृतमहाविद्यालयः, काशी ।

सामान्येन शक्तिर्द्वेधा—सहजा शक्तिराधेया च । सहजा नाम स्वाभाविकी । यथा वह्नेर्दाहानुकूला, विहङ्गमानामुड्डयनानुकूला च शक्तिः । आधेया नाम कृत्रिमा । यथा प्रस्तरादौ प्रतिष्ठापनया शैवी वैष्णवी च शक्तिः ।

तयोः शब्दशक्तिः सहजास्वेव शक्तिष्वन्तर्भवति । शाब्दिकसमये शब्दाना बौद्धविधयाऽर्थाना च नित्यत्वेन तदुभयसम्बन्धरूपायास्तस्या अपि तत्त्वस्यैवौचित्यात् । नैयायिकनये कामं शब्दानामर्थाना च मा भून्नित्यत्वम्, परमीश्वरेच्छारूपतया तस्यास्तत्त्वमेवावकल्पते ।

एवं च शब्दशक्तेः सहजात्वेन वह्न्यादिशक्तिभिः साम्यम् । परमियं ज्ञायमानतयैवोपयुज्यते, वह्न्यादिशक्तिस्तु स्वरूपसत्तयैवेति वैषम्यमपि ।

सेयं शक्तिस्तार्किकैः प्रतिनियतधर्मावच्छिन्नविषताकबोधजनकतात्वावच्छिन्नप्रकारतानिरूपितप्रतिनियतपदत्वावच्छिन्नविशेष्यताशालिनीश्वरेच्छारूपैवाऽमानि । यथा घटपदे घटत्वावच्छिन्नविषयताकबोधजनकतात्वावच्छिन्नप्रकारतानिरूपितघटपदत्वावच्छिन्नविशेष्यताशालिनी घटपदं घटत्वविशिष्टं बोधयत्विति वाक्याभिलप्यमानेश्वरेच्छा । तस्याश्च स्वविशेष्यतासम्बन्धेन घटपदे, स्वविषयबोधविषयत्वनिष्ठविशेष्यतानिरूपितप्रकारतासम्बन्धेन घटव्यक्तौ, तादृशप्रकारतावच्छेदकतासम्बन्धेन घटत्वजातौ, तादृशप्रकारतावच्छेदकतावच्छेदकतासम्बन्धेन समवाये च सत्त्वेन यथाक्रमं वाचकत्वं वाच्यत्वं वाच्यतावच्छेदकत्व वाच्यतावच्छेदकतावच्छेदकसंसर्गत्वं च व्यवतिष्ठते ।

सा चैकादशे दिवसे पित्रादिसङ्केतितेषु चैत्रादिनामधेयेष्वपि वर्तत एव, "एकादशेऽहनि पिता नाम कुर्यात्" इति श्रुत्या जन्मदिवसानन्तरैकादशदिवसकालिकपित्राद्युच्चारणकर्मत्वरूपेणेश्वरेच्छायास्तत्रापि बोधनात् । आधुनिकसङ्केतितेषु नदीवृद्ध्यादिपदेषु तु सा नास्त्येव मानाभावादिति प्राचीननैयायिकाः ।

नव्यनैयायिकास्तु नदीवृद्ध्यादिपदैरप्यर्थबोधमनुरुध्येश्वरेच्छायाः शक्तित्वमिच्छात्वेनैवाभ्युपयन्ति । तथा च पाणिन्यादीच्छाया अपि शक्तित्वेन तादृशैरपि पदैरर्थबोधमुपपादयन्ति ।

वैयाकरणभूषणकारस्तु चक्षुरादीन्द्रियाणां स्वप्रतिनियतविषयग्राहकत्वमिव शब्दानां यदनादिभूतं स्वप्रतिनियतार्थबोधकत्वं तदेव शक्तिमङ्गीचकार। एवं च तन्नये घटपदं घटत्वावच्छिन्नविषयकबोधजनकत्वेन ज्ञायमानं तदवच्छिन्नविषयकबोधं जनयति।

सौगतास्तु शब्दानामर्थैः सह तादात्म्यमेव शक्तिमूरीकृत्य यस्य शब्दस्य येनार्थेन सह तादात्म्यं तेन तद्बोधं व्यवस्थापयन्ति।

अत्रोच्यते—न तावत्तार्किकाभ्युपेतं शक्तिस्वरूपमुपपद्यते, शक्तिग्राहकशिरोमणिना प्रयोज्यप्रयोजकवृद्धव्यवहारेण तस्या दुर्ग्रहत्वात्। तथा हि–प्रयोजक-(प्रवर्तक)वृद्धोदीरितं घटमानयेति वाक्यमाकर्ण्य घटमानयन्तं प्रयोज्य-(प्रवर्त्य)वृद्धमवेक्षमाणो बालको घटानयनं प्रवृत्तिजन्यं चेष्टात्वाद् मदीयस्तन्यपानादिचेष्टावदित्यनुमानेन प्रयोज्यवृद्धस्य घटानयनानुकूलं प्रवृत्तिमनुमाय, सा प्रवृत्तिर्घटकर्मकानयनधर्मिककार्यताज्ञानजन्या प्रवृत्तित्वाद् मदीयप्रवृत्तिवदित्यनुमानेन घटकर्मकानयनधर्मिककार्यताज्ञानं प्रयोज्यवृद्धस्यानुमाय, तच्च कार्यताज्ञानं घटमानयेति वाक्यजन्यं तदन्वयव्यतिरेकानुविधायित्वादित्यनुमानेन तत्र वाक्ये तादृशज्ञानजनकत्वमनुमिनोति। अनन्तरं चावापोद्वापगृहीतान्वयव्यतिरेकाभ्यां पदेष्वपि पदार्थबोधजनकत्वमवगम्य तत्तद्विषयासन्निकृष्टानामिन्द्रियाणां तत्तद्विषयकप्रत्यक्षजनकत्वस्येवार्थासम्बद्धानां पदानामर्थबोधजनकत्वस्यानुपपत्त्या तदुपपादकत्वेनार्थपदयोः शक्तिरूपमेवासौ सम्बन्धं कल्पयति।

सा च शक्तिरनुपपद्यमानत्वेन ज्ञायमानार्थबोधजनकत्वघटिता स्वयमसिद्धन्यायेन नार्थबोधजनकत्वमुपपादयितुमीष्टे, आत्माश्रयात्। नतरां च तदुपपादकविधया कल्पनामर्हतीति व्यवहारस्य शक्तिग्राहकत्वोच्छेदापत्तिः।

किञ्च, प्रतियोग्यनुयोगिभ्यां व्यतिरिक्तत्वे सति तदुभयवृत्तित्वे सति तयोर्विशिष्टबुद्धिनियामकत्वरूपं सम्बन्धत्वमपि तस्या नोपपद्यते, समवायेनात्मवर्तिन्या इच्छाया अर्थशब्दरूपप्रतियोग्यनुयोगिवृत्तित्वाभावात्, तन्निरूपितविषयतासम्बन्धस्य वृत्त्यनियामकत्वेन तेनापि तदुभयवृत्तित्वस्य दुरुपपादत्वाच्च। अत एव इच्छाविषयेऽपि घटे 'इच्छावान् घटः' इति प्रतीतिर्न कस्यचिदुन्मिषति।

अथ विषयताया आश्रयतानियामकत्वमकामैरपि वैयाकरणैरङ्गीकरणीयमेव। अन्यथा औपश्लेषिकाभिव्यापकवैषयिकभेदैस्त्रिविधेष्वाधारेषु वैषयिकाधारगणनमनुपपन्नम्, विषयतासम्बन्धावच्छिन्नाधेयतानिरूपिताधारताया एव वैषयिकाधारतात्वात्। अत एव मोक्षे इच्छाऽस्तीत्यत्र सप्तमी सिद्ध्यति। तदेव च वाक्यं मोक्षेच्छयोस्तादृशमाधाराधेयभावमप्यभिलपति। एवं च

तुल्यवित्तिवेद्यन्यायेन मोक्ष इच्छावानिति प्रतीतिरपि वैयाकरणैरुररीकरणीयैव, एव घटो ज्ञानवानिति प्रतीतिरपि । तथा च पदेऽपीच्छावत्त्वप्रतीतिः किं न भवेदिति चेत्, एवमपि मुख्यविशेष्यता-सम्बन्धस्य पदे पदमुख्यविशेष्यकेच्छाश्रयतानियामकत्वसम्भवेऽपि स्वविषयबोधविषयत्वनिष्ठ-विशेष्यतानिरूपितप्रकारतासम्बन्धेनार्थे तादृशेच्छाश्रयत्वप्रतीतेरनुपपत्तिरेव, रसो रूपवानिति प्रतीतेः प्रमात्वापत्तिवारणाय परम्परासम्बन्धस्याश्रयतानियामकत्वानभ्युपगमात् ।

किञ्च, विनिगमनाविरहेणोक्तपदविशेष्यकेश्वरेच्छायाः, अस्मात्पदादयमर्थो बोद्धव्य इत्यर्थ-विशेष्यकेश्वरेच्छाया वा, अस्मात्पदादेतदर्थबोधो भवत्विति बोधविशेष्यकेश्वरेच्छाया वा, एतदर्थ-निष्ठविषयतैतत्पदजन्यबोधनिरूपिता भवत्वित्यर्थनिष्ठविषयताविशेष्यकेश्वरेच्छाया वा, तादृगीश्वर ज्ञप्तेर्वा, तादृगीश्वरीयकृतेर्वा शक्तित्वमिति निर्णेतुमशक्यम् । सर्वासामपि तासा तत्त्वे तु महद्गौरवम् ।

किञ्चैव घटजनकत्वप्रकारकेश्वरेच्छाविशेष्यत्वरूपमेव दण्डे घटजनकत्व स्यादेव-मन्यस्याप्यन्यजनकत्वमिति लोकतन्त्रप्रसिद्ध तद्व्यतिरिक्त कारणत्वमप्युच्छिद्यताम् । ननु दण्डस्य घटोत्पत्त्यधिकरणे घटोत्पत्तिपूर्वक्षणावच्छिन्नस्वरूपसत्तयैव घटजनकत्वमिति तदनुसारमन्यथैतन्नि-रुच्यते, पदाना तु स्वज्ञानपुरस्कारेणैवार्थबोधजनकत्वमिति तदीया शक्तिरीदृगुच्यत इति चे-देवमपि धूमज्ञानजन्योत्पत्तिकत्वप्रकारकेश्वरेच्छाविषयज्ञानविषयत्वस्यैव धूमस्य वह्निना व्याप्ति-स्थानीयसम्बन्धस्य सम्भवेन विलीयेत व्याप्तिरपि वराकीति महाननर्थ आपतेद्व्याप्तिमुपजीवता तत्र भवता नैयायिकानाम् ।

किञ्च, "प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि" इति सूत्रे भगवदक्षपादोपक्षिप्तप्रमाण-चतुष्टयान्तःपातिनः शब्दप्रमाणस्यापि प्रमाणान्तरवदेव प्रमेयसम्बन्ध आस्थेयः, असम्बद्धप्रमेय-विषयकप्रमाकरणत्वस्याव्यवस्थापत्तिग्रस्तत्वात् । प्रमाणान्तराणा च प्रमेयविषयबोधजनकत्व-तद्घटितान्य एव प्रमेयसम्बन्ध इति शब्दप्रमाणस्यापि- तादृशेनैव प्रमेयसम्बन्धेन भाव्यं नान्या-दृशेन । तस्मादीश्वरेच्छायाः स्वरूपतः कार्यसामान्य प्रति कारणतायाः क्लृप्ततया काममस्तु पदैरर्थ-बोधरूपं कार्यं प्रत्यपि कारणता, पर शब्दशक्तिविधया कारणत्व न सम्भवत्येवेत्यवधेयम् ।

भूषणकारवैयाकरणोक्ता बोधजनकत्वरूपा शक्तिरपि नोपपद्यते, दर्शितदिशा शब्दनिष्ठार्थ-बोधजनकत्वानुपपत्तिज्ञानेन कल्प्यमानायाः शक्तेरर्थबोधजनकत्वरूपत्वासम्भवात् । नहि स्वेनैव स्वमुपपादयितु शक्यते, आत्माश्रयग्रस्तत्वात् ।

किञ्च, अर्थबोधजनकत्वस्य शब्दवृत्तित्वेऽप्यर्थवृत्तित्वाभावेन प्रतियोग्यनुयोगिवृत्तित्वघटित शब्दार्थसम्बन्धत्वमपि नावकल्पते । विषयविधयाऽर्थस्यापि स्वबोधजनकत्वमिति चेत्; एवमप्यर्थ-

शब्दयोर्विशिष्टबुद्ध्यनुपपत्तिः, दण्डकुलालयोर्घटजनकत्वेऽपि तेन सम्बन्धेन दण्डवान् घट इति विशिष्टबुद्ध्यनुदयात्। सयोगसम्बन्धेनैव तदुदयाच्च।

सौगताभ्युपगतमर्थशब्दयोस्तादात्म्यस्यापि शक्तिरूपत्वं नोपपद्यते। तादात्म्य हि तद्भिन्नत्वे सति तदभेदप्रकारकारोपविशेष्यत्वरूप वाच्यम्। इतरथा कृपाणपदोच्चारणे वदनविदारणापत्तिः, मधुशब्दोच्चारणे मुखे मधुरिमापत्तिश्च।

एवं च तद्घटकभेदस्य किमुताभेदस्य शब्दार्थसम्बन्धत्वमास्थीयते तैः? नाद्यस्य, तस्य सम्बन्धतायाः क्वचिदप्यदृष्टत्वात्। नान्त्यस्य, तस्यानुयोगिप्रतियोगिव्यतिरिक्तत्वाभावेन सम्बन्धत्वायोगात्।

स्वसामानाधिकरण्यस्वप्रतियोगिवृत्तित्वोभयसम्बन्धेन भेदविशिष्टान्यत्वेन नैयायिकैर्निरुच्यमानस्य तस्य प्रतियोग्यनुयोगिवृत्तितद्व्यक्तित्वरूपासाधारणधर्मरूपतया प्रतियोग्यनुयोगिव्यतिरिक्तत्वेन तत्त्वमुपपन्नमिति चेत्, तथापि तस्य संसर्गत्वे नीलो घट इत्यत्रापि नीलशब्दात् षष्ठ्यापत्तिः। कृत्तद्धितसमासेभ्यः सम्बन्धाभिधानं भावप्रत्ययेनेति व्युत्पत्त्यनुसार राजपौरुष्यमित्यादौ राजपुरुषयोः स्वस्वामिभावादिसम्बन्धस्येव नीलघटत्वमित्यत्र घटे नीलाभेदसम्बन्धस्याभिधानापत्तिश्चेत्यकामेनापि तस्य संसर्गत्वाभाव एष्टव्यः।

राहोः शिर इत्यादावप्यवयवावयविभावसम्बन्ध एव षष्ठी, दिवसात्मककालावच्छिन्नस्य शिरसो राहुपदबोध्यतया घटिकात्मककालावच्छिन्नस्य तु तस्य शिरःपदबोध्यतया औपाधिकावयवावयविभावस्य तत्रापि सूपपादत्वात्। एतेन तत्र षष्ठ्यर्थमभेदस्य संसर्गत्वाभ्युपगमोऽपास्तः। तथा सति तत्रैव नीलो घट इत्यत्रापि षष्ठ्यापत्तेश्च।

कस्तर्हि नीलो घट इत्यत्र नीलत्वावच्छिन्नप्रकारतावच्छेदकः संसर्ग इति चेत्, तादृशवाक्यनिष्ठशक्तिभास्यः सम्बन्धानवच्छिन्नविशेष्यविशेषणभाव एवेत्यवेहि। विशेष्यविशेषणभावस्य च वाक्यसामान्यशक्यतया प्रथमान्तेतरप्रकारताप्रयोजकपदघटितवाक्यजन्यबोधे स्वस्वामिभावादिसम्बन्धावच्छिन्नस्य तस्य संसर्गता, प्रथमान्तप्रकारताप्रयोजकपदघटितवाक्यजन्यबोधे तु सम्बन्धानवच्छिन्नस्य व्यवस्थोपपत्तिः। एवं च विशेष्यविशेषणभावसंसर्गस्य वाक्यार्थतया घटघटत्वादिपदार्थपदार्थतावच्छेदकयोः समवायसंसर्गस्येव शेषपदार्थत्वाभावेन नापद्यते षष्ठ्यपीति सर्वमुपपद्यते।

ननु ज्ञानीयविषयताविशेषयोर्विशेषणताविशेष्यतयोर्ज्ञाननिरूप्यतया ज्ञानात् प्रागप्राप्ततया ज्ञानीयविषयताप्रयोजकत्व कथमिति चेन्न, ज्ञानीयप्रकारताविशेष्यताभ्यामनयोर्वैलक्षण्यात्

तथा हि—विशेषणत्व नाम तदधीनस्थितिकत्वम् । विशेष्यत्व च तत्स्थितिनियामकत्वम् । यथा नीलो घट इत्यत्र गुणद्रव्ययोः । एव चास्य विशेष्यविशेषणभावस्य ज्ञानानपेक्षवस्तुधर्मतया ज्ञानीयविषयतावच्छेदकत्वं निर्बाधम् । राज्ञ. पुरुष इत्यादौ तु राज्ञः स्वरूपतो न पुरुषाधीनस्थितिकत्वम्, किन्तु स्वामित्वेनैव । एव पुरुषस्य न स्वरूपतो राजस्थितिनियामकत्वमपि तु स्वत्वेनैवेति तयोर्विशेष्यविशेषणभावस्य स्वस्वामिभावप्रयोज्यतया स्वस्वामिभावसम्बन्धावच्छिन्नत्वमुपपद्यते । एव चेदृशविशेष्यविशेषणभावप्रयोजकसम्बन्ध एव षष्ठी प्रवर्तते । गुणादीना द्रव्येण सह तु स्वरूपत एव विशेष्यविशेषणभाव इति तत्प्रयोजकतया कस्यचित् सम्बन्धस्य कल्पनाया मानाभावेन न तत्र षष्ठीत्यलम् ।

भूतले घटो नास्तीति प्रत्यक्षे भूतले घटाभावभाननियामकसन्निकर्षविषयेदृशविशेष्यविशेषणभावस्य नैयायिकैरप्यङ्गीकारेण नास्माकमक्लृप्तकल्पनाप्यापद्यते । पदार्थयोस्तादृशविशेष्यविशेषणभावभानप्रयोजको वाक्यशक्तिग्रहः, पदार्थपदार्थतावच्छेदकयोस्तद्भाननियामकस्तु घटपदं घटत्वनिष्ठविशेषणतानिरूपितविशेष्यत्वावच्छिन्ने शक्तमिति पदशक्तिग्रहः, प्रत्यक्षे तद्भाननियामकस्तु स्वरूपविशेष एवाभ्युपेयते ।

तादृशविशेष्यविशेषणभावस्य ज्ञाने भानादेवानुव्यवसायेऽपि सर्वानुभवसाक्षिकं भानमुपपद्यते । व्यवसायेऽभातवस्तुनोऽनुव्यवसाये भानायोगात् । अत एव च तदुत्तर मनागपि तत्संशयो नोन्मिषति ।

तस्मान्मीमासकदिशा वाच्यवाचकभावाख्य पदार्थान्तरमेव शब्दशक्तिपदेऽभिषेकमर्हति । तद्विरहे चेतरेतराध्याससिद्धं शब्दार्थयोस्तादात्म्यमेव सङ्केतात्मनोपयुज्यते । इत्यलम् ॥

---

# विविधम्

## शून्य-निःस्वभाव-निरालम्बशब्दार्थविचारः

भारतीयदर्शनं परस्परमादानप्रदानाभ्यां प्रचयमुपगच्छद्यथा नवनवप्रस्थानानि प्राकाशयत्तथैव सम्प्रदायभेदाद् ग्रन्थलोपात् स्वगुरुपरम्परायातमिथ्याज्ञानगौरवाद्वा तत्त्वार्थमहत्त्वमनपेक्ष्य परस्परं धूलिप्रक्षेपेणाऽशास्त्रार्थवैपुल्यमपि व्यदधात्। शास्त्रार्थविपर्ययेणानेन न केवलं तत्त्वार्थचिन्तनमेव प्रहीणमभवत्, अपि तु भारतीयदर्शनेषु नूतनतत्त्वानामाचयनमप्यस्तमिवागात्। एतज्ज्ञानविप्लवं दूरीकर्तुमधुना विद्वद्भिः स सकलः पूर्वपक्षभूतः शास्त्रार्थः पुनस्तत्प्रस्थानानुरोधिसम्प्रदायग्रन्थैः परिष्करणीयः, येन प्राचीनाभिमतानि तत्त्वजातानि सम्यग् विज्ञाय भारतीयदर्शनेषु प्रमाणप्रमेययोर्नवीनमालोचनं पुनः प्रभवेत्।

### शून्यता

नाविदितं मनीषिणां यन्न्यायवेदान्तादिमूर्धन्यदर्शनानां विकासो विस्तारो वा बौद्धदार्शनिकानां प्रतिवादितयैवाभवत्। परं चैतेषु वादिप्रतिवादिदर्शनेषु स्वस्वमतव्यवस्थापनायाचार्यैर्व्याख्यातृभिश्च तदनुकूलं पूर्वपक्षं प्रकल्प्य यो हि परकीयशास्त्रविपरीतोऽर्थः प्रख्यापितः स सर्वोऽपि साक्षात्परम्परया वा तत्त्वार्थाधिगमविरुद्ध एव। माध्यमिकानां शून्यवादमधिकृत्य परैर्ये विकल्पाः कृतास्ते प्रायशः शून्यतत्त्वानाकलनमूला एव। भारतीयदर्शनेषु वेदान्तस्य तत्राप्यद्वैतवादस्य प्रामुख्यमित्यत्र नास्ति प्रायशो विमतिः, नापि च शून्याद्वयवादस्तदुपजीवकस्य शाङ्कराद्वैतवादस्य पूर्वभूमिरित्यत्र। यद्यपि ब्रह्मतत्त्वस्य निर्विकल्पकत्वं प्रपञ्चस्य च मायिकत्वमन्तरा निःस्वभावाजातवादयोस्तत्त्वज्ञानं न बुद्धिपथमारोहति तथापि महर्षिवात्स्यायनकुमारिलभगवत्पादशङ्कराचार्या अपि पामरैराख्यातोऽभावाऽसदलीकनिषेधापरपर्याय एव शून्यशब्द इति स्वीकृत्य शून्यतत्त्वं खण्डयन्तीति चित्रम्।

"न स्वभावसिद्धेर्भावानाम्" [न्याय० ४।१।३८] इति सूत्रस्य व्याख्यानं कुर्वता महर्षिणा वात्स्यायनेन—"सोऽयमभावस्य निरुपाख्यत्वात् सम्प्रत्यायकोऽर्थभेदो न स्यात्। अस्ति त्वयम्। तस्मान्न सर्वमभाव इति" इति यदुक्तं तद्वाचस्पतिना तात्पर्यटीकायाम्—"कुतोऽत्यन्ताऽसतः कल्पनागोचरत्वमपि" [ ४।१।३७ ] इत्याद्युक्त्या सुदृढीकृतम्। भट्टपादैः श्लोकवार्त्तिके शून्यवादखण्डनावसरे—"अपोहो ह्यभावस्य कथञ्चिदुपपद्यते", "कल्पितं स्यादपोह्यं चेन्नात्यन्ता-

सत्यकल्पना", "भावो न गृह्यते येन तस्याभावेषु का कथा", "इति बहिर्विषयप्रतिपादनात्तद्भावकृता मतिसवृत्तिः" इत्यादिभिर्न शून्यवादे प्रमाणप्रमेयभावसिद्धिरिति सिद्धान्तितम्। भगवत्पादैश्च शून्यवादिपक्षे प्रमाणप्रमेयभाव सर्वथाऽसहमानैः "क्षणिकत्वाच्च" [ ब्र०सू०२।२ ३१ ] इति सूत्रव्याख्याने—"शून्यवादिपक्षस्तु सर्वप्रमाणविप्रतिषिद्धः" इत्युक्त्वा तन्निराकरणायाप्यादरो न क्रियते। अत्र च भामत्या वाचस्पतिमिश्रमहाभागाः—"विचारासहत्व वस्तूना तत्त्व व्यवस्थापयद्बाधकमतात्त्विकत्वं प्रमाणाना दर्शयति" इति बौद्धपक्ष स्वीकृत्यापि, "आरोपित निषेधनीयम्। आरोपश्च तत्त्वाधिष्ठानो दृष्ट." इति प्रख्यातयुक्त्या शून्यवादं खण्डयन्ति। पर च सर्व एवैतादृशा वादा अनाकलितशून्यतत्त्वानामिति शून्यवादिना ग्रन्थालोचनेनानायासेनैव प्रतीयते। तदिह स्तोक प्रतन्यते।

माध्यमिकत्व खल्वस्तिनास्तिदृष्ट्योः परिहाणम्। शाश्वतवादिना वेदान्तिप्रभृतीनामस्तिदृष्टिरित्येकोऽन्त', उच्छेदवादिना चार्वाकादीना नास्तिदृष्टिरित्यपरोऽन्तः। एतावुभावपि विकल्पप्रत्ययौ। अतस्तौ विहाय मध्ये तत्त्वं स्फुरतीति मध्यमागमाध्येतृत्वेनैतेषु माध्यमिकत्व निष्पद्यते। उक्त च समाधिराजसूत्रे—"मध्ये हि स्थान प्रकरोति पण्डितः" इति। अत एव संसारस्य निर्वाणस्य चापि द्वे कोटी स्तः, तयोरन्तरा एव किञ्चित् सुसूक्ष्म परमार्थतत्त्व जृम्भते। तदुक्तं निर्वाणपरीक्षायामाचार्यनागार्जुनेन—"विद्यादनन्तर किञ्चित् सुसूक्ष्मं विद्यते" इति। समाधिराजे चाग्रे उक्तम्—"अस्तीति नास्तीति उभेऽपि मिथ्या" इति। एतद्धि तत्त्वं न सत्, नाऽसत्, न सदसत्, नानुभयात्मकमिति कृत्वा चतुष्कोटिविनिर्मुक्तं परिपश्यन्तः शून्येत्याख्यया संबोधयन्ति शून्यवादिनः। भावमपेक्ष्यैव यतोऽभावो भवति भावश्च प्रतिषिद्ध्यते, अतः शून्य कथमप्यभावपर्यवसन्न न भवति। एतदेवाभिलक्ष्योक्तमाचार्यचन्द्रकीर्तिना—"भावाभावदर्शनद्वयप्रसङ्गो यावत्तावत्ससार इत्यवेत्य मुमुक्षुभिरेतद्दर्शनद्वयनिरासेन सद्भिर्मध्यमाप्रतिपद्भावनीया" [मा० वृ०–पृ० २७६] इति। एव च सहस्रशो माध्यमिकवचनैर्माध्यमिकत्वसिद्ध्येऽभावदृष्टेः प्रतिषेधः करणीय इति सिद्ध्यति।

एतेषा माध्यमिकत्वमनवधार्यैव परैरसत्त्वारोपोऽपि कृतः। लङ्कावतारे त्वसद्दृष्ट्यपेक्षया पुद्गलदृष्टिरेव श्रेयसीति शून्यवादिनामाग्रहो दृश्यते—"वर खलु सुमेरुमात्रा पुद्गलदृष्टिर्न त्वेव नास्त्यस्तित्वाभिमानिकस्य शून्यतादृष्टिः" [ पृ० १४६ ] इति। आचार्यनागार्जुनेन च विग्रहव्यावर्त्तन्या सत्सु सर्वभावेषु शून्येषु, अविद्यमाने प्रतिषेध्ये, न माध्यमिकेषु प्रतिषेधवादित्वारोपः समीचीन इत्यभिप्रेत्योक्तम्—"प्रतिषेधयामि नाहं किञ्चित्, प्रतिषेध्यमस्ति न च किञ्चित्" [ का० ६४ ] इति। प्रपञ्च निरस्याद्वैतनिर्वाणावद्योतनायैव माध्यमिकानामस्तिनास्तिकोटिनिरासे

तत्त्वप्रकाशाय सर्वग्राह्याभिनिवेशाना निषेधमात्रम् । तस्या अपि सांवृतिकत्वात् परिहाणमेवेष्टम् । उक्त हि नागार्जुनेन—"येषा तु शून्यतादृष्टिस्तानसाध्यान् बभाषिरे" [ मा० का० २५।२४ ] तथा—"शून्यमिति न वक्तव्यमशून्यमिति नो भवेत्। उभय नोभयं चेति प्रज्ञप्त्यर्थं तु कथ्यते॥" [ मा० का० २२।११ ] इति । एवमेवान्यानात्मवादिनामिव माध्यमिकाना नयेऽनात्मदृष्टिर्न प्रसक्ता भवति। उक्तं च—"बुद्धैरात्मा न चानात्मा कश्चिदित्यपि देशितम्" [मा० का० १८।६] इति । अय हि नि.स्वभाववादो भावाना निःस्वभावत्व प्रतिपादयन्नपि प्रमाणप्रमेयाद्यभावं न सहते। उक्त ह्याचार्यचन्द्रकीर्तिना—"न कर्मकर्तृफलादिक नास्तीति ब्रूमः। किन्तर्हि निःस्वभाव-मेतदिति व्यवस्थापयामः" [ मा० वृ०–पृ० ३२९ ] । एव माध्यमिकनये निर्विकल्पतत्त्वपरया एतया निःस्वभावदेशनया जगतः सांवृतिकसत्यत्व तत्त्वस्य पारमार्थिकसत्यत्वं च सिद्ध्यति । तस्यालीकत्वमसत्त्वं च दूरेऽपास्तम् ।

## निरालम्बता

शून्यनिःस्वभावशब्दार्थवद् निरालम्बशब्दार्थेऽपि परेषा भ्रमो दृश्यते । ते हि माध्यमिकाना प्रत्ययेषु निरालम्बनत्वाभ्युपगमात् सर्वालीकत्व प्रतियन्ति । पर चाय बौद्धाना निरालम्बनतावादो निष्ठाया परमार्थतत्त्वे विश्राम्यति । अनेनैव निरालम्बबोधेन तत्त्वस्याद्वयीकरणम्, बुद्धेश्च निरा-धारायाः प्रशमः, प्रपञ्चस्याजातत्वम्, मुक्तिः, महाकरुणालाभश्चेत्यादि सर्व संपद्यते । उक्त हि भवसङ्क्रान्तिसूत्रे—"अनाधारमिद सर्वम्" इति । न केवल बुद्धिरेव निरालम्बाऽपि तु बुद्धः, निर्वाणम्, बुद्धवचन सर्व चैतन्निरालम्बमेव । अत एवाऽवाङ्मनसगोचरमेतत्तत्त्वमिति बुद्धानामपि देशनानर्हता प्रतिपादयताऽऽचार्यासङ्गेनोक्तम्—"बुद्धो नैव च देशितो भगवता प्रत्यात्मवेद्यो यतः" [महा० सूत्रा० १२।२] इति। अपि च—"अनक्षरस्य धर्मस्य श्रुतिः का देशना च का । श्रूयते देश्यते चापि समारोपादनक्षरः ॥" [बोधि० प–पृ० ३६५] इति भगवतो वचनम् ।

तथागतो हि प्रतिबिम्बभूतः कुशलस्य धर्मस्य अनास्रवस्य ।
नैवात्र तथता न तथागतोऽस्ति बिम्बे च सपश्यति सर्वलोकः ॥
अनिर्वाणं हि निर्वाणं लोकनाथेन देशितम् ।
आकाशे न स्थिता ग्रन्थिराकाशे नैव मोचिता ॥ [ मा० का० २५।३०-३१ ]

इति च पद्यद्वय तममुमेवार्थं प्रतिपादयतः ।

अस्यामेव निरालम्बभूमौ निराधारकरुणाप्रज्ञाचक्षुरुदेति । अयमेव भगवतो बुद्धगुणनीत-भागीयो धर्मकायः, यः प्रज्ञापारमितयाऽन्वितः स्वानुत्तरया बोध्या युक्तः सन् करुणाप्रवाहेण

चिरतप्तान् सत्त्वान् शीतीकरोति । उक्त च राष्ट्रपालपरिपृच्छायाम्—"बोध्यङ्गधारसुखशीतलवृष्टि-जालैः शीतीकरोति च जगच्चिरकालतप्तम्" इति । इमामवस्थामधिगम्यैव महायानिकैर्निर्वाण-मपि नीरसं परिज्ञाय परिहीयते । उक्त च भगवता—"मुच्यमानेषु सत्त्वेषु ये ते प्रामोद्यसागराः । तैरेव ननु पर्याप्त मोक्षेणारसिकेन किम् ॥" इति । अस्या निरालम्बभूमावधिगताया स्वभावानु पगतत्वान्न मोक्षस्यापि सत्त्वमित्युक्त चतुःशतके नित्यार्थप्रतिषेधमदर्शने—"उपायाद् बन्धनाद् बन्ध्यादन्यो भवेद्यदि । न तस्माज्जायते किञ्चिन्मोक्षः स इति नोच्यते ॥" इति ।

एतदद्वय निरालम्बमचिन्त्यमनाश्रय मोक्षस्वरूपमभिलक्ष्यैवोक्त सद्धर्मपुण्डरीके—"सर्व-धर्माः समाः सर्वे समाः समसमाः सदा । एव ज्ञात्वा विजानाति निर्वाणममृत शिवम् ॥" इति । एवं निरालम्बभूमौ तत्त्वस्यैतत्सर्वेषा समत्व पर्यालोच्योक्तमाचार्यनागार्जुनेन—"अपरप्रत्ययं शान्तं प्रपञ्चैरप्रपञ्चितम् । निर्विकल्पमनानार्थमेतत्तत्त्वस्य लक्षणम् ॥ अप्रहीणमसंप्राप्तमनुच्छिन्नमशा-श्वतम् । अनिरुद्धमनुत्पन्नमेव निर्वाणमुच्यते ॥" [ मा० का० १८।६ ] इति । एव च सर्व-विकल्पोपशमान्निरिन्धनवह्निवन्निर्वृत्तिमुपयाति जीवः । एतदेव निरालम्बतत्त्व प्रज्ञापारमिता, शून्यता, तथता, भूतकोटिः, धर्मधातु, ध्रुवम्, अमृतम्, अच्युतम्, निर्विकल्पमित्यादिशब्दैः संवृत्या समारोपेणाभिधीयते । अमु निरालम्बतत्त्वमनधिगम्यैव परैर्मोक्षाय सदधिष्ठान-साक्षात्कारोऽपेक्ष्यते, अनैववादिनि पक्षे जगतो मिथ्यात्वासभवो निर्वाणासभव इति चारोप्यते। पर च निरालम्बपक्षे प्रपञ्चस्याजातत्वेन मायोपमस्वीकारान्न मायावादविवर्तवादयोः प्रसरः, दूरे तदुपजीवकस्य सदधिष्ठानो भ्रम इति वादस्य। अपोहवादेनापि तत्त्वस्य निर्विकल्पत्वरूप-निरालम्बत्वमन्यानारोपानपोह्य सङ्केत्यते । अत एवावस्तुप्रतिभासिनः शब्दाः प्रत्यया इति सिद्ध्यति । उक्त चाचार्यधर्मकीर्तिना प्रमाणवार्त्तिके—"समारोपविवेकेऽस्य प्रवृत्तिरिति गम्यते" [ ३।४८ ], "मिथ्यावभासिनो वैते प्रत्ययाः शब्दनिर्मिताः" [ २।१६६ ] इति । आचार्यरत्न-कीर्तिना चापोहसिद्धौ—"स्थाप्यो वाच्यस्तत्त्वतो नैव कश्चित्" [ पृ० १६ ] इति ।

एवं तत्त्वपर्यालोचनया माध्यमिकेष्वसत्त्वाभावालीकनिषेधवादित्वारोपोऽनालोच्यैव कृत इत्यनायासेन सिद्ध्यति । शून्यतत्त्वस्य गभीरत्वमनालोच्य तद्ग्रहणे तस्मात् त्रास एवोत्पद्यत इति युक्तमुक्तम्—"विनाश याति दुर्दृष्टो धर्मोऽयमविपश्चितः" इति । आर्यदेवेन चोक्तं चतुःशतके—"स च शून्यतार्थो जगतामतीवोत्त्रासकरत्वादप्रियावेदननिपुणपुरुषेण राज्ञः प्रियभार्यामरण-क्रमावेदनसौमनस्योत्पादनवत् कयापि युक्त्या विदुषामवतार्यः" इति ॥

श्रीजगन्नाथ उपाध्यायः

**वास्तवचन्द्रशृङ्गोन्नतौ स्थलविशेषद्वयविमर्शः**

( १ )

महामहोपाध्यायपरमगुरुश्रीसुधाकरद्विवेदिविरचितवास्तवचन्द्रशृङ्गोन्नतिः सिद्धान्तरसलोलुपाना चेतो हर्षभरेण समुद्वेलयतीति सामाजिकाना विदितमेव । तत्र वास्तवदृश्यचन्द्रबिम्बे ( वृत्ते ) वास्तवशुक्लवृत्तस्य परिणत स्वरूप किमिति प्राच्यपाश्चात्त्ययुक्तिभिः साधु विवेचितमस्ति । तद्रूप च चन्द्रबिम्बाद्बहिरभीष्टदृष्टिस्थानतो दर्शनेन दीर्घवृत्ताकारं, भवतीति युक्तिप्रयुक्तिभिरन्यमतानि सम्यग् निरस्य साधितम् । तत्र दृष्टिस्थानतो वास्तवदृश्यवृत्ते वास्तवशुक्लवृत्तस्य परिमाणनावसरे ग्रन्थकारेण व्यासद्वय साधितम् । किन्तु तस्मिन् को महानिति निर्णयो न विहितः—"अल्पा तयोर्यस्य मितिस्तदग्रादन्यार्धमानेन विधाय वृत्तम्" इत्यादौ । परमत्र विचार्यमाणे इदमाभाति यत् प्रथमव्यासोऽन्यव्यासाल्लघुरिति । तदेव युक्त्या साध्यते ।

दैवज्ञप्रवरपण्डितगङ्गाधरमिश्रविरचितवासनायुक्ताया तेनैव सशोधिताया वास्तवचन्द्रशृङ्गोन्नतौ ६६ पृष्ठे ६६ श्लोकव्याख्याया क्षेत्रं द्रष्टव्यम् । क्षेत्रे यथा अइउ वास्तवदृश्यवृत्तधरातलम्, इवउग दीर्घवृत्तप्रतिमास्वरूपम्, वग आद्यव्यासः, इलउ अन्यव्यासः, इउ व्यासार्धबिन्दौ वग व्यासो लम्बरूपः, लम्बश्च वास्तवदृश्यवृत्तकेन्द्रगत इति क्षेत्रमित्या सुस्पष्टम्। अतः इउ अन्यव्यासरेखाया वास्तवदृश्यवृत्तव्यासोपरि लम्बरूपत्वात् ( वास्तवदृश्यवृत्तस्य व्यासापरप्रान्ते च बिन्दुस्तथा च वास्तवदृश्यवृत्त-यासदीर्घवृत्तीयान्यव्यासयोगस्थले ल बिन्दुरस्त्येव ) अल × लच = इल$^{2}$ ( क्षे० मि० ३ अ० ३४ प्र० )। पर अल = अव + वल। लच = लग + गच। अतः अल × लच = ( अव + वल ) × ( लग + गच ) = अव × लग + अव × गच + वल × लग + वल × गच। यतः वल = गल। अतः इल$^{2}$ = वल$^{2}$ + अव × लग + अव × गच + वल × गच अर्थात् इल$^{2}$ ∟ वल$^{2}$। तेन इल ∟ वल। परं २ इल = इउ। २ वल = वग। अतः इउ ∟ वग। अनेनेदं सिद्धयति यदन्यव्यास आद्यव्यासान्महान्। एतदर्थमेव वासनाकारेणापि यतित तत्स्पष्टतया न सिद्धम्। परिस्थितिपर्यालोचनया व्यासयोरेको महानन्यश्च लघु ( आद्यव्यासः )रिति सुस्पष्टं प्रतिभाति। एतदर्थं मदीय पद्यं यथा—

प्रथमान्येष्टयोर्नित्यं स्वल्पो हि प्रथमेष्टकः ।
दीर्घवृत्तस्वरूपार्थे दृश्यवृत्ते प्रजायते ॥ इति ।

( २ )

एव च तत्रैव वास्तवचन्द्रशृङ्गोन्नतौ वास्तवदृश्यवृत्तधरातले वास्तवशुक्लवृत्तस्य परिणत-स्वरूपज्ञानाय यः प्रथमव्यास इष्टाभिध. साधितः स आद्यान्ययोर्योगरूपः। परिस्थितिविशेषे चाद्यान्यमाने समाने भवत इति ग्रन्थकारेण स्वयमभिहितम्—

शृङ्गोन्नतौ क्रान्तिसमाख्यजीवा त्रिज्याहृता बिम्बदलघ्नकाप्ता।
चन्द्रस्य लब्धेन समा सिताख्यकोटिज्यका तर्हि समौ पराद्यौ॥ इति।

लक्षणमेतद्गौरवप्रसक्तम्, तद्वासना च वासनाकारेण विस्तृताऽभिहिताऽस्ति। तदुप-पत्तिश्च सक्षेपेणापि साधयितु शक्यते। सा च सत्यवसरे प्रदर्शयिष्यते। प्रकृतपरिस्थित्यर्थ लाघवाद् यल्लक्षणं कर्तुं शक्यते तदेतन्मन्कृतम्—

दृष्टिस्थानगतः कोणो द्विगुणक्रान्तिसमितः।
यदा भवेत्तदा विद्वन्नाद्यान्यौ भवतः समौ॥ इति।

अस्य वासनार्थं दैवज्ञप्रवरपण्डितगङ्गाधरमिश्रसशोधितस्य तस्यैव ग्रन्थस्य १५ श्लोक-व्याख्याया २६ पृष्ठे क्षेत्र द्रष्टव्यम्। तत्र क्षेत्रे दृ अ रेखा वृत्त यत्र छिनत्ति तत्र स बिन्दु-र्विशेषः कल्प्यः। तथा च क्षेत्रे इ च पृ पार्श्वेऽ ( परिधिखण्डस्य ) वास्तवदृश्यशुक्लव्यासप्रान्तयोः क्रमशः प थ बिन्दू तदपरपार्श्वे च घ म बिन्दू कल्पनीयौ।

वासना चात्र साध्यमेव सिद्ध मत्वा प्रदर्श्यते। तद्यथा—आद्यान्यमानयोः समत्वात् पृच चाप=पृ स चापम्। तेन ∟पृ अ दृ = $\frac{1}{2}$ { ९०–( सि+क्रा ) }। (पथचापम्=घमचापम्= कमलाकरीयसिताशा. । वास्तवावास्तवशुक्लवृत्तयोरन्तर क्रान्तिरिति लक्षण ग्रन्थकारेणैव विहितमस्ति )। तथा च ∟अपृके = $\frac{1}{2}$ { ९०–( सि–क्रा ) }। परं ∟केपृअ = ∟पृदृअ+ दृअपृ। अतः ∟पृदृअ = ∟केपृअ-∟पृअदृ =

$\frac{1}{2}$ { ९०–( सि क्रा ) }– $\frac{1}{2}$ { ९०–( सि+क्रा ) } = $\frac{1}{2}$ { ( सि+क्रा )-(सि–क्रा) }
=क्रान्तिः। २∟पृदृअ = ∟चदृअ = २ क्रान्तिः। अत उपपन्नम्॥

अथ प्रसङ्गाद् ग्रन्थकारोक्तस्याद्यान्यमानयोः समस्थलीयलक्षणस्य "शृङ्गोन्नतौ क्रान्ति-समाख्यजीवा" इत्यादेर्वासनाऽतिसरला सिद्धान्तरसिकाना मनोविनोदिनी परीक्षार्थिना चोप कारिणी प्रदर्श्यते। तद्यथा–कल्प्यता चन्द्रबिम्बीयसितवृत्तम् ( परमान्तरवृत्तम् )=प द ग स म थ इ ट च त। तत्केन्द्रम्=के। वास्तवदृश्यवृत्तकेन्द्रम्=क। वास्तवशुक्लवृत्तकेन्द्रम्=ल। द ट=अवास्तवशुक्लवृत्तम्। वास्तवशुक्लवृत्तम्=ग इ। अवास्तवदृश्यवृत्तम्=स त। वास्तव-

दृश्यवृत्तम् = म च । लकेसु = बिम्बान्तरसूत्रम् । मू = वृत्ताद्बहिः सूर्यबिन्दुः । के ल = क्रान्तिः । के क = भुजः । कमलाकरीयसिताशाः = ∟प के सू = ∟ल के क । अतः सिताशकोटिः = ∟के क ल । ∟के ल क = ९० ।

△के क ल भुजक्रान्तिवास्तवदृश्यशुक्लवृत्तगर्भीयकेन्द्रान्तररूपभुजेत्यवयवत्रयविशिष्टे जात्येऽनुपातेन सिताशकोटिज्या = $\frac{\text{त्रिज्या} \times \text{क्रान्तिः}}{\text{भुजः}}$ ।

अत्र गद = के ल = क्रान्तिः । ज्या∟ल ग के = ज्या∟ग के द = क्रान्तिज्या । ( के ग = चन्द्रबिम्बदलम् = इय विशेषरेखा विधेया ) । तत. △के ग ल त्रिभुजेऽनुपातेन क्रान्तिः = $\frac{\text{चबिद} \times \text{क्राज्या}}{\text{त्रिज्या}}$ । ( ∟ ग ल के = ९० )

एवं चापरपार्श्वे के च विशेषरेखा करणीया, तत △के क च त्रिभुजे च बिन्दौ दृष्टिस्थानागतसूत्रस्य स्पर्शरूपत्वात् ∟के च क = चन्द्रबिम्बदलचापमानम् । ∟के क च = ९० । के च = चन्द्रबिम्बव्यासदलचापम् । ततोऽनुपातेन भुजः = $\frac{\text{चबिद} \times \text{चबिंदज्या}}{\text{त्रि}}$ ।

प्रथमानीतस्वरूपेऽनयो. स्वरूपयोरुत्थापनेन सिताशकोज्या

$$= \frac{\text{त्रिज्या} \times \text{चबिंद} \times \text{क्राज्या} \times \text{त्रिज्या}}{\text{त्रिज्या} \times \text{चबिंद} \times \text{चबिदज्या}} = \frac{\text{त्रिज्या} \times \text{क्राज्या}}{\text{चबिंदज्या}}$$

अतो ग्रन्थकारोक्तलक्षणपद्यमुपपन्नम् । अत्र क्षेत्रदर्शनाभावाच्छब्दगौरवेण बृहत् स्वरूपं दृश्यते । वस्तुतस्त्वनुपातत्रयेणैव सर्वं सिद्धयति । क्षेत्राङ्कने च दृक्सूत्रस्य चन्द्रबिम्बे ऊर्ध्वसपाते प बिन्दुः कल्प्य इति शम् ॥

श्रीमीठालाल ओझा

## कालिदासीयपद्येऽस्थानस्थपदता ?

साहित्यदर्पणेऽस्थानस्थपदतादोषस्योदाहरणत्वेनेदं रघुवशभक्त पद्य समुपन्यस्तम्—"तीर्थे तदीये गजसेतुबन्धात्प्रतीपगामुत्तरतोऽस्य गङ्गाम् । अयत्नबालव्यजनीबभूवुर्हंसा नभोलङ्घनलोलपक्षाः ॥" [ १६।३३ ] इति । अत्र 'तदीये तीर्थे' इत्यस्य 'गङ्गासबन्धिनि तीर्थे' इत्यर्थमभिमत्यायं दोषो दर्पणकृतोद्भावितः । मल्लिनाथेन तु 'तदीये तीर्थे' इति पदद्वयम् 'वैन्ध्येऽवतारे' इत्यर्थकतया व्याख्यातम्, न चात्रास्थानस्थपदतादोषस्य सभावनापि कृता । विन्ध्यवर्णनं चास्मात्पद्यात्प्राक् प्रकान्तम्, अतो विन्ध्य एव तत्पदपरामर्शयोग्य इति न महाकविकृतौ धूलिप्रक्षेपः समुचितः ॥

श्रीरघुनाथशर्मा

**महाभाष्यपाठविमर्शः**

'तृज्वत्क्रोष्टुः' [ ७।१।९५ ] इति सूत्रस्य भाष्ये पठ्यते-''एव तर्हि—न चापरं निमित्त संज्ञा च प्रत्ययलक्षणेन'' इति । पाठोऽय प्रामादिक इति प्रतिभाति । सम्यक् पाठस्तु— ''एवं तर्हि-न चापर निमित्तं च सज्ञा प्रत्ययलक्षणा'' इत्येव । अत्र युक्तयः—

( क ) नेत्यारभ्य कृत्स्न वचनं खलु वार्त्तिकरूपेण मन्तव्यम्, अत एवास्य व्याख्यान-भूत भाष्य दृश्यते—'न चापरं निमित्तमाश्रीयते' ...' इत्यादिना । अत एव यस्मिन् सस्करणे वचनमिद न वार्त्तिकरूपेण गणितं तत् प्रामादिकमेव ।

( ख ) यदीद वार्त्तिकमिति निश्चित तर्हि श्लोकवार्त्तिक वा गद्यनिर्मित वेत्यपि चिन्तनी-यम् । अस्मन्मत इद श्लोकवार्त्तिकमेव । तथा हि—वचनमिद पूर्ववार्त्तिकोक्तदोषसमाधान-परम्, अत इमे द्वे वचने एककर्तृके एव स्यातामित्येव तर्कलाघवतः स्वीकार्यम्, भाष्यकृ-च्छैलीसमतत्वाच्च ।

एव सति यदि पूर्ववार्त्तिकम् ( तेनैव भावनं चेत् स्यादनिष्टोऽपि प्रसज्यते ) अनुष्टुभा रचित स्यात्, तर्हीद वचनमप्यनुष्टुब्विरचितमित्यत्र न सन्देहलेशोऽपि ।

वचनमिदमादावनुष्टुभैव रचितम्, पश्चात् कारणविशेषेण पाठभ्रंशोऽभवदित्यत्रान्यदपि बलवत् प्रमाणमस्ति । विवेचनीयपाठस्थ-'प्रत्ययलक्षणेन' इत्यस्य स्थाने 'प्रत्ययलक्षणा' इति पाठान्तर दृश्यते, अतश्चकारव्यत्यासेन 'सज्ञा प्रत्ययलक्षणा' इति चतुर्थचरणस्य पाठः समी-चीनतया प्रतीयते । चकारस्तु तृतीयचरणे पठनीयः, येन 'न चापर निमित्त च' इत्येव तच्चरणस्य पाठः स्यात् ।

नन्वेकस्मिन्नेव चरणे ( न चापर निमित्त च ) द्वौ चकारौ किमर्थं पठितौ ? वृत्त-संरक्षणार्थमिति ब्रूमः । नियमतोऽयं चकारः संज्ञाशब्दात् पश्चात् पठितव्यः ( ततश्च-'संज्ञा च प्रत्ययलक्षणा' इति पाठः स्यात् ) । यतः संज्ञायाः समुच्चय एवात्र भाष्यकृदभीष्टः । यथोक्त भाष्ये-'अङ्गसंज्ञा च भवति प्रत्ययलक्षणेन' इति । परन्तु छन्दोदोषप्रसङ्गात् 'च' अस्थाने पठितः । एतादृशस्यास्थानपठितस्य चकारस्योदाहरणं व्याकरणादिषु पुष्कलम् । किञ्च 'न चापरम्' इत्यत्र पाठान्तरमपि दृश्यते-'न वापरम्' इति । अत्र वाशब्दो निर्दुष्ट पक्षान्तरं सूचयति । एवं सत्येकस्मिन्नेव चरणे द्वौ चकारौ किमर्थं पठिताविति प्रश्नस्यावकाश एव नास्ति ।

किमत्र पाठभ्रंशस्य कारणमिति प्रश्नस्योत्तरे ब्रूमः—भाष्यकृता 'अङ्गसंज्ञा च भवति प्रत्ययलक्षणेन' इति व्याख्यातम्, अत एव कालान्तरे केनचिच्चिन्तितं यदस्मिन् वार्त्तिकेऽपि

'प्रत्ययलक्षणेन' इत्येव प्रयुक्तमासीद् वार्त्तिककृता। प्रायेण वार्त्तिकशब्दानेव पतञ्जलिर्गृह्णाति व्याख्यानावसरे। ततश्च लिपिकरेण 'प्रत्ययलक्षणेन' इत्येवानवधानेन लिखितम्। एतेन च श्लोकवार्त्तिकस्य श्लोकत्वमेवापगतम्, अधिकाक्षरोपजननात्। एवं च 'निमित्त च संज्ञा प्रत्ययलक्षणेन' इति जाते केनचिच्चकारः संज्ञेति शब्दात् पश्चात् स्थापितः, यतो हि संज्ञाया अत्र समुच्चयो भवति। यस्य समुच्चयस्ततः परं चकारः प्रयोक्तव्य इत्येव पुष्कलो व्यवहारः। पाणिन्यादिभिरपि तथैवाकारि। एवं कालक्रमेण 'न वेति' स्थले 'न चेति' इत्येवरूपं पाठान्तरमपि जातम्, यद्वा निपातस्यानेकार्थत्वाच्चघटितपाठोऽपि साध्विति कथयितुं शक्यते ॥

## सिद्धान्तकौमुदीपाठविमर्श

'हे मपरे वा' [ ८।३।२६ ] इति सूत्रेऽस्ति वार्त्तिकम्–"यवलपरे यवला वेति वक्तव्यम्" इति। सिद्धान्तकौमुद्यामस्योदाहरणानि दत्तानि। यथा—"कियँ॒ ह्यः, किं ह्यः, किवँ॒ ह्वलयति, किं ह्वलयति, किलँ॒ ह्लादयति किं ह्लादयति" इति। अत्रोदाहरणेषु सानुनासिकाना यवलाना पाठः प्रामादिक इति प्रतिभाति। यथोक्त नागेशेन—"वार्त्तिकेन यवला निरनुनासिका एव, विधीयमानत्वात्। उदाहरणेषु सानुनासिकपाठस्तु लेखकप्रमादादित्याहुः" [ उद्द्योते ८।३।२६] इति। अत्रैतान्येवोदाहरणानि भाष्येऽपि दत्तानीति ज्ञेयम्। भाष्यकोशेषु निरनुनासिकपाठान्तरमपि दृश्यते, तदेव रमणीयम् ॥

## फिट्सूत्रसमीक्षा

सुषमायाः गताङ्के एकस्मिन् फिट्सूत्रविषये श्रीशान्तिभिक्षुणा स्वीया समीक्षा प्रदत्ता। तत्रास्माकमिदं वक्तव्य यद् यद्यपि सिद्धान्तकौमुद्याः संस्करणेषु 'वाचादीनामुभावुदात्तौ' [ ८३ सू० ] इत्येव पठ्यते, तथापि तन्मुद्रणाशुद्धिजमिति प्रतीयते। ग्रन्थसपादकानामनवधानमेव तत्कारणमिति मन्यामहे। यतो हि शब्देन्दुशेखरे तद्व्याख्यानविवरणकाले वाचेति स्थले वावेति पाठ एव नागेशेन व्याख्यातः, अतो मूलपाठोऽपि तथैवासीदित्येव युक्त प्रतिभाति। किञ्च प्रक्रियाकौमुद्या [ पृ० ७५३ ] 'वावादीनामुभावुदात्तौ' इति पठितम्। अपि च संप्रदाये सर्वत्र 'वावादीनामुभावुदात्तौ' इत्येव पठ्यते पाठ्यतेऽद्यापि। नागेशेन तु 'वावादीनामुभौ' इत्येव सूत्रपाठः स्वीकृतः, 'उदात्तौ' इति चानुवृत्तिप्रदर्शनार्थमिति तेनोक्तमित्यप्यत्र ज्ञेयम्। अतो वाचेत्यादिपाठः संपादकानवधानप्रयुक्तमुद्रणप्रमादज इत्येवाभ्युपेयम् ॥

श्रीरामशङ्करभट्टाचार्यः

# सम्पादकीयम्

## देवनागरीलिपिप्रतिसंस्कारसंमेलनम्

विगतमार्गकृष्णाष्टमीनवम्योः शनिरविवासरयोः ( २८-२९ नवम्बर ) उत्तरप्रदेश-राजधान्या लक्ष्मणपुर्या राजभवने महामान्यानामुपराष्ट्रपतीना दार्शनिकप्रवराणा डा०राधा-कृष्णन्महोदयानामाध्यक्ष्ये देवनागरीलिपिप्रतिसस्कारसमेलन समजायत । तत्र भारतसंघ-स्थिताना प्रायः समेषा राज्याना प्रधानमन्त्रिणः शिक्षामन्त्रिणोऽन्ये च समाहूता मनीषिणः समवेता अभवन् । समुपस्थिताना प्रतिनिधीना स्वागतवाचन महामान्यैरुत्तरप्रदेशप्रधानमन्त्रिभिः श्रीगोविन्दवल्लभपन्तमहोदयैरकारि । उत्तरप्रदेशराज्यपालमहामहिमश्रीकन्हैयालालमाणिकलाल-मुशिमहोदयाश्च समेलनमिद समुद्घाटयन्ति स्म ।

१९४७ ई० वर्षे उत्तरप्रदेशीयप्रशासनेन देवनागरीलिप्या सह हिन्दी राजभाषापदवीं प्रतिष्ठापिता, अथ च तस्मिन्नेव हायने मनीषिप्रवराणामाचार्यनरेन्द्रदेवमहोदयानामाध्यक्ष्ये देव नागरीलिपिप्रतिसस्कारसमितिः सघटिता । अनया समित्या वर्षद्वय यावद् विभिन्नाभिः सस्था-भिर्व्यक्तिभिश्च समुद्भाविता एकाधिकपञ्चाशत्परिमिता योजनाः सम्यक् परीक्ष्य, विधानपरिषदा मनीषिप्रवरकाकाकालेलकरमहोदयानामाध्यक्ष्ये निर्मितया समित्या सह विचारविनिमय च विधाय स्वकीया निश्चयाः प्रशासनस्य पुरतः समुपस्थापिताः ।

भारतीयसंविधानेनापि देवनागरीलिप्या सह हिन्दीभाषा राष्ट्रभाषात्वेनाङ्गीकृता विद्यते । सविधानस्वीकारस्य पञ्चदशवर्षाभ्यन्तरे तदनन्तरं वा हिन्दीभाषाऽथ च देवनागरीलिपिराग्ल-भाषाया रोमनलिप्याश्च स्थानमाप्स्यतीति सुनिश्चितमेव । पुराऽऽनुश्रविकयुगे भाषाया एव प्राधान्यमासीन्न तु लिपेः । साम्प्रतं तु तद्विपरीत लेखन शीघ्रलेखन-मुद्रण-टङ्कन-दूरटङ्कनादिषु विविधक्रियाकलापेषु लिपेरेव प्राधान्य विद्यते । वैज्ञानिकेऽस्मिन् युगे प्राय समेषा ध्वनीना याथातथ्येनाभिव्यञ्जिका विश्वस्य समासु लिपिषूत्कृष्टतमापि देवनागरी नूतनासु यन्त्रयोजनासु पश्चाद्गामितामेव दधाति । कथ ह्यस्य दोषस्यापनोदनं भवेदित्येव समेषा देवनागरीप्रतिसस्कार-प्रयत्नाना मूलम् । नरेन्द्रदेवसमितिनिश्चयेषु दोषापनोदनेन सह मौलिकताया ह्रासोऽपि यथा न भवेत्तथा साध्ववहितम् ।

सम्पूर्णे राष्ट्रे सस्कृतभाषायाः प्रचारो विद्यते, सस्कृतस्य ग्रन्थाः प्रकाश्यन्ते । सस्कृत-ग्रन्थाना च प्रकाशनं सर्वत्र प्रायो देवनागरीलिप्यामेव भवति । अतोऽस्याः लिपेः प्रचारः सार्व-त्रिको वरीवर्त्येवेति स्वभावत एव तस्या राष्ट्रलिपित्व सिद्धम् । अपि चापहाय दूरदक्षिणराज्यीया

द्वित्रलिपीः सर्वासां गुर्जरबङ्गगुरुमुखीप्रभृतिलिपीनां जननी प्राचीना देवनागरीलिपिरेव। अन्यच्च सम्पूर्णे महाराष्ट्रे बिहारोत्तरप्रदेशहिमाञ्चलप्रदेशविन्ध्यप्रदेशमध्यप्रदेशमध्यभारतराजस्थानादि-हिन्दीभाषिराज्येषु देवनागरीलिपेरेवाप्रतिहतं साम्राज्यं वर्तते। सत्येवमस्याः प्रतिसंस्कारवेलायां मा भूत्क्वचन विरोधाशङ्काऽथ च सर्वेषामेषां देवनागरीप्रियाणां समत्यैव भवतु किञ्चित् सर्वमान्यं प्रतिसंस्करणमिति धीरेवास्य समेलनस्य पृष्ठभूमिमरीरचत्।

लिपिषु प्रतिसंस्काराय पुरैतादृशं समेलनमभून्न वेति विचारणीयो विषयः। तथापि लिपिषु विकासवादन्यायेन समये समये परिवर्तनमजायतेति पुरातत्त्वविदां सुविदितमेव। पुरा हि भारते ब्राह्मी खरोष्ठी चेति द्वे लिपी प्रचलिते आस्ताम्। तत्र खरोष्ठी साम्प्रतिक्यरबीलिपिवद्दक्षिणतो वाम-पार्श्वे लिख्यते स्म। अस्याः प्रचारश्च पश्चिमोत्तरसीमावर्तिषु कतिपयेषु प्रदेशेष्वेवासीत्। खरोष्ठना-मकेनान्येन वा केनचिद्विदुषा पारसीकदेशीयाम् 'अमरइक्'-नाम्नीं लिपिमाधारीकृत्य निर्मितैषा लिपिः खरोष्ठीति नाम्ना प्रथिताभवत्। ई० पूर्वतृतीयशतकादारभ्य ई० तृतीयशतकपर्यन्तमस्याः प्रचारः पश्चिमोत्तरसीमाप्रदेशेष्वासीत्। अनन्तरं तत्रापि ब्राह्मीलिपेः प्रचारातिशयात्तस्या लोप एव संजातः।

देवनागर्यादिलिपिवद्वामतो दक्षिणपार्श्वे लिख्यमानाया ब्राह्मीलिपेः प्रचारस्तु पुरा प्रायः सम्पूर्णे भारते आसीत्। एषैव भारतस्य प्राचीनतमा लिपिः। यतो ह्येषा ब्रह्मणा प्रदत्ताऽतोऽस्या ब्राह्मीति नाम। यद्वा स्वाध्यायप्रवणेन ब्राह्मणसमाजेन निर्मिताऽतोऽस्या ब्राह्मीतिनाम। भारतीयेषु ऋतुपरिवर्तनेषु तूलपत्रभूर्जपत्रतालपत्रादिषु लिखिता ग्रन्था नैवातिवेलमवस्थातुं सहन्ते। अतः प्राचीनतमाया भारतीयलिपेः स्वरूपं गण्डशैलेषु शैलशिखरेषु स्तम्भस्तूपादिषु मुद्रासु चैवावलोकयितुं शक्यते। अत्र च प्राचीनतमौ द्वौ शिलालेखौ ब्राह्मीलिपेरेव समधिगतौ। एकस्तयोर्नेपालराज्यीये पिप्रावास्थाने, अपरश्च अजमेरमण्डलस्थबड़लीग्रामे। पुरातत्त्वज्ञैस्तयोः समयः ई०वर्षाच्चतुःशतकपूर्वं स्वीक्रियते। इतोऽपि पूर्वमत्र लेखनकलायाः प्रचार आसीदिति ब्राह्मीलिपेश्चरमविकासेन बौद्धजैनसाहित्यतोऽष्टाध्यायीनिरुक्तब्राह्मणवेदादिग्रन्थेभ्यश्च सम्यक् प्रतीयते। "त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः शम्भुमते मताः" इति पाणिनिशिक्षोक्तानां समेषां वर्णानाम-भिव्यञ्जिका आकृतयस्तत्समयेऽपि तस्यामासन्नेव। अतः प्राचीनतमेऽपि तस्मिन् काले एषा पूर्णविकसिता लिपिरासीदेवेति स्वीकर्तव्यमेव। इतोऽपि प्राचीना काचिल्लिपिरत्राऽऽसीन्न वा, चित्रलिपितो मिस्रदेशीयप्राचीनलिपिवदस्या विकासः सजातोऽन्यया वा कयाचित्पद्धत्येति प्रमाणा-भावान्न किञ्चिदपि कथयितुं शक्यते।

केचित्तु तान्त्रिकोपासनाया प्रयुक्तेभ्यः साङ्केतिकचिह्नेभ्यस्त्रिकोणचक्रादियन्त्रेषु लिखितेभ्य

एव भारतीयायाः प्राचीनतमाया लिपेर्विकास समन्वते। तान्त्रिकी कामकला हि बिन्दुत्रयेभ्यो निर्मीयते। या हि–"मुख बिन्दुं कृत्वा कुचयुगमधस्तस्य" इत्यादिना स्तूयते सौन्दर्यलहर्या शङ्कराचार्यैः। एतच्च कामकलाबीजं ब्राह्मीलिपेरिकार सर्वथानुकरोति। वैदिकी तान्त्रिकी चेति द्विविधा हि श्रुतिरभ्युपेयते। अतस्तान्त्रिकश्रुतेर्वाङ्मय एव कुत्रापि निहित भारतीयलिपिविकासतत्त्वमित्यनुमातु शक्यते। तान्त्रिकसाहित्ये च लिपिर्मातृकाऽक्षमालेतिनामभ्या प्राचुर्येण स्मर्यते।

जैनाना पन्नवणासूत्रे समवायाङ्गसूत्रे च ब्राह्मीसहितानामष्टादश लिपीनाम्, बौद्धाना ललितविस्तरे च ब्राह्मीखरोष्ठीसहिताना चतुष्षष्टिलिपीना नामान्युपलभ्यन्ते। तान्त्रिकसाहित्येऽपि भूतमातृका मालिनीमातृकेत्यादिबह्वीना मातृकाणा समुल्लेखः।

वैखरी हि वाणी कण्ठताल्वादिस्थानेभ्योऽभिव्यक्ता चतुष्षष्टिवर्णात्मिका निरालम्बे आकाशे कानप्याकारानाविर्भावयति। योगिन एव तद्द्रष्टु प्रभवन्ति। विभिन्नेषूच्चारणेषु विभिन्ना आकारा जायन्ते। तेषामेवाकाराणा प्रतीकरूपा इमा लिपयः। भारतीयरागरागिणीना या हि मूर्तयः कल्पितास्ता गायकस्य पुरतो यद्धि रूप विशिष्टासु वेलासु प्रादुर्भवति तत्प्रतिकृतिरूपा एव। चिररात्राय संचितो ज्ञानराशिरानुश्रविकपद्धत्योपलभ्यतेऽस्याभिर्यद्यपि, तथापि तपःपूतैर्ऋषिमहर्षिभिर्मनीषिभिश्च प्रणीतमतीव विशालं वाङ्मय लिपिरूपमादधदेवास्माभिरधिगतम्। अत एव निखिलानुदात्तभावान् संवहन्ती लिपिरेषा भगवती भगवत्याः सरस्वत्या विग्रहत्वेनार्च्यते। अत एव च–"नमो बभीए लिविए" इत्यादिना भगवतीसूत्रे स्तुता सा।

अस्तु विशेषप्रमाणानामभावेन ब्राह्मयेव प्राचीनतमा भारतीया लिपिः। तस्याश्च विकासवादन्यायेन समये समये यानि रूपान्तराणि सजातानि तानि क्रमशो गुप्तलिपिकुटिललिपिनागरीलिपिरिति नाम्नाऽभिधीयन्ते। नागरीलिपेराविर्भाव ई० अष्टमे शतके जातः। सा च विकासमापद्यमाना शनैः शनैः साम्प्रतिकीमवस्था प्रापत्, प्रकारान्तरेण बङ्ग-शारदा गुर्जरादिलिपीना च रूपमदधात्। एव च स्वयमेव विकासपथमनुवर्तन्त्या अस्या देवनागरीलिपेर्युगानुरूप प्रतिसंस्करणं नैव क्षोदक्षमम्, अपि त्वावश्यकमेव। इयानेवावधातव्यो विषयो यन्नहि सहसा तादृशेन परिवर्तनेनापातरमणीयेन भाव्य येन भारतीयसस्कृत्या सर्वदा तिरस्कृतानामसुरसस्कृतिप्रतीकभूताना यन्त्राणा प्रवाहे वैज्ञानिकतमैषा देवनागरी प्रवहिता स्यात्। नहि यन्त्रसौकर्यार्थं परिवर्तनेन भाव्यमपि तु यन्त्रैरेव लिपेरनुसरण विधेयम्। अस्या सरणौ च या बाधाः स्युस्ता एवापनोदनीयाः। अतीव प्रमोदस्यायं विषयो यदत्र समेलने एषैव सरणिः शरणीकृतेति।

समेलने संजातान्निर्णयाननुरुद्धय भविष्यति विचारः करिष्यते॥

यज्ञं स्तौति—

[1]सप्तास्यासन्परिधयस्त्रिःसप्त समिधः कृताः ।
देवा यद्यज्ञं तन्वाना अबध्नन्पुरुषं पशुम् ॥ १५ ॥

सप्त समुद्राः परिधय आसन् । सप्त छन्दांसि सप्त संस्थाः प्रकृतय आसन् । [2]त्रिःसप्त सप्तकास्त्रयो वर्गाः । त्रिः तिस्रः । समिधः समिन्धना आसन् । देवा यद् यदा । यज्ञं तन्वानाः यज्ञान् विस्तारयन्तः । पुरुष पशुमबध्नन् पशुत्वेन बन्धनमकुर्वन् । तदाऽस्य यज्ञस्य समुद्राः परिधय आसन्निति संबन्धः ॥ १५ ॥

निगमयति—

[3]यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ।
ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥ १६ ॥

त्रिष्टुप् । इदानीं साध्याना यज्ञफलमुच्यते । यज्ञेन हविर्भूतेन । देवा यज्ञमयजन्त । तानि धर्माणि प्रथमान्यासन् । यज्ञात्मकस्य कर्मणः सूक्ष्मरूपाणि तानि कर्माणि, फलस्य पूर्वरूपाणि वा यानि, तानि प्रथमानि कर्मसाध्यफलेभ्यः पूर्वरूपाणि तानि धर्माणि [4]हविषा सूक्ष्मरूपाणि वाऽऽसन् । ते ह ते ऋषयः । महिमानः देवाः । सचन्त नाकम् । [5]कं सुखम्, अकमसुखं न विद्यते यत्र स स्वर्गो नाकः, तं नाक स्वर्ग सुखविशेषम् । सचन्त सेवितवन्तः । कुत्रेति तदाह—यत्र पूर्वे साध्याः सन्ति देवाः । यत्र [6]स्वर्गे स्थानविशेषे । पूर्वे पुरातना ऋषयो देवाः [7]प्रजापतेः प्राणा एव साध्या देवाः स्वर्गसुखमनुभवन्तस्तिष्ठन्ति । तं नाकं महिमानो देवा ऋषयश्च सचन्तेति । एवमेव मन्त्र श्रुतिर्व्याचष्टे—"यान्वै तान् सप्त पुरुषानेक पुरुषमकुर्वन् । स प्रजापतिरभवत् । स प्रजा असृजत स प्रजाः सृष्ट्वोर्ध्व उदक्रामत् । स एत लोकमगच्छद्यत्रैष एतत्तपति नो ह तर्ह्यन्य एतस्मादत्र यज्ञिय आस त देवा यज्ञेनैव यष्टुमध्रियन्त ॥१॥ तस्मादेतदृषिणाभ्यनूक्तम्—'यज्ञेन यज्ञमयजन्त देवाः' इति । यज्ञेन हि त यज्ञमयजन्त देवाः । 'तानि धर्माणि प्रथमान्यासन्' इति ते हि धर्माः प्रथमेऽक्रियन्त । 'ते ह नाक महिमानः सचन्त' इति स्वर्गो वै लोको नाको

---

१ ( मा० ३१।१५ ) । २ त्रिःसप्तकाः–ख० । ३ ( मा० ३१।१६ ) । ४ हविषा–क-ग० ।
५ 'कम्' नास्ति–क-ग० । ६ स्वर्गस्थविशेषेषु–क-ग०, स्वर्गस्था विशेषे–ख० ।
७ 'प्रजापतेः' · · 'देवा.' नास्ति–ख० ।

देवा महिमानस्ते देवाः स्वर्गं लोकं सचन्त ये त यज्ञमयजन्नित्येतत् ॥२॥ 'यत्र पूर्वे साध्याः सन्ति देवाः' इति । प्राणा वै साध्या देवास्त एतमग्र एवमसाधयन्" [ शत० ब्रा० १०।२।२।१–३ ] इत्यादिका । 'यत्र पूर्वे साध्याः सन्ति देवाः' इति [1]यज्ञे ऋषीणा प्रवाहस्य नित्यतां दर्शयति ॥ १६ ॥

उत्तरनारायणेनादित्यमुपतिष्ठत इत्याह—

[2]अद्भ्यः संभृतः पृथिव्यै रसाच्च विश्वकर्मणः समवर्तताग्रे ।
तस्य त्वष्टा विदधद्रूपमेति तन्मर्त्यस्य देवत्वमाजानमग्रे ॥ १७ ॥

उत्तरनारायणेनादित्यमुपतिष्ठते । [3]षड् ऋच उत्तरनारायणमन्त्राः । तत्राद्यास्तिस्रस्त्रिष्टुभः, ततो द्वे अनुष्टुभौ, अन्त्या त्रिष्टुप् । "उत्तरनारायणेनादित्यमुपस्थायानपेक्षमाणोऽरण्यमभिप्रेयात्" [ शत० ब्रा० १३।६।२।२० ] इति श्रीनारायणदेवत्या मन्त्रा आदित्योपस्थाने विनियुक्ताः । [4]पूर्वकल्पान्तरीयेषु पुरुषमेधयज्ञादिभावमापन्नः परम्पराकोटिसञ्चारीति श्रूयते[?] । यः अद्भ्यः [5]उदकस्य सकाशात् [6]संभृतः । पृथिव्यै पृथिव्याः सकाशाच्च [6]संभृत इति । पृथिव्युदकग्रहणं पञ्चमहाभूतानामुपलक्षणम्, "तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम्" [ ब्र० सू० ३।१।१ ] इत्यधिकरणसिद्धत्वात् । अग्रे प्रथमम् । यः भूतपञ्चकात्संभृतः, 'भृञ् भरणे' [ ८९८ भ्वादिः ] । पुण्यसंस्कारानुरञ्जितभूतपञ्चकपरिवेष्टित इत्यर्थः । एवं संभृतः सन् पश्चाद् रसाच्च विश्वकर्मणः समवर्तत । रसो रागस्तस्माद्रसात् । विश्वानि सर्वाणि कर्माणि यस्य स विश्वकर्मा सविता, तस्माद्विश्वकर्मणः । रसात् सर्वजगत्कर्तुरीश्वरस्य रागादीश्वरेच्छया । समवर्तत समभवत् । सूक्ष्मशरीरावस्थितस्य उत्पद्यमानसूक्ष्मदेहस्य त्वष्टा श्रीभगवानादित्यः । यद् रूपं विदधत् कालात्मकः सविता विशिष्टं रूपं कुर्वन् । एति आगच्छति । तन्मर्त्यस्य पूर्वं मनुष्यस्य सतः । देवत्वम् । व्यत्ययः । देवत्वेन । [7]आजानम्, जननम् उत्पत्तिः । एवं[8] तस्य जन्माभवदित्यादित्यः स्तूयते ॥ १७ ॥

---

१ 'यज्ञे' नास्ति–ख० । २ ( मा० ३१।१७ ) । ३ 'षड् ऋचः' नास्ति–ख० ।
४ पूर्वकल्पे पुरुषमेधयाजी आदित्यरूपं प्राप्तः स्तूयते–इति मही०, पूर्वकल्पान्तरीयेषु पुरुषमन्धयाग्न्यादिभावमापन्नः परापरसंचारीति श्रूयते–ख० ।
५ उदकात्–क-ग० । ६ संभृतः–ख-ग० । ७ आजानन्–ग० । ८ उत्पत्तिरेवैतस्य–ख० ।

[1]वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्।

तमेव विदित्वातिमृत्युमेति नान्य पन्था विद्यतेऽयनाय॥ १८॥

एवं प्रतीयमान पुरुषम्। पुरि शेत इति पुरुषस्तम्। अनेन प्राप्त परिच्छेद व्यावर्तयति—[2]महान्तमिति। महान्तमपरिच्छिन्नमनन्तम्। आदित्यवर्णमादित्यस्य वर्ण इव वर्णो यस्य स आदित्यवर्णः, स्वयप्रकाश इत्यर्थः। तमसः परस्तात्। अज्ञानान्धकारादुपरि स्वतेजसाऽज्ञानान्धकारमधःकृत्य वर्तमानमेत महान्तमादित्यान्तःस्थ पूर्ण पुरुषमेत साक्षादपरोक्षरूपम्। अहं शोधिततत्त्वपदार्थोऽहम्। वेद जानामि। एतं पुरुष [3]महान्तमादित्यवर्ण पुरुष वेद, आदित्यवर्ण महान्तं पुरुषमेतं पुरुषं वेदेत्येवं व्यतिहारेणाह वेद जानामि। सर्ववेदान्तैस्तात्पर्येण प्रतिपाद्यार्थमाह–तमेव विदित्वातिमृत्युमेति। 'सहस्रशीर्षा' [३५।१] इत्यादिना योऽभिहितः परमेश्वरस्तमेव विदित्वा नान्यं तं विदित्वैव। मृत्युं मृत्युयुक्तं ससारम्। अत्येति अतिक्रामति न कर्मणा। अथ तमेव त विदित्वैव मृत्युमत्येति। मृत्युमतिक्रम्य एति स्वस्वरूपं प्राप्नोति। परब्रह्म एति गच्छति इत्युपचारः। पक्षान्तरशङ्का [4]निरस्यति—[5]नान्यः पन्था विद्यतेऽयनाय। अयनाय गमनाय स्वस्वरूपप्राप्तये। अन्यः पन्था मार्गो न विद्यते॥ १८॥

[6]प्रजापतिश्चरति गर्भे अन्तरजायमानो बहुधा विजायते।

तस्य योनिं परिपश्यन्ति धीरास्तस्मिन्ह तस्थुर्भुवनानि विश्वा॥ १९॥

प्रकर्षेण जायन्त इति प्रजाः, तासा पतिः। गर्भे अन्तः [7]सर्वप्राणिनामुदरमध्येऽन्तर्यामिरूपेण यश्चरति। स च स्वस्वरूपेणाजायमानो देहादेर्जन्मन्यपि स्वय जन्मशून्योऽप्युपाधिवशात्। बहुधा बहुप्रकारेण विजायते। यद्वा 'अज[8]गतिविक्षेपणयोः' [२३० भ्वादिः] [9]इति। स्वमायया सर्वानजायमानो विक्षेपयन् संमोहयन् स्वयं बहुधा विजायत इति। तस्य बहुधा वर्तमानस्यापि प्रजापतेः। योनिं स्थान स्वरूप च। धीराः सम्यग्ज्ञानिनः। परिपश्यन्ति

---

१ (मा० ३१।१८)। २ 'महान्तमिति' नास्ति–ग०। ३ आदित्यवर्णं महान्तम्–ग०। ४ निवारयति–ख०। ५ 'नान्यः पन्था' ' 'न विद्यते' इत्यस्य स्थाने 'नेति। अन्यः पन्था मार्गः। न विद्यतेऽयनाय गमनाय स्वरूपप्राप्तये' इति–क-ग०। ६ (मा० ३१।१९)। ७ 'सर्वप्राणिनामुदर' नास्ति–ख०। ८ गतिक्षेपणयोः–धातु०। ९ 'इति' नास्ति–क-ग०।

साक्षात्कुर्वन्ति । तस्मिन् प्रजापतौ । हि एव स्वकारणभूत एव । विश्वा विश्वानि । भुवनानि भूतानि । तस्थुः तिष्ठन्ति ॥ १६ ॥

[1]यो देवेभ्य आतपति यो देवानां पुरोहितः ।
पूर्वो यो देवेभ्यो जातो नमो रुचाय ब्राह्मये ॥ २० ॥

देवेभ्यः अर्थाय । आतपति आतपं करोति प्रकाशयति [2]प्रकाश्यते च । यो देवाना पुरोहितः । यश्च देवानामग्रतः स्थित्वा हितमाचरति । पूर्वो यो देवेभ्यः । यश्च देवेभ्यः पूर्वः सर्वदेवाग्रणीर्जातः । तस्मै ब्राह्मये रुचाय नमः । ब्रह्मणो योग्य ब्राह्म तस्मै [3]ब्राह्मये । रुचाय रोचमानाय दीप्यमानायादित्याय नमः ॥ २० ॥

[4]रुचं ब्राह्मं जनयन्तो देवा अग्रे तदब्रुवन् ।
यस्त्वैवं ब्राह्मणो विद्यात्तस्य देवा असन्वशे ॥ २१ ॥

रुच रोचमानम् । ब्राह्म ब्रह्मावयवभूतम् । '[ब्राह्मोऽ] जातौ' [ ६।४।१७१ ] इत्यणि टिलोपे च ब्राह्ममिति भवति । रुच ब्राह्म देदीप्यमान ब्राह्म ब्राह्मणजातिम् । जनयन्त उत्पादयन्तो देवाः । अग्रे प्रथमम् । तत् तदिदमेवाब्रुवन् । यस्त्वैवं ब्राह्मणो विद्यात् । यस्त्वा एवम् । त्वा रुचं ब्राह्मं ब्राह्मणजातिं त्वाम् । एव पूर्वोक्तप्रकारेण, [5]परब्रह्मैव ब्राह्मणजातिरिति यो ब्राह्मणो विद्यात् । तस्य ब्राह्मणस्य । वशे देवा [6]असन् अभवन् भवन्ति । परब्रह्मवशवर्तिनो देवास्तदंशभूतस्यापि वशवर्तिनो भवन्तीत्यर्थः ॥ २१ ॥

[7]श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् ।
इष्णन्निषाणामुं म इषाण सर्वलोकं म इषाण ॥ २२ ॥

श्रीश्च लक्ष्मीश्च ते सवितुस्तव पत्न्यौ । यया [8]आश्रयणीयो [9]भवति सा श्रीः । आदित्यो यया तु लक्ष्यते सा लक्ष्मीः । श्रीः [10]शोभानुरूपा । लक्ष्मीः दीप्तिलक्षणचिद्रूपिणी । उभे ते पत्न्यौ

---

१ ( मा० ३१।२० ) । २ 'प्रकाश्यते' नास्ति–ख० । ३ "ब्रह्मणोऽपत्यं ब्राह्मिः, इञि टिलोपः" इति–मही० । ४ ( मा० ३१।२१ ) । ५ परं ब्रह्मैव–ग० । ६ आसन्–ख-ग० । ७ ( मा० ३१।२२ ) । ८ आश्रयाणि–ख० । ९ भवन्ति–ख० । १० शोभानुरूपिणी–ख० ।

भार्ये। ते के ? [1]अहोरात्रे ये पत्नीत्वेन कल्पिते। पार्श्वे उभयपार्श्ववर्तिन्यौ ते,। नक्षत्राणि अश्विन्यादीनि तव रूपम्। अश्विनौ द्यावापृथिव्यौ। तव व्यात्तं [2]मुखम्, [3]मुखमिव। एवरूप त्वामिदमहं याचे–इष्णन्निषाणामु म इषाण सर्वलोकं म इषाणेति[4]। एतत्पदद्वयमपि इषुधातोः [ १५२६ क्र्यादिः ] रूपम्। विकरणव्यत्ययश्च। इष्णन् इच्छन् कर्मफलमिच्छन्। [5]इदमिषाण इदं फलमिच्छ। किं तदिति? अमुं म इषाण। अमु लोकं मे मदीयत्वेन। इषाण इच्छ। सर्वलोकं मे मदीयत्वेन। इषाण इच्छ। आत्मत्वेन वा इषाण। अहमेवेद सर्वमिति सर्वात्मभावमेवेच्छेति। एवमादित्यः स्तूयते ॥ २२ ॥

[6]तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः।
तदेव शुक्रं तद् ब्रह्म तदापस्तत्प्रजापतिः ॥ २३ ॥

"अप्तोर्यामः सप्तममहर्भवति" इत्युपक्रम्य–"सर्वं जुहोति सर्वस्याप्त्यै सर्वस्यावरुध्यै" [ शत० ब्रा० १३।७।१।६ ] इति, तत्रायमनुवाको विनियुक्तः। "ब्रह्म वै स्वयम्भु तपोऽतप्यत" [ शत० ब्रा० १३।७।१।१ ] इत्यभिधानात् सर्वमेधिकोऽयमनुवाकः। अस्यानुवाकस्य ब्रह्मा ऋषिः। आत्मदेवत्यः। सप्तमेऽहनि सर्वहोमे विनियुक्तः। तत्राद्ये द्वे ऋचावनुष्टुभौ। तदेवाग्निः अग्न्यादीना यद् ब्रह्म अधिष्ठान तदुपादानकारण च, तदेव अय प्रतीयमानोऽग्निः। तदेव तद् ब्रह्मैव आदित्योऽपि। तदेव वायुरपि। तदेव चन्द्रमाः। तदेव शुक्रम्। शुक्रं शुद्ध रागादिदोषप्रयुक्तिरहित यत् शुक्र तद् ब्रह्मैव। तद् ब्रह्म। ऋग्यजुःसामलक्षण ब्रह्म [7]वेदः, ब्रह्म अपि तदेव ब्रह्मैव[8]। आपः [9]तदेव। तत् प्रजापतिः तदेव तद् ब्रह्मैव ॥ २३ ॥

[10]सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि।
नैनमूर्ध्वं न तिर्यञ्चं न मध्ये परिजग्रभत् ॥ २४ ॥

[11]पुरुषादधि। अधीति सकाशवचनः। पुरुषात् सकाशात्। सर्वे निमेषाः परमाणुत्रुटिलक्षणाश्च। निमेषादयः कालावयवविशेषाः। सर्वे जज्ञिरे जाताः। विद्युतः [12]विद्युत्पर्जन्यादयः।

---

१ 'अहोरात्रे ये' इत्यस्य स्थाने 'अहोराज्यौ' इति–ख०। २ 'मुखम्' नास्ति–ख०। ३ मुखमीत–ख०। ४ 'इति' नास्ति–क०। ५ 'इदमिषाण इदं फलमिच्छ' नास्ति–क ग०। ६ (मा० ३२।१)। ७ घेदम्–क०, देवम्–ख०। ८ ब्रह्म च–ख०। ९ 'तदेव' नास्ति–क-ख०। १० (मा० ३२।२)। ११ 'पुरुषादधि' नास्ति–क०, पुरुषादधीति–ख-ग०। १२ विद्युत्पर्जन्याश्च–ख०।

पुरुषादधि जज्ञिरे । नैनमूर्ध्वं न तिर्यञ्चं न मध्ये परिजग्रभदिति[1] । एनं साक्षादपरोक्षरूपं पुरुषं सर्वस्यापि जनकं [2]सन्तं सर्वसाक्षिणम् । न परिजग्रभत् न परिगृह्णाति । एवमूर्ध्वमूर्ध्वभागम् । न किञ्चिदपि प्रमाणं परिजग्रभत् न परिगृह्णाति न [3]स्पृशति न ज्ञापयतीत्यर्थः । तिर्यञ्चं पार्श्वभागं न परिजग्रभत् । [4]मध्ये मध्यं न परिजग्रभत् । [अ]प्रसिद्धरूपतया प्रत्यक्ष[ाऽ]गोचरत्वात्, स एव व्याप्तिग्रहणशून्यतयाऽनुमानस्याविषयत्वात्, अत एव पदपदार्थसंगतिग्रहण[ाऽ]योगाच्छब्द[स्य] प्रवृत्तिनिमित्त[5]दृष्टजात्यादेरभाव[व]त्त्वेन [च] अगोचरः पुरुषः । "स एष नेति नेत्यात्मा [अगृह्यो] न हि गृह्यते" [ बृहदा० ३।६।२६ ] इत्यादिश्रुतेश्च ॥ २४ ॥

[6]न तस्य॑ प्रति॒मा अ॑स्ति॒ यस्य॒ नाम॑ म॒हद्यशः॑ ।
हि॒र॒ण्य॒ग॒र्भ इत्येषः ॥ २५ ॥

गायत्री आत्मदेवत्या । तस्य [7]पुरुषस्य प्रतिमा नास्ति । प्रतिमा प्रतिमानं [8]प्रतिमाभूतं किञ्चिदप्येतत्सदृशं नास्ति न दृश्यते । यस्य परमेश्वरस्य महद् यशः कीर्तिः । नाम [9]नमतीति नाम । महद्यश एव यस्य नाम तस्य प्रतिमा नास्तीति । हिरण्यगर्भ इत्येषः । परमात्मैव हिरण्यगर्भ इति वेदान्तवादिनो वदन्ति ॥ २५ ॥

[10]ए॒षो ह॑ दे॒वः प्र॒दिशोऽनु॒ सर्वाः॒ पूर्वो॑ ह जा॒तः स उ॒ गर्भे॑ अ॒न्तः ।
स ए॒व जा॒तः स ज॑निष्यमा॑णः प्र॒त्यङ् जना॑स्तिष्ठति स॒र्वतो॑मुखः ।
यस्मा॒न्न जा॒त इ॒त्येषः ॥२६॥

[11]आत्मदेवत्या त्रिष्टुप् । एषो ह देवः । ह एष एव देवनादिगुणयुक्तो देवः । दिशः प्रदिशश्च सर्वा व्याप्यानुवर्तते तिर्यगूर्ध्वमधश्चेति । पूर्वो ह जातः । पूर्वः सर्वेभ्य उत्पत्तिमद्भ्यः पदार्थेभ्यश्च पूर्व एव । करणत्वेन कारणत्वेन च यद्यदुद्भाव्यते तस्मादपि पूर्व एव । जातः सिद्ध इत्यर्थः । स्वभावतस्त्वेवंरूपोऽपि लीलया स उ स एव । गर्भे अन्तः । मातुरुदरेऽन्तः स्थितः सन्नवतिष्ठते । स एव लीलया जातः स एव [च] जनिष्यमाण इति व्यपदिश्यते, द्वितीयस्याभावादेव । प्रत्यङ् जनाः । व्यत्ययः । जनानां प्रत्यङ् प्रत्यगात्मा भूत्वाभितिष्ठतीति ।

---

१ 'इति' नास्ति–ख-ग० । २ 'सन्तम्' नास्ति–ख० । ३ मृशति–क-ग० ।
४ 'मध्ये' नास्ति–ख० । ५ 'दृष्ट' इत्यस्य स्थाने 'षष्टि' इति–ख-ग०, 'इष्ट' इति–क० ।
६ ( मा० ३२।३ ) । ७ परमपुरुषस्य–ख-ग० । ८ 'प्रतिमाभूतम्' नास्ति–ख० ।
९ नमयतीति–ग० । १० ( मा० ३२।४ ) । ११ 'आत्मदेवत्या' नास्ति–ख० ।

अत एव सर्वतोमुखः । [1]तथा च गीतायाम्—"सर्वतः पाणिपाद तत् सर्वतोऽक्षिशिरोमुखम् । सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति" [ गीता १३।१३ ] इत्यभिधीयते । यस्मान्न जात इति । यस्मात् परमेश्वरात् । जातोऽन्यो नास्त्येव वस्तुतः । अपि तु इत्येष इति । एवरूपेण एष एव प्रतीयते नान्य इति ॥ २६ ॥

[2]वेनस्तत्पश्यन्निहितं गुहा सद्यत्र विश्वं भवत्येकनीळम् ।
तस्मिन्निदꣳ सं च वि चैति सर्वꣳ स ओतः प्रोतश्च विभूः प्रजासु ॥२७॥

आत्मदेवत्या त्रिष्टुप् । वेनः कश्चिन्मेधावी श्रीहरिगुरुकारुण्यसंपन्नः । तद् ब्रह्मस्वरूपम् । पश्यत् पश्यति । निहित गुहा । छान्दसो विभक्तिलोपः । गुहाया निहितम् । सर्वगृहगुहाया निहितमिव स्थित दुर्दर्शमिव स्थितमपि तदेव पश्यति । कि तदिति तदाह–यत्र विश्वं भवत्येकनीडम् । यत्र यस्मिन् स्वरूपे । इदं विश्व सर्वविकारजातमेकनीडम् एकनिलय पक्षिणामाश्रयस्थानमिव स्थित विश्वं यत्र भवति प्रतिष्ठित भवति । तस्मिन्निद तस्मिन्नेव परमात्मनि । इदं विकारजातमपि चोपसहारकाले समेति । समित्येकीभावे [ निरु० १।३ ] । स्वकारणेनैकतामाप्नोति । सर्गकाले प्राप्ते पुनर्व्येति च उदेति । तस्मात् कारणात् स ईश्वरः । ओतः शरीरादिभावेन ओतः, जीवभावेन प्रोतश्च । पटतन्तुवदोतप्रोतभावेन प्रजासु विभूः यः स्वयम्भूर्वर्तत इति परमात्मा निरूप्यते स्तूयते च ॥ २७ ॥

[3]प्र तद्वोचेदमृतं नु विद्वान्गन्धर्वो धाम विभृतं गुहा सत् ।
त्रीणि पदानि निहिता गुहास्य यस्तानि वेद स पितुः पितासत् ॥२८॥

आत्मदेवत्या त्रिष्टुप् । हिरण्यगर्भ प्र तद्वोचेदमृत नु विद्वान् गन्धर्वः । नु क्षिप्रम् । विद्वान् पण्डितः । शाश्वत तदात्मतत्त्वमेव । नु क्षिप्रमेव[4] । प्रवोचेत् प्रब्रूयात् । धाम विभृतं गुहा सत् । तदात्मतत्त्वम् । गुहा गुहायामन्तःकर[णा? णे] । धाम प्रकाशरूपम् । विभृत वि[वृ?द्ध]तम् । अन्तर्यामिरूपेण[5] लीलया विहरदासीत् । किं च, त्रीणि पदानि । निहिता निहितानि । गुहा गुहायामिव बहिरपि । अस्य [6]आवृतस्य परमात्मनः । त्रीणि पदानि निहितानि । त्रयः प[ा]दा बहिरपि निहिता अस्य । सर्गस्थितिलयाः, त्रयो

---

१ 'तथा च गीतायाम्' नास्ति–ख-ग० । २ ( मा० ३२।८ ) । ३ ( मा० ३२।९ ) ।
४ 'एव' नास्ति–ख० । ५ अन्तर्यामिरूपया–क-ग० । ६ अमृतस्य–उव० मही० ।

वेदाः, त्रयो लोकाश्च । त्रिशब्दो भूयसामुपलक्षणम् । भूयांसो हि गुणाः श्रूयन्ते सत्यकामादयः, जाग्रदादयो ह्यवस्थाश्च । यस्तानि त्रीणि पदानि[1] जानाति स आत्मा पितुः सर्वस्य जनको ब्रह्मा तस्य ब्रह्मणश्च पितुः पिता श्रीमहाविष्णुः । पिता सत् [2]भगवतस्तदात्मतत्त्वं प्रब्रूयादिति सबन्धः ।। २८ ।।

[3]स नो बन्धुर्जनिता स विधाता धामानि वेद भुवनानि विश्वा ।
यत्र देवा अमृतमानशानास्तृतीये धामन्नध्यैरयन्त ।। २९ ।।

आत्मदेवत्या त्रिष्टुप् । स एव ऋषिः । स परमात्मा ईश्वरः । नः अस्माकम् । बन्धुः बध्नात्यनुबध्नातीति निरुपाधिको बन्धुः । नः जनिता जनयिता । स च नः विधाता धारकः पोषकश्च । धामानि नः अस्माकम् । धामानि स्थानानि नामानि जन्मानि च । स एव वेद जानाति । विश्वानि भुवनान्यपि स एव वेद । यत्र देवाः । यत्र यस्मिन् वस्तुस्वरूपे । अमृत मोक्षरूपम् । आनशानाः सम्यग्ज्ञानेन व्याप्नुवाना देवाः । द्योतनात्मके तृतीये त्रिपादलक्षणे ब्रह्मस्वरूपे । धामन् धामनि स्थाने । देवा अध्यैरयन्त अधिभावेन प्राप्तवन्त इति ।। २९ ।।

[4]परीत्य भूतानि परीत्य लोकान्परीत्य सर्वाः प्रदिशो दिशश्च ।
उपस्थाय प्रथमजामृतस्यात्मनात्मानमभि संविवेश ।। ३० ।।

आत्मदेवत्या त्रिष्टुप् । परीत्य 'इण् गतौ' [ १०४५ अदा० ] । परीत्य भूतानि । भवन्तीति भूतानि । सर्वाणि भूतानि परीत्य परिज्ञाय, भूताना तत्त्व सम्यक्परीक्ष्य । परीत्य लोकान् । "लोकस्तु भुवने जने" [ अमर० ३।३।२ ] । परिज्ञाय पर्यालोच्य । परीत्य सर्वाः प्रदिशो दिशश्च । सर्वा दिशः प्रदिशश्च [5]विदिशश्च परीत्य तत्र तत्रानुगत यद्वस्तुतत्त्व तत्सम्यङ्निरीक्ष्य अवधाय निश्चित्य । स्थितो विद्वान् पुनरपि–उपस्थाय प्रथमजामृतस्य । सत्यस्य ब्रह्मणः । प्रथमजा निःश्वासवत् समुद्गता वाचम् ऋग्यजुःसामलक्षणा महावाक्यस्वरूपिणीम् । उपस्थाय सप्रा[र्थ्य?प्य] । अत्रोपस्थानं नाम वाक्यस्थपदाना शक्तिविवेकद्वारेण वाक्यतात्पर्यावधारणम् । एवं वाक्यतात्पर्यं निश्चित्य वाक्यार्थज्ञानेन आत्मना स्वरूपेण केवलचिदानन्दमात्ररूपेण । आत्मान

१ स आत्मा जानाति–क ख-ग० । २ भगवता तदा–ख० । ३ ( मा० ३२।१० ) ।
४ ( मा० ३२।११ ) । ५ दिशश्च–ख० ।

स्वस्वरूपभूतं ब्रह्म । अभिसविवेश अभिसविशति । सर्वोपाधिपरित्यागेन स्वस्वरूपमेव प्राप्त इव भवतीत्यर्थः ॥ ३० ॥

[1]परि॑ द्यावा॑पृथि॒वी स॒द्य इ॒त्वा परि॑ लो॒कान्परि॑ दिशः॒ परि॒ स्वः॑ ।
ऋ॒तस्य॒ तन्तुं॒ वित॑तं वि॒चृत्य॒ तद॑पश्य॒त्तद॑भव॒त्तदा॑सीत् ॥ ३१ ॥

आत्मदेवत्या त्रिष्टुप् । स्वस्वरूपप्राप्तिप्रकार पुनर्विविनक्ति–[2]परि द्यावापृथिवीति । द्यावापृथिव्यौ [परि] इत्वा परीत्य परिज्ञाय तत्सप्राप्य च । एव लोकान् [3]परीत्य दिशः [3]परीत्य । स्वः [4]स्वर्गलोक स्व. आदित्य च [5]परीत्य परिदृष्ट्वा स्वोपाधिपरित्यागेनादित्यस्वरूपेण च सच्चिदानन्दस्वरूपेण सप्राप्य । ऋतस्य यज्ञादेः । तन्तुम् अदृष्टरूपम् [6]अनेकभोगोपहेतुम् । वितत विस्तृतम् अनेकजन्मार्जितं च । सम्यग्ज्ञानेन विचृत्य विच्छिद्य परिसमाप्य उपसहृत्य ज्ञानाग्निना दग्ध्वेत्यर्थः । तद्ब्रह्म अपश्यत् साक्षात्करोति । तदभवत् । ब्रह्मात्मभेदनिर्वचनेन स्वय तद्ब्रह्माभवत् । तदासीत् । आसीद् अहङ्काराज्ञानयोर्निःशेषनिवृत्त्या ब्रह्मैवासीदित्यनुवाद. ॥ ३१ ॥

मेधाफलमिद श्रुत्वा कश्चिन्मेधाकामो मेधा याचते द्वाभ्याम्—

[7]सद॑स॒स्पति॒मद्भु॑तं प्रि॒यमिन्द्र॑स्य॒ काम्य॑म् ।
स॒निं मे॒धाम॑यासिषꣳ॒ स्वाहा॑ ॥ ३२ ॥

सदसस्पतिदेवत्या गायत्री । सदसस्पति ( [8]यज्ञसदसः पतिं यज्ञगृहस्य पतिम् । अद्भुत मत्यभिनवमाहात्म्यमचिन्त्यशक्तिम् । प्रियमात्मरूपम् । इन्द्रस्य काम्य कामसयुक्त कामनार्हं कमनीयम् । एवगुणविशिष्ट सदसस्पतिम् । सनि दानम् । सामान्येन दाननिर्देशः । मेधां च । [मेधा] धारणावती धी., ता मेधाम् । अयासिष याचे । द्विकर्मकोऽय धातुः । सदसस्पतिं याचे, मेधा याच इति । स्वाहेति होमार्थः ॥ ३२ ॥

[9]यां मे॒धां दे॑वग॒णाः पि॒तर॑श्चोपा॒सते॑ ।
तया॒ माम॒द्य मे॒धया॑ग्ने मे॒धावि॑नं कुरु॒ स्वाहा॑ ॥ ३३ ॥

---

१ ( मा० ३२।१२ ) । २ 'परि द्यावापृथिवीति' नास्ति–क० । ३ परित्वा–ख० ।
४ स्वर्गं लोकम्–ख० । ५ परित्वा–क-ख-ग० । ६ अनेकभोगाय हेतुम्–क-ग० । ७ (मा०३२।१३) ।
८ 'यज्ञसदसः पतिम्' इत्यारभ्याध्यायसमाप्तिपर्यन्तं कोष्ठकान्तर्गतः पाठः खपुस्तके नास्ति, तत्र ९६–१०१ संख्यकानां पत्राणां त्रुटितत्वात् । ९ (मा० ३२।१४) ।

आग्नेय्यनुष्टुप्, यजुरन्ता । मेधाकामोऽनया मेधा याचते । हे श्रीभगवन्नग्ने, मेधा देवगणा उपासते प्रार्थयन्ते । पितरश्च उपासते । तया मेधया । अद्य अस्मिन्नहनि । मा मेधाविन कुरु । स्वाहेति होमार्थः ॥ ३३ ॥

श्रीकामोऽनेन मन्त्रेण श्रियं याचते—

[1]इदं मे ब्रह्म च क्षत्रं चोभे श्रियमश्नुताम् ।
मयि देवा दधतु श्रियमुत्तमां तस्यै ते स्वाहा ॥ ३४ ॥

श्रीदेवत्याऽनुष्टुप्[2], यजुरन्ता । इद ब्रह्म ब्राह्मणजातिः, क्षत्र च क्षत्रियजातिश्चेत्येते उमे ब्रह्मक्षत्रे । मे मदीयाम् । श्रियमश्नुतामुपजीवताम् । अत एव मयि देवाः देवनादिगुणयुक्ता देवाः । उत्तमामुत्कृष्टा विच्छेदरहिताम् । श्रिय धनधान्यादिसम्पदम् । दधतु स्थापयन्तु । तस्यै श्रियै देवतायै तुभ्यम् । स्वाहेति होमार्थः ॥ ३४ ॥

'अपेत.' [३५।३५–५५] इत्यनुवाकः [3]पितृदेवत्यः । आदित्य[स्या]प्ये देवाना वा । पलाशशाखया [4]व्युदूहति [ का० श्रौ० २१।३।११, शत० ब्रा० १३।८।२।३ ]—

[5]अपेतो यन्तु पणयोऽसुम्ना देवपीयवः ।
अस्य लोकः सुतावतः ॥ ३५ ॥

पितृदेवत्या गायत्री । अप इतः पणयः । इत अस्मात् श्मशानस्थानलक्षणात् स्थानात् । पणयः असुराः । अपयन्तु अपगच्छन्तु । पुनश्च कथंभूता पणयः ? असुम्नाः । सुम्न सुख न विद्यते येषा तेऽसुम्ना असुखकराश्च । देवपीयवः । पीयतिर्हिंसाकर्मा [ निरु० ४।२५ ] । देवान् पीयन्ति घ्नन्ती[ति] देवपीयवः देवाना हिंसितारः पणय इतोऽपयन्तु । किमिति ? अस्य लोकः सुतावतः । सुतवतः लोकस्थान सुतवतः सोमाभिषवं कृतवतः सोमयाजिनोऽस्य यजमानस्यायं लोकः, न तु युष्माकमिति ॥ ३५ ॥

दक्षिणा शाखा निरस्य [ति?] परिश्रयति [का० श्रौ० २१।३।१२]—

[6]द्युभिरहोभिरक्तुभिर्व्यक्तं यमो ददात्ववसानमस्मै ॥ ३६ ॥

---

१ (मा० ३२।१६)। २ त्रिष्टुप्–क-ग०। ३ 'पित्र्यः' इति गपुस्तकस्थः पाठः, "पितृदेवत्यः" इति च तस्यार्थस्तत्रैव टिप्पण्याम्। ४ व्यूहति–क-ग०। ५ (मा० ३५।१)। ६ द्युभिरिति मन्त्रो माध्यन्दिनसंहितायामपेत इति मन्त्रस्यैवान्तिमो भाग, काण्वसंहितायां

पितृदेवत्या [1]गायत्री । द्युभिः । द्युशब्देन श्रुतौ ऋतवोऽभिधीयन्ते । द्युभिः ऋतुभिः । अहोभिः प्रसिद्धैः । अक्तुभि· रात्रिभिः । व्यक्त स्पष्टम् । [ क्षि क्षये ? ] । अवस्यन्त्य स्मिन्निति अवसीयत इति वा अवसान शवसस्कारस्थानम् । अस्मै यजमानाय । यमो ददातु ॥ ३६ ॥

[2]सविता ते शरीरेभ्यः पृथिव्याँ लोकमिच्छतु ।

तस्मै युज्यन्तामुस्रियाः ॥ ३७ ॥

पितृदेवत्या गायत्री । सविता ते तव यजमानस्य तव । शरीरेभ्यः । व्यत्ययः । शरीराणाम् । अस्या पृथिव्याम् । लोकं स्थानम् । सविता इच्छतु सविता अनुजानातु । तस्मै क्षेत्राय शरीराय । संस्कारार्थं युज्यन्ताम् । तस्मै सवित्रा अनुज्ञातक्षेत्राय क्षेत्रगमनाय । उस्रियाः रश्मिसंबन्धिनोऽनड्वाहः । युज्यन्ता नियुज्यन्ताम् ॥ ३७ ॥

सीताः कृषति [ का० श्रौ० २१।४।१ ]—

[3]वायुः पुनातु सविता पुनात्वग्नेर्भ्राजसा सूर्यस्य वर्चसा ।

विमुच्यन्तामुस्रियाः ॥ ३८ ॥

पितृदेवत्या गायत्री । पुनातिरत्र विदारणार्थः । वायुः पुनातु विदारयतु । अग्नेर्भ्राजसा सूर्यस्य वर्चसा दीप्त्या । सविता पुनातु विदारयतु । विमुच्यन्तामुस्रियाः अनड्वाहः । विमुच्यन्ता विमोक्षणं क्रियन्ताम् ॥ ३८ ॥

[4]सर्वौषधं वपति [ का० श्रौ० २१।४।४ ]—

[5]अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता ।

गोभाज इत्किलासथ यत्सनवथ पूरुषम् ॥ ३९ ॥

[6]अयं मन्त्रो व्याख्यातः [ १३।८० ] ॥ ३९ ॥

---

च परवर्तिनः सविता त इति मन्त्रस्यादिमोंऽशः । अत्रानन्दबोधेन त्वेष पृथगेव व्याख्यातः ।

१ परं यजुः–सर्वा० । २ ( मा० ३५।२ ) । ३ ( मा० ३५।३ ) ।

४ सर्वौषधिं वाचयति–क-ग० । ५ ( मा० ३५।४ ) । ६ 'अयम्' नास्ति–ग० ।

शरीराणि निवपति [का० श्रौ०२१।४।५]—

[1]सविता ते शरीराणि मातुरुपस्थ आवपतु । तस्मै पृथिवि शं भव ।
प्रजापतौ त्वा देवतायामुपोदके लोके निदधाम्यसौ ॥ ४० ॥

पितृदेवत्या गायत्री । शरीराणि शरीरोपलक्षितानि [2]अस्थीनि । मातुः पृथिव्याः । उपस्थे उत्सङ्गे । सविता ते तव । आवपतु स्थापयतु । तस्मै पृथिवि । तस्मै अस्थिरूपाय यजमानाय । शं सुखं सुखरूपिणी भव । [3]प्रजापतौ त्वेति यजुः । प्रजापतौ देवतायाम् । उपोदके उदकसमीपे । लोके स्थाने । त्वा अस्थिभूत त्वाम् । निदधामि स्थापयामि । असौ । असाविति नामग्रहणम् ॥ ४० ॥

[4]परं मृत्यो अनु परेहि पन्थाँ यस्ते अन्य इतरो देवयानात् ।
चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजाꣳ रीरिषो मोत वीरान् ॥ ४१ ॥

मृत्युदेवत्या त्रिष्टुप् । पर मृत्यो अनु परा इहि पन्थाम् । पन्थानम् । हे मृत्यो परं पन्था [5]परानु इहि पराङ्मुखो भूत्वा गच्छ । यस्ते अन्य इतरो देवयानादिति[6] पन्थान विशिनष्टि । यस्ते त्वदीयोऽय[7] पन्थाः । तस्माद्देवयानात् । अस्माद्देवयानमार्गादितरः स्वरूपतः पृथक् । अन्यश्च नामतोऽपि पितृयान इति । त पितृयान पन्थान गच्छ । चक्षुष्मते अतिशयेन चक्षुरस्यास्तीति चक्षुष्मान्, तस्मै । शृण्वते श्रवण कुर्वते । ते तुभ्य ब्रवीमि । नहि त्वया अदृष्टमश्रुत विद्यते । मा नः प्रजा रीरिषो मोत वीरान् । नः अस्माकम् । प्रजा त्व मा रीरिषः मा हिंसीः । उत अपि च । वीरान् पुत्रान् मा रीरिषः । स्नेहविशेषाद्विभज्य वचनम् ॥ ४१ ॥

[8]शं वातः शꣳ हि ते घृणिः शं ते भवन्त्विष्टकाः ।
शं ते भवन्त्वग्नयः पार्थिवासो मा त्वाभिशूशुचन् ॥ ४२ ॥

पितृदेवत्याऽनुष्टुप्[9] । शं वातः । ते तव एवविधस्य यजमानस्य । शं वायुः । शं सुखरूपो भूयात् । श हि ते घृणिः । घृणिः सूर्यः श भूयात् । श ते भवन्त्विष्टकाः । अत्र स्थापिताः ।

---

१ (मा० ३५।५-६) । २ स्थानानि—क-ग० ३ 'प्रजापतौ त्वेति' नास्ति—क० ।
४ (मा० ३५।७) । ५ अनु परा—उव० । ६ 'इति' नास्ति—क० ।
७ 'अयम्' नास्ति—क० । ८ ( मा० ३५।८ ) । ९ त्रिष्टुप्—क-ग० ।

ते श भवन्तु । शं ते भवन्त्वग्नयः । श भवन्तु । पार्थिवासः पृथिवीमवन्धिनाऽग्नयः । त्वा त्वाम् । मा अभि[शो ? शू ]शुचन् तव मा शोक कुर्युरिति ॥ ४२ ॥

जपति—

[1]कल्पन्तां ते दिशस्तुभ्यमापः शिवतमास्तुभ्यं भवन्तु सिन्धवः ।
अन्तरिक्षꣳ शिवं तुभ्यं कल्पन्तां ते दिशः सर्वाः ॥ ४३ ॥

वैश्वदेवी बृहती । ते तुभ्यम् । दिश. शिवतमाः कल्पन्ताम् । आपश्च तुभ्य शिवाः शिवतमाः शान्ततमाः कल्पन्ताम् । तुभ्य सिन्धवः नद्यः शिवतमा भवन्तु । अन्तरिक्ष तुभ्य शिवतम भवतु । कल्पन्ता ते दिशः सर्वाः । दिशो विदिशश्च शिवतमाः कल्पन्ताम् ॥ ४३ ॥

[2]अश्मन्वती रीयते सꣳरभध्वमुत्तिष्ठत प्रतरता सखायः ।
अत्रा जहीमोऽशिवा ये असञ्छिवान्वयमुत्तरेमाभि वाजान् ॥ ४४ ॥

वैश्वदेवी त्रिष्टुप् । [3]सुचीकः [ऋषिः] । अश्मन्वती । [4]अश्मवतीय नदी पाषाणवती । रीयते । 'ऋ गतौ' [ १४९८ क्र्यादिः ] रीयते अस्माभिर्गम्यते । यतो विषमा अतो ब्रूमः । संरभध्वमुत्तरणे यत्न कुरुध्वम् । अतस्तदुत्तरणार्थमुत्तिष्ठत सखायः अभिमुखा भवत । प्रतरता प्रतरत प्रतारयत वा, प्रतरण कुरुत कारयतेति वा । किं तद्व्याहर इति । अत्र ये अशिवा अशान्ता [5]असन् अशिवा आसन् । तान् जहीमः त्यजामः । शिवान् वाजान् अन्नविशेषान् । अभि प्रति । उत्तरेम वयमतितरेम ॥ ४४ ॥

अपामार्गैरपमृजते[6] [ का० श्रौ० २१।४।२२ ]—

[7]अपाघमप किल्बिषमप कृत्यामपो रपः ।
अपामार्ग त्वमस्मदप दुःष्वप्न्यꣳ सुव ॥ ४५ ॥

लिङ्गोक्तदेवत्याऽनुष्टुप्[8] । शुनःशेप ऋषिः । इय दुःस्वप्ननाशनी । हे अपामार्ग, त्वम् । अघ सामान्यत. । अस्मत् अस्मत्तः । अपसुव अपगमय । अप किल्बिषम् अभक्ष्यभक्षणनिमित्तं पापम् । अस्मत्तः अपसुव अपगमय । अप कृत्या निन्दितप्रवृत्तिम् । अस्मत् अस्मत्तः । दूरत एव

---

१ (मा० ३५।९ ) । २ ( मा० ३५।१० ) । ३ तृचीकः–क-ग० । ४ अश्मवतामियम्–ग० । ५ अस्मात्रः–क-ग० । ६ अपमृशति–क-ग० । ७ ( मा० ३५।११ ) । ८ त्रिष्टुप्–क-ग० ।

अपसुव । रप इति पापनाम [ निरु० ४।२१ ] । अपो रपः । पापम् अपसुव अपगमय । [ पाप ] महापातकोपपातकसकरीकरणमलिनीकरणप्रकीर्णकादि । केचित्तु [1]चतुर्विधानि पापानि चतुर्भिर्वर्ज्यैरपनुदत्विति [ व्याचक्षते ] । अप दुःस्व[ प्र ? प्न्यं ] दुःस्वप्नप्रयुक्तं दुःस्वप्नफलस्य हेतुभूतं दुरितम् । अस्मत् [ अस्मत्तः ] । अपसुव अपगमयेति ॥ ४५ ॥

[2]सुमित्रिया न इति स्नाति [ का० श्रौ० २१।४।२३ ]—

[3]सुमित्रिया न आप ओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु ।
योऽस्मान्द्वेष्टि यं च वयं द्विष्मः ॥ ४६ ॥

मन्त्रोऽय[4] व्याख्यातः [ ६।३१ ] ॥ ४६ ॥

अनडुत्पुच्छमन्वारभ्य [ का० श्रौ० २१।४।२३ ]—

[5]अनड्वाहमन्वारभामहे स्वस्तये ।
स न इन्द्र इव देवेभ्यो वह्निः संतारणो भव ॥ ४७ ॥

आनडुह्यनुष्टुप् । शुनःशेपः । अनड्वाहमन्वारभामहे अनडुत्पुच्छमन्वारभामहे, अन्वारम्भणं कुर्मः । कस्मै ? स्वस्तये अविनाशाय । स वह्निः वहनाद्वह्निः अग्निः । न. अस्माकम् । संतारणः संतारकः । भव भवतु । इन्द्र इव देवेभ्यः । इन्द्र इव यथा देवाना सर्वापद्भ्यः संतारको वर्तते, तथाऽग्निरस्माक सतारणः संतारकः । भव भवतु ॥ ४७ ॥

[6]उत्क्रामन्ति —

[7]उद्वयं तमसस्परि स्वः पश्यन्त उत्तरम् ।
देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥ ४८ ॥

व्याख्यातोऽय[8] मन्त्रः [ २२।६ ] ॥ ४८ ॥

---

१ चतुर्भिर्वर्ज्यैः कायिकवाचिकमानसपरकृताभिचाररूपैश्चतुर्विधानि पापानि हे अपामार्ग भवान् अपनुदत्विति योजना । २ 'सुमित्रिया न इति स्नाति' नास्ति–क० । ३ ( मा० ३५।१२ ) । ४ 'अयम्' नास्ति–ग० । ५ ( मा० ३५।१३ ) । ६ आगच्छन्ति–का० श्रौ० [ २१।४।२३ ] । ७ ( मा० ३५।१४ ) ८ 'अयम्' नास्ति–ग० ।

[ [1]अग्न आयूंषि पवस आसुवोर्जमिषं च नः ।
आरे बाधस्व दुच्छुनाम् ॥ ४८ ॥]

जुहोति [ का० श्रौ० २१।४।२५ ]—

[2]आयुष्मानग्ने हविषा वृधानो घृतप्रतीको घृतयोनिरेधि ।
घृतं पीत्वा मधु चारु गव्यं पितेव पुत्रमभिरक्षतादिमान्स्वाहा ॥ ४९ ॥

आग्नेयी त्रिष्टुप्, यजुरन्ता । [3]वैखानरः । हे श्रीभगवन्नग्ने, हविषा वृधानः । हविषा वर्धमानः । घृतप्रतीक. घृतमुखः । घृतयोनिः घृतं योनिः कारणं स्थान यस्य स घृतयोनिः । एधि वर्धस्व । घृतप्रतीको भव । घृत पीत्वा मधु चारु । मधुमत् स्वादु रुचिकरम् । गव्य गोभ्यो हितम्, गवा घृत पीत्वा । पितेव । [पिता] पुत्र यथाभिरक्षति तथेमान् यजमानान् एवं-दशामापन्नान् रक्षतात् । इत उत्तरकाल सुखं यथा भवति तथाभिरक्षतादिति । स्वाहेति होमार्थः ॥ ४६ ॥

ग्रामश्मशानान्तरे मर्यादालोष्टं निदधाति [ का० श्रौ० २१।४।२४ ]—

[4]इमं जीवेभ्यः परिधिं दधामि मैषां नु गादपरो अर्थमेतम् ।
शतं जीवन्तु शरदः पुरूचीरन्तर्मृत्युं दधतां पर्वतेन ॥ ५० ॥

मृत्युदेवत्या त्रिष्टुप् । [5]सङ्कसुक ऋषिः । इमं जीवेभ्यः । इमं लोष्टम् । जीवेभ्यः अर्थाय । [6]परिधिं परिधीयत इति परिधिस्त लोष्टम् । दधामि स्थापयामि । किमिति ? मैषा नु गात् । एषा नु गात् । अपरः जीवाना मध्ये अपरः अस्मादपि । नु क्षिप्रम् । मा अगात् । पितृलोकमिति [वि?]शेषः । पितृलोकं मा गच्छेत् । अर्थमेतम् एतमर्थं पुरस्कृत्य प्रार्थयामः । शतं जीवन्तु शरदः पुरूचीः । [7]यज्ञाञ्चनाः दानाध्ययनयागाद्यञ्चनवतीः शरदः । सर्वजीवाः जीवन्तु । अन्तर्मृत्युं दधता पर्वतेन । मृत्युमन्तर्दधतामन्तर्धानं तिरोधान कुर्यात् ॥ ५० ॥

---

१ (मा० ३५।१६)। एष मन्त्रोऽत्रानन्दबोधेन नैव स्थापितो न च व्याख्यातः । अस्य व्याख्यानम् [१९।३८] द्रष्टव्यम् । २ (मा० ३५।१७)। ३ वैखानस ऋषिरिति पाठेन भाव्यम् । द्रष्टव्या—सर्वा० ।
४ ( मा० ३५।१५ ) । ५ सङ्कुसुक—क-ग० । ६ परिधिरे—क-ग० ।
७ 'यज्ञाञ्चनाः' इत्यत्र—"बह्वञ्चनाः" इति पाठान्तरम्—ग० टि० ।

अपसुव । रप इति पापनाम [ निरु० ४।२१ ] । अपो रपः । पापम् अपसुव अपगमय । [ पाप ] महापातकोपपातकसंकरीकरणमलिनीकरणप्रकीर्णकादि । केचित्तु [1]चतुर्विधानि पापानि चतुर्भिर्वर्ज्यैरपनुदत्विति [ व्याचक्षते ] । अप दुःस्व[ प्न ? प्न्यं ] दुःस्वप्नप्रयुक्तं दुःस्वप्नफलस्य हेतुभूतं दुरितम् । अस्मत् [ अस्मत्तः ] । अपसुव अपगमयेति ॥ ४५ ॥

[2]सुमित्रिया न इति स्नाति [ का० श्रौ० २१।४।२३ ]—

[3]सुमित्रिया न आप ओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु ।
योऽस्मान्द्वेष्टि यं च वयं द्विष्मः ॥ ४६ ॥

मन्त्रोऽयं[4] व्याख्यातः [ ६।३१ ] ॥ ४६ ॥

अनडुत्पुच्छमन्वारभ्य [ का० श्रौ० २१।४।२३ ]—

[5]अनड्वाहमन्वारभामहे स्वस्तये ।
स न इन्द्र इव देवेभ्यो वह्निः संतारणो भव ॥ ४७ ॥

आनडुह्यनुष्टुप् । शुनःशेपः । अनड्वाहमन्वारभामहे अनडुत्पुच्छमन्वारभामहे, अन्वारम्भण कुर्मः । कस्मै ? स्वस्तये अविनाशाय । स वह्निः वहनाद्वह्निः अग्निः । नः अस्माकम् । संतारणः संतारकः । भव भवतु । इन्द्र इव देवेभ्यः । इन्द्र इव यथा देवाना सर्वापद्भ्यः सतारको वर्तते, तथाऽग्निरस्माक सतारणः संतारकः । भव भवतु ॥ ४७ ॥

[6]उत्क्रामन्ति —

[7]उद्वयं तमसस्परि स्वः पश्यन्त उत्तरम् ।
देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥ ४८ ॥

व्याख्यातोऽयं[8] मन्त्रः [ २२।६ ] ॥ ४८ ॥

---

१ चतुर्भिर्वर्ज्यैः कायिकवाचिकमानसपरकृताभिचाररूपैश्चतुर्विधानि पापानि हे अपामार्ग भवान् अपनुदत्विति योजना । २ 'सुमित्रिया न इति स्नाति' नास्ति–क० । ३ ( मा० ३५।१२ ) । ४ 'अयम्' नास्ति–ग० । ५ ( मा० ३५।१३ ) । ६ आगच्छन्ति–का० श्रौ० [ २१।४।२३ ] । ७ ( मा० ३५।१४ ) ८ 'अयम्' नास्ति–ग० ।

[ [1]अग्न आयूंषि पवस आसुवोर्जमिषं च नः।
आरे बाधस्व दुच्छुनाम् ॥ ४८ ॥]

जुहोति [ का० श्रौ० २१।४।२५ ]—

[2]आयुष्मानग्ने हविषा वृधानो घृतप्रतीको घृतयोनिरेधि।
घृतं पीत्वा मधु चारु गव्यं पितेव पुत्रमभिरक्षतादिमान्स्वाहा ॥ ४९ ॥

आग्नेयी त्रिष्टुप्, यजुरन्ता। [3]वैश्वानरः। हे श्रीभगवन्नग्ने, हविषा वृधानः। हविषा वर्धमानः। घृतप्रतीक. घृतमुखः। घृतयोनिः घृतं योनिः कारणं स्थान यस्य स घृतयोनिः। एधि वर्धस्व। घृतप्रतीको भव। घृत पीत्वा मधु चारु। मधुमत् स्वादु रुचिकरम्। गव्यं गोभ्यो हितम्, गवा घृतं पीत्वा। पितेव। [पिता] पुत्रं यथाभिरक्षति तथेमान् यजमानान् एवंदशामापन्नान् रक्षतात्। इत उत्तरकाल सुखं यथा भवति तथाभिरक्षतादिति। स्वाहेति होमार्थः ॥ ४९ ॥

ग्रामश्मशानान्तरे मर्यादालोष्ट निदधाति [ का० श्रौ० २१।४।२४ ]—

[4]इमं जीवेभ्यः परिधिं दधामि मैषां नु गादपरो अर्थमेतम्।
शतं जीवन्तु शरदः पुरूचीरन्तर्मृत्युं दधतां पर्वतेन ॥ ५० ॥

मृत्युदेवत्या त्रिष्टुप्। [5]सङ्कुसुक ऋषिः। इमं जीवेभ्यः। इमं लोष्टम्। जीवेभ्यः अर्थाय। [6]परिधिं परिधीयत इति परिधिस्त लोष्टम्। दधामि स्थापयामि। किमिति? मैषा नु गात्। एषा नु गात्। अपरः जीवाना मध्ये अपरः अस्मादपि। नु क्षिप्रम्। मा अगात्। पितृलोकमिति [वि?]शेषः। पितृलोकं मा गच्छेत्। अर्थमेतम् एतमर्थं पुरस्कृत्य प्रार्थयामः। शतं जीवन्तु शरदः पुरूचीः। [7]यज्ञाञ्चनाः दानाध्ययनयागाद्यञ्चनवतीः शरदः। सर्वे जीवाः जीवन्तु। अन्तर्मृत्युं दधता पर्वतेन। मृत्युमन्तर्दधतामन्तर्धानं तिरोधान कुर्यात् ॥ ५० ॥

---

१ (मा० ३५।१६)। एष मन्त्रोऽत्रानन्दबोधेन नैव स्थापितो न च व्याख्यातः। अस्य व्याख्यानम् [१९।३८] द्रष्टव्यम्। २ (मा० ३५।१७)। ३ वैखानस ऋषिरिति पाठेन भाव्यम्। द्रष्टव्या—सर्वा०।
४ ( मा० ३५।१५ )। ५ सङ्कुसुक—क-ग०। ६ पृथिरे—क-ग०।
७ 'यज्ञाञ्चनाः' इत्यत्र—"बह्वञ्चनाः" इति पाठान्तरम्—ग० टि०।

अथैषां [1]परिदा वदन्ति [ का० श्रौ० २१।४।२६ ]—

[2]परीमे गामनेषत पर्यग्निमहृषत ।
देवेष्वक्रत श्रव· क इमाँ२ आदधर्षति ॥ ५१ ॥

ऐन्द्री अनुष्टुप् । [3]भरद्वाज ऋषिः । परि इमे गामनेषत । इमे जीवाः । गा भूमिम् । पर्यनेषत । नयतेर्लुङि सिच एतद्रूपम्[4] । परितोष गमयन्ति । पर्यग्निमहृषत । परि अग्निं परि अहृषत हवींषि प्रापयन्त । देवेष्वक्रत श्रवः । अक्रृषत । कीर्तिर्देवेषु ऋत्विक्षु अक्रत । अक्रृषतेति प्राप्ते सिचो लोपः । [ अबोधनम् अक्रमः ? ] । इमान् जीवान् कृतकृत्यान् । कः को नाम आदधर्षति धर्षण क. करोति ॥ ५१ ॥

अद्वारेणौपासन निरस्यति[5] [ का० श्रौ० २१।४।२७ ]—

[6]क्रव्यादमग्निं प्रहिणोमि दूरं यमराज्यं गच्छतु रिप्रवाहः ।
इहैवायमितरो जातवेदा देवेभ्यो हव्यं वहतु प्रजानन् ॥ ५२ ॥

आग्नेयी त्रिष्टुप् । [7]दमन ऋषिः । क्रव्यम् आमिषमत्तीति क्रव्यात्, त क्रव्याद शवदाह-दूतकर्माणमग्निम् । प्रहिणोमि प्रक्षिपामि । यमराज्य गच्छतु रिप्रवाहः । रिप्रमिति पापनाम [ निरु० ४।२१ ] । रिप्रं पाप वहतीति रिप्रवाहः शवदाहकोऽग्निः । यमराज्यं यमलोक गच्छतु । इहैवायमितरो जातवेदाः । क्रव्यादग्नेरितरः अन्यः । जातवेदाः सवि[ ज्ञः ? द्य. ] योऽग्निः [स] इहैव तिष्ठत्विति । स च देवेभ्यो हव्य वहतु प्रजानन् । देवेभ्यः देवतार्थम् । हवि· प्रजानन् देवाना हविर्भागमवगच्छन् । हव्य वहतु हविर्योग्यं हव्य प्रापयतु ॥ ५२ ॥

[8]वह वपां जातवेदः पितृभ्यो यत्रैनान्वेत्थ निहितान्पराके ।
मेदसः कुल्या उप तान्स्रवन्तु सत्या एषामाशिषः सन्तु कामाः स्वाहा ॥५३॥

जातवेदसी[ति?] त्रिष्टुप् । हे जातवेदः, पितृभ्यो वपा वह प्रापय । यत्रैनान् वेत्थ । यत्र यस्मिन्पराकेऽतिदूरदेशे निहितान् एतान् पितॄन् । वेत्थ जानासि । तत्रत्येभ्यः पितृभ्यो हव्यं

---

**१** परिधीन् दधाति–क-ग० । २ ( मा० ३५।१८ ) । **३** भारद्वाज. शिरिम्बिठः–सर्वा० ।
**४** अनर्टर्लिटि शिब्येतद् रूपम्–क-ग० । ५ उद्धारणोपासनम्–क-ग० । ६ ( मा०३५।१९ ) ।
**७** मद्दन–क०, मदन–ग० । ८ ( मा० ३५।२० ) ।

वहतु । मेदसः कुल्या उप तान् स्रवन्तु । तान् पितॄन् प्रति । मेदसः कुल्याः सरितः । उपस्रवन्तु समीप गच्छन्तु । सत्या एषाम् । एषां दातॄणां यजमानानाम् । आशिष. अभीष्टस्यार्थस्य आशसनानि आशिषः । सत्याः अवितथाः । सन्तु भवन्तु । कामाश्च आशिषो मूलभूताः । ते च सत्याः सन्तु । स्वाहा सुहुतमस्तु ॥ ५३ ॥

[1]स्योना पृथिवि नो भवानृक्षरा निवेशनी ।
यच्छा नः शर्म सप्रथाः ॥ ५४ ॥

पृथिवीदेवत्या गायत्री । ऋषिर्मेधातिथिः । हे पृथिवि, नः अस्माकम् । स्योना । स्योनमिति सुखनाम [ निघ० ३।६; निरु० ८।६ ] सुखरूपा भव । अनृक्षरा ऋक्षरः कण्टकः न विद्यते ऋक्षरः कण्टको यस्या सा अनृक्षरा अकण्टका निष्कण्टका । अनृक्षराग्रहण चौर्य-दायादादिनिवृत्त्यर्थम्, तेषामसुखकरत्वात् । निवेशनी नितरा वेशनी, [ प्र ? ]वेशन प्रतिष्ठा अस्यास्तीति निवेशनी । सप्रथाः प्रथसा पृथुभावेन सह वर्तत इति सप्रथाः सर्वतो बहुरूपा । शर्म । अस्माक नः । शरण गृहम्, "शरणं गृहरक्षित्रोः" [अमर० ३।३।५३] इत्यभिधानात् । यच्छ प्रयच्छ ॥ ५४ ॥

[2]अप नः शोशुचदघम् ॥ ५५ ॥

शोशुचदघम् । व्यत्ययः । नः अस्माकम् । अघ पापजातम् । अपेति परीत्यर्थे । परिशोशुचत् परिशोधय ॥ ५५ ॥

[3]आहुति जुहोति [ का० श्रौ० २५।७।४० ]—

[4]अस्मात्त्वमधि जातोऽसि त्वदयं जायतां पुनः ।
असौ स्वर्गाय लोकाय स्वाहा ॥ ५६ ॥

आग्नेय्यनिरुक्ता गायत्री, यजुरन्ता । ऋषिरादित्यः । अस्मात्त्वमधिजातोऽसि । हे भगवन्नग्ने, अस्मात् यजमानात् । [अधिः] अधिकारार्थः । आधानकाले इमं यजमानमधिकृत्य जातोऽसि । ततस्त्वा ब्रवीमि । त्वदय जायता पुनः । अय यजमानः । त्वत् त्वत्तः । पुनर्जायता

१ ( मा० ३५।२१ ) । २ काण्वमाध्यन्दिनसंहितयोः पूर्वमन्त्रस्यैवायमन्तिमोंऽशः, अत्रानन्द-बोधेन तु पृथग् व्याख्यातः । ३ 'जुहोति' इत्येव–क-ग० । ४ ( मा० ३५।२२ ) ।

विशिष्टकुले समुत्पद्यताम् । असाविति यजमानस्य विशेषनामवचनम् । तद्यथा–एतन्नामायं देवदत्तः । स्वर्गाय लोकाय स्वर्गलोकप्राप्त्यर्थम् । त्वत्तो ह्यय जातः पुनस्त्वद्रूश्यः स्यादित्यभिप्रायः । स्वाहा सुहुतमस्तु ॥ ५६ ॥

[1]अप॑ नः शोशु॑चद॒घम् ॥ ५७ ॥

[2]अय मन्त्रो व्याख्यातः [ ३५।५५ ] ॥ ५७ ॥

अथ पुरुषसूक्तस्नपन व्याख्यास्यामः । प्रतिष्ठान्ते मासान्ते पुण्यकाले देवाभिमुखे गोमयेनोपलिप्य, पञ्चवर्णैरलकृत्य तन्दुलैर्व्रीहिभिर्वा, पञ्चविंशतिपद पञ्चभागीकृत्य, क्षेत्रे विभज्य, [3]स्वलकृताभ्यो वा कुम्भकलशान् विन्यस्य, यवाक्ष[त?त] म[ङ्कु?ङ्ग]ल्यान्तर वा तन्तुना परिवेष्ट्य, अद्भिः प्रक्षाल्य पूरयित्वा [4]च, वस्त्रमावेष्ट्य, [5]सुवर्ण ) निक्षिप्य, प्रणवेन त्वर्चां निधाय, [6]प्रागाद्यष्टपदेषु पुष्पोदकक्षीरोदकगन्धोदकाक्षतोदकफलोदककुशोदकरत्नोदकजप्योदकानि स्थापयित्वा, इन्द्रादिप्रादक्षिण्येन षोडशपदेषु शुद्धोदकानि विन्यस्य, एकैकं प्रधानं द्वौ द्वावुपस्थानानि कल्पयेत् । मध्ये श्रियमावाह्य, अर्चयित्वा, [7]ततः पूर्वां दिशमारभ्य शङ्खचक्रगदापद्मानि क्रमेणार्चयित्वा, 'सहस्रशीर्षा' [ ३५।१ ] इत्यादिषोडश ऋग्भिः स्नापयित्वा, [8]ततो वैष्णवैः 'अतो देवाः' [ ऋग्वे० १।२२।१६ ] आदिमन्त्रैः सप्तभिः[?]स्नापयित्वा, 'विष्णोर्नुकम्' [ ५।२४ ] इति स्नपन करोति । [9]'सहस्रशीर्ष देवम्' [ महाना० ११।१ ] इति कुम्भतोयेन स्नापयित्वा सर्वोपचारैरर्चयेत् । कुम्भकलशमध्ये हारिद्रचूर्णेन सर्वसपत्करमिति विज्ञायते ॥

इति [10]शुक्लयजुःकाण्वसहिताभाष्यसग्रहे पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

---

१ काण्वसंहितायां पूर्वमन्त्रस्यैवायमन्तिमोंऽशः । माध्यन्दिनसंहितायां तु नैवास्ति ।

२ 'व्याख्यातम्' इत्येव–ग० । ३ सुवासिनीभ्यः कुमारीभ्यो वेति शेषः । ४ 'च' नास्ति–ग० ।

५ १२९ तमपृष्ठस्थकोष्ठकादारभ्यात्रत्यकोष्ठकसमाप्तिपर्यन्तो भाष्यभागः खपुस्तके नास्ति, तत्र ९६–१०१ मितानां षट् पत्राणां त्रुटितत्वात् । ६ प्राणादि–ख० । ७ 'ततः पूर्वां ···पद्मानि' नास्ति–ख० । ८ 'ततः' नास्ति–ख० । ९ सहस्रशीर्षं पुरुषं देवम्–क-ख-ग० ।

१० काण्ववेदमन्त्रभाष्यसंग्रहे–ख०, श्रीकाण्ववेदमन्त्रभाष्यसंग्रहे–ग० ।

## षट्त्रिंशोऽध्यायः

[1]ऋचं वाचं प्रपद्ये मनो यजुः प्रपद्ये साम प्राणं प्रपद्ये चक्षु श्रोत्रं प्रपद्ये।
वागोजः सहौजो मयि प्राणापानौ ॥ १ ॥

ऋचं वाचमिति पञ्चाध्यायान् दध्यङ्ङाथर्वणो ददर्श, अग्निकाश्वमेधिकवर्जम्। अतस्तेषां दध्यङ्ङाथर्वण ऋषिः। अग्निका 'उग्रश्च भीमश्च' [३६।६] इत्येवमादयः। 'अग्निꣳ हृदयेन' [३६।७] इत्याश्वमेधिकाः। तेषामग्निकानामाश्वमेधिकाना च ऋषि. प्रजापतिः। [2]तत्राद्योऽध्यायः शान्त्यर्थः। तत्राद्यो [3]वैश्वदेवः। तत्राद्यानि यजूंषि [4]लिङ्गोक्तदेवत्यानि। ऋच वाचं प्रपद्ये। प्रसिद्धा वाचम्। ऋचम् ऋग्वेदम्। प्रपद्ये जानामि, शरण प्रपद्य [5]इति वा। [वाचि ऋग्-] दृष्टिः कार्या। यन्मनस्तद्यजुः प्रपद्ये, मनसि यजुर्दृष्टिः कार्या। साम प्राण प्रपद्ये चक्षुः श्रोत्र प्रपद्ये वागोजः सहौजः। [6]सह ओजः। एतानि बलरूपाणि [7]मयि तिष्ठन्तु। प्राणापानौ। तौ च मे तिष्ठताम्॥ १ ॥

[8]यन्मे च्छिद्रं चक्षुषो हृदयस्य मनसो वातितृण्णं बृहस्पतिर्मे तद्दधातु।
शं नो भवतु भुवनस्य यस्पतिः॥ २ ॥

बृहस्पतिदेवत्या पङ्क्तिः। यन्मे मम चक्षुषः यच्छिद्रम्, 'छिदिर् अवखण्डने [द्वैधीकरणे]' [१४४१ रुधादिः]। हृदयस्य। हृदयशब्देन बुद्धिरुपलक्ष्यते, बुद्धेर्यच्छिद्रमवखण्डनम् [9]अपूर्णताजातम्। [10]मनसो वाऽतितृण्णम्। मनः सुखादिरूपम्, [11]तस्य अतिविहिंसितं प्रवर्ग्यकरणेन। तत्सर्वं मे चक्षुरादेः प्राप्तं दोषं स बृहस्पतिर्दधातु। छिद्रादिदोष परिहृत्य पूर्वसंस्थ [12]करोतु।

---

१ (मा० ३६।१)। अध्यायारम्भे–'श्रीकृष्णाय नम' ॥ हरिः ॐ' इति–ख०, 'हरिः ॐ' इति–ग०। २ 'तत्राद्योऽध्याय. शान्त्यर्थः' नास्ति–ख०। ३ विश्वेदेवः–क ख०।
४ 'लिङ्गोक्तदेवत्यानि' नास्ति–ख०। ५ इति च वाग्दृष्टि कार्या–ख०।
६ 'सह ओजः' नास्ति–ख०। ७ 'मयि तिष्ठन्तु' नास्ति–ख०। ८ (मा० ३६।२)।
९ अपूर्वता–ख०। १० 'मनसो वाऽतितृण्णम्' नास्ति–ख०।
११ 'तस्य अतिविहिंसितम्' नास्ति–ख०। १२ 'करोतु' नास्ति–ख०।

शं नो भवतु भुवनस्य यस्पतिः । भुवनस्य भूतजातस्य । यः पतिः [1]अधिपतिः प्रवर्ग्यरूपो यज्ञः स [बृहस्पतिर्दधात्विति। बृहस्पतिरित्यनुषङ्गः?]। नः[2] अस्माकम् । शं भवतु [3]सुखं भवतु ॥ २ ॥

[4]भूर्भुवः स्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि ।
धियो यो नः प्रचोदयात् ॥ ३ ॥

[5]कया नश्चित्र आभुवदूती सदावृधः सखा ।
कया शचिष्ठया वृता ॥ ४ ॥

[6]कस्त्वा सत्यो मदानां मꣳहिष्ठो मत्सदन्धसः ।
दृळ्हा चिदारुजे वसु ॥ ५ ॥

[7]अभी षु णः सखीनामविता जरितॄणाम् ।
शतं भवास्यूतिभिः ॥ ६ ॥

[8]एते मन्त्रा व्याख्याताः [ ३।४३, २६।४४–४६ ] । अत्र–'शत भवास्यूतिभिः' इति पाठः। ऊतिभिः [9]अवनैः ॥ ३–६ ॥

[10]कया त्वं न ऊत्याभि प्रमन्दसे वृषन् ।
कया स्तोतृभ्य आभर ॥ ७ ॥

इन्द्रदेवत्याऽनिरुक्ता गायत्री। [11]हे वृषन्, सेचक हे इन्द्र। कया ऊत्या केन [12]अवनेन । [13]नः अस्मान् । त्वम् अभिप्रमन्दसे अभिमोदयसि। किं च, केन अवनेन [14]रक्षणेन निमित्तेन । स्तोतृभ्यः तव स्तोतृभ्यः प्रदानाय । आभर [15]आहरसि। [16]अर्थमिति शेषः ॥ ७ ॥

---

१ 'अधिपतिः' नास्ति–ख० । २ "नः बृहस्पत्येवमिष्टानामस्माकम्" इति–ग० टि० ।
३ 'सुखं भवतु' नास्ति–ख० । ४ ( मा० ३६।३ ) । ५ ( मा० ३६।४) ।
६ ( मा० ३६।५ ) । ७ ( मा० ३६।६ ) । ८ 'भूर्भुव स्वरिति, कया नः, कस्त्वा, अभी षु ण इति च मन्त्रा व्याख्याताः–ख-ग० । ९ सवनैः–ख० । १० (मा० ३६।७) ।
११ हे वषट्कार हे इन्द्र–ख० । १२ सवनेन–ख० । १३ 'नः अस्मान्' नास्ति–ख० ।
१४ रक्षणनिमित्तेन–ख० । १५ 'आहरसि'नास्ति–ख० । १६ 'अर्थम्'नास्ति–क-ग० ।

[1]इन्द्रो विश्वस्य राजति ।

शं नो अस्तु द्विपदे शं चतुष्पदे ॥ ८ ॥

ऐन्द्री[2] [त्रि१द्वि]पदा विराट् । विश्वस्य सर्वस्य जगतः । इन्द्रः सर्वाधिपतिः । राजति देदीप्यते ईष्टे वा । तस्य प्रसादात्, शं नो अस्तु । नः अस्माक सुखमस्तु । कि च, द्विपदे मनुषेभ्यः । श सुखमस्तु । व्यत्ययो वा । द्विपदा चतुष्पदा च शमिति । चतुष्पदे पश्वादिभ्यः । शं सुखमस्तु ॥ ८ ॥

[3]शं नो मित्रः शं वरुणः शं नो भवत्वर्यमा ।

शं न इन्द्रो बृहस्पतिः श नो विष्णुरुरुक्रमः ॥ ९ ॥

'श नो मित्रः' इति, 'शं नो वातः' इति च द्वे अनुष्टुभौ शान्त्याशीर्देवत्यौ । [4]महावीरस्य प्रसादात् । शं नो मित्र· । मित्रो नाम सूर्यः । नः अस्माकम् । श सुखम् । [5]भवतु अस्तु, सुखरूपोऽस्तु । श वरुणः । शं सुखरूपोऽस्तु । अर्यमा च नः अस्माक सुखरूपोऽस्तु । [6]नः अस्माकम् । इन्द्रः सुखरूपोऽस्तु । बृहस्पतिः नः [7]अस्माक सुखरूपोऽस्तु । नः विष्णुरुरुक्रमः । उरु विस्तीर्णः क्रमः क्रमण यस्य स उरुक्रमः विष्णुः । शं सुखरूपोऽस्तु ॥ ९ ॥

[8]शं नो वातः पवताᳬ शं नस्तपतु सूर्यः ।

शं नः कनिक्रदद्देवः पर्जन्यो अभिवर्षतु ॥ १० ॥

[9]वातः वायुः । श सुखरूपोऽस्तु, अव्याधिजनकः सन् नः अस्माकं पवता गच्छता [10]वहताम् । श नः अस्माक सूर्यः श सुखरूपस्तपतु । श न· अस्माकं कनिक्रदद् देवः कर्म कुर्वाणः वृष्ट्याख्यं कर्म कुर्वाणः कनिक्रदद्देवः [11]करकागनिरहित [12]क गाङ्गमुदक वा । देवः पर्यन्यः । अभि अभितः सर्वतः । वर्षतु वृष्टि करोतु ॥ १० ॥

---

१ ( मा० ३६।८ ) । २ द्रष्टव्या–सर्वा० । ३ ( मा० ३६।९ ) । ४ महः इन्द्रस्य–ख० ।
५ 'भवतु' नास्ति–ख० । ६ 'नः अस्माकम् । इन्द्रः सुखरूपोऽस्तु' नास्ति–ख० ।
७ 'अस्माकम्' नास्ति–ख० । ८ ( मा० ३६।१० ) ।
९ 'शान्त्याशीर्देवत्या त्रिष्टुप्' इत्यधिकम्–ख० । १० वाहयतु–ख०, वीजयतु–क-ग० ।
११ नरहितम्–ख० । १२ कम् उदक वा–ख० ।

[1]अहानि शं भवन्तु नः

शꣳ रात्रिः प्रतिधीयताम् ॥ ११ ॥

द्विपदा गायत्री, शान्त्याशीर्देवत्या । अहानि दिवसाः । नः अस्माकम् । शं सुखरूपाणि भवन्तु । नः शं रात्रिः प्रतिधीयताम् । नः अस्माकम् । रात्रिः प्रतिधीयता सुखस्य पोषयित्री स्यात् ॥ ११ ॥

[2]शं न इन्द्राग्नी भवतामवोभिः शं न इन्द्रावरुणा रातहव्या ।

शं न इन्द्रापूषणा वाजसातौ शमिन्द्रासोमा सुविताय शं योः ॥ १२ ॥

शान्त्याशीर्देवत्या [3]त्रिष्टुप् । इन्द्रश्च अग्निश्च इन्द्राग्नी । नः अस्माकम् । अवोभिः रक्षणैः । शं सुखरूपौ भवताम् । [4]शं न इन्द्रावरुणा रातहव्या । 'रा दाने' [१०५७ अदादिः] रातं दत्तं हव्यं ययोस्तौ रातहव्यौ, इन्द्रावरुणौ रातहव्यौ गृहीतहव्यौ । शं सुखरूपौ भवताम् । इन्द्रापूषणा वाजसातौ अन्नभजननिमित्ते । शं नः सुखरूपौ भवताम् । इन्द्रासोमा सुविताय साधुप्रसवाय । [5]योः पृथग्भावे । पृथक्करणहेतोः, रोगाणां पृथक्करणाय । इन्द्रासोमौ शं सुखरूपौ भवताम् ॥ १२ ॥

[6]शं नो देवीरभिष्टय आपो भवन्तु पीतये ।

शं योरभिस्रवन्तु नः ॥ १३ ॥

शान्त्याशीर्देवत्या गायत्री । नः अस्माकम् । देवीः [7]हे देव्यः आपः । [8]अभिष्टये अभिषेकाय अभीष्टाय वा । शं सुखरूपा भवन्तु । पीतये पानाय [9]च । शं सुखरूपा भवन्तु । शं योरभिस्रवन्तु नः । योः रोगाणां पृथक्करणहेतोः । शं सुखरूपाः सत्य आपः । नः अस्मान् । अभिस्रवन्तु ॥ १३ ॥

[10]स्योना पृथिवि नो भवानृक्षरा निवेशनी ।

यच्छा नः शर्म सप्रथाः ॥ १४ ॥

---

१ काण्वमाध्यन्दिनसंहितयोरुत्तरमन्त्रस्यैवायमादिमो भागः, आनन्दबोधेन तु पृथग् व्याख्यातः ।
२ (मा० ३६।११)। ३ 'त्रिष्टुप्' नास्ति–ख०। ४ 'शं न इन्द्रावरुणा ' इन्द्रासोमा' नास्ति–ख०।
५ यासुट्–क-ग०, सुट्–ख० । ६ (मा०३६।१२) । ७ हे आपः देव्य –क०, 'देव्यः' इत्येव–ख०।
८ अभिष्टये अभीषवे–ख० । ९ वा–क-ख० । १० ( मा० ३६।१३ ) ।

[1]आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन ।
महे रणाय चक्षसे ॥ १५ ॥
[2]यो वः शिवतमो रसस्तस्य भाजयतेह नः ।
उशतीरिव मातरः ॥ १६ ॥
[3]तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ ।
आपो जनयथा च नः ॥ १७ ॥

[4]चत्वारो मन्त्रा व्याख्याताः [ ३५।५४, १२।५१-५३ ] ॥ १४-१७ ॥

[5]द्यौः शान्तिरन्तरिक्षꣳ शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः ।
वनस्पतयः शान्तिः शान्तिरेव शान्तिः ॥ १८ ॥

शान्त्याशीर्देवत्या [6]बृहती । द्यौः द्युलोकरूपा या शान्तिः सा भवतु । [7]अन्तरिक्षमिति । अन्तरिक्षरूपा या शान्तिः सा भवतु । यद्वा, नः अस्माकम् । द्यौरेव शान्तिः शान्तिरूपा भवतु । अन्तरिक्षं च शान्तिः अन्तरिक्षरूपा शान्तिर्भवतु । पृथिवी च शान्तिः शान्तिरूपा नो भवतु । [8]आपः ओषधयः वनस्पतयः । एताः शान्तिरूपाः नो भवन्तु । शान्तिरेव शान्तिः [9]या तु शान्तिस्वरूपिणी देवता सा शान्तिः । सदास्माकं शान्तिरूपा भवतु ॥ १८ ॥

[10]धृते दृꣳह मा मित्रस्य मा चक्षुषा सर्वाणि भूतानि समीक्षन्ताम् ।
मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे ।
मित्रस्य चक्षुषा समीक्षामहे ॥ १९ ॥

---

१ ( मा० ३६।१४ ) । २ (मा० ३६।१५) । ३ ( मा० ३६।१६ ) ।
४ स्योना पृथिवीति, आपो हि, यो वः, तस्मा अरमिति चत्वारो मन्त्रा व्याख्याताः-ख-ग० ।
५ (मा० ३६।१७) । ६ यजूषि-सर्वा० । ७ 'अन्तरिक्षमिति' नास्ति-क० ।
८ 'आपः ··· शान्तिरूपा भवतु' नास्ति-ख० । ९ 'या तु' नास्ति-क० ।
१० ( मा० ३६।१८ ) । 'दृते' इति संहितास्थः पाठः, स एव चोवटमहीधराभ्यां व्याख्यातः ।

मित्रदेवत्या [1]जगती। धृते दृह मा। धृते मे शरीरे जीविते सति, जरया च जीर्णे सति। दृहेत्यस्य सामर्थ्यादयमर्थः। हे मित्र, मा मा दृह मच्छरीरं दृढीकुरु। मित्रस्य मा चक्षुषा। इन्द्रियाभिप्रायेणैकवचनम्। सर्वाणि भूतानि मित्रस्य चक्षुषा। मा माम्। समीक्षन्ता पश्यन्तु। अहमपि मित्रस्य चक्षुषा श्रीभगवतो दृष्ट्या। सर्वाणि भूतानि समीक्षे सम्यक्पश्यामि। मित्रस्य चक्षुषा समीक्षामहे संपश्यामः। आदरार्थमिदं पुनर्वचनम्। अत्रायमभिप्रायः—नहि मित्रः कञ्चन हिनस्ति, नहि मित्रं कश्चिदपि हिनस्ति। मित्रो मित्रस्य हितं पश्यति परम्। एवं सर्वेषु मम मैत्री स्यात्। एवं च द्वेषादयो दोषा मयि न भवन्ति। ततः श्रीभगवदाराधने ममोत्तमाधिकारसिद्धिर्भविष्यतीति॥ १६॥

[2]धृते दृꣳह मा। ज्योक्ते संदृशि जीव्यासं
ज्योक्ते संदृशि जीव्यासम्॥ २०॥

[3]गायत्री। यजमानाशीः। धृते मयि जीवति [4]सति शरीरे च जरया जीर्णे सति। हे मित्र, मा मा [5]मच्छरीरम्। दृह दृढीकुरु। ज्योक्ते संदृशि जीव्यासम्। ज्योगिति चिरन्तनवचनः। ते तव। संदृशि तव [6]संदर्शनरूपे [7]कारुण्यावलोकने सति। ज्योग् अतिबहुकालम्। जीव्यासं जीवेयम्। ज्योक्ते संदृशि जीव्यासम्। आदरार्थमिदं पुनर्वचनम्॥ २०॥

[8]नमस्ते हरसे शोचिषे नमस्ते अस्त्वर्चिषे।
अन्याꣳस्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यꣳ शिवो भव॥२१॥

[9]पूर्वं व्याख्यातः [ १८।१२ ]॥ २१॥

[10]नमस्ते अस्तु विद्युते नमस्ते स्तनयित्नवे।
नमस्ते भगवन्नस्तु यतः स्वः समीहसे॥ २२॥

---

१ यजूंषि–सर्वा०। २ ( मा० ३६।१९ )। 'दृते' इति संहितास्थः पाठः, उवटमहीधरयोश्च।
३ यजूंषि–सर्वा०। ४ 'सति' नास्ति–क-ग०। ५ अस्मच्छरीरम्–क-ग०।
६ 'संदर्शनरूपे' नास्ति–ख०। ७ कारुण्यावलोके–क-ग०। ८ ( मा० ३६।२० )।
९ व्याख्यातो मन्त्रः–ख-ग०। १० ( मा० ३६।२१ )।

[1]बहुदेवत्याऽनुष्टुप् । नमस्ते अस्तु विद्युते । विद्युते [2]विद्युद्रूपाय ते तुभ्य नमोऽस्तु । नमस्ते स्तनयित्नवे मेघरूपाय ते तुभ्यं नमोऽस्तु । [3]नमस्ते भगवन्नस्तु । हे भगवन् षड्गुणैश्वर्य निलय, ते तुभ्यं नमोऽस्तु । यतः स्वः । स्वरित्यादित्यनाम [ निरु० २।१४, ५।४ ] । हे श्रीभगवन्नादित्य, यतः यत्र । समीहसे चेष्टसे । तत्र स्वर्गस्थाय तुभ्य नमोऽस्तु ॥ २२ ॥

[4]यतो यतः समीहसे ततो नो अभयं कुरु ।
शं नः कुरु प्रजाभ्योऽभयं नः पशुभ्यः ॥ २३ ॥

आशीर्देवत्या [5]निचृद् गायत्री । यतो यतः समीहसे । यत यस्मान्निमित्ताद् ईहसे ततस्ततो निमित्तात् । नः अस्माकम् । अभय कुरु । श नः कुरु प्रजाभ्यः । नः अस्माक प्रजाभ्यः अभय कुरु । नः अस्माक पशुभ्यश्च अभय कुरु ॥ २३ ॥

[6]सुमित्रिया न आप ओषधय. सन्तु दुर्मित्रियास्तस्मै सन्तु ।
योऽस्मान्द्वेष्टि यं च वय द्विष्मः ॥ २४ ॥

व्याख्यातोऽय[7] मन्त्रः [ ६।३१ ] ॥ २४ ॥

[8]तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् ।
पश्येम शरदः शतं जीवेम शरदः शतꣳ शृणुयाम शरद. शतम् ॥२५॥

सावित्री[9] पङ्क्तिः । तच्चक्षुः आदित्यात्मक चक्षु । देवहित देवेन श्रीभगवता निहितं प्रतिष्ठितम् । पुरस्तात् प्राच्या दिशि । देवेभ्योऽर्थाय वा हितं देवहितम् । पुरस्तात् प्राच्या दिशि । शुक्र शुद्धं पाप्मभिरसस्पृष्टम् । [ यद् ? उच्चरत् ] उदेति । पश्येम सर्वाणि पुरुषार्थसाधनानि पश्येम । शरदः शतं प्रतिबहुकालम् । जीवेम । शरदः शत [10]शतसवत्सरपरिमितकालम् । शृणुयाम श्रीभगवन्माहात्म्यप्रवादिनीं श्रुतिं शरदः शत साकल्येन शृणुयाम ॥ २५ ॥

इति [11]श्रीशुक्लयजुःकाण्वसंहिताभाष्यसंग्रहे षट्त्रिंशोऽध्यायः ॥ ३६ ॥

---

१ वायुदेवत्या–ख० । २ तडिद्रूपाय–ख० । ३ 'नमस्ते भगवन्नस्तु' नास्ति–ख० ।
४ ( मा० ३६।२२ ) । ५ त्रिवृद् गायत्री–ख०, अनुष्टुप्–सर्वा० ।
६ ( मा० ३६।२३ ) । ७ 'अयम्' नास्ति–ख-ग० ।
८ (मा० ३६।२४) ९ सौरी–सर्वा० । १० 'शत' कालम्' नास्ति–ख० ।
११ काण्ववेदमन्त्रभाष्यसंग्रहे–ख०, श्रीकाण्ववेदमन्त्रभाष्यसंग्रहे–ग० ।

[ १२६३-६४ स्वादिः ] साधये। कुत्रेति ? देवयजने पृथिव्याः। [1]देवा इज्यन्ते यस्मिन् तद् देवयजनं तस्मिन् देवयजने पृथिव्या' सबन्धिनि देवयजने पृथिव्या देवक्षेत्रस्थाने। मखाय त्वा यज्ञाय त्वा मृत्पिण्ड त्वा परिगृह्णामि। ततो[ऽपि] विशेषा-[काङ्क्षा ?]पेक्षायामाह—मखस्य त्वा शीर्ष्णे। मखस्य [2]यज्ञस्य। शीर्ष्णे विशिष्टशिरसः सिध्यर्थम्। त्वा त्वा द्यावापृथिव्यामेव मृत्पिण्ड त्वा परिगृह्णामि ॥ ३ ॥

[3]अथ वल्मीकवपा कृष्णाजिन उत्तरतो निदधाति--

[4]देव्यो वम्रियो भूतस्य प्रथमजा मखस्य वोऽद्य शिरो राध्यासं देवयजने पृथिव्याः।
मखाय त्वा मखस्य त्वा शीर्ष्णे ॥ ४ ॥

वल्मीकवपादेवत्या पङ्क्तिः। वम्रियः। [5]"उपदीका शमीका इति पर्याय.। वल्मीक-[वा?का]रिण्य। यूय भूतस्य प्रथमजा वम्रियः। [ पृथिवी भूताना प्रथमजा ], तत्सबन्धात् ता अपि मृदः प्रथमजा उच्यन्ते। मखस्य वोऽद्य शिरः। वः युष्मान् मृदः आदाय। अद्य मखस्य यज्ञस्य शिरः। राध्यास [6]साधये। 'देवयजने पृथिव्याः। मखाय त्वा मखस्य त्वा शीर्ष्णे' इति व्याख्यातः [३७।३] ॥ ४॥

[7]अथ वराहविहत निदधाति—

[8]इयत्यग्र आसीन्मखस्य तेऽद्य शिरो राध्यासं देवयजने पृथिव्याः।
मखाय त्वा मखस्य त्वा शीर्ष्णे ॥ ५ ॥

वराहविहतदेवत्याऽनुष्टुप्[9]। "इयती ह वा इयमग्रे पृथिव्यास प्रादेशमात्री तामेमूष इति वराह उज्जघान" [शत० ब्रा० १४।१।२।११] इति याभिहिता [या?] पृथि[वीं ? वी] सा। इयती इयत्परिमाणपरिमिता प्रादेशमात्रीत्यभिनयेन प्रदर्शयति। अग्रे पूर्वम्। क्षोणीमुद्धर्तुमिच्छतो वराहस्य दंष्ट्राग्रेणेयती उद्धृता आसीत्। [10]व्यत्ययः। आसीरिति। त्वा त्वा ब्रवीमि। मखस्य

---

१ 'देवा इज्यन्ते ' मखस्य त्वा शीर्ष्णे। मखस्य' नास्ति—ख०। २ देवयज्ञस्य—ख०।
३ द्रष्टव्यम्—का० श्रौ० [२६।१।६-७]। ४ (मा० ३७।४)। ५ उपादीका—क-ग०, उपजिह्विकाः सीमका इति पर्यायाः—उवट.। ६ संसाधये—क-ग०। ७ द्रष्टव्यम्—का० श्रौ० [२६।१।८]।
८ (मा० ३७।५)। ९ ब्राह्मी गायत्री—सर्वा० दी०। १० 'व्यत्यय.' नास्ति—ख०।

तेऽद्य शिरो राध्यासमिति[1] । ते[2] त्वामादय । अद्य मखस्य शिरः राध्यास [3]साधये । 'देवयजने' इति व्याख्यातः [३७।३] ॥ ५ ॥

[4]पूतीकानादत्ते [ का० श्रौ० २६।१।८ ]—

[5]इन्द्रस्यौज स्थ मखस्य वोऽद्य शिरो राध्यास देवयजने पृथिव्याः । मखाय त्वा मखस्य त्वा शीर्ष्णे । मखाय त्वा मखस्य त्वा शीर्ष्णे । मखाय त्वा मखस्य त्वा शीर्ष्णे ॥ ६ ॥

पूतीकदेवत्याऽनुष्टुप्[6] । ये पूतीकानाम यूयम् । इन्द्रस्य परमैश्वर्ययुक्तस्य श्रीभगवत इन्द्रस्य । ओजः बल स्थ बल भवथ । अतस्तान् वः युष्मान् ब्रवीमि—मखस्य वोऽद्य शिरो राध्यासमिति[7] । वः अद्य युष्मान् उपादाय । मखस्य यज्ञस्य । शिरः राध्यासम् उत्तमाङ्गं साधये । 'देवयजने' इति व्याख्यातः [ ३७।३ ] ॥ ६ ॥

अजाक्षीर तूष्णीमानयति । [8]सभृतान् गवेधुकान् तूष्णीमभिमृशति । कृष्णाजिनं परिगृह्योत्तरतः परिवृत गच्छति [ का० श्रौ० २६।१।१०-१३ ]—

[9]प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता । अच्छा वीरं नर्यं पङ्क्तिराधसं देवा यज्ञं नयन्तु नः । मखाय त्वा मखस्य त्वा शीर्ष्णे । मखाय त्वा मखस्य त्वा शीर्ष्णे । मखाय त्वा मखस्य त्वा शीर्ष्णे ॥ ७ ॥

[10]लिङ्गोक्तदेवत्याऽनुष्टुप् । प्रैतु ब्रह्मणस्पतिः । प्रैतु [11]गच्छतु । प्रदेवी सूनृता [12]शक्त्यात्मिका देवी प्रैतु । अच्छावीर नर्यं नरेभ्यो हित कारण नर्यम् । पङ्क्तिराधस पङ्क्ति-छन्दसा साध्यम् । वीर कृष्णाजिनम् । अच्छ आसुमेतु । देवा यज्ञ नयन्तु । नः अस्माकम् । यज्ञ नयन्तु । कृष्णाजिन [13]यज्ञ प्रापयन्तु । अत्र मखाय त्वेति त्रिः पठ्यते । [14]एकदा संभारान्

---

१ 'इति' नास्ति–क० । २ 'ते' नास्ति-ग० । ३ ससाधये–क ग० । ४ आदारानादत्ते–ख० ।
५ (मा० ३७।६) । ६ ऋचां त्रिष्टुप् । मखाय त्वेति यजु. पङ्क्ति –सर्वा० टी० ।
७ 'इति' नास्ति–क० । ८ सवृतान्–क-ख-ग० । ९ ( मा० ३७।७ ) ।
१० घर्मदेवत्यानि यजूंषि–सर्वा०, अत्र 'प्रैतु' इति बृहती–सर्वा० टी० ।
११ प्रगच्छतु–ख० । १२ शच्यात्मिका–ख० । १३ 'यज्ञम्' नास्ति–क० ।
१४ अत्र द्रष्टव्यानि–का० श्रौ० [ २६।१।१४–१६ ] ।

मखाय त्वेति सभारैः ससृजति । एकदा मखाय त्वेति मृदमादत्ते । एकदा [1]मखाय त्वेति मृदमादाय महावीर [2]करोति । 'मखाय त्वा' इत्युक्तम्[3] [ ३७।३ ] ॥ ७ ॥

प्रादेशमात्रमूर्ध्वमासेचनवन्त [ मेखलावन्त ] मध्यसगृहीतमूर्ध्व मेखलायास्त्र्यङ्गुलं निष्ठितमभिमृशति [ का० श्रौ० २६।१।१७–१८ ]—

[4]मखस्य शिरोऽसि । मखाय त्वा मखस्य त्वा शीर्ष्णे । मखस्य शिरोऽसि । मखाय त्वा मखस्य त्वा शीर्ष्णे । मखस्य शिरोऽसि । मखाय त्वा मखस्य त्वा शीर्ष्णे । मखाय त्वा मखस्य त्वा शीर्ष्णे । मखाय त्वा मखस्य त्वा शीर्ष्णे । मखाय त्वा मखस्य त्वा शीर्ष्णे ॥ ८ ॥

लिङ्गोक्तदेवत्यानि यजूंषि । मखस्य शिरोऽसि । [ हे ] निष्ठित, त्व मखस्य [5]यज्ञस्य शिरोऽसि । एव द्वितीयम्, एव तृतीयमिति । मखाय त्वेति त्रिभिः पर्यायमन्त्रैस्त्रीन्महावीरान् गवेधुकाभिः [6]श्लक्ष्णयति प्रतिमन्त्रम् ॥ ८ ॥

[7]मुखवृष्णि धूपयति—

[8]अश्वस्य त्वा वृष्णः शक्ना धूपयामि देवयजने पृथिव्याः । मखाय त्वा मखस्य त्वा शीर्ष्णे । अश्वस्य त्वा वृष्णः शक्ना धूपयामि देवयजने पृथिव्याः । मखाय त्वा मखस्य त्वा शीर्ष्णे । अश्वस्य त्वा वृष्णः शक्ना धूपयामि देवयजने पृथिव्याः । मखाय त्वा मखस्य त्वा शीर्ष्णे । मखाय त्वा मखस्य त्वा शीर्ष्णे । मखाय त्वा मखस्य त्वा शीर्ष्णे । मखाय त्वा मखस्य त्वा शीर्ष्णे ॥ ९ ॥

---

१ 'मखाय त्वेति' नास्ति–क० । २ 'महावीर करोति' इत्यस्याग्रे 'इति त्रयाणां विनियोग. । तथा चाधारे सादयति' इत्यधिकम्–ख-ग० । ३ अत्र खपुस्तके–'उक्तम्' इत्यस्याग्रे–'अथ प्रयौति मखाय त्वेति । अथ मृत्पिण्डमादाय महावीर करोति । मखाय त्वेत्युक्तम् ॥ छ ॥ ऊर्ध्वं मेखलायां वियगुलं नेपितममिमृशति–मखस्य शिरोऽसीति' इति पाठः । ४ ( मा० ३७।८ ) ५ 'यज्ञस्य' नास्ति–ख० । ६ द्रष्टव्यम्–का० श्रौ० [ २६।१।२३ ] । श्लक्ष्णं प्रणयति–ख० । ७ 'मुखवृष्णि धूपयति' नास्ति–क-ग० । अश्वशकृता धूपयति–का० श्रौ० [ २६।१।२४ ] । ८ ( मा० ३७।९ ) ।

लिङ्गोक्तदेवत्यानि यजूंषि । हे महावीर, अश्वस्य वृष्णः सेचनधर्मवत. । सेचनसबन्धिन महावीर त्वा [1]त्वा धूपयामि । केनेति ? [सत्या?]शका [शकृता] धूपयामि । पृथिव्याः सबन्धि-[नि] देवयज[न?ने] स्थित धूपयामीति[2] । मखाय त्वा मखस्य त्वा शीर्ष्णे इति । धूपयामि 'धूप सतापे' [ ३९६ भ्वादि. ] सतापयामि । एव द्वितीयतृतीयौ [3]धूपयामि मखाय त्वेति [4]त्रिभिर्मन्त्रैः ॥ ९ ॥

[5]त्रीन् महावीरान् पक्वानुद्धरति—

**[6]ऋजवे त्वा साधवे त्वा सुक्षित्यै त्वा । मखाय त्वा मखस्य त्वा शीर्ष्णे । मखाय त्वा मखस्य त्वा शीर्ष्णे । मखाय त्वा मखस्य त्वा शीर्ष्णे ॥ १० ॥**

लिङ्गोक्तदेवत्या [7]गायत्री "असौ वै लोक ऋजु· सत्यꣳ ह्यृजुः सत्यमेष य एष तपति" [ शत० ब्रा० १४।१।२।२२ ] इति । ऋजवे अकुटिलाय स्वर्गलोकाय सत्याय आदित्याय । एष त्वा त्वाम् । उद्वपामि । एष एव प्रथमः प्रवर्ग्यः । साधवे वायवे पय उद्वपामि । एष द्वितीय. प्रवर्ग्यः, "अयं वै साधुः" [ श० ब्रा० १४।१।२।२३ ] इत्यादिश्रुतेः । सुक्षित्यै अस्मै लोकाय । त्वा पय उद्वपामि, "सुक्षित्यै वेन्यय वै लोकः सुक्षितिरस्मिन् हि लोके सर्वाणि भूतानि क्षियन्ति" [ श० ब्रा० १४।१।२।२४ ] इति श्रुतेः । एष एव तृतीयः प्रवर्ग्यः । मखाय त्वेति [8]प्रतिमन्त्रम् ॥ १० ॥

इति महावीरकरणम् ॥

महावीर प्रोक्षति [ का० श्रौ० २६।२।२६ ]—

**[9]यमाय त्वा मखाय त्वा सूर्यस्य त्वा तपसे । देवस्त्वा सविता मध्वानक्तु । पृथिव्या. सꣳस्पृशस्पाहि । अर्चिरसि शोचिरसि तपोऽसि ॥ ११ ॥**

नानादेवत्या [10]त्रिष्टुप् । [11]यमाय त्वा महावीर त्वा प्रोक्षामि । मखाय यज्ञाय त्वा प्रोक्षामि । [12]सूर्यस्य त्वा सूर्याय त्वा प्रोक्षामि । तपसे अर्थाय त्वा प्रोक्षामि । देवस्त्वा सविता

---

१ 'त्वाम्' नास्ति–क-ग० । २ 'इति' नास्ति–क० । ३ धूपयति–ख-ग० । ४ द्रष्टव्यम्–का० श्रौ० [ २६।१।२६ ] । ५ द्रष्टव्यम्–का० श्रौ० [ २६।१।२७ ] । ६ ( मा० ३७।१० ) । ७ दैवी बृहती–सर्वा० टी० । ८ द्रष्टव्यम्–का० श्रौ० [ २६।१।२८ ] । ९ ( मा० ३७।११ ) । १० देव्यौ बृहत्यौ–सर्वा० टी० । ११ 'यमाय त्वा' नास्ति–क-ग०. १२ 'सूर्यस्य त्वा' नास्ति–ख० ।

मध्वानक्तु । सविता देवः । मध्वा मधुना । महावीर त्वाम् । अनक्तु अञ्जयतु । पृथिव्याः सस्पृशस्पाहि । सस्पृशतीति सस्पृक्, मस्पृशः पृथिव्याः सम्बन्धि[नः]। हे रजत सुवर्ण, त्व [1]महावीर पाहि गोपाय । महावीरमाज्यवन्त[2] निदधाति[3]-अर्चिरसि शोचिरसि तपोऽसीति । दीप्तिपर्यायाः । [4]'ऋच शुच दीप्तौ', 'तप संतापे' [ ९८५ भ्वादिः ] एषा रूपाणि—अर्चिरसि, शोचिरसि, तपोऽसीति ॥ ११ ॥

अथास्यामाशिष आशास्ते [शत० ब्रा० १४।१।३।१८]। वाचयति [5]प्रादेशमध्यधि धारयन्तम् [ का० श्रौ० २६।३।५ ]—

[6]अनाधृष्टा पुरस्तादग्नेराधिपत्य आयुर्मे दाः पुत्रवती दक्षिणत इन्द्रस्याधिपत्ये प्रजां मे दाः । सुषदा पश्चाद्देवस्य सवितुराधिपत्ये चक्षुर्मे दा आश्रुतिरुत्तरतो धातुराधिपत्ये रायस्पोषं मे दाः । विधृतिरुपरिष्टाद् बृहस्पतेराधिपत्य ओजो मे दा विश्वाभ्यो मा नाष्ट्राभ्यस्पाहि मनोरश्वासि ॥ १२ ॥

सप्त पार्थिवानि यजूंषि, यजमानाशीः । हे पृथिवि, पुरस्तात् महावीरस्य पुरस्तात् प्राच्या दिशि हे पृथिवि, या त्वमनाधृष्टा रक्षोभिरनाधृष्टा धर्षितुमशक्या । अतस्त्वा ब्रवीमि—अग्नेराधिपत्य इति । अग्नेराधिपत्ये सति त्व तत्र स्थितासि । अतः आयुर्मे मह्यम् । दाः देहि । पुत्रवतो दक्षिणतः । महावीरस्य दक्षिणस्या दिशि । हे पृथिवि, या पुत्रवती भवसि । ता त्वा ब्रवीमि । इन्द्रस्याधिपत्ये इन्द्राधिपत्ये सति । अतस्त्वं मे मह्यं प्रजा देहि । सुषदा पश्चात् । या त्वं महावीरस्य पश्चिमतः पश्चिमस्या दिशि सुषदा 'सुप्र सशोभने'[?] । शोभनसदनवती । अतस्त्वा ब्रवीमि । देवस्य सवितुराधिपत्ये सति तत्र स्थिता त्व चक्षुर्मे दाः चक्षुर्देहीति । आश्रुतिरुत्तरत इति । महावीरस्य उत्तरतः उत्तरस्या दिशि । आश्रुतिः आश्रयन्त्यस्मिन् [7]यजमाना इत्याश्रुतिः । यज्ञियो ह्यसौ देशः । अतो ब्रवीमि । धातुराधिपत्ये धातुः विधातुः आधिपत्ये सति । तत्रस्था त्वं रायस्पोष धनस्य पोषम् । मे मह्यं देहि । विधृतिरुपरिष्टात् । हे

---

१ महा···गोपाय नास्ति—ख० । २ 'आज्यवन्तम्' नास्ति—ख० ।
३ द्रष्टव्यम्—का० श्रौ० [ २६।३।४ ] । ४ 'रुच दीप्तावभिप्रीतौ च' [ ७४५ भ्वादिः ], 'शुच शोके' [ १८३ भ्वादिः ] इति—धातु० । ५ प्रादेशमध्यधि विधाय—क-ख-ग० ।
६ (मा० ३७।१२) । ७ 'यजमाना अतः' नास्ति—ख० ।

विधृति, या त्वम् उपरिष्टात् महावीरस्य ऊर्ध्वप्रदेशे । यतस्त्व विधृतिः विधारयित्री । अतस्त्वा ब्रवीमि । बृहस्पतेराधिपत्ये सति तत्रस्था त्वम् । ओज' तेज. । मे मह्य देहि । विश्वाभ्यो मा नाष्ट्राभ्य-स्पाहि । विश्वाभ्यः सर्वाभ्यः । [1]नाष्ट्राभ्यः आर्तिभ्यः । मा माम् । पाहि गोपाय । अथेमामभिमृश्य जपति [ शत० ब्रा० १४।१।३।२५ ]–मनोरश्वासीति । मनोस्त्व धनस्य भूमिपुत्रस्य मनोः । त्वमश्वा असि । "अश्वा ह वा इय भूत्वा मनुमुवाह" [ श० ब्रा० १४।१।३।२५ ] इति श्रुतेः । हे पृथिवि, त्व मनोरश्वासि अश्वा भूत्वा मनु वहसि । अतो माम[भि?पि] समुद्धरेत्यभिप्रायः ।। १२ ।।

[2]अथ वैकङ्कतैः शकलैस्त्रयोदशभिः परिश्रयति—

[3]स्वाहा मरुद्भिः परिश्रीयस्व दिवः सꣳस्पृशस्पाहि ।
मधु मधु मधु ।। ३ ।।

लिङ्गोक्तदेवत्य यजुः । हे प्रवर्ग्य, यस्त्व [4]स्वाहाकारः [5]त त्वा ब्रवीमि । मरुद्भिः परिश्री-यस्व । कर्मणि यक् । मरुतस्त्वामाश्रयन्त्वित्यर्थः । स्वाहेति होमार्थः । [6]सुवर्णशतमानेनोपरिष्टा-दुपदधाति–दिवः सस्पृशस्पाहीति । लिङ्गोक्तदेवत्य यजुः । हे प्रवर्ग्य, त्व दिवः द्युलोकस्य । सस्पृशः महावीरान् प्रवर्ग्यपात्रविशेषान् । पाहि रक्ष । अथवा दिवः [7]सस्पृशः सस्पर्शकर्तॄन् पाहि । अथ धवित्रैराधूनोति [ शत० ब्रा० १४।१।३।३० ]–मधु मधु मध्विति । प्राणदेवत्यानि यजूंषि । "प्राणो वै मधु" [ शत० ब्रा० १४।१।३।३० ], रसरूपसामान्यात् । प्राणस्त्वमङ्गाना [ रसनं? रसः । त ] मध्वात्मक प्राण महावीरे स्थापयति ।। १३ ।।

[8]महावीरमुपतिष्ठते—

[9]गर्भो देवानां पिता मतीनां पतिः प्रजानाम् ।
सं देवो देवेन सवित्रा गत सꣳ सूर्येण रोचते ।। १४ ।।

[10]गर्भदेवत्याऽनुष्टुप्[11] । गर्भो देवानाम् । गर्भयतीति गर्भः, आदित्यात्मना देवाना गर्भ एष प्रवर्ग्यः । पिता मतीनाम् । पाति रक्षतीति पिता, मतीना पिता प्रवर्ग्यः । प्रजाना पतिश्च ।

---

१ 'नाष्ट्राभ्य.' नास्ति–ख० । २ द्रष्टव्यम्–का० श्रौ० [ २६।३।९ ] । ३ ( मा० ३७।१३ ) ।
४ स्वाहाकारम्–ख० । ५ 'तम्' नास्ति–ख० । ६ द्रष्टव्यम्–का० श्रौ० [ २६।३।१० ] ।
७ 'संस्पृशः' नास्ति–क-ग० । ८ द्रष्टव्यम्–का० श्रौ० [ २६।४।१३ ] । ९ ( मा० ३७।१४ ) ।
१० घर्मदेवत्या–सर्वा० । ११ गर्भो देवानां पङ्क्तिः–सर्वा० टी० ।

समित्यस्य गतेत्यनेन संबन्धः। देवः देवयतीति देवः प्रवर्ग्यः। देवेन सवित्रा सूर्येण सगत सूर्येण सह। रोचते दीप्यते ॥ १४ ॥

[1]समग्निरग्निना गत सं दैवेन सवित्रा सꣳ सूर्येणारोचिष्ट।
स्वाहा समग्निस्तपसा गत सं दैव्येन सवित्रा सꣳ सूर्येणारूरुचत ॥ १५ ॥

घर्मदेवत्या [2]जगती। अग्निः अग्निवर्णः प्रवर्ग्यः। अग्निना सगत। दैवेन सवित्रा सर्वस्य प्रसवकर्त्रा। सूर्येण सर्वस्य प्रेरकेण सूर्येण सह। अरोचिष्ट दीप्यते। स्वाहा समग्निस्तपसा गत। अग्निः अग्निवर्णः प्रवर्ग्यः। तपसा 'तप सतापे' [ ९८५ भ्वादिः ] तेजसा सगत। संदैव्येन देव सबन्धिना सवित्रा सूर्येण सह। अरूरुचत रोचते। अत एवगुण त्वा स्तुम इति शेषः ॥१५॥

[3]धर्ता दिवो विभाति तपसस्पृथिव्यां धर्ता देवो देवानाममर्त्यस्तपोजाः।
वाचमस्मे नियच्छ देवायुवम् ॥ १६ ॥

ऊर्ध्वबृहती घर्मदेवत्या। घर्म इत्यादित्यनाम, "आदित्यो वै घर्मः" [ शत० ब्रा० १४।२।२।१७ ] इति श्रुतेः। धर्ता दिवो विभाति। दिवः द्युलोकस्य। धर्ता धारयिता। तपसश्च धर्ता। रश्मिजालस्य धर्ता। पृथिव्यामवस्थितो विभाति। धर्ता देवो देवानाम्। धर्ता धारयिता स्वय च देवः अमर्त्यः मर्त्यधर्मविरोधी। तपोजाः तपो ब्रह्म तस्माज्जायत इति तपोजाः। देवायुव देवान् यौति मिश्रयतीति देवायुः वाक्, ता देवायुवं वाचम्। अस्मे अस्मासु। [4]नियच्छ नियच्छतु प्रयच्छतु ॥ १६ ॥

[5]अपश्यं गोपामनिपद्यमानमा च परा च पथिभिश्चरन्तम्।
स सध्रीचीः स विषूचीर्वसान आवरीवर्त्ति भुवनेष्वन्तः ॥ १७ ॥

घर्मदेवत्या त्रिष्टुप्। ऋषिर्दीर्घतमाः। आदित्यात्मना घर्मस्तुति। य गोपामपश्यमिति संबन्धः। गोपा गोप्तारम्। कथंभूतं गोप्तारम्? अनिपद्यमानम् अनिवारणेनापद्यमानम् अविश्राम्यन्त विश्राममकुर्वाणम्। आ च परा च पथिभिश्चरन्तम्। आ आभिमुख्येन। 'चर गतिभक्षणयोः' [ ५५९ भ्वादिः ] चरन्तं गच्छन्तम्। परा पराङ्मुखतया। पथिभिः देवैर्मार्गैः। मध्याह्नात् प्राग् आभिमुख्येन गच्छन्तम्, मध्याह्नादुपरि पराङ्मुखतया गच्छन्तम्। सर्वदा गच्छन्तम्। गोपा-

---

१ ( मा० ३७।१५ )। २ ब्राह्मी अनुष्टुप्–सर्वा० टी०। ३ ( मा० ३७।१६ )।
४ 'नियच्छ' नास्ति–क०। ५ ( मा० ३७।१७ )।

मादित्यम् । अपश्यम् अद्राक्षमिति संबन्धः । आदित्यः सध्रीचीः सम्यग्गमनः । विषूचीः विष्वग्गमनः । वसानः 'वस आच्छादने' [ १०२३ अदादिः ] । स्वरश्मिभिः दिश आच्छादयन् । आवरीवर्ति भुवनेष्वन्तः । भुवनेषु [1]एषु लोकेषु । अन्तः आवरीवर्ति । 'वृतु वर्तने' [७५८ भ्वादिः] [2]अन्तः पुनः पुनरावर्तते । तं गोपामपश्यमिति संबन्धः ॥ १७ ॥

[3]विश्वासां भुवां पते विश्वस्य मनसस्पते विश्वस्य वचसस्पते सर्वस्य वचसस्पते । देवश्रुत्त्वं देव घर्म देवो देवान्पाह्यत्र प्रावीरनु वां देववीतये । मधु माध्वीभ्यां मधु माधूचीभ्याम् ॥ १८ ॥

घर्मदेवत्याऽनुष्टुप्[4] । प्रगाथः । अनुष्टुब्बृहत्यौ यत्र मीलिते स प्रानुष्टुभः प्रगाथः । विश्वासा भुवा पृथिवीना पते, हे विश्वासा भुवा पते । हे विश्वस्य मनसस्पते, सर्वप्रा[मा?]ण्याश्रितमनसः पते । हे विश्वस्य वचसस्पते, त्रयीलक्षणवेदवचसः पते । [हे सर्वस्य वचसस्पते], लौकिकवाचामधिपते[5] । तं त्वा स्तुम इति शेषः । यतस्त्वं देवश्रुत्[इति शेषः?] । यतस्त्व देव इति श्रुत् । देवाना श्रावयतीति देवश्रुत् त्व देव घर्म । हे देव घर्म तेजोरूप । देवस्त्व देवान्पाहि गोपाय । अत्र प्रावीरनु वा देववीतये । अत्र [सत्रे] अस्मिन्नवसरे वा । [प्रावीरिति] पुरुषव्यत्ययः । प्रावीत् । [हे] अश्विनौ, वा युवाम् । अय घर्मः । अनुप्रावीत् अनुगच्छतु । कस्मै ? देववीतये देवतर्पणाय । मधुमाध्वीभ्या [6]मधुमाधूचीभ्याम् । मधु च माध्वी च मधुमाध्व्यौ [7]मधुमाधवीभ्या मध्वञ्जनाभ्याम् । दध्यङ्ङाथर्वणो मधुविद्या प्रावोचत् । ता चैतावश्विनौ अनुप्रावीरिति संबन्धः ॥ १८ ॥

[8]हृदे त्वा मनसे त्वा दिवे त्वा सूर्याय त्वा ।
ऊर्ध्वो अध्वरं दिवि देवेषु धेहि ॥ १९ ॥

घर्मदेवत्योष्णिक्[9] । हृदे हृदयार्थं त्वा [स्तुमः] । [सु?]मनसे त्वा स्तुमः । दिवे त्वा स्तुमः । सूर्याय त्वा स्तुमः । इत एव त्वा ब्रूमः—ऊर्ध्वः उत्कृष्टः त्वम् । अध्वर यज्ञम् । दिवि द्युस्थाने । देवेषु मध्ये । धेहि स्थापय तेषा हविर्भागं यागार्थं स्थापयेति ॥ १९ ॥

---

१ 'एषु' नास्ति—क ग० । २ यः—क-ग० । ३ (मा० ३७।१८) । ४ विश्वासां भुवामत्यष्टिः—सर्वा० । ५ अध्यधिपते—ख-ग० । ६ 'मधुमाधूचीभ्याम्' नास्ति—ख० । ७ मधुमाधूचीभ्याम्—ख० । ८ (मा० ३७।१९; का० ३७।१८) काण्वसहितायां तु पूर्वमन्त्रस्यैवायमन्तिमो भागः । ९ परोष्णिक्—सर्वा० ।

[1]पिता नोऽसि पिता नो बोधि नमस्ते अस्तु मा मा हिꣳसीः ॥ २० ॥

[2]त्रिष्टुप् घर्मदेवत्या। उत्तरार्द्धे पत्न्याशीः। पिता नः अस्माकम्। यतस्त्व [3]पितासि पातासि। अतो ब्रवीमि—पिता नो बोधि। नः अस्माकम्। बोधि बोधय। नमस्ते अस्तु। ते तुभ्यम्। नमोऽस्तु। मा माम्। मा हिसीः हिसा मा कार्षीः॥ २०॥

[4]महावीरमीक्षमाणा पत्नीं वाचयति—

[5]त्वष्टृमन्तस्त्वा सपेम पुत्रान्पशून्मयि धेह्यरिष्टाहꣳ सह पत्या भूयासम् ॥२१॥

[6]यत्त्वष्टा हि रेतस्य विकर्तनस्थान तद्वन्तो वयम्[?]। यद्वा व्यत्ययः। त्वष्टृमत्यः[?] वय महावीर सपेम। सपतिः स्पर्शनकर्मा [निरु० ५।१६]। संस्पृशेम। [7]मिथुनार्थं स्पृशेम। अतस्त्वं पुत्रान् पशून् च मयि धेहि स्थापय। अह च अरिष्टा पत्या सह अरिष्टा अनुपहिंसिता। भूयासं भवेयमिति[8]॥ २१॥

रौहिणौ जुहोति [ शत० ब्रा० १४।२।१।१ ]—

[9]अहः केतुना जुषताꣳ सुज्योतिर्ज्योतिषा स्वाहा।
रात्रि· केतुना जुषताꣳ सुज्योतिर्ज्योतिषा स्वाहा॥ २२॥

घर्मदेवत्ये द्वे यजुषी। अहः केतुना प्रज्ञया कर्मणा वा सहितमहः। जुषता सेवता परिगृह्णातु। कथं भूतमहः? सुज्योतिर्ज्योतिषा। [10]स्वकीयेनैवादित्यज्योतिषा स्वय सुज्योतिः शोभनज्योतिष्कमहः जुषताम्। रात्रिः केतुना प्रज्ञया कर्मणा [11]वा युक्ता रात्रिः जुषताम्। सुज्योतिर्ज्योतिषा[12]। स्वकीयेन चन्द्रादिज्योतिषा सुज्योति· शोभनदीप्तिः। रात्रिर्जुषताम्। स्वाहेति होमार्थः॥ २२॥

इति [13]श्रीशुक्लयजुःकाण्वसंहिताभाष्यसग्रहे सप्तत्रिंशोऽध्यायः॥ ३७॥

---

१ (मा० ३७।२०; का० ३७।१९)। २ पिता नोऽसि ऋग्गायत्री—सर्वा० टी०। ३ पितासि। पाता पिता, पिता नो बोधि नः—ख०। ४ द्रष्टव्यम्—का० श्रौ०[२६।४।१५]; शत० ब्रा०[१४।१।४।१६]। ५ काण्वमाध्यन्दिनयोः पूर्वमन्त्रस्यैवायमन्तिमो भागः। ६ त्वष्टृमन्तः यजुः—सर्वा०, ऋचां त्रिष्टुप् घर्मो देवता—सर्वा० टी०। ७ 'मिथुनार्थं स्पृशेम' नास्ति—ख०। ८ 'इति' नास्ति—क०। ९ ( मा० ३७।२१; का० ३७।२० ) १० 'स्वकीयेनैवादित्यज्योतिषा' नास्ति—ख०। ११ 'वा' नास्ति—क०। १२ 'ज्योतिषा' नास्ति—ख०। १३ श्रीकाण्ववेदमन्त्रभाष्यसंग्रहे—ख-ग०।

# अष्टत्रिंशोऽध्यायः

[1]घर्मधुग्दोहनार्थं रज्जुमादत्ते—

[2]देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्।
आददेऽदित्यै रास्नासि ॥ १ ॥

'देवस्य त्वा' इति मन्त्रो व्याख्यातः [ १।१३ ]। अतस्त्वाम्। [3]आददे गृह्णामि। यतस्त्वमदित्यै रास्नासीति। अदित्यै देवतायै त्वं रास्ना रशना [4]रज्जुरसि ॥ १ ॥

[5]रज्जु गृहीत्वा गामाह्वयति—

[6]इड एह्यदित एहि सरस्वत्येहि।
असावेह्यसावेह्यसावेहि ॥ २ ॥

गोदेवत्यं यजुः। हे इडे [7]मानवि, देवतास्तुतिरूपिणि। एहि [8]आ इहि आगच्छ। दोहनार्थम्। हे अदिते देवमातः, त्वम् एहि आगच्छ। हे सरस्वति ब्रह्मवल्लभे, एहि [9]आगच्छ। गोर्नामान्येतानि—'इडा हि गौरदितिर्हि गौः सरस्वती हि गौः" [ शत० ब्रा० १४।२।१।७ ] इति श्रुतेः। अथोच्चैराह्वयति[10] नाम्ना। असाविति नामग्रहणम्। असौ एहि आगच्छेति आह्वयति [11]गार्हपत्यं गच्छन् ॥ २ ॥

[ तामागताम् ] अभिदधाति [ शत० ब्रा० १४।२।१।८ ]—

[12]अदित्यै रास्नासीन्द्राण्या उष्णीषः ॥ ३ ॥

---

१ द्रष्टव्यम्—का० श्रौ० [ २६।५।१ ]; शत० ब्रा० [ १४।२।१।६ ]।
२ ( मा० ३८।१ )। ३ 'आददे' नास्ति—ख०। ४ 'रज्जुः' नास्ति—ख०।
५ द्रष्टव्यम्—का० श्रौ० [ २६।५।१ ], शत० ब्रा० [ १४।२।१।७ ]। ६ ( मा० ३८।२ )।
७ 'मानवि' नास्ति—ख०। ८ 'आ इहि' नास्ति—क ग०। ९ 'आगच्छ' नास्ति—ख०।
१० उच्चैः प्राह्वयति—ख०। द्रष्टव्यम्—का० श्रौ० [ २६।५।१ ]; शत० ब्रा० [ १४।२।१।७ ]।
११ द्रष्टव्यम्—का० श्रौ० [ २६।५।१ ]। १२ ( मा० ३८।३ )।

रज्जुदेवत्या द्विपदा गायत्री । [१]गा पाशेन प्रतिमुञ्चति—अदित्यै रास्नासीति । अदित्यै अदित्याः देवतायाः । रास्नासि रसनासि । इन्द्राण्या उष्णीष इति । इन्द्राणी इन्द्रस्य प्रिया पत्नी, तस्या इन्द्राण्या उष्णीषः शिरोवेष्टनमसीति रज्जुः स्तूयते ॥ ३ ॥

गा स्थूणाया बध्वा वत्समुत्सृजति[१]—

[२]पूषासि घर्माय दीष्व ॥ ४ ॥

वत्सदेवत्यं यजुः । पूषासीति । पूषा वायुः पुष्यतीति पूषा वृष्टिधाराप्रेरकः । प्रकरणत्वेन यः प्रसिद्धो वायुः पूषा वृष्टिधाराप्रेरकः । तथायं वत्सोऽपि प्रस्नवहेतुत्वेन धाराप्रेरक इति । वत्समुन्नयति [ का० श्रौ० २६।५।४ ]—घर्माय दीष्व । घर्माय रसाय दीष्व । दयतिर्दानकर्मा [ निरु० ४।१७ ] । पयसः प्रदानं कुरु । इय गौ.[?] ये रसास्तान् पिन्वतोऽस्मै घर्माय रसाय । दीष्व दानं कुर्वित्यर्थः ॥ ४ ॥

[३]गा दोग्धि—

[४]अश्विभ्यां पिन्वस्व सरस्वत्यै पिन्वस्वेन्द्राय पिन्वस्व ॥ ५ ॥

लिङ्गोक्तदेवत्य यजुः । अश्विभ्यामर्थाय पिन्वस्व । [५]'पिवि मिवि सेचने' [ ५८८-८९ भ्वादिः ] । क्षीरसेचन कुरुष्व । सरस्वत्यै अर्थाय पिन्वस्व । इन्द्राय सुत्राम्णे पिन्वस्व । क्षीरधाराप्लवन कुरुष्व ॥ ५ ॥

अथ विप्रुषोऽभिमन्त्रयते [ का० श्रौ० २६।५।६; शत० ब्रा० १४।२।१।१४ ]—

[६]स्वाहेन्द्रवत्स्वाहेन्द्रवत्स्वाहेन्द्रवत् ॥ ६ ॥

क्षीरविप्रुड्देवत्य यजुः । दुह्यमानेष्विदं पयः । इन्द्रवत् इन्द्रयुक्तमस्तु । स्वाहा सुहुतमस्तु । इति त्रिष्कृत्व आह—स्वाहेन्द्रवत् स्वाहेन्द्रवत्[७] स्वाहेन्द्रवत् । आवृत्तिर्नियमार्था ॥६॥

---

१ द्रष्टव्यम्—का० श्रौ० [ २६।५।३ ] । २ काण्वमाध्यन्दिनयोः पूर्वमन्त्रस्यैवान्तिमो भागः ।
३ द्रष्टव्यम्—का० श्रौ० [२६।५।५] । अथ पिन्वने पिन्वयति [शत० ब्रा० १४।२।१।११]—ख० ।
४ (मा० ३८।४; का० ३८।४) । ५ पिन्व मिन्व—क-ख-ग० ।
६ पूर्वमन्त्रस्यैवायमन्तिमो भागः काण्वमाध्यन्दिनयोः ।
७ 'स्वाहेन्द्रवत्' नास्ति—ख० ।

स्तनमालभते [ का० श्रौ० २६।५।७ ]—

[1]यस्ते स्तनः शशयो यो मयोभूर्यो रत्नधा वसुविद्यः सुदत्रः। येन विश्वा पुष्यसि वार्याणि सरस्वति तमिह धातवेऽकः। उर्वन्तरिक्षमन्वेमि ॥ ७ ॥

वाग्देवत्या त्रिष्टुप्, यजुरन्ता। ऋषिर्दीर्घतमाः। हे सरस्वति, यस्ते तव स्तनः [2]स्तन इव स्तनः। कथंभूतः स्तनः? शशयः। 'शीङ् स्वप्ने' [ १०३२ अदादिः ] स्वप्न इव स्थितः। अन्यैरनुपयुक्तः सुप्त इवास्ते। [3]यश्च मयोभूः। मय इति सुखनाम [ निघ० ३।६ ]। मयः सुखं भावयति सर्वेषां भूतानामिति स्तनो मयोभूः। यस्ते स्तनः रत्नधाः रत्नानां धनानां दाता, रत्नानां रमणीयानां [4]च धारयिता। यश्च वसु धनं देवयतीति[?] वसुवित्। यश्च सुदत्रः कल्याणदानः। हे सरस्वति, येन स्तनेन। विश्वा विश्वानि। वार्याणि वरणीयानि वस्तूनि पुष्यसि। [5]इह तं स्तनं धातवे धननिधानाय स्वपोषणाय। अकः अकरोः कृतवत्यसि। [6]अथ गार्हपत्यं गच्छत्युर्वन्तरिक्षमन्वेमीत्येवैतदाह। अधिश्रिते पयसि ऊर्ध्वमुत्सिच्यमाने पयस्येतदाह ॥ ७ ॥

परीशासावादत्ते [ का० श्रौ० २६।५।१२ ]—

[7]गायत्रं छन्दोऽसि त्रैष्टुभं छन्दोऽसि ॥ ८ ॥

परिशासदेवत्यं यजुः। गायत्रं छन्दोऽसि। [8]त्रैष्टुभं छन्दोऽसि। परिशासस्य क्रमेण मन्त्रद्वयम् ॥ ८ ॥

ताभ्यां महावीरं परिगृह्णाति [ का० श्रौ० २६।५।१४ ]—

द्यावापृथिवीभ्यां त्वा परिगृह्णामि ॥ ९ ॥

महावीरदेवत्यं यजुः। द्यावापृथिवीभ्यां त्वा त्वा महावीर परिगृह्णामि ॥ ९ ॥

---

१ ( मा० ३८।५, का० ३८।५ ) २ 'स्तन इव स्तनः। कथंभूतः स्तनः?' नास्ति–ख०।
३ 'यश्च' नास्ति–ख०। ४ 'च' नास्ति–क-ग०। ५ 'इह' नास्ति–ख०।
६ द्रष्टव्यम्–का० श्रौ० [ २६।५।११ ]। ७ ( मा० ३८।६; का० ३८।६ )। इत आरभ्य व्याख्यातानां चतुर्णां प्रतीकानामेक एव मन्त्रः काण्वमाध्यन्दिनयोः।
८ 'त्रैष्टुभं छन्दोऽसि' नास्ति–ख०।

उपयमन्योपगृह्णाति [ का० श्रौ० २६।५।१५ ]—

अन्तरिक्षेणोपयच्छामि ॥ १० ॥

अन्तरिक्षेण लोकेन । उपयच्छामि ॥ १० ॥

[1]पय आसिञ्चति—

इन्द्राश्विना मधुनः सारघस्य घर्मं पात वसवो यजत वाट् ।

स्वाहा सूर्यस्य रश्मये वृष्टिवनये ॥ ११ ॥

वैश्वदेवानि यजूंषि । हे इन्द्राश्विनौ, हे इन्द्र हे अश्विनौ । मधुनः । कथंभूतस्य ? सारघस्य मधुमक्षिकाभिः साध्यस्य मधुनः । घर्मं रससंघातम् । वसवश्च देवाः घर्मं पात पिबत । ऋत्विजः यजत वाट् । वाडिति वषट्कारः । वषट्कृतम् । एव हुतं भवति । स्वाहा सूर्यस्य रश्मये स्वाहा । कथंभूताय ? वृष्टिवनये । वृष्टिं वनति सभजतीति वा वृष्टिवनिः, तस्मै वृष्टिवनये रश्मये । स्वाहेति होमार्थः । सुहुतमस्तु ॥ ११ ॥

[2]आहवनीयं गच्छन्नध्वर्युर्वातनामानि जुहोति—

[3]समुद्राय त्वा वाताय स्वाहा सरिराय त्वा वाताय स्वाहा ।

अनाधृष्याय त्वा वाताय स्वाहाप्रतिधृष्याय त्वा वाताय स्वाहा ।

अवस्यवे त्वा वाताय स्वाहाऽशिमिदाय त्वा वाताय स्वाहा ॥ १२ ॥

वातदेवत्यानि यजूंषि । समुद्राय । [4]'द्रु द्रवणे' सम् उत् । सर्वे देवा यद् वातात् समुद्द्रवन्तीति समुद्रो वातः । तस्मै समुद्राय वाताय । [5]'वा गतिगन्धनयोः' [ १०५० अदादिः ] हे प्रवर्ग्य, त्वा त्वाम् । समुद्राय वाताय जुहोमि । स्वाहेति होमार्थः । सरिराय त्वा वाताय स्वाहा । 'ईर गतौ [कम्पने च]' [ १०१८ अदादिः ] सर्वाणि भूतानि यतः सहेरते । व्यत्ययः । सहेरन्ते । सह गच्छन्ति स सरिरः, तस्मै सरिराय वाताय ।

---

१ द्रष्टव्यम्—का० श्रौ० [ २६।५।१६ ] ।  २ द्रष्टव्यम्—का० श्रौ० [ २६।५।१७ ] ।

३ ( मा० ३८।७; का० ३८।७ ) ।  ४ 'द्रु गतौ' [ ९४५ भ्वादिः ] ।

५ 'वा गतिगन्धनयोः····अनाधृष्याय त्वा वाताय स्वाहा' नास्ति—ख० ।

त्वा प्रवर्ग्य त्वा जुहोमि स्वाहा। अनाधृष्याय [1]त्वा वाताय स्वाहा। 'ञिधृषा प्रागल्भ्ये' [१२७० स्वादिः] धर्षितुमशक्यः अनाधृष्यः स्प्रष्टुमशक्यः, तस्मै अनाधृष्याय। शत्रुभिः प्रतिधर्षितुमशक्यः अप्रतिधृष्यः, तस्मै अप्रतिधृष्याय वाताय प्रवर्ग्य त्वा स्वाहा जुहोमि। सर्वत्रैवं वाक्ययोजना। स्यति उपस्पर्शनकर्मा। सर्वाणि भूतानि अवस्यति उपस्पृशति वा अवस्युः, तस्मै अवस्यवे वाताय। अशिमिदाय। शिमीति कर्मनाम [निघ० २।१, निरु० ५।१२] शिमिं ददातीति शिमिदः कर्मदः। अस्मादन्यो न विद्यत इति अशिमिदः, तस्मै अशिमिदाय वाताय। [2]प्रवर्ग्य [3]त्वा जुहोमि॥ १२॥

[4]इन्द्राय त्वा वसुमते रुद्रवते स्वाहेन्द्राय त्वादित्यवते स्वाहा। इन्द्राय त्वाभिमातिघ्ने स्वाहा सवित्रे त्व ऋभुमते विभुमते वाजवते स्वाहा बृहस्पतये त्वा विश्वदेव्यावते स्वाहा॥ १३॥

[5]घर्मदेवत्य यजुः। इन्द्रादिनामभिरेव वायुः स्तूयते। इन्द्राय परमैश्वर्ययुक्ताय वाताय त्वा प्रवर्ग्य त्वाम्। वसुमते वसवो विद्यन्ते यस्येति वसुमान्, तस्मै वसुमते। रुद्रवते रुद्रोऽस्यास्तीति रुद्रवान् वातः, तस्मै रुद्रवते। इन्द्राय। आदित्योऽस्यास्तीति आदित्यवान् वातः, तस्मै आदित्यवते वातायेन्द्राय। अभिमातिघ्ने अभिमातिः शत्रुः त हन्तीत्यभिमातिहा, तस्मै अभिमातिघ्ने। सवित्रे प्रसवकर्त्रे वाताय। ऋभुमते तस्मै बृहते। विभुमते विभवे। वाजवते अन्नवते। बृहस्पतये वाताय। विश्वदेव्यावते [6]विश्वेषु देवेषु भवः विश्वदेव्यः [7]सोऽस्यास्तीति विश्वदेव्यावान्, तस्मै विश्वदेव्यावते। छान्दसो दीर्घः। प्रवर्ग्य त्वा जुहोमि॥ १३॥

[8]यमाय त्वाङ्गिरस्वते पितृमते स्वाहा॥ १४॥

[9]घर्मदेवत्य यजुः। यमयतीति यमः वातः। तस्मै यमाय त्वा। अङ्गिरस्वते अङ्गिरा इत्यङ्गिरस्वान् इत्यङ्गिरस्वते वाताय। पितृमते पिता पालकोऽस्यास्तीति पितृमान्, तस्मै पितृमते। हे प्रवर्ग्य, त त्वा जुहोमि। स्वाहा सुहुतमस्तु॥ १४॥

---

१ 'त्वा वाताय स्वाहा''''अप्रतिधृष्य.' नास्ति–क०। २ प्रवर्ग्य–क०। ३ 'त्वा' नास्ति–ख०।
४ (मा० ३८।८; का० ३८।८)। ५ 'घर्मदेवत्यं यजुः' नास्ति–ख०।
६ विश्वेदेवेषु भवः–ख०। ७ 'सोऽस्यास्तीति विश्वदेव्यावान्' नास्ति–ख०।
८ (मा० ३८।९; का० ३८।९)। ९ 'घर्मदेवत्यं यजु.' नास्ति–ख०।

उपयमन्याऽऽसिञ्चति [ का० श्रौ० २६।६।१ ]—

[1]स्वाहा घर्माय स्वाहा घर्मः पित्रे ॥ १५ ॥

[2]द्वे [3]घर्मदेवत्ये यजुषी। घर्माय घर्मदेवतायै स्वाहा जुहोमि। पित्रे पितृदेवतायै स्वाहा। [4]घर्मरसः सुहुतमस्तु ॥ १५ ॥

वषट्कृते जुहोति [ का० श्रौ० २६।६।३ ]—

[5]विश्वा आशा दक्षिणसत्सर्वान्देवानयाळिह।

स्वाहाकृतस्य घर्मस्य मधोः पिबतमश्विना ॥ १६ ॥

आश्विन्यनुष्टुप्। विश्वाः सर्वाः। आशाः कामाः। दक्षिणसत् दक्षिणतः सीदतीति दक्षिणसत्। अग्नेर्दक्षिणत स्थित्वा ब्रह्मा ब्रवीति—सर्वान् देवान् अयाळिह। सर्वान् देवान् अयाक्षीदिति। इह यज्ञे इष्टवानसीत्येतदाह। स्वाहाकृतस्य घर्मस्य। स्वाहाकारेण कृतः [6]स्वाहाकृतस्तस्य स्वाहाकृतस्य। घर्मस्य रसस्य। मधोः साधुभूतस्य घर्मस्य स्वभागमिति दक्षिणसत्। हे अश्विनौ पिबतम् ॥ १६ ॥

अथ हुत्वोद्ध्र्वमुत्कम्पयति [ शत० ब्रा० १४।२।२।१७ ] इति श्रुतिः। त्रिरुत्कम्पयति [ का० श्रौ० २६।६।४ ] इति सूत्रम्—

[7]दिवि धा इमं यज्ञमिमं यज्ञं दिवि धाः।

स्वाहाग्नये यज्ञियाय शं यजुर्भ्यः ॥ १७ ॥

घर्मदेवत्या [8]गायत्री। दिवि द्युलोके। इम यज्ञ धाः स्थापय। इमं यज्ञं दिवि धाः। अभ्यासे भूयासमर्थ मन्यन्ते [ निरु० १०।४२ ]। [9]अनुवषट्कृते जुहोति—स्वाहाग्नय इति। अग्नये स्वाहा सुहुतमस्तु। यज्ञियाय श यजुर्भ्यः। यज्ञार्हाय अग्नये। यजुर्भ्यः सकाशात्। श सुखम्। अस्माकमस्त्विति शेषः ॥ १७ ॥

---

१ काण्वमाध्यन्दिनयोः पूर्वमन्त्रस्यैवायमन्तिमो भागः। २ स्वाहा घर्मायेति स्वाहा घर्मपित्र इति च द्वे—ख-ग०। ३ 'घर्मदेवत्ये यजुषी' नास्ति—ख०। ४ 'घर्मः' इत्येव—ख०। ५ ( मा० ३८।१०; का० ३८।१० )। ६ 'स्वाहाकृतः' नास्ति—क०। ७ (मा० ३८।११; का० ३८।११ )। ८ सामोष्णिक्—सर्वा० टी०। ९ द्रष्टव्यम्—का० श्रौ० [ २६।६।५ ]।

[1]ब्रह्मानुमन्त्रयते [ का० श्रौ० २६।६।६ ]—

[2]अश्विना घर्मं पातꣳ हार्द्वानमहर्दिवाभिरूतिभिः ।

तन्त्रायिणे नमो द्यावापृथिवीभ्याम् ॥ १८ ॥

उष्णिग् [3]आश्विनी । अश्विना अश्विनौ । घर्मरस पात पिबतम् । हार्द्वानं हृदयस्य प्रिय हृदयसबन्धि प्रियं वचन हार्द्वानम् । घर्मं पातम् । अहः अहोभिः । दिवाभिः [4]दिवसैः । अह इत्यत्र पूर्वाह्णवचनः । दिवाशब्दोऽत्र सायंकालवचनः । स हि प्रवर्ग्ययागकालः । ऊतिभिः एतत्कालोपलक्षिताभिः [5]ऊतिभिः [6]अवनैः अग्निनिमित्तभूतैः । तन्त्रायिणे । प्रसारिताः तन्तवः तुरीशलाकाप्रोताः तन्तवः तन्त्रमुच्यन्ते । तन्त्रमिव तन्तुना ऊर्णनाभिरिव अयितु त्रिलोकान् गन्तु शीलमस्येति । तन्तौ [7]यथा तन्तुनालिः सूत्रपूरणाय एति तथा त्रींल्लोकानादित्यस्तन्त्रायी; "एष हीमॉंल्लोकॉंस्तन्त्रमिवानुसंचरति" [ शत० ब्रा० १४।२।२।२२ ] इति श्रुतेः । तस्मै नमः । उत्तरत्राप्यनुषङ्गः । नमो द्यावापृथिवीभ्याम् ॥ १८ ॥

[8]यजमानोऽनुमन्त्रयते ।

[9]अपातामश्विना घर्ममनु द्यावापृथिवी अमꣳसाताम् ।

इहैव रातयः सन्तु ॥ १९ ॥

आश्विनी ककुप् । अपाता पीतवन्तौ । अश्विना घमम् । अनु द्यावापृथिवी । अमसाताम् अनुमतवत्यौ । तथा घर्ममपातामश्विनौ द्यावापृथिव्यौ अनुमतवत्यौ । द्यावापृथिव्यौ । साध्वभूदिति । यत एवम् अतो ब्रवीमि । इहैव रातयः सन्तु । इहैव यज्ञे एव । रातयः दानानि [10]धनदानानि सन्तु ॥ १६ ॥

पिन्वमानमभिमन्त्रयते[11]—

[12]इषे पिन्वस्वोर्जे पिन्वस्व ब्रह्मणे पिन्वस्व

क्षत्राय पिन्वस्व द्यावापृथिवीभ्यां पिन्वस्व ॥ २० ॥

---

१ द्रष्टव्यम्–शत० ब्रा० [ १४।२।२।१९ ] । २ ( मा० ३८।१२, का० ३८।१२) । ३ 'आश्विनी' नास्ति–ख० । ४ 'दिवसैः' नास्ति–ख० । ५ 'ऊतिभिः' नास्ति–क० । ६ 'अवनैः' नास्ति–ख० । ७ 'यथा तन्तुनाभिः····साध्वभूदिति' नास्ति–ख० । ८ द्रष्टव्यम्–का० श्रौ० [ २६।६।७ ] । ९ ( मा० ३८।१३; का० ३८।१३ ) । १० धनानि–क० । ११ अनुमन्त्रयते–का० श्रौ० [ २६।६।८ ]; शत० ब्रा० [ १४।२।२।२७ ] । १२ (मा० ३८।१४; का० ३८।१४) ।

प्रवर्ग्यदेवत्या जगती । हे प्रवर्ग्य, इषे [1]पिन्वस्व तुष्ट्यै पिन्वस्व सेचस्व । ऊर्जे अन्नाय पिन्वस्व । ब्रह्मणे ब्राह्मणेभ्यः पिन्वस्व । क्षत्राय क्षत्रियेभ्य. पिन्वस्व । द्यावापृथिवीभ्या तर्पणाय पिन्वस्व ॥ २० ॥

उत्क्रामत्युत्तरपूर्वार्द्धम् [ का० श्रौ० २६।६।६ ]—

[2]धर्मासि सुधर्माऽमेन्यस्मे नृम्णानि धारय
ब्रह्म धारय क्षत्र धारय विशं धारय ॥ २१ ॥

हे प्रवर्ग्य, त्वं धर्मासि सर्वस्य जगतो धारकोऽसि । हे सुधर्म, आहुतिपरिणामद्वारेण सुधर्म साधुधारणशील । खरे करोति [ का० श्रौ० २६।६।१० ]–[अमेनीति] । अमेनि 'मीञ् हिंसायाम्' [ १४७७ क्र्यादिः ] । अमेनि अहिंसन् अक्रुध्यन् । नृम्णानि धनानि धारय । ब्रह्म ब्राह्मणजातिम् । अथ क्षत्रं धारय । विशं धारय । अस्मे अस्मासु । धारय स्थापय ॥ २१ ॥

शाकलैर्जुहोति [ शत० ब्रा० १४।२।२।३१ ]—

[3]स्वाहा पूष्णे शरसे स्वाहा ग्रावभ्यः स्वाहा प्रतिरवेभ्यः ।
स्वाहा पितृभ्य ऊर्ध्वबर्हिभ्यो घर्मपावभ्यः स्वाहा
द्यावापृथिवीभ्याꣳ स्वाहा विश्वेभ्यो देवेभ्यः ॥ २२ ॥

सप्त लिङ्गोक्तदेवत्यानि यजूंषि । पूष्णे स्वाहा वायवे प्राणाय[4] । शरसे । शर इति दध्न उपरि स्नेहभूतो रसः शर इत्युच्यते, तद्रूपाय शरसे । ग्रावभ्यः प्राणेभ्यः । "प्राणा वै ग्रावाणः" [ शत० ब्रा० १४।२।२।३३ ] इति श्रुतेः । प्रतिरवेभ्यः प्राणेभ्यः । "प्राणा वै प्रतिरवाः" [ शत० ब्रा० १४।२।२।३४ ] इति । स्वाहा पितृभ्यः ऊर्ध्वबर्हिर्भ्यः । उर्ध्वम् उत्कृष्टं बर्हिर्येषा ते उर्ध्वबर्हिषः, तेभ्यः स्वाहा । घर्मपावभ्यः घर्मसेविभ्यः स्वाहा । द्यावापृथिवीभ्या प्राणोदानाभ्या स्वाहा इति । विश्वेभ्यो देवेभ्यः प्राणेभ्यः स्वाहा ॥ २२ ॥

---

१ 'पिन्वस्व' नास्ति–ख० ।
२ काण्वमाध्यन्दिनयोः पूर्वमन्त्रस्यैवायमन्तिमो भाग ।
३ ( मा० ३८।१५; का० ३८।१५ ) ।
४ 'प्राणाय' नास्ति–ख० ।

[1]स्वाहा रुद्राय रुद्रहूतये स्वाहा सं ज्योतिषा ज्योतिः ।

अहः केतुना जुषताꣳ सुज्योतिर्ज्योतिषा स्वाहा

रात्रिः केतुना जुषताꣳ सुज्योतिर्ज्योतिषा स्वाहा ॥ २३ ॥

रुद्रशब्दः स्तोतृनामसु पठितः [ निघ० ३।१६ ]। रुद्रैः स्तोतृभिः आहूयत इति रुद्रहूतिः, तस्मै रुद्रहूतये स्वाहा। महावीरादुपयमन्या प्रत्यानयति [ शत० ब्रा १४।२।२।४० ]– स्वाहा सज्योतिषा ज्योतिः। संज्योतिषा ज्योतिरूपेण। ज्योतिः सगच्छते, "ज्योतिर्वा इतरस्मिन् पयो भवति ज्योतिरितस्याम्" [ शत० ब्रा० १४।२।२।४० ] इति श्रुतेः। 'अहः केतुना' इति व्याख्यातम् [ ३७।२२ ] ॥ २३ ॥

अथ यजमानाय घर्मोच्छिष्ट प्रयच्छति। स उपहवमिष्ट्वा भक्षयति [ शत० ब्रा० १४।२।२।४२ ]—

[2]मधु हुतमिन्द्रतमे अग्ना अश्याम ते देव घर्म

नमस्ते अस्तु मा मा हिꣳसीः ॥ २४ ॥

मधु मधुमत्। मधु हुत कृतम्। इन्द्रतमे इन्द्रियवत्तमे। अग्नौ हुतम्। ते तुभ्यम्। देवतार्थत्वेनास्माभिर्हुतम्। हे देव हे घर्म प्रवर्ग्य, तच्छेषम् अश्याम। 'अश भोजने' [ १५२४ क्र्यादिः ]। भक्षयामः। हविःशेषभक्षण कुर्मः। हे देव, तुभ्य नमोऽस्तु। मा माम्। त्वं मा हिंसीः हिंसां मा कार्षीः। [3]एवमाशिषमाशास्ते ॥ २४ ॥

[4]महावीरमासन्द्या करोति—

[5]अभीमं महिमा दिवं विप्रो बभूव सप्रथाः ।

उत श्रवसा पृथिवीꣳ सꣳसीदस्व महाँ २ असि रोचस्व देववीतमः ।

विधूममग्ने अरुषं मियेध्य सृज प्रशस्त दर्शतम् ॥ २५ ॥

---

१ ( मा० ३८।१६; का० ३८।१६ )। २ काण्वमाध्यन्दिनयोः पूर्वमन्त्रस्यैवायमन्तिमो भागः।
३ आशिषमेवैतदाशास्ते–शत० ब्रा० [ १४।२।२।४२ ]
४ द्रष्टव्यम्–का० श्रौ० [ २६।६।२६ ]। ५ ( मा० ३८।१७; का० ३८।१७ )।

गायत्रीबृहत्यावनवसाने । [1]यत्र गायत्रीबृहत्यौ मीलिते प्रतीयेते स गायत्रः प्रगाथः, अतिशक्करी वाऽऽग्नेयी । अभीम महिमा दिव विप्रो [2]बभूव । हे श्रीभगवन्नग्ने, प्रवर्ग्यात्मकाग्ने । यस्य तव महिमा माहात्म्यम् । इम दिव द्युलोकम् । अभिबभूव अभिभव चकार । कथभूतस्त्वम् ? विप्रः महिम्ना मेधावीति स्तूयते, 'प्रा पूरणे' [ १०६१ अदादिः ] इति वा । अपेक्षितफलस्य परिपूरकः । सप्रथाः सर्वतः पृथुभावयुक्तः । उत अपि च । श्रवसा भवत्कीर्त्या । श्रव इति कीर्तिनाम [ निरु० ११।६ ] । पृथिवीं च ते महिमा अभिबभूव । हे श्रीभगवन्नग्ने, देववीतमः । इतस्त्वा ब्रवीमि । संसीदस्व आसन्द्या सीदस्व अत्राऽऽसीनो भव । त्व च महानसि । अतस्त्व शोचस्व दीप्यस्व । विधूममग्ने अरुष मियेध्य सृज प्रशस्त दर्शतम् । हे श्रीभगवन्नग्ने, मियेध्य । मेध्य इति प्राप्ते मियेध्य इति छान्दस पदम् । हे मियेध्य हे यज्ञिय आर्ष, आरोचने धूमं विसृज । हे प्रशस्त हे श्रीभगवन्नग्ने । दर्शतं दर्शनीयम् । इत उत्तरमाहुतिपरिणाम भवत्विति शेषः ॥२५॥

चतुर्गृहीतेनाभिजुहोति [ २६।७।४ ]—

[3]या ते घर्म दिव्या शुग्या गायत्र्याᳪ हविर्धाने । सा त आप्यायतां निष्ट्यायतां तस्यै ते स्वाहा । या ते घर्मान्तरिक्षे शुग्या त्रिष्टुभ्याग्नीध्रे । सा त आप्यायतां निष्ट्यायतां तस्यै ते स्वाहा । या ते घर्म पृथिव्याᳪ शुग्या जगत्याᳪ सदस्या । सा त आप्यायतां निष्ट्यायतां तस्यै ते स्वाहा ॥ २६ ॥

यत्रातिशक्वर्यनुष्टुभौ मीलिते सोऽतिशाक्करः प्रगाथः । हे घर्म, ते तव । दिव्या दिवि भवा शुक् । द्युलोक प्रविष्टा च दीप्तिः । शुक् दीप्तिः । गायत्र्या या प्रविष्टा हविर्धाने च या शुक् दीप्तिः । सा ते तव । आप्यायताम् आप्यायनं कुरुताम् । निष्ट्यायताम् । 'स्त्यै ष्ट्यै शब्द-सघातयोः' [ ९१०-११ भ्वादिः ] । नि· नितरा स्त्यायता संघातभावमापद्यताम् । तस्यै शुचे ते तुभ्य स्वाहा । या ते घर्म । हे घर्म प्रवर्ग्य रसरूप । ते तव अन्तरिक्षे अन्तरिक्षस्थाने प्रविष्टा या शुक् । या च त्रिष्टुभि श्रिता शुक् । या च आग्नीध्रे या च दीप्तिः । सा त इत्यादिः समानार्थः । या ते घर्म ते तव पृथिव्या प्रविष्टा या शुक् । या च जगत्या छन्दसि स्थिता शुक् । सदस्या सदसि सभाया भवा या शुक् । आप्यायतामित्यादिः समानार्थः ॥ २६ ॥

---

१ 'यत्र' नास्ति—ख० । २ 'बभूव'''विप्रः महिम्ना' नास्ति—ख० ।

३ ( मा० ३८।१८; का० ३८।१८ ) ।

[१]निष्क्रामति—

[२]क्षत्रस्य त्वा परस्पाय ब्रह्मणस्तन्वं पाहि ।
विशस्त्वा धर्मणा वयमनुक्रामाम सुविताय नव्यसे ॥ २७ ॥

लिङ्गोक्तदेवत्या बृहती । [३]क्षत्रस्य क्षत्रसंबन्धिनः । परस्पाय परं प्रकृष्टं धर्मं पावयति पातीति वा परस्पः, तस्मै परस्पाय परमाय । ज्वलनाय ज्वलनार्थम् । हे महावीर, ब्रह्मणस्तन्वं शरीरम् । पाहि पालय । विशस्त्वा धर्मणा । "यज्ञो वै विट्" [ शत० ब्रा० १४।३।१।१६ ] इति श्रुतेः । विशः यज्ञस्य । धर्मणा यज्ञसबन्धित्वेन विहितधर्मेण । त्वा महावीर त्वाम् । अनुक्रामाय अनुगच्छेम । किमर्थमिति ? सुविताय [४]सुसमानाय अरिष्ट्यै । नव्यसे । असौ इति दीप्यदनेष्टुः [?] । निपूर्वस्य नेर्नाशार्थः[?] । नव्यसे [५]अविनाशाय । महावीरं त्वामनुगच्छेमेति सबन्धः ॥ २७ ॥

[६]महावीरं निदधाति—

[७]चतुःस्रक्तिर्नाभिर्ऋतस्य सप्रथाः स नो विश्वायुः सप्रथाः
स नः सर्वायुः सप्रथाः । अप द्वेषो अपह्वरोऽन्यव्रतस्य सश्चिम ॥२८॥

प्रवर्ग्यदेवत्या महाबृहती । महावीरः चतुःस्रक्तिः [८]महावीरस्य परितः । दिशः स्रक्तयः, "दिशो ह्येतस्य स्रक्तयः" [ शत० ब्रा० १४।३।१।१७ ] इति श्रुतेः । चतस्रः स्रक्तयो दिशो यस्य, चतुःस्रक्तिः महावीरः । किं च, नाभिः [९]ऋतस्य यज्ञस्य नाभिः महावीरः । स च सप्रथाः सर्वतः पृथु । स त्व नः अस्माक विश्वायुः । [१०]सर्वायुः सप्रथाः अस्मान्प्रथयिता च । आदरार्थोऽयमभ्यासः । [११]सर्वायुः सर्वायुषो दाता सर्वतश्च प्रथयितास्तु । अभ्यासे भूयासमर्थं मन्यन्ते [ निरु० १०।४२ ] इति । त्वत्प्रसादाच्च अपद्वेषः द्वेषादिः अपगच्छेत् । एव चेद्वीतरागा भवेम । अपह्वरः [१२]'ह्वर ह्वल चलने' [८०५–६ भ्वादिः] अपह्वरः अस्मत्तः [१३]अपगतचलन.

---

१ द्रष्टव्यम्—का० श्रौ० [ २६।७।६ ] । २ ( मा० ३८।१९; का० ३८।१९ ) ।
३ 'क्षत्रस्य' नास्ति—ख० । ४ सुखमानाय—क-ग० । ५ अरिविनाशाय—ख० ।
६ द्रष्टव्यम्—का० श्रौ० [२६।७।१४] । ७ ( मा० ३८।२०; का० ३८।२० ) ।
८ महावीरस्य परित. शक्तस्य परितः—ख० । ९ 'ऋतस्य यज्ञस्य नाभिः' नास्ति—ख० ।
१० 'सर्वायुः' नास्ति—ख० । ११ 'सर्वायु· · त्वत्प्रसादाच्च' नास्ति—ख० ।
१२ 'ह्वर····अस्मत्तः' नास्ति—ख० । १३ अपगतवचनः वचनशून्यः—ख० ।

चलनशून्यो भवतु। अन्यव्रतस्य। कर्मणि षष्ठी। अन्यद्व्रतं कर्म। सश्चिम। सश्चतिः सेवाकर्मा। सेवामहे॥ २८॥

पयसा पूरयति [ का० श्रौ० २६।७।३२ ]—

[1]घर्मैतत्ते पुरीषं तेन वर्द्धस्व चा च प्यायस्व।

वर्धिषीमहि च वयमा च प्यासिषीमहि॥ २९॥

घर्मदेवत्याऽनुष्टुप्। हे घर्म, एतत् [2]एतत्कर्म। पुरीष तव पूरयिता। तेन कर्मणा वर्धस्व अभिवृद्धिं कुरु। चा च प्यायस्व। [3]चकारो भिन्नक्रमः। आप्यायस्वेति। [4]अन्यद् व्याख्यातम् [ २।२७ ]॥ २६॥

[5]परिषिञ्चति—

[6]अचिक्रदद् वृषा हरिर्महान्मित्रो न दर्शतः।

सꣳ सूर्येण दिद्युतदुदधिर्निधिः॥ ३०॥

[7]परोष्णिक्। अत्र घर्मात्मना आदित्यः स्तूयते। [8]यो महावीरः अचिक्रदत्। क्रन्दिरु[?] गतिशोषणयोः। क्रन्दतिरत्र शब्दवचनः। अचिक्रदत् पुन पुनः [9]शब्दमकरोत्। वृषा वर्षिता आहुतिपरिणामद्वारेण। [10]हरिः हरितवर्णः, हर्ता वा रसानाम्। [11]महान् प्रभावतः। मित्रो न [12]दर्शतः मित्र इव दर्शनीयः। [13]मित्रः सूर्यो हि सर्वस्यैव मित्रम्। ससूर्येण [14]सूर्येण सह संगत्य। दिद्युतत् दिद्योतते। स्पर्धमान इव। उदधि. उदकधारकः। उदधिरिवोदधिः। निधिश्च अपेक्षितार्थफलसाधनत्वेन निधिश्च॥ ३०॥

---

१ ( मा० ३८।२१; का० ३८।२१ )। २ 'एतत्कर्म' नास्ति–ख०।
३ 'चकारो भिन्नक्रमः' नास्ति–ख०। ४ व्याख्यातो मन्त्रः–ख०।
५ द्रष्टव्यम्–का० श्रौ० [ २६।७।१२ ]। ६ ( मा० ३८।२२; का० ३८।२२ )।
७ लिङ्गोक्तदेवत्योष्णिक्–ख०, पुरउष्णिक्–क-ग०। ८ 'यः' नास्ति–क०।
९ शब्दं करोति–ख०। १० रसानाहरतीति हरिः–ख०।
११ 'प्रभावतः' नास्ति–ख०। १२ 'दर्शत.' नास्ति–ख०।
१३ मित्रो नाम सूर्यः सर्वस्य मित्रम्–ख०। १४ 'सूर्येण' नास्ति–ख०।

[1]तथा चात्वालेऽप उपस्पृशन्ति—

[2]सुमित्रिया न आप ओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु ।
योऽस्मान्द्वेष्टि यं च वयं द्विष्मः ॥ ३१ ॥

प्राङिवोदङ्ङुत्क्रामति [ श० ब्रा० १४।३।१।२८ ]—

[3]उद्वयं तमसस्परि स्वः पश्यन्त उत्तरम् ।
देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥
[4]एधोऽस्येधिषीमहि समिदसि तेजोऽसि तेजो मयि धेहि ॥ ३ ॥

मन्त्रावेतौ व्याख्यातौ [ ६।३१, २०।६–७ ] ॥ ३१–३२ ॥

[5]दधिघर्मग्रहणम् [ का० श्रौ० २६।७।५४ ]—

[6]यावती द्यावापृथिवी यावच्च सप्त सिन्धवो वितस्थिरे ।
तावन्तमिन्द्र ते ग्रहमूर्जा गृह्णाम्यक्षितं मयि गृह्णाम्यक्षितम् ॥ ३३ ॥

दधिघर्मदेवत्या [7]महाबृहती । यावती यावत्परिमाणे । द्यावापृथिवी द्यावापृथिव्यौ । यावच्च । व्यत्ययः । यावच्च सप्त सिन्धवः । समुद्राश्च यावत्परिमाणपरिमिताः । वितस्थिरे विशेषतः स्थिराः । हे इन्द्र, तावन्त तावत्परिमाणपरिमितम् । ते त्वदीय ग्रहम् । ऊर्जा अन्नेन सह गृह्णामि । पुनः कथभूत ग्रहम् ? अक्षितम् अनुपक्षीणम् । गृह्णामीति सबन्धः । अपि च [8]मयि गृह्णाम्यक्षितम् । मयीत्यधिकारिणो निर्देशः । विज्ञानात्मनिश्चयः । त ग्रह गृह्णामीति ॥३३॥

भक्षयति [ शत० ब्रा० १४।३।१।३१ ]—

[9]मयि त्यदिन्द्रियं बृहन्मयि दक्षो मयि क्रतुः ।
घर्मस्त्रिशुग्विराजति विराजा ज्योतिषा सह ब्रह्मणा तेजसा सह ॥३४॥

---

१ द्रष्टव्यम्—का० श्रौ० [ २६।७।३७ ] । २ ( मा० ३८।२३; का० ३८।२३ ) ।
३ (मा० ३८।२४; का० ३८।२४ ) । ४ ( मा० ३८।२५; का० ३८।२४ ) ।
५ दधिलिङ्गग्रहणम्—ख० । ६ (मा० ३८।२६, का० ३८।२५) । ७ ब्राह्मी उष्णिक्—सर्वा० टी० ।
८ 'मयि' नास्ति—ख० । ९ ( मा० ३८।२७; का० ३८।२६ ) ।

उदाहरणम्—

रूपपञ्चकमृणं धनं सखे खेन युक्तमथवा विवर्जितम् ।
शून्यतः पृथगपास्य तानि वा किं भवेद्गणक मे पृथग्वद ॥ ६ ॥

न्यासः–रू ५̇ रू ५।०

एतानि खेन युतान्यूनितान्यविकृतान्येव–रू ५̇ रू ५।०

न्यासः–रू ५̇ रू ५।०

एतानि शून्यतश्च्युतानि जातानि व्यक्तानि–रू ५, रू ५̇

इति शून्यसंकलनव्यवकलने ॥

---

[1]खगुणादौ सूत्रम्—

खं राशिना विभक्तं खं स्याद्राशिः खभाजितः खहरः ॥ १२ ॥
शेषविधौ सति खगुणश्चिन्त्यः शून्ये गुणे खहरश्चेत् ।
पुनरेव तदाऽविकृतो राशिर्ज्ञेयोऽत्र मतिमद्भिः ॥ १३ ॥

[2]उदाहरणम्—

धनात्मकैश्चाप्यधनात्मकैस्त्रिभिर्विभाजितं ख फलमाशु [ मे ] वद ।
धनात्मकाश्चाप्यधनात्मकास्त्रयः खभाजितास्त्वं गणक प्रवेत्सि चेत् ॥ ७ ॥

---

१ खगुणादावुपपत्तिः—गुण्यापचयाद् गुणनफलस्यापचयस्तावत सिद्ध एव । यथा १२ × २ = २४; १० × २ = २०, २ × २ = ४, १ × २ = २ इतिरीत्या गुण्यस्य परमापचये गुणनफलस्यापि परमापचय आवश्यक इति ० × २ = ० । संख्याया. परमापचये शून्यतायां पर्यवसानात् । तथैव गुणकापचये गुणनफलापचयोऽपि द्रष्टव्यः । यथा १२ × ८ = ९६; १२ × ५ = ६०; १२ × ३ = ३६; १२ × १ = १२; गुणकस्य परमापचये १२ × ०, गुणनफलेऽपि परमापचयवशात् १२ × ० = ० फल भवति । भागहारे च भाजकापचये फलोपचयः सिद्धः । तद्यथा १२ ÷ ६ = २; १२ ÷ ४ = ३; १२ ÷ १ = १२ अत्र भाजकस्य परमापचये फलस्य परमा वृद्धिरावश्यकीत्यतः १२ ÷ ० = $\frac{१२}{०}$ अनन्तो वा। अयमेव खहर उच्यते ।

२ यथा भाज्यः ० । भाजकः –३ । रू ३ । ० ÷ ३ = ० । ० ÷ – ३ = ० । यथा भाज्यः रू –३ । रू ३ । भाजकः = ० अत्र रू –३ । रू ३ खहर इति ।

न्यासः—भाज्यः रू ० भाजकः रू ३ रू ३̇

भागे हृते जातमुभयोः फलम् ०

न्यासः—भाज्यः रू ३ रू ३̇

भागे हृते जातः खहरः रू ३ वा रू ३̇ अत्र खहरगुण उच्यते ।

[1]शून्याभ्यासवशात्खतामुपगतो राशिः पुनः खोद्धृतोऽ-
प्यावृत्तिं पुनरेव तन्मयतया न प्राक्तनीं गच्छति ।
आत्माभ्यासवशादनन्यममलं चिद्रूपमानन्ददं
प्राप्य ब्रह्मपदं न संसृतिपथं योगी गरीयानिव ॥ १४ ॥

प्राक्तनश्लोकश्च—

[2]अस्मिन्विकारः खहरे न राशावपि प्रविष्टेष्वपि निःसृतेषु ।
बहुष्वपि स्याल्लयसृष्टिकालेऽनन्तेऽच्युते भूतगणेषु यद्वत् ॥ १५ ॥

इति खरूपभागहारः ॥

---

खयोगवियोगगुणनभजनवर्गवर्गमूलेषु सूत्रम्—

खं खयुतं रहितं वा खं स्यात्खेनाहतं च विहृतं वा ।
खस्य कृतिः खं खपदं खमेव सर्वत्र विज्ञेयम् ॥ १६ ॥

---

१ शून्याभ्यासवशादिति । अत्र न्यासः, $\frac{५ \times २}{२} = ५$ । $\frac{५ \times ०}{०} = ५$ ।

२ अस्मिन्विकार इति । ननु यद्यप्यभिन्नराशिना योगान्तरयोर्भवत्यविकृतत्वं तथापि भिन्न-राशिना योगेऽन्तरे च त्वदुक्तरीत्या भवेदेव विकारः । यथा $\frac{३}{०} + \frac{१}{३}$ अन्योन्यहाराभिहतौ हरांशाविति जातौ तुल्यहरौ $\frac{९}{०}$ । $\frac{०}{०}$ अनयोर्योगे जातम् $\frac{९}{०}$ । अथ यद्युच्यते—एकस्य हरेण येन केनचिदङ्केन वाऽपरराशिहरांशगुणनमात्रेण तुल्यहरत्वे जाते परत्र श्रमो व्यर्थ एव । प्रकृतेऽपि खहरराशेर्हरणे शून्येनापरराशि $\frac{१}{३}$ हरांशगुणनमात्रेण तुल्यहरस्य जातत्वाद्योगेऽन्तरे च नास्त्येव विकार इति । तर्हि खहरस्य खहरणे योगेऽन्तरे च भवेदेव विकारः । यथा राशिः $\frac{३}{०} + \frac{५}{०}$ अनयोस्तुल्यहरत्वाद्योगे जातम् $\frac{८}{०}$ तत्कथं न विकार इति चेन्मैवम्; अत्रापि फलतो विकाराभावात् । न हि खेन भक्तेषु त्रिष्वनन्त्यत्फलमष्टसु भक्तेष्वितरदिति, किन्तूभयत्राप्य-नन्तत्वे न व्यभिचार इति ।

उदाहरणम्—

खे शून्येन युते च किं विरहिते किं खेन निघ्ने च किं
किं भक्ते किमु वर्गिते कथय भो मूलीकृते किं सखे।
राशिः कोऽपि खसंगुणो निजदलेनाढ्यः खसंभाजितो
जाता द्वादश तं द्रुतं वद दृढां प्रौढिं प्रयातोऽसि चेत् ॥ ८ ॥

न्यासः–०

एतत्खेन युतं जातम् ०। वर्जितम् ०। खेन गुणितम् ०। भक्तम् ०।
वर्गितम् ०। मूलीकृतम् ०।

न्यासः–अज्ञातो राशिः कल्पितमिष्टम् २

अत्र [1]शेषविधाविति खगुणश्चिन्त्यः। तत्कथम्? शून्येन द्वये गुणिते ०। अस्यार्द्धम् ०। अनेन युतम्०। एतच्छून्येन हृतं शून्यमेव ०। दृश्यभावादियं क्रिया निर्वहति इष्टम् २

---

[1] शेषविधाविति खगुणश्चिन्त्य इति। कश्चिदपि राशिः खेन (शून्येन) गुणितः खं भवतीति प्रसिद्धम्। यथा ५ × ० = ०, १२ × ० = ०, इत्यादि। परन्तु तत्र यदि शेषविधिरप्यस्ति, अर्थाद् गुणनानन्तरमपि योगवियोगभागादिरूपा काचित्क्रियाऽवशिष्टा स्यात्तदा पूर्वागतं (गुणनेनागतम्) शून्य फलं न ग्राह्यम्। यतो ह्यत्र शून्य गुण्यस्य गुणकस्य वा परमापचयद्योतकम्, न स्वभावरूपम्। अतस्तत्र खगुणितराशिमेव संस्थाप्याग्रिमा क्रिया कार्या। यथा $\frac{५ \times ०}{०}$ इत्यत्र ५ × ० = ० तथा $\frac{०}{०}$ इद न कार्यम्। यतो हि ५ इत्यत्र शून्यगुणनानन्तरं शून्येन भजनमप्यवशिष्टमतो भजनरूपक्रियावशेषात् ५ × ० = ० इदं फलं नोचितम्। अस्ति च ५ × ० = ५ × ० इदं शेषक्रियानिर्वाहार्थं युक्तम्। अतः $\frac{५ \times ०}{०} = ५$ सिद्धम्। $\frac{५ \times ०}{०} = ०$ इदं न युक्तम्।

वस्तुतो हि ५ × ० इत्यत्र गुणकस्यात्यल्पसख्याङ्कबोधकाङ्काभावाच्छून्येनैव गुणकगतात्यन्ताल्पता बोध्यते, अतो गुणनफलस्यात्यन्ताल्पताबोधकमिदं शून्यं भवितुमर्हति न स्वभावरूपताबोधकम्।

अल्पताबोधकमेव शून्यमस्तीत्यत्रान्यापि युक्तिः—गुण्यगुणकयोरेकतरस्य ह्रासे फलापचयो दृश्यते। यथा १२ × ८ = ९६, १२ × ३ = ३६, १२ × २ = २४, १० × २ = २०, ९ × १ = ९ इत्यादि। इत्थं गुण्यगुणकयोरेकतरस्यात्यन्ताल्पत्वे फलस्याप्यत्यन्ताल्पत्वं युक्तिसिद्धम्।

अत्र गुणनायागतं शून्यं पृथग् न्यस्तं रू २ं एतत्स्वार्द्धयुतम् ३ं

भागहरणायागतं शून्यं हरस्थाने न्यस्तम् $\frac{३ं}{०}$

शून्यं गुणकः शून्यं भागहारोऽतो गुणनभजने न कार्ये, तथा कृते जातोऽविकृतः ३ यः कश्चिद्राशिः केनचिद् गुणितः पुनस्तेनैव भक्तश्चेदविकृत एव भवति तर्हि गुणनभजने वृथा। अथ तथा कृते जातम्– ३

अत्र त्रैराशिकम्–

यदि दृश्येनानेन ३ अयं राशिः २ तदा द्वादशभिः किमिति जातो राशिः ८

इति शून्यस्य द्वे षड्विधे ॥

---

[1]अथाव्यक्तसंकलनव्यवकलने–

यावत्तावत्कालकनीलकपीताश्च लोहितो हरितः।
श्वेतकचित्रककपिलकपाटलकाः पाण्डुधूम्रशबलाश्च ॥ १७ ॥

---

परन्तु तदत्यन्ताल्पमानबोधकसख्याङ्काभावाद् वक्तुमशक्यत्वाद्वा शून्यमेव तादृशत्वेन व्यवह्रियते। ज्ञायतेऽनेन यच्छून्यस्य स्वरूपद्वयम्–अभावरूपमेकं संख्यासु स्थानाङ्काभावद्योतकम्। यथा १८, १०८, १००८ इत्यत्र दशकशतकस्थानीयं शून्यं तत्तत्स्थानेष्वङ्काभावद्योतकम्। द्वितीयन्तु फलस्य परमापचयोपचयबोधकमिति। यथा ५ × ० अत्र गुणकस्य परमापचयबोधकमेव शून्यम्। न तु गुणकसख्याभावद्योतकम्। तथैव $\frac{५}{०}$ अत्रापि भाजकस्य परमापचयद्योतकं शून्यम्। अत्र लब्धिरपि खहरत्वेनानन्ता, परमोपचितेत्यर्थ.। अमुमेव सिद्धान्तमवलम्ब्योदाहरण प्रदर्श्यंते—

राशिः कोऽपि खसगुणो निजदलेनाढ्य इति। अत्र कल्पितो राशि. २। अय खसगुणः २ × ०। स्वार्द्धयुतः ३ × ०। खभाजितः $\frac{३ × ०}{०}$। यः कश्चिद् राशिः केनचिद् गुणितः पुनस्तेनैव भक्तश्चेदविकृत एव तिष्ठति। तर्हि गुणनभजने वृथा। एवं कृते जातम् ३। अतोऽत्र त्रैराशिकम्—यदि दृश्येनानेन ३ राशिः २ तदा द्वादशभिः किमिति $\frac{२ × १२}{३}$ = ८ अतोऽत्र राशिमानम् ८।

[1] अव्यक्तकल्पनायां स्वबीजे भास्करोऽपि—"यावत्तावत्कालको नीलकोऽन्यो वर्णः पीतो लोहितश्चैतदाद्याः। अव्यक्तानां कल्पिता मानसंज्ञास्तत्संख्यानं कर्तुमाचार्यवर्यैः ॥" इति। अव्यक्तानां

श्यामलकमेचकधवलकपिशङ्गशारङ्गबभ्रुगौराद्या ।
गणनोत्पत्त्यै विहिताः संज्ञाश्चाव्यक्तमानानाम् ॥ १८ ॥
वर्णेषु च समजात्योर्योगः कार्यस्तथा वियोगश्च ।
असदृशजात्योर्योगे पृथक् स्थितिः स्याद्वियोगे च ॥ १९ ॥
क्षयधनयोर्युतिवियुती गुणनभजने वर्गवर्गमूले च ।
अव्यक्तानां बहूनां रूपवदुपलक्षणं भवति ॥ २० ॥

गणनेति योगवियोगगुणनभजनवर्गवर्गमूलघनघनमूलत्रैराशिकपञ्चराशिक-श्रेढीक्षेत्रखातादि; यथोद्देशालापवत्वादेषां या गणना तस्या गणन[ा]या उत्पत्त्यै अवताराय वर्णाः कल्पिता. । यावत्तावत्कालक-नीलक-पीतक-लोहितक-हरितक-चित्रक-कपिलक-पाटलक-पाण्डुरक-धूम्रक-शबलक-श्यामलक-मेचक-धवलक-पिशङ्गक-सारङ्गक-बभ्रुक-गौरकेत्याद्या वर्णाः, अथवा वर्णाः कादयः, अथवा मधुरादयो रसपर्यायाः, अथवाऽसदृशप्रथमाक्षरनामपर्यायपदार्थाः कल्प्यन्ते । एषु समजात्योर्बहूनां वा योगवियोगौ कार्यौ । असदृशजात्योर्बहूनां वा वर्णानां पृथक् स्थितिः स्यात् । तेषामव्यक्तानामृणधनयोगाद्युपलक्षण रूपवद्भवतीति ।

उदाहरणम्—

[1]अव्यक्तषट्कं च धनं सरूपमव्यक्तयुग्मं च विपञ्चरूपम् ।
किं मेऽनयोरैक्यमृणं धनं च यद्व्यस्तयोः संकलनं वदाशु ॥ ९ ॥

---

योगोऽन्तरश्च सजातीयानामेव भवत. । यथा पञ्चभिर्घोटकैः सह सप्तानां घोटकानां योगे द्वादश घोटकाः स्यु. । न ह्यत्र पञ्चभिर्घोटकैः सह सप्तानां गर्दभानां योगे द्वादशघोटका भवन्ति, भिन्नजातित्वात्तत्र पृथक् स्थितिरेव ।

१ अव्यक्तषट्कमिति । यथा– या ६ रू १ । या २ रू ५̇

समजात्योः स्वस्थाने योगे जातम्– या ८ रू ४̇

नव्यैस्तु– ( ६ या + १ ) + ( २ या – ५ )
= ८ या – ४

नवीनप्राचीनरीत्योः कुत्रापि फले न विकृतिः । किन्तु लेखनप्रकारभिन्नत्वेन भिन्ना रीतिः प्रतीयते । अत्र पठितोदाहरणानां प्राच्यगणितं ग्रन्थकर्तृभिः स्पष्टमुक्तम् । अतो नूतनां रीतिमनुसृत्याग्रे क्रिया प्रदर्श्यते—

न्यासः–या ६ रू १ । या २ रू ५ं

समजात्योः स्वस्थान इति जातं न्यस्ते–या ६ रू १
या २ रू ५ं

ऋणधनयो रूपवदुपलक्षणमिति योगे जातम्–या ८ रू ४ं

[1]आद्यपक्षस्यर्णत्वं प्रकल्प्य न्यासः–या ६ं रू १ं
या २ रू ५ं

योगे जातम्–या ४ं रू ६

[2]द्वितीयपक्षवैपरीत्यं कृत्वा न्यासः–या ६ रू १
या २ं रू ५

या ४ रू ६ । [3]उभयोर्व्यत्यासे न्यासः– या ६ं रू १ं
या २ं रू ५

योगे जातम्–या ८ं रू ४

उदाहरणम्—

[4]अव्यक्तवर्गद्वितयं सरूपमव्यक्तयुग्मेन युतं च किं स्यात् ।
[5]अव्यक्तषट्कं क्षयगं सरूपं शोध्यं तु षड्रूपकसंयुतेभ्यः ॥ १० ॥

---

(१) (—६ या—१ ) + ( २ या—५ )
= —४ या—६

(२) ( ६ या + १ ) + (—२ या + ५ )
= ४ या + ६

(३) (—६ या—१ ) + (—२ या + ५)
= —८ या + ४

(४) ( २ या$^{2}$ + १ ) + २ या
= २ या$^{2}$ + २ या + १

(५) ( ८ या + ६ )—(—६ या + १ )
= १४ या + ५

( संशोध्यमानं स्वमृणत्वमेति तथा ऋणं स्वत्वमेति पूर्वोक्तविधिना । )

अव्यक्तकेभ्यो गणक प्रचक्ष्वाष्टाभ्योऽवशेषं यदि वेत्सि बीजम् ॥

प्रथमोदाहरणे न्यासः–या व २ या० रू १
या व ० या २ रू ०

योगे जातम्–या व २ या २ रू १

द्वितीयोदाहरणे न्यासः—या ८ रू ६
या ६̇ रू १

शुद्धे जातम्–या १४ रू ५

इत्यव्यक्तसंकलनव्यवकलने ॥

---

अथाव्यक्तगुणने करणसूत्रम्—

स्याद्रूपवर्णघाते वर्णो द्वित्र्यादितुल्यजातिवधे ।
तत्कृतिघनादयः स्युस्तद्भावितमसमजातिवधे ॥ २१ ॥
गुणकारसमुत्थानि स्वजातिखण्डानि योजयेदेवम् ।
अव्यक्तवर्गकरणीगुणनासु व्यक्तवज्ज्ञेयम् ॥ २२ ॥

[1]उदाहरणम्—

यावत्तावद्द्वितयसहितं रूपषट्कं विनिघ्नं
यावत्तावत्त्रितयरहितैः रूपकैः पञ्चभिश्च ।
गौणं किं स्याद्वद मम फलं हे सखे कल्पयित्वा
व्यक्तं वर्णं पटुरसि यदि त्वं गुणाकारमार्गे ॥ ११ ॥

---

१ गुणनोदाहरणे—

| | |
|---|---|
| २ या + ६ | गुण्यः |
| – ३ या + ५ | गुणक. |

– ६ या$^2$ – १८ या + १० या + ३० = गुणनफलम्
= – ६ या$^2$ – ८ या + ३०

गुण्यस्य व्यत्यासे—

| | |
|---|---|
| – २ या – ६ | गुण्यः |
| ३ या – ५ | गुणकः |

– ६ या$^2$ – १८ या + १० या + ३० = गुणनफलम्
= – ६ या$^2$ – ८ या + ३०

न्यासः- गुण्यः या २ रू ६। गुणकः या ३ं रू ५

व्यक्तवद्गुणिते जातम्- या व ६ं रू ३० या ८ं

गुणकस्य धनर्णयोर्व्यत्यासे न्यासः- या २ रू ६ । या ३ रू ५

गुणिते जातम्- या व ६ या ८ रू ३०ं

गुण्यस्य व्यत्यासे न्यासः- या २ं रू ६ं। या ३ं रू ५

गुणिते जातम्- या व ६ या ८ रू ३०ं

गुण्यगुणकयोर्व्यत्यासे न्यासः- या २ं रू ६ं। या ३ रू ५ं

गुणिते जातम्- या व ६ या ८ं रू ३०

इत्यव्यक्तगुणना ॥

---

[1]अव्यक्तभागहारे सूत्रम्-

शुद्ध्यति यैर्यैर्वर्णै रूपैर्भाजको हतो भाज्यात्।

क्रमशः स्वेषु स्वेषु स्थानेषु फलानि तानि स्युः ॥ २३ ॥

गुणनफलस्य गुण्यभागहारस्य भागार्थं न्यासः— | या व ६ या ८ं रू ३० / या २ रू ६ |

| या व ६ या ८ रू ३०ं / या २ रू ६ | या व ६ या ८ रू ३०ं / या २ं रू ६ं | या व ६ं या ८ं रू ३० / या २ं रू ६ं |

भागे हृते जातो गुणः- या ३ं रू ५, या ३ रू ५ं, या ३ं रू ५, या ३ रू ५ं

इत्यव्यक्तभागहारः ॥

---

१ भागहारः—

२ या + ६ ) −६ या$^{2}$ − ८ या + ३० ( −३ या + ५
−६ या$^{2}$ − १८ या
× १० या + ३०
१० या + ३०
×

एवमग्रेऽपि।

[ अव्यक्तवर्गोदाहरणम् ]—

अव्यक्तानां रूपपञ्चोनितानां षण्णां वर्गं वा युतानां प्रचक्ष्व ।
चेद्बीजज्ञोऽसि त्वमस्याः कृतेश्च मूलं विद्वन्ब्रूहि तन्मे पृथक्किम् ॥ १२ ॥

न्यासः- या ६ रू ५̇, या ६ रू ५

[1]स्थाप्यान्त्यकृतिर्द्विसंगुणान्त्यगुणेत्यादिना जातौ वर्गौ- या व ३६ या ६०̇ रू २५, या व ३६ या ६० रू २५

[ अव्यक्तवर्गमूले ] सूत्रम्—

मूलान्यादायादौ वर्गेभ्यस्तद्द्वयोर्द्वयोर्घातम् ।
द्विगुणं जह्याच्छेषान्मूलमितीदं वदन्तीह ॥ २४ ॥

पूर्ववर्गमूलार्थं न्यासः- या व ३६ या ६०̇ रू २५, या व ३६ या ६० रू २५

एतयोर्मूले- या̇ ६ रू ५, या ६ रू ५̇

इत्यव्यक्तवर्गमूले ॥

इत्यव्यक्तषड्विधम् ॥

---

१ स्थाप्यान्त्यकृतिर्द्विसंगुणेत्यादि । समद्विघात' कृतिरेवेत्यादिनाऽऽगतो वर्गो गुणनविशेषपरिभाषैव । परन्तु यदि सख्यायामङ्कस्थानं द्व्यधिकं चेत्तदा अ + क अस्य वर्गानयने—

$$(\text{अ} + \text{क})^2 = (\text{अ} + \text{क})(\text{अ} + \text{क})$$
$$= \text{अ} \times \text{अ} + \text{अ} \times \text{क} + \text{अ} \times \text{क} + \text{क} \times \text{क}$$
$$= \text{अ}^2 + 2\,\text{अ} \times \text{क} + \text{क}^2$$

स्वरूपमिदमुपपद्यते । एतदवलोकनेनेदमुपपन्नं भवति—
अन्त्यस्य वर्गः स्थाप्य, तथाऽपरेऽङ्का द्विसंगुणान्त्यगुणिताः स्वस्वोपरिष्ठात् स्थाप्या' । अन्त्यं त्यक्त्वा उपान्तिमराशिं संगृह्य पुनश्चैवमेव क्रिया कार्या । एवं कृते सति वर्गितराशिर्निष्पद्यते ।

यथा— $(\text{या}\,६ - ५)^2 = ३६\,\text{या}^2 - \text{या}\,६० + २५$

अथवा— $(\text{या}\,६ + ५)^2 = ३६\,\text{या}^2 + \text{या}\,६० + २५$

अत्र भास्करोक्तं सूत्रं यथा—

समद्विघातः कृतिरुच्यतेऽथ स्थाप्योऽन्त्यवर्गो द्विगुणान्त्यनिघ्नाः ।
स्वस्वोपरिष्टाच्च तथाऽपरेऽङ्कास्त्यक्त्वान्त्यमुत्सार्य पुनश्च राशिम् ॥ इति ।

अस्य वर्गसूत्रस्य विलोमविधिनैव मूलानयनमपि सुगमम् ।

उदाहरणम्—

[1]यावत्तावत्त्रितयमधनं कालकाः षट् क्षयं भो
विद्वन्नीलाष्टकमपि धनं पीतकाः स्वं च पञ्च।
रूपाद्यैस्तैर्द्विगुणितमितैस्तेऽपि युक्ता वियुक्ता
जानासि त्वं यदि झटिति मे ब्रूहि वर्णाः कति स्युः ॥ १३ ॥

तैस्तैर्हताः कथय किं गुणने फलं स्याद्धक्तं च तद्गुणकवर्गगुणेन तेन ।
गुण्यस्य मे कथय वर्गमतश्च मूलं चेद्वर्णपड्विधविधाववधि गतोऽसि ॥१४॥

न्यासः- गुण्यः या ३̇ का ६̇ नी ८ पी ५ रू १

गुणकः या ६̇ का १२̇ नी १६ पी १० रू २

गुणिते जातम्- या व १८ या का ७२ या नी ९६̇ या पी ६०̇ या १२̇ का व ७२ का नी १९२̇ का पी १२०̇ का २४̇ नी व १२८ नी पी १६० नी ३२ पी व ५० पी २० रू २

एत एव यथाक्रमेण न्यस्ता जाताः- या व १८ का व ७२ नी व १२८ पी व ५० या का ७२ या नी ९६̇ या पी ६०̇ का नी १९२̇ का पी १२०̇ नी पी १६० या १२̇ का २४̇ नी ३२ पी २० रू २

---

1 −३ या −६ का + ८ नी + ५ पी + १ = गुण्य.
−६ या −१२ का + १६ नी + १० पी + २ = गुणकः

=

१८ या$^2$ + ३६ या का −४८ या नी −३० या पी −६ या
+ ७२ का$^2$ + ३६ या का −९६ का नी −६० का पी −१२ का
+ १२८ नी$^2$ −४८ या नी −९६ का नी + ८० नी पी + १६ नी
+ ५० पी$^2$ −३० या पी −६० का पी + ८० नी पी + १० पी
−६ या −१२ का + १६ नी + १० पी + २

गुणनफलम् = १८ या$^2$ + ७२ का$^2$ + १२८ नी$^2$ + ५० पी$^2$ + ७२ या का −९६ या नी −६० या पी −१९२ का नी −१२० का पी + १६० नी पी −१२ या −२४ का + ३२ नी + २० पी + २

अव्यक्तरीत्या गुणने रूपवर्णाभिहतिर्वर्णो भवेत् । तथा द्वित्रिसमजातिघाते वर्गघनादय. पूर्ववदेव भवन्ति ।

भक्ते जातो गुणकः– या ६̇ का १२̇ नी १६ पी १० रू २,

इति वर्णगुणनभजने ॥

---

वर्गार्थं न्यास – या ३̇ का ६̇ नी ८ पी ५ रू १

उक्तवज्जातो वर्गः– या व ९ या का ३६ या नी ४८̇ या पी ३०̇ या ६̇ का व ३६ का नी ९६̇ का पी ६०̇ का १२̇ नी व ६४ नी पी ८० नी १६ पी व २५ पी १० रू १

यथाक्रमं न्यासः– या व ९ का व ३६ नी व ६४ पी व २५ या का ३६ या नी ४८̇ या पी ३०̇ का नी ९६̇ का पी ६०̇ नी पी ८० या ६̇ का १२̇ नी १६ पी १० रू १

अस्माद्वर्गाज्जातं मूलम्– या ३ का ६ नी ८ पी ५ रू १

इति वर्णवर्गवर्गमूले ॥

इति वर्णषड्विधम् ॥

---

अथ करणीषड्विधम्—

[1]मूले ग्राह्ये राशेर्यस्य तु करणीति नाम तस्य स्यात् ।
संगुणनं भजनं वा कुर्याद्वर्गस्य वर्गेण ॥ २५ ॥

---

१ मूले ग्राह्य इति । अस्ति मूलं द्विविधम्–अङ्कात्मक रेखात्मक च । अङ्कात्मक मूलं वर्गाङ्कानामेव भवति ( १, ४, ९, १६, २५ इत्यादयो वर्गाङ्काः ) । यद्धि देशकालवस्तुषु सर्वत्रैवोपयुज्यते । रेखात्मकं मूलं वर्गाङ्कानामवर्गाङ्कानां सर्वेषामेव भवितुमर्हति, किन्तु रेखात्मक मूलस्य न कुत्राप्यवसानम् । अतस्तस्य स्पष्टमूल वस्तुगतं कथमपि न सभवति । यथा–'पञ्च' इत्यस्य मूलविचारे द्विराशिवर्ग· ४ अय पञ्चाल्प·,त्रिराशिवर्ग· ९ अयं पञ्चतोऽधिकः । अतोऽस्ति द्वित्रिराश्योर्मध्ये कश्चिद्राशिर्यस्य वर्ग· पञ्चतुल्य· । परन्तु तद्राशिमानं वस्तुगतं स्पष्टं कथयितुमशक्यम् । यतो हि द्वित्रिराश्योर्मध्येऽभिन्नराश्यङ्कस्याभावाद् मूलराशिर्भिन्नात्मक एव भवितुमर्हति । किन्तु भिन्नाङ्क· स्वगुणितो भिन्नत्वं न जहातीत्यतः प्रत्यक्षप्रामाण्याद्यस्य वर्गराशेर्निरग्रं मूलं न संभवति तन्मूलमेव करणीत्युच्यते [ श्रीपतिकृतसिद्धान्तशेखरेऽस्य स्फुटत्वम् ]। यथा २ क, ३ क, ५ क, वा नवीनमते $\sqrt{२}$, $\sqrt{३}$, $\sqrt{५}$, इत्येवमादयः । तदर्थश्च द्वितुल्यराशिकारक मूल त्रितुल्यराशिकारक वा मूलमित्यादि ।

यद्यपि करणीयोगेऽपेक्षिते वर्गमूलानयनप्रकारेणैव तदासन्नमूलं ( सावयवात्मक यथास्यात्तथा) गृहीत्वा तयोर्मूलयोर्योगेन करणीयोगो भवितुं शक्य·, अत्र फलस्यान्तरमपि नगण्यमेव,

लघ्व्या वापि महत्या पृथक्करण्यौ हृते च तत्पदयोः ।
युतिवियुती कृती च तया गुणिते योगान्तरे भवतः ॥ २६ ॥
गुणिते वापि करण्यावनल्पया वाऽल्पया च तत्पदयोः ।
युतिवियुतिकृती भक्ते ह्यभीष्टया योगविवरे च स्तः ॥ २७ ॥
अथवा लघ्व्या महती भक्त्वैकं तन्मूलयुक्तोनम् ।
स्वघ्नं लघ्व्या गुणितं युतिवियुती स्तो महत्येव ॥ २८ ॥
रूपवदपि च करण्योर्घातपदेन द्विसंगुणेन युतिः ।
युक्तोना युतिवियुती पृथक्स्थितिः स्यान्न घातपदम् ॥ २९ ॥

---

तथापि वस्तुव्यवहारेष्वस्य प्रयोजनाभावात् क्षेत्रव्यवहारादौ कर्णरेखामाननिर्णयाच्च निश्चितमूलानयने प्राप्ते तथाविधेनासन्नमूलसकलनादिना कार्यसिद्धेरसभवात् प्रयोजनमस्यास्त्येव । यतो हि वस्तुतो मूलानयनविधिनाऽऽसन्नमूलमानीय संकलनादिनोपस्थापने तु तस्य मूलस्यासन्नत्वात् सिद्धान्ते च वास्तवज्ञानस्यावश्यकत्वात् करणीनां पूर्वोक्तप्रकारेण ( आसन्नमूलेन ) सकलनादिक परित्यज्य साक्षात्करणीमेवाश्रित्य संकलनादिक प्रदर्श्यते । करणीनां योगेऽन्तरे च कर्तव्ये बहव. प्रकारा सन्ति शास्त्रेषु । ते खलु वर्गयोगान्तरविलोमविध्यन्तर्गताः सन्ति । यथा वर्गयोगो द्विगुणघातसमन्वितो युतिवर्गो भवति । युतिवर्ग. = ( अ + ब )$^2$

= ( अ$^2$ + ब$^2$ + २ अ ब ) = अ अ + ब ब + २ अ ब = ( अ + ब )$^2$

वर्गयोगो द्विगुणघातविरहितोऽन्तरवर्गो भवति । यथा (अ$^2$ + ब$^2$ − २ अ ब) = (अ − ब )$^2$

= ( अ अ + ब ब − २ अ ब ) = ( अ − ब )$^2$

तथैव करणीविषयेऽपि मूलयोर्वर्गयोगः करणीद्वयघातमूलेन द्विघ्नेन योज्यो युतिवर्गार्थम् , वियोज्यश्चान्तरवर्गार्थम् ।

तथा च—"खण्डद्वयस्याभिहतिर्द्विनिघ्नी तत्खण्डवर्गैक्ययुता कृति॰ स्यात्" इत्यादिप्रकारेण तन्मूलग्रहणेनैव करणीनां योगान्तरे भवत । अथवा यदि कश्चिदवर्गाङ्कस्तेनैवावर्गाङ्केन गुण्यते भज्यते वा तदा सोऽवर्गाङ्को वर्गत्व प्राप्नोति (प्रत्यक्षयुक्त्या) । एतद्रीत्या गतवर्गाङ्कस्य मूल सगृह्य रूपवद्योगान्तरे वा विधाय ते करणीगते कृत्वा प्राक्तनो योऽवर्गाङ्को गुणको भाजको वाऽस्ति तेन भाजिते गुणिते वा ( पूर्वं यदि गुणितस्तदेदानीं भाजित॰, पूर्वं यदि भाजितस्तदेदानीं गुणित. ) करणीनां योगवियोगावेव भवतः । अथवा, येनापवर्तनाङ्केन करणी मूलदा भवेत्तेनैवापवर्तनं दत्त्वा मूलमानीय रूपवद्योगान्तरे वा विधाय पुनस्ते करणीगते कृत्वा पूर्वदत्तापवर्तनाङ्केनापवर्तिते योगान्तरे सुतरां स्पष्टे एव । एभिः प्रकारैराचार्यैर्गणित प्राचीनलेखपद्धत्या दर्शितम् , तत्स्पष्टमेव ।

करणीनां तु बहूनां योगे केनापि राशिना छित्वा।
तन्मूलयुतिः स्वघ्ना छेदगुणा स्याद्युतिस्तासाम् ॥ ३० ॥

[1]उदाहरणम्—

षट्सिद्धसंख्ययोर्योगविश्ले [ ?श्ले ] षौ वद मे द्रुतम्।
करण्योर्द्धित्रिमित्योश्च योगशेषे तयोर्वद ॥ १५ ॥

न्यासः– क ६ क २४ अत्र लघ्व्या ६ भक्ते १।४
अथवा महत्या भक्ते $\frac{१}{४}$।१ मूले १।२ वा $\frac{१}{२}$।१
युतिवियुती ३।१ वा $\frac{३}{२}$।$\frac{१}{२}$ कृती ९।१ वा $\frac{९}{४}$।$\frac{१}{४}$
लघ्व्या गुणिते ५४।६ महत्या वा ५४।६

जाते योगान्तरे क ५४ क ६। द्वितीयप्रकारेण क ६ क २४। एते महत्या २४ गुणिते १४४।५७६ लघ्व्या वा ३६।१४४ अनयोर्मूले १२।२४ वा ६।१२-

---

1 $\sqrt{६} + \sqrt{२४}$ अत्र ६ अनेनापवर्तनाङ्केनापवर्तिता करणी $= \sqrt{१} + \sqrt{४}$
$= १ + २ = ३ = \sqrt{९}$

तेनैवापवर्तनाङ्केन गुणिते $\sqrt{९ + ६} = \sqrt{५४}$ अयमेव योगः।

अथवा– $\sqrt{६} + \sqrt{२४}$ अत्र २४ अनेनापवर्तनाङ्केनापवर्तिता $= \sqrt{\frac{१}{४}} + \sqrt{१}$
$= \frac{१}{२} + १ = \frac{३}{२} = \sqrt{\frac{९}{४}}$

तेनैवापवर्तनाङ्केन गुणिते $\sqrt{\frac{९}{४} \times २४} = \sqrt{५४}$ अयमेव योगः।

अथवा $\sqrt{६} + \sqrt{२४}$ अत्र ६ अनेनाङ्केन गुणिता $= \sqrt{३६} + \sqrt{१४४} = ६ + १२ = १८$
$= \sqrt{३२४}$

तेनैवापवर्तनाङ्केन भाजिते $\sqrt{\frac{३२४}{६}} = \sqrt{५४}$ अयमेव योगः।

अथवा २४ अनेनाङ्केन गुणिते $= \sqrt{१४४} + \sqrt{५७६} = १२ + २४ = ३६ = \sqrt{१२९६}$

तत एव भाजिते $\sqrt{\frac{१२९६}{२४}} = \sqrt{५४}$ अयमेव योगः।

अथवा $\sqrt{६} + \sqrt{२४}$ खण्डद्वयस्याभिहतिर्द्विनिघ्नीत्यादिप्रकारेण—

$= ६ + २४ = ३०$ बृहत्

$\sqrt{६} \times \sqrt{२४} = \sqrt{१४४} = १२$

$१२ \times २ = २४$ लघु

( बृ. + ल. ) $= ३० + २४ = ५४$

अस्य मूलम् $= \sqrt{५४}$ अयमेव योगः।

युतिवियुती ३६।१२ वा १८।६ कृती १२९६।१४४ वा ३२४।३६ महत्या भक्ते लघ्व्या वा भक्ते जाते योगान्तरे क ५४ क ६

अथवा तृतीयप्रकारः– क ६ क २४ लघ्व्या ६ महती, महत्या वा लघ्वी भक्ता ४ । वा $\frac{१}{४}$ मूलम २ । वा $\frac{१}{२}$ एकयुतमूनं च ३।१ वा $\frac{३}{२}$ । $\frac{१}{२}$ स्वघ्नं ९।१ वा $\frac{९}{४}$ । $\frac{१}{४}$ लघ्व्या ६ महत्या २४ वा भक्ते जाते योगान्तरे क ५४ क ६

अथ चतुर्थप्रकारः– क ६ क २४ एते रूपाणि [? रूपे] प्रकल्प्य रू ६ रू २४ घातपदे १२ तद्द्विगुणेन २४ करण्योर्युतिः ३० युतोना [? युतोने] जाते योगान्तरे करण्यौ क ५४ क ६ ।

---

अन्तरार्थमपि तथैव गणितम्– $\sqrt{२४} - \sqrt{६}$ अत्रापवर्तनाङ्कः ६ इत्यनेन भाजिते—
$\sqrt{४} - \sqrt{१} = २ - १ = १ = \sqrt{१}$

येनापवर्तनाङ्केन पूर्वं करणी भाजिता तेनैवात्र गुणिते $\sqrt{१ \times ६} = \sqrt{६}$ = वियोगः ।

अथवाऽपवर्तनाङ्कः २४, अनेनापवर्तनाङ्केनापवर्तिता करणी तदा $\sqrt{२४} - \sqrt{६} = \sqrt{१} - \sqrt{\frac{१}{४}}$
$= १ - \frac{१}{२} = \frac{१}{२} = \sqrt{\frac{१}{४}}$

पुनरपवर्तनाङ्केन २४ अनेन गुणिते $\sqrt{\frac{१}{४} \times २४} = \sqrt{६}$ = वियोगः ।

अथवाऽपवर्तनाङ्क. ६ अनेन गुणिते $\sqrt{२४} - \sqrt{६} = \sqrt{१४४} - \sqrt{३६} = १२ - ६ = ६ = \sqrt{३६}$
६ इत्यनेन पुनर्भाजिते $\sqrt{\frac{३६}{६}} = \sqrt{६}$ = वियोग. ।

अथवा $\sqrt{२४} - \sqrt{६}$ अत्र २४ अनेनापवर्तनाङ्केन गुणिते $\sqrt{५७६} - \sqrt{१४४} = २४ - १२$
$= १२ = \sqrt{१४४}$

अव्यवहितोक्तापवर्तनाङ्केन भाजिते $\sqrt{\frac{१४४}{२४}} = \sqrt{६}$ = वियोग· ।

अथवा खण्डद्वयस्याभिहतिरित्यादिना–

$\sqrt{२४} - \sqrt{६}$

$२४ + ६ = ३०$ बृ क

$\sqrt{२४ \times ६} = \sqrt{१४४} = १२$

$१२ \times २ = २४$ ल. क.

बृ – ल. = क ३० – क २४ = $\sqrt{६}$ = वियोगः ।

द्वितीयोदाहरणे $\sqrt{२} + \sqrt{३}$ अत्र करण्योर्घाते मूलाभावात् पृथक् स्थितिरेव। अतः—
$\sqrt{२} + \sqrt{३}$ अयमेव योगः। $\sqrt{३} - \sqrt{२}$ अयमेव वियोग. ।

इति करणीसंकलनव्यवकलने ॥

द्वितीयोदाहरणे करण्यौ क २ क ३ अनयोर्घाते मूलाभावात् पृथक् स्थितिरिति योगे जातम्– क २ क ३ अन्तरे च क २ क ३

इति करणीसंकलनव्यवकलने ॥

---

करणीगुणनादौ सूत्रम्–

[1]करणीनां बहूनां यासां संयोगसंभवोऽप्यस्ति ।
तासां योगं कृत्वा कार्यं गुणनादि वा कर्म ॥ ३१ ॥
क्षयरूपकृतिः क्षयगा भवेद्यतस्तु प्रयाति करणीत्वम् ।
क्षयगतकरणीमूलं रूपत्वं क्षयागतं भवति ॥ ३२ ॥

[2]उदाहरणम्—

षड्रूपाद्या गणक करणी पञ्चसंख्या च गुण्यो
द्वेष्टौ पञ्चप्रमितकरणीखण्डसंख्यागुणश्च ।
षड्रूपोने शरनखमिते वा गुणे किं फलं स्यात्
तद्गुण्याप्तं वद गुणमिति प्रौढता चेत्तवास्ति ॥१६॥

प्रथमं न्यासः– गुण्यः क ३६ क ५ गुणकः क ८ क ५ क २

---

१ करणीनामिति । अत्र करणीगुणनेऽपि गुण्ये गुणके वा करणीना करण्योर्वा यथासंभवं लाघवार्थं योगं विधाय गुणनं कार्यम् । "क्षयरूपकृतिः क्षयगा " इत्यादिकथनमत्रावश्यकम् । यतः करणीगुणनार्थं रूपवर्ग. क्रियते । स यद्यपि धनात्मक एव तथापि तस्य मूलमृणात्मकमेव, "स्वयोरस्वयोर्वा वध. स्वं भवति" इति युक्त्या । करणीनां योगेन मूलयुतिवर्गः साध्यते । तत्र क्षयरूपवर्गकरण्या यदि धनत्वं कल्प्यते तदान्यया धनकरण्या सह तस्या योगो भवति, तन्मूल च मूलयुतिरेव; तन्न सत् । अत क्षयरूपकरणीवर्गः क्षयात्मक एव तथा क्षयगत-करणीमूलमपि ऋणमेव । एवं च करण्या ऋणसंज्ञा मूलस्य ऋणत्वबोधार्थमेव कृता ।

२ गुण्यः $= \sqrt{३६} + \sqrt{५}$ । गुणक. $= \sqrt{८} + \sqrt{५} + \sqrt{२}$

अत्र गुणके $\sqrt{२} + \sqrt{८}$ इत्यत्र २ अनेनापवर्तनाङ्केन गुणिते—

$$\sqrt{४} + \sqrt{१६} = २ + ४ = ६ = \sqrt{३६}$$

पुनरपवर्तनाङ्केन विपरीतापवर्तने $= \sqrt{\frac{३६}{२}} = \sqrt{१८} =$ योगः

$\therefore$ गुण्यः $\sqrt{३६} + \sqrt{५}$ । गुणक. $\sqrt{१८} + \sqrt{५}$

# सारस्वती सुषमा

## काशिकराजकीयसंस्कृतमहाविद्यालयमुखपत्रिका

[ त्रैमासिकी ]



प्रधानसम्पादकः
श्रीकुबेरनाथशुक्लः, एम० ए०,
व्याकरणाचार्यः

---

सहायकसम्पादकः
श्रीव्रजवल्लभद्विवेदो दर्शनाचार्यः



वार्षिकम्
७॥)

प्रत्यङ्कम्
१॥।=)

# विषय-सूची


भागवृत्तिसंकलनपरिशिष्टम्—श्रीयुधिष्ठिरमीमांसकः, प्राच्यविद्याप्रतिष्ठानम्, काशी। २२७
गौडपादीयं दर्शनम्—श्रीरघुनाथशर्मा, व्याकरणाचार्यः, काशी। २३४
चार्वाकदर्शनरहस्यम्—श्री.आनन्दझा, न्यायाचार्यः, काशी। २५०
लग्नस्वरूपविमर्शः—श्री अवधबिहारी त्रिपाठी, ज्यौतिषाचार्यः, काशी। २६२
कामीयम्—श्री अनन्तशास्त्री फडके, पुराणाध्यापकः, काशी। २६६
पाश्चात्त्यसाहित्यसिद्धान्तः—श्रीद्विजेन्द्रनाथमिश्रः, साहित्याचार्यः, काशी। २७५
मोकाटेश्रीगणपतिशास्त्रिणां जीवनेतिवृत्तम्—श्रीमुरलीधरमिश्रः, व्याकरणाचार्यः, काशी। २८०
म० म० खिस्तेश्रीनारायणशास्त्रिणां जीवनेतिवृत्तम्—श्रीबटुकनाथशास्त्री खिस्ते, साहित्याचार्यः, काशी। २८३
दीक्षान्तभाषणम्—श्रीसम्पूर्णानन्दमहाभागानाम्। २८५
कुलपतिभाषणम्—श्रीत्रिभुवनप्रसादोपाध्यायानाम्। २९२


## विविधम्


राजशेखरीयकाव्यमीमांसाया रचनास्थानम्—डा० दशरथशर्मा, एम० ए०, डी० लिट्०, दिल्ली। ३०१
महीधरीयमनादिदीपविवरणम्—श्रीव्रजवल्लभद्विवेदः, दर्शनाचार्यः, काशी। ३०३
दीर्घजिह्वी—श्रीशान्तिभिक्षुशास्त्री, शान्तिनिकेतनम्। ३१०
सिद्धान्ततत्त्वविवेकीयभूभास्वरूपविमर्शः—श्रीमीठालाल ओझा, ज्यौतिषाचार्यः, काशी। ३११


## सम्पादकीयम्


स्वर्गीयाः पण्डितश्रीत्रिभुवनप्रसादोपाध्यायाः ३१२
संस्कृतविश्वविद्यालयः ३१३
हस्तलेखानामुपेक्षा ३१५
स्वर्गीया पण्डिता क्षमादेवी 'राव' ३१६


## ग्रन्थाः


काण्वसंहिताभाष्यसंग्रहः ( वेदः ) आनन्दबोधभट्टोपाध्यायप्रणीतः। डा० सुभद्रझा-व्रजवल्लभद्विवेदाभ्या सपादितः। १६९-१९२
बीजगणितावतंसः ( गणितज्यौतिषम् ) नारायणपण्डितविरचितः। श्रीचन्द्रभानु-पाण्डेयेन ज्यौतिषाचार्येण सपादितः। २५-३२

# सारस्वती सुषमा

## काशिकराजकीयसंस्कृतमहाविद्यालयपत्रिका

८ वर्षः } फाल्गुनः २०१० { ४ अङ्कः


# भागवृत्तिसंकलनपरिशिष्टम्


श्रीयुधिष्ठिरमीमांसकः, प्राच्यविद्याप्रतिष्ठानम्, मोतीझील, काशी ।


मान्या महाभागाः, सारस्वत्याः सुषमाया अष्टमवर्षस्य प्रथमे, द्वितीयतृतीययोश्च संमिलितेऽङ्के भागवृत्त्यास्त्रिसप्ततिशत [1]मुद्धरणानि नानाग्रन्थेभ्यः संगृह्य प्रकाशितानि ।

पुरुषोत्तमदेवविरचिताः परिभाषावृत्तिज्ञापकसमुच्चयकारकचक्रनामानस्त्रयो ग्रन्था १९४६ तमे ईशवीयाब्दे बगालप्रान्तीयराजशाहीनगरात् प्रकाशिता अभूवन् । ततो वर्षाभ्यन्तर एव भारतस्य विभागः समपद्यत । तेन राजशाहीनगर पाकिस्ताने गतम् । तत्कारणाद् वारेन्द्रानु-सधानाद्भुतालयप्रकाशितानि पुस्तकान्यस्माक कृते दुर्लभान्यभूवन् । अत एव पूर्वोक्तेष्वेषु ग्रन्थेषु सन्ति भागवृत्तेरुद्धरणानीति जानन्नप्यहमेभ्यः सकलन कर्तु नाशकम् । सम्प्रतीमे ग्रन्था महता प्रयत्नेनोपलब्धाः, अत एषूद्धृतानि भागवृत्तेरुद्धरणान्यपि सकलय्य प्रकाश्यन्ते ।

परिभाषावृत्तिज्ञापकसमुच्चयकारकचक्रनामानि त्रीण्यपि पुस्तकान्येकत्रैव प्रकाशितानि । एषा च सम्पादनं तत्रश्रीमता दिनेशचन्द्रभट्टाचार्येण विहितम् ।

---

१ त्रिसप्तत्युत्तरशतमित्यर्थः । तुलनीयम्—एतद्ध स्म वै तद्विद्वानाह महिदास ऐतरेयः''''स ह षोडशवर्षशतमजीवत् [ छान्दोग्य० ३।१६।७ ] । एवमेव जैमिनीयोपनिषद्ब्राह्मणे [४।२।११] अपि पठ्यते । यत्तु छान्दोग्यवचनं षोडशशतानि ( १६०० ) वर्षाणि महिदास ऐतरेयो जिजीवेत्येवं पण्डितगङ्गानाथझामहोदयेन व्याख्यातं तदविचारितरमणीयम् ।

परिभाषावृत्तौ भागवृत्तेरेकमुद्धरणमुपलब्धम्, ज्ञापकसमुच्चये च चत्वारि। तदेवं पञ्चोद्धरणानि नूतनान्युपलब्धानि।

एषा ग्रन्थाना भूमिकाया श्रीदिनेशचन्द्रभट्टाचार्येण पुण्डरीकविद्यासागरकृतात् कातन्त्र-प्रदीपादेकम्, गदसिंहकृतायास्तत्त्वचन्द्रिकाख्यायाः किरातार्जुनीयटीकायाः पञ्च, मैत्रेयरक्षित विरचितात् तन्त्रप्रदीपाच्चाष्टावेव चतुर्दश भागवृत्तेरुद्धरणानि सकलितानि। एषु तन्त्रप्रदीपस्य द्वे उद्धरणे पूर्वमेवास्माभि. सकलिते आस्ताम्। तदेव सगृह्य सप्तदश नूतनान्युद्धरणान्यत्र प्रकाश्यन्ते।

एषु सप्तदशमूद्धरणेष्वेकादश सूत्राणि नवीनानि व्याख्यायन्ते, षट् पूर्वतनान्येव सन्ति। तदेवं (१६०) नवतिशतसख्याकैरुद्धरणैरष्टाव्यायय्या अष्टाविंशतिशत सूत्राणि व्याख्यातानि भवन्ति।

**अचः परस्मिन् पूर्वविधौ। ( १।१।५७ )**

[१](१७४) मथितं पण्यमस्येति माथितिकः। 'यस्येति च' [ ६।४।१४८ ] इति लोपस्य स्थानिवद्भावात् तान्तादिति [ ७।३।५१ ] कादेशो न भवति। एवमपि नार्थो विधिग्रहणेन पूर्वस्येति संबन्धसामान्य एषा षष्ठ्यस्तु। पूर्वस्मादपि हि विधिः पूर्वस्य निमित्तस्य सबन्धी भवति। तत्र पूर्वस्य कार्ये प्रतीत्येव सिद्धे तदेतद् द्वितीययत्नार्थं विधिग्रहण विधिमात्रेऽपि स्थानिवद्भावो यथा स्यात्। तेन वाय्वोरध्वर्य्वोरिति वलि लोपः स्वाश्रयमपि कार्यं न भवतीति भागवृत्तिः। [ ज्ञापकसमु० पृ० ५६-६० ]

**अधेः प्रसहने। ( १।३।३३ ) ( ? )**

( १७५ ) भागवृत्तिस्तु ञित्त्वादात्मनेपदम्। अधिपूर्वः करोतिः क्षमाया वर्तते। यदाहैव-"बहुं न शक्यः किमुताधिकर्तुम्" इति। [ [२]तत्त्वचन्द्रिका १।४३ ]

**कर्तृस्थे चाशरीरे कर्मणि। ( १।३।३७ ) ( ? )**

( १७६ ) इह प्राप्त्युपसर्जनवचने नयतिर्द्विकर्मकः, शिवमुपायं पौरुष नयन्तीत्यात्मनेपदं न भवतीति भागवृत्तिः। [ [३]तत्त्वचन्द्रिका २।३५ ]

---

१ इयं संख्या पूर्वतोऽनुवृत्ता द्रष्टव्या।

२ किरातस्य "भवादृशाश्चेदधिकुर्वते रतिम्" [ १।४३ ] इति श्लोकस्य गदसिंहकृतायां टीकाया-मुद्धृतं वचनम्। उद्धरणमिदं पुरुषोत्तमदेवीयपरिभाषावृत्तिभूमिकायामष्टमे पृष्ठ उद्धृतम्। अत्र मल्लिनाथीया घण्टापथव्याख्याऽपि द्रष्टव्या।

३ किरातस्य द्वितीयसर्गस्य पञ्चत्रिंशत्तमस्य श्लोकस्य गदसिंहकृतायां टीकायामेतद्वचनमुप-लभ्यते। उद्धरणमिदं पुरुषोत्तमदेवीयपरिभाषावृत्तिभूमिकायामष्टमे पृष्ठे समुद्धृतम्। अत्र

यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् । ( १।४।१३ )

( १७७ ) अतो यदुक्तं यस्मात् प्रत्ययविधिसूत्रे भागवृत्तिकृता—"समासान्तो विधिरनित्य इति नैषा परिभाषा, भाष्ये ज्ञापकाभावाद्" [1]इति, तदसमीक्षिताभिधानम् ।

[ पुरुषोत्तमीयपरिभाषावृत्तिः–पृ० ४२ ]

विभाषा कृञि । ( १।४।९८ )

( १७८ ) अधिकृत्वा इति कर्मप्रवचनीयत्वे समासाभावे भागवृत्तावुद्धृतम् ।

[ [2]तन्त्रप्रदीपः १।४।९८ ]

नञ् । ( २।१।६ )

( १७९ ) [ अनेकेषाम्… ] प्रमादेति । भागवृत्तिकृताप्येतदुक्तम्[3]–। मैत्रेयपादास्तु[4] द्वित्वादावप्येकत्वाध्यारोपादेकवचनम् । यदा त्वेकत्वाध्यारोपविषये द्वित्वादौ भेद आश्रीयते तदा वचनभेदः । यथा वृक्षद्वयः, वृक्षद्वय । यथा ( च ) मातुलान्य इमा इति । एवं चानेकेषामित्यादयोऽपि प्रयोगा जिनेन्द्रादिषु दृश्यमाना साधवः । [ [5]कातन्त्रप्रदीप.–पृ० ६३-६४]

जातिरप्राणिनाम् । ( २।४।६ ) (१ ? )

( १८० ) विविधा अनेकरूपास्तरवः शैलाश्च तरुशैलाः । नियतद्रव्यविवक्षया नैकवद्भावः, यथा बदरामलकानि । तरुप्रधानाः शैलास्तरुशैलाः, शाकपार्थिवादित्वात् समासो वा बोद्धव्यः । एतदुभयमपि भागवृत्तिकृन्न क्षमते । यदाह—"कविना च तिमिरातिशयः प्रतिपाद्यते,

---

मल्लिनाथीया–"नयति प्रापणार्थे द्विकर्मकः । अत्र पौरुषस्य कर्तृस्थकर्मत्वेऽप्युपायस्यातथात्वात् क्रोधं विनयत इत्यादिवत् 'कर्तृस्थे चाशरीरे कर्मणि' [१।३।३७] इत्यात्मनेपदं न भवति" इति व्याख्या द्रष्टव्या ।

१ भागवृत्तेरिदमुद्धरणं सीरदेवीयपरिभाषावृत्तावपि दृश्यते । तच्चास्माभिर्गते [ सं० २०१० ] ज्येष्ठाङ्के [ पृ० १४ ] प्रकाशितम् ।

२ उद्धरणमिदं पुरुषोत्तमदेवीयपरिभाषावृत्तिभूमिकायां नवमे पृष्ठे निर्दिष्टम् ।

३ एतद्विषयक दुर्घटवृत्तावुद्धृत भागवृत्तिवचनमस्माभिर्गते [ सं० २०१० ] ज्येष्ठाङ्के [पृ० १५] द्विपञ्चाशत्तम उद्धरणे प्रकाशितम् । तदप्यत्रावलोकनीयम् ।

४ तन्त्रप्रदीपकारस्तत्रभवान् मैत्रेयरक्षित इत्यर्थः ।

५ पुण्डरीकविद्यासागरकृतोऽयं कातन्त्रप्रदीपः । अप्रकाशितमेतत् पुस्तकम् । डेक्कनकालेज-पुस्तकालयस्थहस्तलेखस्य पृष्ठसंख्याऽत्र निर्दिष्टा । उद्धरणमिदं पुरुषोत्तमदेवीयपरिभाषा-वृत्तिभूमिकायां षष्ठे पृष्ठ उद्धृतम् ।

स च पुनः सर्वत्र शैले तरौ च रञ्जिते भवति। तत्कुतोऽत्र नियतद्रव्यविवक्षा। तरुप्रधानशैलरञ्जने च तिमिरस्योत्कर्षः, अन्यथैव तत्रान्धकारसद्भावात्। ततश्च—'रञ्जित नु विविधं तरुशैलम्' इत्येव पाठः"। [ [1]तत्त्वचन्द्रिका ६।१५ ]

लिटः कानज्वा। ( ३।२।१०६ )

क्वसुश्च। ( ३।२।१०७ )

( १८१ ) कानच्क्वसू छान्दसाविति भागवृत्तिः[2]। [ ज्ञापकसमुच्चयः–पृ० ७३ ]

शार्ङ्गरवाद्यञो ङीन्। ( ४।१।७३ )

( १८२ ) भागवृत्तिकारस्तु केकयशब्दं प्रत्ययरहितमेव मूलप्रकृतिं पठति। उपचारात्तदपत्ये स्त्रिया वर्तमानः स्त्रीप्रत्ययं प्रतिपद्यते। तेनेद सिध्यति—"प्राक् केकयीतो भरतस्ततोऽभूत्" इति व्याचष्टे। [ [3]तन्त्रप्रदीपः ४।१।७३ ]

द्रोणपर्वतजीवन्तादन्यतरस्याम्। ( ४।१।१०३ )

( १८३ ) भागवृत्तिकारस्त्वश्वत्थामन्यप्यनादिद्रोणसन्ततित्वाद् मुख्यं द्रौणायनशब्दं मन्यते। [ [4]तन्त्रप्रदीपः ४।१।१०३ ]

नडशादाद् ड्वलच्। ( ४।२।८८ )

( १८४ ) शाद्वलं स्थानम्। देशविशेष इति भागवृत्तिः।

[ [5]तत्त्वचन्द्रिका ५।३७ ]

---

१ किरातार्जुनीयस्य–"रञ्जिता नु विविधास्तरुशैला." [ ९।१५ ] इति श्लोकस्य गदसिंहकृतायां तत्त्वचन्द्रिकाटीकायामुद्धृतम्। टीकेयमद्य यावदमुद्रितैव वर्तते। उद्धरणमिदं पुरुषोत्तमदेवीयपरिभाषावृत्तिभूमिकायां निर्दिष्टम्। [ द्रष्टव्यम्–पृ० ६-७ ]

२ एतद्विषयकं संक्षिप्तसारटीकावचनं गते [ सं० २०१० ] भाद्रमार्गयो. संमिलितेऽङ्के [पृ० ८६] समुद्धृतम्।

३ वचनमिदं पुरुषोत्तमदेवीयपरिभाषावृत्तिभूमिकायां नवमे पृष्ठे समुद्धृतम्।

४ उद्धरणमिदं पुरुषोत्तमदेवीयपरिभाषावृत्तिभूमिकायां नवमे पृष्ठे समुद्धृतम्।

५ किरातस्य–"रम्या नवद्युतिरपैति न शाद्वलेभ्य." [ ५।३७ ] इति पद्यस्य व्याख्यायां गदसिंहकृतायां तत्त्वचन्द्रिकायामुद्धृतम्। उद्धरणमिदं पुरुषोत्तमदेवीयपरिभाषावृत्तिभूमिकायामष्टमे पृष्ठे समुद्धृतम्।

गाण्ड्यजगात् संज्ञायाम् । ( ५।२।११० )

( १८५ ) संहितायास्तुल्यत्वममृष्यन् भागवृत्तिकृत् "कार्मुक महेषौ" इति [1]पठति ।

[ [2]तत्त्वचन्द्रिका १३।१६ ]

द्वित्रिचतुर्भ्यः सुच् । ( ५।४।१८ ) ( ? )

( १८६ ) 'न पदान्त' [ १।१।५८ ] इत्यत्र द्विर्वचन इति निर्देशाज् ज्ञापकाद् यद्यपि कृदभिहितो भावो द्रव्यवत् प्रकाशत इत्युक्तं तन्न सर्वत्र । तेन द्विरुक्तिरित्यादौ क्रियाभ्यावृत्तिगणनाश्रयः सुच् भवत्येवेति भागवृत्तिः । [ ज्ञापकसमुच्चयः—पृ० ६० ]

नोदात्तोपदेशस्य मान्तस्यानाचमेः । ( ७।३।३४ )

( १८७ ) विश्रामशब्दः साधु मन्यते । तथा च भागवृत्तिकारोऽपि विश्रामशब्दस्य

---

१ अयं भावः—"गाण्ड्यजगात्" इत्यत्र ह्रस्वदीर्घयोर्गाण्डिगाण्डीशब्दयोस्तुल्या संहिता । तेन गाण्डिवं गाण्डीवं चोभयमपि सिद्ध्यतीति काशिकाकृन्मतम् । भागवृत्तिकारस्तु काशिकावृत्तिकृन्मतममृष्यन् किरातार्जुनीयस्य "गाण्डिवं महेषौ" इति वचनं "कार्मुकं महेषौ" इति पठति ।

अत्रेदमप्यवधेयम्—गणरत्नमहोदधौ [ पृ० २३६ ], अमरटीकासर्वस्वे [ भा० १, पृ० २७ ], अमरकोशस्य क्षीरस्वामिनष्टीकायाम् [ पृ० १२ ], कात्यायनश्रौतस्य कर्कभाष्ये [ ९।२।६ ] च 'गाण्ड्यजकात् संज्ञायाम्' इति पाठान्तरमुपलभ्यते । तदनुसारम्—"अजकवं धनुः" इत्यपि प्रयोग उपपद्यते । कात्यायनश्रौतसूत्रे तु—"अजकावं मैत्रावरुणम्" [ ९।२।६ ] इति श्रूयते । तत्कथमिति चेत्; प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमित्येवं समाधेयम् । श्रौतसूत्रव्याख्यातारस्तु—'अजका'-शब्देन गलस्तनमुच्यत इत्याहुः । अजकशब्देन "अजो विष्णुः, को ब्रह्मा" उच्यते [ द्र० अमरटीकासर्वस्वम्, भा० १ पृ० २७ ] । तथा सति न पुंलिङ्गेनाजकशब्देन भिन्नार्थस्य स्त्रीलिङ्गस्याजकाशब्दस्य कथमपि ग्रहणमुपपद्यते । प्रातिपदिकग्रहणपरिभाषा तु तत्रैव प्रवर्तते यत्रार्थसाम्ये केवलं लिङ्गभेदो भवति । एवं सत्यजकव-अजकावशब्दयोः सिद्ध्यर्थम्—"गाण्ड्यजकात् संज्ञायाम्" इत्यत्र "अजक-अजका" इत्युभयोरपि ग्रहणं द्रष्टव्यम्, पाठस्योभयथा संभवात् । तथा हि—"गाण्ड्यजकात्" इत्यत्र समाहारद्वन्द्वः श्रूयते । स च नपुंसकलिङ्गो भवति । तेनाजकाशब्देन समासेऽपि—"ह्रस्वो नपुंसके प्रातिपदिकस्य" [ १।२।४७ ] इति ह्रस्वत्वे सूत्रपाठ उपपद्यत एव ।

२ किरातस्य गदसिंहकृतायां तत्त्वचन्द्रिकाटीकायामुद्धृतम् । उद्धरणमिदं पुरुषोत्तमदेवीयपरिभाषावृत्तिभूमिकायामष्टमे पृष्ठे निर्दिष्टम् ।

साधुत्वमुक्तवान्[1]। [ [2]तन्त्रप्रदीपः ७।३।३४ ]

प्रकारे गुणवचनस्य। ( ८।१।१२ )

( १८८ ) जातीयरोऽनेन द्विर्वचनेन बाधनं नेष्यत इति। ननु सादृश्यं नैव 'प्रकारवचने जातीयर्' [ ५।३।६९ ] इत्यत्र प्रकारशब्देन गृहीतम्, अपि तु भेदः। तत्र भिन्नार्थत्वात् कुतो बाध्यबाधकभावः। तथा हि–पटुजातीय इत्यत्र पटुत्वमस्य पुरुषस्य विशेषः पुरुषत्वसामान्यादित्यर्थ इत्युक्तम्। नैतत्। इह टीकाकारैर्हि प्रकारवचने जातीयरित्यत्र स्थितस्य प्रकारशब्दस्यार्थं प्रति मतभेदः प्रदर्शितः। केचिदाहुः–सादृश्यं भेदश्च प्रकारशब्देन गृह्यते, अन्ये तु सादृश्यम्, अन्ये तु भेद इति। तत्र येषां दर्शनम्–उभयथा गृह्यत इति, तेषां मते बाध्यबाधकभाव आशङ्कितो [3]वामनेन। येषां तु भेदः, तन्मते नैव बाध्यबाधकभावो भिन्नार्थत्वात्। येषां सादृश्यम्, तेषां वचनात् पक्षे सोऽपि जातीयर्भवति। यदुक्त [ ? तदुक्त ] भागवृत्तौ—"जातीयरोऽप्ययमेव विषय इति सोऽपि पक्षे भवति" इति। येषां तु भेदः, तन्मताश्रयणेन तत्र जयादित्येनोक्तम्–प्रकारो भेद [4]इति। [ [5]तन्त्रप्रदीपः ८।१।१२ ]

---

१ विश्रामशब्दविषयकमेकं भागवृत्तिकृन्मतं गते [ सं० २०१० ] भाद्रमार्गयोः सम्मिलितेऽङ्के [ पृ० १०१ ] समुद्धृतम्। तदनुसारं भागवृत्तिकारो विश्रामशब्दमसाधु मन्यत इति व्यक्ती-भवति। अत्र तु भागवृत्तिकृन्मुखेनैव तस्य साधुत्वमुक्तम्, किमत्र तत्त्वमिति देवा ज्ञातुमर्हन्ति।

२ वचनमिदं पुरुषोत्तमदेवीयपरिभाषावृत्तिभूमिकायां नवमे पृष्ठ उद्धृतम्।

३ द्रष्टव्या काशिका [ ८।१।१२ ]।

४ द्रष्टव्या काशिका [ ५।३।६९ ]—सामान्यस्य भेदको विशेषः प्रकार.। इदमत्रावधेयम्—सम्प्रत्युपलब्धायाः काशिकावृत्तेराद्या. पञ्चाध्याया जयादित्यविरचिताः, अपरे त्रयो वामन-कृताः। प्रौढमनोरमायाः शब्दरत्नव्याख्यायां हरिदीक्षित—"प्रथमद्वितीयपञ्चमषष्ठा जयादित्य-कृतवृत्तयः, इतरे वामनकृतवृत्तय इत्यभियुक्ता." [ भा० १, पृ० ५०४ ] इत्युक्तवान्। अस्याप्रामाण्यमस्माभिः स्वकीये–'संस्कृत व्याकरणशास्त्र का इतिहास'–नाम्नि ग्रन्थे सम्य-गुपपादितम् [ द्रष्टव्यम्–पृ० ३३२-३३३ ]।
वामनजयादित्याभ्यां स्वतन्त्ररूपेणाष्टाध्याया द्वे वृत्ती रचिते आस्ताम्। अत्र पञ्चप्रमाणा-न्यस्माभि. स्वकीये–'सस्कृत व्याकरणशास्त्र का इतिहास'–नाम्नि ग्रन्थे निर्दिष्टानि [ द्रष्टव्यम्–पृ० ३३५-३३६ ]।

५ उद्धरणमिदं पुरुषोत्तमदेवीयपरिभाषावृत्तिभूमिकायामष्टमे पृष्ठे निर्दिष्टम्।

सहेः साडः सः। ( ८।३।५६ )

( १८६ ) ( पृतनाषाड्–) इति संज्ञाशब्दत्वाच्छान्दसोऽपि साधुरिति भागवृत्तावुक्तम्[1]।
[ [2]तन्त्रप्रदीपः ८।३।५६ ]

प्रातिपदिकान्तनुम्विभक्तिषु च। (८।४।११ )

( १९० ) अभक्तपक्षे पुनरेतदसुलभ स्यादिति प्रातिपदिकान्तसूत्रे नुम्ग्रहणमधिकमिति कृत्वाऽसमासेऽपि हिविधातोर्नुमि लङि प्राहिण्वन्निति णत्वार्थं भर्तृहरिणा व्याख्यातमिति [3]भागवृत्तिः। [ ज्ञापकसमुच्चयः–पृ० ९९ १०० ]

---

१ पूर्वसंकलितेषूद्धरणेष्वेतद्विषयेऽन्यथोपलभ्यते। तथा हि–"भागवृत्तिकारस्तु पृतनासाहमित्यत्रापि मूर्धन्यं नेच्छति" [ संक्षिप्तसारटीका–सन्धि० २४० ] इति। [ द्रष्टव्यम्–भाद्रमार्गयोरङ्के १०३ तमे पृष्ठे ]। कोऽत्र भागवृत्तिपाठ इति देवा एव ज्ञातुमर्हन्ति।

२ उद्धरणमिदं पुरुषोत्तमदेवीयपरिभाषावृत्तिभूमिकायां नवमे पृष्ठ उद्धृतम्।

३ प्राहिण्वन्विषयके द्वे उद्धरणे अस्माभिर्गते [ सं० २०१० ] भाद्रमार्गयोः सम्मिलितेऽङ्के [ पृ० १०४ ] प्रकाशिते। तद्विषयिकास्मदीया टिप्पण्यप्यवश्यं द्रष्टव्या।

# गौडपादीयं दर्शनम्

श्रीरघुनाथशर्मा, राजकीयसंस्कृतमहाविद्यालयः, काशी ।

विद्याऽविद्याविभागेन स्व द्विधा व्यस्य संस्थिताम् ।
प्रवृत्तौ विनिवृत्तौ वा हेतुभूतामुमा नुमः ॥
दुस्तर्कध्वान्तसंच्छन्न गौडपादीयदर्शनम् ।
सद्युक्तिविद्युद्विद्योतैः प्रकाशीक्रियतेऽधुना ॥

अस्ति गौडपादीयं दर्शनमद्वैतवादस्य शिरोरत्नं सर्ववेदान्तसारसग्रहभूतं प्रकरण-चतुष्टयात्मना माण्डूक्योपनिषत्कारिकासु सक्षिप्तबह्वर्थासु निर्दिष्टं श्रीशङ्करभगवत्पादैर्भाष्ये श्रीमदानन्दगिरिभिश्च तद्विवृतौ विवृतम् । यद्यपि श्रीमध्वाचार्यव्यासतीर्थश्रीनिवासकूरनारायणादिभि-रागमप्रकरणोक्तानामेकोनत्रिंशत्सख्याककारिकाणामुपनिषत्त्वमुक्तं तथापि तन्न सम्यक्, द्वादश गद्यभागा एवोपनिषदः कारिकास्तु तद्व्याख्यानभूता गौडपादकृता इति प्रसिद्धिविरोधात्, कारिकाणामुपनिषत्त्वे प्रमाणानुपलम्भात्, ससगतिकस्य प्रकरणचतुष्टयस्यैककर्तृकत्वस्यै-वौचित्यात्, उपनिषद्भागाना कारिकाणा च भाषाभेदात्, प्रथमप्रकरणोक्तकारिकाणामितर-प्रकरणस्थकारिकाभिर्भाषासाम्याच्च । इतरकारिकाणा श्रीगौडपादकृतत्वे तु न कस्यापि विमतिः । यदपि श्रीरामानुजाचार्यैः—"अनादिमायया सुप्तः" [१।१६] इत्यागमकाण्डकारिकामुद्धृत्योक्तम्—"अत्र जीवस्यैव निरोधः श्रूयते" इति, तत्तु श्रुत्यर्थानुवादित्वेनाप्युपपद्यते । यथा भगवद्गीता-सूपनिषत्पदप्रयोगो गौणस्तथा ।

म० म० श्रीविधुशेखरभट्टाचार्यैः स्वकीयगौडपादीयागमशास्त्रावतरणिकाया श्रीशङ्कर-भगवत्पादाना माण्डूक्योपनिषत्कारिकाभाष्योपोद्घाते—"ओमित्येतदक्षरमिदं सर्वं तस्योप-व्याख्यानम् । वेदान्तसारसग्रहभूतमिद प्रकरणचतुष्टयमोमित्येतदक्षरमित्याद्यारभ्यते" इति वाक्यं दृष्ट्वा प्रकरणचतुष्टयस्योपनिषत्त्वमतिस्पष्ट बुद्ध्वा तत्प्रत्याख्यातम् । तत्सर्वं भ्रान्तिमूलकम् । न ह्यस्मिन् भाष्यवाक्येऽप्रमादेन विचार्यमाणे प्रकरणचतुष्टयस्योपनिषत्त्वं लेशतोऽप्यवबुध्यते, दूरे खलु स्पष्टप्रतिपादितत्वाशा । तथा हि—प्रथमे प्रकरणे श्रीगौडपादैस्तास्तान् उपनिषद्भागान् यथावसर तत्र तत्रोद्धृत्य, अत्रैते श्लोका भवन्तीत्युक्त्वा तद्व्याख्यानश्लोका उक्ताः । ततश्च

मन्त्रामन्त्रोभयात्मकमिदमेकं प्रकरणम्। न हि मन्त्रोद्धरणपूर्वकसहपाठेन कारिकाणां मन्त्रत्वमवधारयितुं शक्यते। तदुक्तमानन्दगिरिभिरत्रैते श्लोका भवन्तीति प्राथमिकवाक्यभाष्यव्याख्यावसरे—"आचार्यैर्माण्डूक्योपनिषदं पठित्वा तद्व्याख्यानश्लोकावतरणमत्रेत्यादिना कृतं तदत्रेत्यनूद्य भाष्यकारो व्याकरोति—एतस्मिन्निति" इति। भाष्यकृद्भिश्च श्रीशङ्करभगवत्पादैर्वैतथ्याख्यद्वितीयप्रकरणारम्भावसरे—"ज्ञाते द्वैतं न विद्यते' [ १।१८ ] इत्युक्तम्। आगममात्रं तत्। तत्रोपपत्त्याऽपि द्वैतस्य वैतथ्यं शक्यतेऽवधारयितुमिति द्वितीयं प्रकरणमारभ्यते—वैतथ्यमित्यादिना" इत्युक्तम्। ततोऽपि प्रथमप्रकरणस्येतरप्रकरणसमानकर्तृकत्वमेव प्रतीयते। अग्रे च स्वयमपि भट्टाचार्येण श्रीशङ्करभगवत्पादश्रीसुरेश्वरवचनविरोधात् कारिकाणां श्रीगौडपादकृतत्वमेव व्यवस्थापितम्। सुरेश्वरस्तावन्नैष्कर्म्यसिद्धौ [ ४।४१ ]—"कार्यकारणबद्धौ तौ" [ १।११ ] इत्याद्यागमशास्त्रकारिकामुद्धरन् ब्रवीति—"अयमर्थोऽस्मत्पूज्यैर्गौडैरुक्तः" इति। अत्र गौडा गौडपादाचार्याः। शङ्करोऽपि ब्रह्मसूत्रस्य स्वकीये भाष्ये एकत्र [ब्र० सू० २।१।९] "अनादिमायया" [ १।१६ ] इत्यादिकामन्यत्र [ ब्र० सू० १।४।१४ ] च "मृल्लोहविस्फुलिङ्गाद्यैः" [ ३।१५ ] इत्यादिकां कारिकामवतारयन्नाह यथाक्रमम्—"अत्रोक्तं वेदान्तसम्प्रदायविद्भिराचार्यैः" इति, "तथा च सम्प्रदायविदो वदन्ति" इति च।

माण्डूक्योपनिषत्कारिकाभाष्यकारः शङ्करो ब्रह्मसूत्रभाष्यकाराच्छङ्कराचार्यादन्य इत्यभिनववृत्तिकारा मन्यते। ते हि—"ये पुनर्मन्यन्ते शारीरकभाष्यकार आगमशास्त्रभाष्यकारश्चानन्यौ न तावत्ते समासेनागमशास्त्रभाष्ये मङ्गलाचरणम्, तत्रत्यानां श्लोकानामत्यन्तापकृष्टत्वम्, छन्दोदोषम्, च्युतसंस्कृतिं चैव केवलं चिन्तयितुमर्हन्ति; अपि तु तत्र तत्र [ १।१०; २।२७; ३।२५, ४।८३ ] व्याख्यानमपि। अप्येतद् युज्यते शारीरकभाष्यकारस्य? दृश्यतामत्र [ ३।२३, २५, ४।३ ] वृत्तिकृतो व्याख्यानम्" इति वदन्ति। अत्र कारिकाभाष्यकारस्य शारीरकभाष्यकारभिन्नत्वे उपन्यस्तहेतुपञ्चके हेतुचतुष्टयमेव प्राक् सूचीकटाहन्यायेन समीक्ष्यते। व्याख्यादौर्बल्यरूपः पञ्चमो हेतुस्तु पश्चात्।

तत्र न तावत् समासेन मङ्गलाचरणं भाष्यकारभेदे प्रयोजकम्, शारीरकभाष्येऽपि 'जन्माद्यस्य यतः' इत्यादिसूत्रेषु तत्र तत्र दीर्घसमासदर्शनात्। न हि शारीरकभाष्ये दीर्घसमासो न प्रयुक्त इति प्रतिज्ञातुं शक्यम्। शारीरकभाष्ये संग्राहकवाक्येषु प्रायः सर्वेष्वपि दीर्घसमासदर्शनाच्च। किञ्च, गद्यलेखे दीर्घसमासपरिहारसंभवेऽपि पद्ये छन्दोऽनुरोधेन तत्परिहारासंभवात्। नापि कारिकाभाष्यश्लोकानामत्यन्तापकृष्टत्वम्, सकलमाण्डूक्योपनिषत्सारसंग्राहकत्वेनानुबन्ध-

चतुष्टयसूचकत्वेनाचार्यमहत्त्वप्रतिपादकत्वेन चात्यन्तोत्कृष्टत्वात् । एवमेषामुत्कृष्टत्वं चानन्दगिरिकृततद्व्याख्यानेनैव स्फुटमिति न तदर्थं प्रयत्यते । तेषामत्यन्तापकृष्टत्वे च न कोऽपि हेतुस्तत्र दृश्यते । नापि छन्दोदोषः, तस्यानन्दगिरिभिः परिहृतत्वात् । परिहारस्यापेशलत्वे तु न कोऽपि हेतुरुपनिबद्ध्यते । किञ्च, सदोषवाक्यप्रयोगेऽपि—"आचार्याः कृत्वा न निवर्तन्ते" इति न्यायेन न तदपाकृतमित्यपि सम्भवति, प्रकृतार्थाविरोधित्वात्तद्दोषस्य । दृश्यन्ते च महाकविप्रयोगेष्वपि—"वाचमुवाच कौत्सः" [ रघु० ५।२३ ], "तं पातया प्रथममास पपात पश्चात्" [रघु० ६।६१] इत्यादयो दोषाः । उक्तं च श्रीविश्वनाथेन—"तदेतत्काव्यं प्रविरलविषयं निर्विषयं वा स्यात्" इति । उक्तं च कविभिः—

सर्वथा व्यवहर्तव्यं कुतो ह्यवचनीयता ।
यथा स्त्रीणां तथा वाचां साधुत्वे दुर्जनो जनः ॥ इति ।

किञ्च, अनया पद्धत्या—"आत्मन्विश्वजनभोगोत्तरपदात्खः" [ ५।१।९ ] "ऊकालोऽज्झ्रस्वदीर्घप्लुतः" [ १।२।२७ ] इत्यादि बहुसूत्रं वदतः पाणिनेरप्यन्यत्वं भवता कल्प्येत, एतत्सूत्राणां वाऽपाणिनीयत्वं कल्प्येत । च्युतसंस्कृतिदोषस्तु कुत्रेति यद्यपि भवता नोपन्यस्तं तथाप्युत्पश्यामि—"सर्वभावैर्नमस्ये" इत्यत्र व्याकरणसंस्कारच्युतिर्भवतोऽभिप्रेता । नायमपि दोषः। यतोऽत्र 'नमस्ये' इत्यस्य 'नमस्करोमि' इति नार्थः, तथा सति क्यजन्तत्वेनात्मनेपदाभाव आशङ्क्येत । किन्तु नम इवाचरामि नमस्य इति क्यङन्तस्यायं प्रयोगः । व्याख्यातं चानन्दगिरिभिः—"सर्वभावैर्मनोवाक्कायानां प्रह्वीभावैर्नमस्ये नम्रीभवामि" इति । तत्रानम्रो नम्रो भवामीति च्व्यन्तप्रयोगाद् गम्यते । यद्यपि शास्त्रदृष्ट्या निष्क्रियस्य सर्वगस्य च मम वस्तुतो नतिक्रिया तत्कर्तृत्वं वा नास्ति, तथापि व्यवहारकाले तत्स्वात्मन्यारोप्य नम इवाचरामीत्यर्थे नमस्य इति क्यङन्तप्रयोगोपपत्तिः । अत एव च शास्त्रदृष्ट्याऽनम्रोऽप्यहं समारोपान्नम्रो भवामीत्यर्थमादायाऽऽनन्दगिरेर्नम्रीभवामीति च्व्यन्तप्रयोगोऽपि समर्थितो भवति । नमस्करोमीत्यर्थे तु नम्रीभवामीति व्याख्यानासंगतिः ।

अथाधुना व्याख्यादौर्बल्यं पञ्चमो हेतुः समीक्ष्यते । तत्रागमशास्त्रीयदशमकारिकाया व्याख्यादौर्बल्यमुदाहृतं वृत्तिकारेण—

निवृत्तेः सर्वदुःखानामीशानः प्रभुरव्ययः ।
अद्वैतः सर्वभावानां देवस्तुर्यो विभुः स्मृतः ॥ [ १।१० ] इत्यत्र ।

अत्र भाष्यकृतो व्याख्यानम्—"प्राज्ञतैजसविश्वलक्षणानां सर्वदुःखानां निवृत्तेरीशान-

स्तुरीय आत्मा। ईशान इत्यस्य पदस्य व्याख्यानं प्रभुरिति। दुःखनिवृत्तिं प्रति प्रभुर्भवतीत्यर्थः। तद्विज्ञाननिमित्तत्वाद् दुःखनिवृत्तेः। अव्ययो न व्येति स्वरूपान्न व्यभिचरतीति यावत्। एतत् कुतः? यस्मादद्वैत, सर्वभावाना रज्जुसर्पवन्मृषात्वात्। स एष देवो द्योतनात्। तुरीयश्चतुर्थः। विभुर्व्यापी स्मृतः" इति। वृत्तिकारेण तु—"स खलु द्योतनाद्देवः। तुर्यश्चतुर्थ आत्मा। सर्वव्यापनाद् विभुर्व्यापी स्मृतः। स च सर्वदुःखाना निवृत्तेरीशानः समर्थः। अत एव प्रभुः। न मनागपि स्वरूपाद् व्येति व्यपगच्छतीत्यव्ययः। अद्वैतश्च सर्वभावाना मध्ये। सर्वभावेष्वयमेवैको विद्यत इति भावः" इत्थं व्याख्यातम्। व्याख्यानद्वये विमृश्यमाने तु चरममेव व्याख्यानं दुर्बलं भाति। तथा हि—भाष्यकृद्व्याख्याने ईशानप्रभुपदयोः पुनरुक्तिर्विवरणविध्रियमाणत्वभेदेन परिहृता। अस्मिन् व्याख्याने तु प्रयोज्यप्रयोजकभावावलम्बेन। नैतद्युक्तम्, ईशानप्रभुपदयोरेकार्थत्वात्। तथा हि–'ईश ऐश्वर्ये' इति धातोरीशान ईश्वरः, स एव प्रभुः। न ह्येकस्मिन् प्रयोज्यप्रयोजकभावसंभवः, कर्मकर्तृविरोधात्। किञ्च, भाष्येऽद्वैत सर्वभावानामित्यव्ययत्वे हेतुपरतया व्याख्यातम्। अत्र तु व्याख्याने—"अद्वैतश्च सर्वभावाना मध्ये" इति चकाराध्याहारेणाव्ययत्वेन सह समुच्चयः संपादितः। तत्र भाष्यव्याख्यानेऽव्ययत्वमद्वैतः सर्वभावानामिति मूलेनैव समर्थितम्। अद्वैतत्वं तु रज्जुसर्पवन्मृषात्वादिति भाष्यकृता समर्थितमित्युभयोः समर्थनम्। भवदभिमतसमुच्चयस्तु न मूले नापि भवता समर्थित इति कुतः पुष्टत्वं भवद्व्याख्यानस्य। किञ्च, सर्वदुःखाना निवृत्तेरीशान इत्यस्योपपादन भाष्ये तद्विज्ञाननिमित्तत्वाद् दुःखनिवृत्तेरिति कृतम्। भवता तु तन्नोपपादितमिति भवद्व्याख्यानमेव दुर्बल प्रतिभाति। किञ्च, सर्वभावेष्वयमेवैको विद्यत इत्यद्वैतः सर्वभावानामित्यस्य बौद्धमतानुसारिभवत्संमतव्याख्यानादर आत्मरूपस्य विज्ञानस्य जगदाकारेण परिणामात् सर्वभावानुगामित्व वाच्यम्। तथा चाव्ययत्वानुपपत्तिः। अत एव च यौद्धाभिमतो विज्ञानाद्वैतवादो न गौडपादसमतो न वा गौडपादो बौद्धमतश्राद्धः कल्पयितु शक्यः।

द्वितीयप्रकरणे सप्तविंशकारिकाया व्याख्यानमपि न दुर्बलम्। न वाऽयुक्तम्। आश्रमादीना परत्वापरत्वादीना चासङ्ग आत्मनि वस्तुतोऽभावस्य श्रुतियुक्तिसिद्धत्वात्।

तृतीयप्रकरणे पञ्चविंशकारिकायामपि संभूतिशब्देन कार्यब्रह्मरूपा हिरण्यगर्भाख्या देवता एवाभिप्रेता। व्याख्यात च तथैवानन्दगिरिभि.। भाष्येऽपि विमृश्यमाने तथैव लभ्यते। संभूतिशब्दस्यान्यार्थसंभवेऽपि नात्र कारिकाया तत्तदन्यार्थबोधः, प्रकरणादिना नियमनात्। किञ्च, अन्यव्याख्यानाना रमणीयत्व केवलं प्रतिज्ञायते भवता, न तु तद्रमणीयत्वे हेतव उपन्यस्यन्त इति युक्तिशून्यत्वेनायुक्तत्वमेव तद्व्याख्यानानाम्।

अस्ति नास्त्यस्ति नास्तीति नास्ति नास्तीति वा पुनः ।
चलस्थिरोभयाभावैरावृणोत्येव बालिशः ॥ [ ४।८३ ]

इय कारिका भाष्य एवं व्याख्याता—'अस्त्यात्मेति वादी कश्चित् ( वैशेषिकादिः ) प्रतिपद्यते । नास्ति ( आत्मा बुद्धिव्यतिरिक्तः, विज्ञानस्यैवात्मत्वात् ) इत्यपरो वैनाशिकः ( विज्ञानवादी ) । अस्ति नास्तीत्यपरोऽर्धवैनाशिकः सदसद्वादी दिग्वासाः । नास्ति नास्तीत्य त्यन्तशून्यवादी । तत्रास्तिभावश्चल, घटाद्यनित्यविलक्षणत्वात् । नास्तिभावः स्थिरः, सदाऽविशेषत्वात् । उभय चलस्थिरविषयत्वात् सदसद्भावः । अभावोऽत्यन्ताभावः । प्रकारचतुष्टयस्यापि तैरेतैश्चलस्थिरोभयाभावैः सदसदादिवादी सर्वोऽपि भगवन्तमावृणोत्येव बालिशोऽविवेकी । यद्यपि पण्डितः, बालिश एव, परमार्थतत्त्वानवबोधात् । किमु स्वभावमूढो जन इत्यभिप्रायः" इति । वृत्तिकारेण तु श्रीगौडपादेषु बौद्धानुगामित्वश्रद्धयेयं कारिकाऽन्यथा व्याख्याता—"असौ भगवान् धर्मधातुः । अस्ति विद्यत इति । नास्ति न विद्यत इति । एवम् अस्ति नास्ति चेत्युभयमिति । वा अथवा पुनः न अस्ति न च नास्तीत्यनुभयम् । अत्र द्वितीये पादे प्रथमो नकारो द्विर्ग्रहणीयो यथा गृहीतः । एवमभिनिविशमानो बालिशो मूढश्चतुर्भिर्विकल्पैस्त भगवन्तमावृणोत्याच्छादयत्येव । कथं चतुर्भिर्विकल्पैरित्याह—चलेत्यादि । अत्र पाठक्रममपहायार्थक्रम आदरणीयः । तेन चलस्थिरोभयाभावैरिति स्थिरचलोभयाभावैरिति पठनीयम् । ते च स्थिरादयश्चत्वारः शब्दा अस्तीत्यादिभिश्चतुर्भिः शब्दैर्यथाक्रमं संबध्यन्ते । स्थिरः स्थायी नित्य इत्यर्थः । असौ भगवान् नित्य इति विकल्प्य अस्तीति बालिशो मन्यते । एवमन्येष्वपि । चलोऽनित्यः । असावनित्य इति विकल्प्य स नास्तीति मन्यते । उभयः स्थिरश्च चलश्च । नित्याऽनित्य इति भावः । असावीदृश इति विकल्प्य असावस्ति च नास्ति चेति स मन्यते । अभाव इत्युभयाभावो नित्यानित्योभयाभाव इत्यभिप्रायः । एवं चासौ न नित्यो नानित्य इति विकल्प्य बालिशो न अस्ति न च नास्तीति मन्यमानश्च तमावृणोति" इति ।

इद व्याख्याद्वयं दृष्ट्वेदं संदिह्यते । किमत्र वेदान्ताभिमतमात्मतत्त्वं प्रतिपिपादयिषित श्रीगौडपादाना किं वा तथागताना धर्मधातुः ? अयमपरोऽपि सदेहः—किं भाष्यकृत्प्रदर्शिताश्चतस्रः कोटयोऽत्र श्रीगौडपादाभिमता वृत्तिकारप्रदर्शिता वेति ? तत्र वेदान्ताभिमतमात्मतत्त्वमेवात्राभिप्रेतं न तु धर्मधातुरिति युक्तं भाति । तथा हि—प्रकरणचतुष्टयात्मकेऽस्मिन् ग्रन्थे प्रथम प्रकरणमागमाख्यमद्वैतात्मतत्त्वप्रतिपादनपरमित्यत्र न भवतोऽपि विमतिः । द्वितीयं तु प्रकरणं वैतथ्याख्य यत्र युक्त्या द्वैतवैतथ्यप्रतिपादनद्वारकार्थापत्त्योपक्रान्ताद्वैतमेव प्रतिपाद्यते ।

तृतीये तु प्रकरणे प्रागर्थापत्तिलब्धमेवाद्वैतं युक्त्या साक्षादवधार्यते। चतुर्थे तु प्रकरणे द्वैतिना वैनाशिकाना च दर्शनानामन्योऽन्यविरुद्धतयाऽसम्यग्दर्शनत्वं प्रदर्श्याद्वैत एव शास्त्रोपसहारः कृतः। युक्त चैतत्। अन्यदुपक्रान्तमन्यच्चोपसह्रियत इति तु न युज्यते। तत्रैवं सति कः प्रसङ्गो धर्मधातोस्तथागताभिमतस्येति विमृश्यताम्। शब्दसाम्येन त्वप्रकृतमर्थं प्रतिपद्यमानो भवान् भोजनावसरे प्रयुक्तात् सैन्धवमानयेति वाक्यादश्वप्रतिपत्तिमप्यभ्युपगच्छेत्। अत एव च— "धर्मो धातुस्वभावतः" [ ४।८१ ] इति भाष्यकृत्संमतः पाठ एव युक्तो न तु भवत्समतः— "धर्मो धातुः स्वभावतः" इति।

यत्तु भवता—"निवृत्तस्याप्रवृत्तस्य" [ ४।८० ] इत्यादिकारिकापञ्चकस्य मनसो निश्चला स्थितिरेव विषयः, ततः कुतोऽत्रावकाश आत्मन इत्युक्तं तदपि निवृत्तस्येति कारिकाभाष्याविमर्शात्। तथा हि तत्र भाष्ये—"मनसो या निश्चला स्थितिर्ब्रह्मस्वरूपाऽद्वयविज्ञानैकरसघनलक्षणा यस्माद् बुद्धाना परमार्थदर्शिना विषयस्तस्मात्तत्साम्य पर निर्विशेषमजमद्वय च" इत्युक्तम्। एतेनाद्वयस्यात्मनो विद्वदनुभवगम्यत्वप्रदर्शनेन तद्रूपस्य मोक्षस्याऽभयादिरूपत्व सिद्धमिति चोक्तमानन्दगिरिभिः। तस्मादवकाश एवात्मनिरूपणस्येति।

अथाधुना वृत्तिकारकल्पितकोटिचतुष्टयस्यात्रायुक्तत्वमुपपाद्यते। तथा हि—भवत्कल्पितकोटिचतुष्टयपरिग्रहे चलस्थिरोभयाभावैरिति शाब्दः क्रमः परित्यक्तो भवति स्थिरचलोभयाभावैरिति, न तु भाष्यकृत्कल्पितकोटिचतुष्टयपरिग्रहे। किञ्च, भाष्यकृत्पक्षे—अस्ति, नास्ति, अस्ति नास्ति, नास्ति नास्तीत्येतच्छब्दप्रतिपादितैरेव चलस्थिरोभयाभावैरावृणोतीत्येव यथाक्रमं संनिहिताना पदाना संबन्धो भवति। भवत्कल्पितकोटिचतुष्टयपक्षे तु चलस्थिरोभयाभावैर्विकल्प्य अस्ति नास्तीत्यादिरूपैरावृणोतीति क्रमव्यत्यासेन व्यवहिताना सबन्धः कल्पितो भवति। किञ्च, भवत्पक्षे "नास्ति नास्तीति वा पुनः" इत्यत्र सकृत्पठितस्य प्रथमस्य नञ आवृत्त्योभयत्र संबन्धोऽपि कल्पयितव्यो भवति। किञ्चात्र पक्षे—"चलस्थिरोभयाभावैरावृणोति" इति साक्षाच्छ्रुतं प्रधानीभूतावरणक्रियानिरूपितं करणत्वमुत्सृज्य चलस्थिरोभयाभावैर्विकल्प्य अस्ति नास्तीत्यादिरूपैरावृणोतीत्येवं कल्पनाया विकल्प्येति ल्यबन्तपदाध्याहारेणाप्रधानीभूतविकल्पक्रियानिरूपितं करणत्व कल्पयतो व्यर्थः प्रयास आश्रितः स्यात्। किञ्च, भवत्कल्पितव्याख्यापक्षे स्थिरचलोभयाभावरूपविकल्पचतुष्टयस्यास्तीत्यादिविकल्पचतुष्टयं प्रति हेतुतास्तीत्यवसीयते। तथा चात्मा यतः स्थिरो नित्यस्तस्मादस्तीत्येवमनुमानरूपो विकल्पो न सभवति, सर्वदा सत्त्वरूपस्य नित्यत्वस्य साध्यसमत्वेनास्तित्वासाधकत्वात्। भाष्यकारपक्षे तु सुखादिरूपविशेषा-

कारेण परिणामित्वरूपचलत्व देहाद्यतिरिक्तात्मास्तित्वसाधकं सुसपद्यते। प्रागुक्तरीत्या भाष्य-कारपक्षेऽस्ति देहाद्यतिरिक्तिश्चलः सुखाद्याकारेण परिणाम्यात्मेत्येक एव विकल्पः, न त्वत्र चलत्वास्तित्वयोः सन्नपि हेतुहेतुमद्भावो विवक्षितः। अत एवाग्रे स्थिरो नास्ति भावो निर्विशेष-त्वादिति नास्तित्वप्रयोजकं निर्विशेषत्वमेवोक्त भाष्ये न तु स्थिरत्वम्। किञ्च, भवत्पक्षे चलत्व-मनित्यत्वं निर्विशेषनास्तित्वसाधक न संभवति, अनित्याना भावाना सर्वैरपि कादाचित्कसत्ता-स्वीकारात्। अतः कादाचित्क नास्तित्वमेव साधयत्यनित्यत्व न तु नास्तित्वसामान्यम्। अन-यैव पद्धत्या भवत्कृत विकल्पद्वयमपि पराकृतं भवति।

भूततोऽभूततो वापि सृज्यमाने समा श्रुतिः।
निश्चित युक्तियुक्तं च यत्तद्भवति नेतरत्॥ [ ३।२३ ]

अस्या कारिकाया भाष्यसंमतोऽर्थः–"भूततः परमार्थतः सृज्यमानेऽपि वस्तुनि। अभूततोऽपरमार्थतः सृज्यमाने वस्तुनि। वा इव ( अत्रेवार्थे वाशब्दः )। मायाविना सृज्यमाने वस्तुनीव। समा तुल्या श्रुतिः सृष्टिश्रुतिः। "तत्तेजोऽसृजत" इत्यादिश्रुतौ सृष्टौ सत्यत्वविशे-षणानुपलब्धेर्मायामयसृष्ट्याऽपि सृष्टिश्रुतिरुपपद्यते। अतः श्रुतिषु सर्वत्र गौणी सृष्टिश्रुतिः, मुख्या सृष्टिस्त्वद्वैतिनामप्रसिद्धा। लोकप्रसिद्धत्वेऽपि श्रुतौ तदुपादानं निष्फलम्। तथा च सृष्टि-श्रुतेर्गौणत्वेनाप्युपपत्तौ "एकमेवाद्वितीयम्" इत्यादिश्रुत्या यन्निश्चित युक्तियुक्तं च तदेवाद्वैतं श्रुत्यर्थो भवति, न त्वितरत् सृष्टिश्रुतिप्रतिपादितं द्वैतम्" इति। "पूर्वमद्वैते व्यवस्थिते सृष्टिश्रुते-रप्रामाण्यमाशङ्क्यान्यपरत्वेन समाहितम्, इदानीं तु सृष्टिश्रुत्यक्षरविरोधमाशङ्क्य सृष्टिश्रुतेर्गौण-त्वेनेति न पुनराशङ्कापरिहारायुक्तत्वम्" इति च।

भट्टाचार्यसमतं व्याख्यानं तु–"भूततः सतः, अभूततोऽसतो वाऽपि सृज्यमाने वस्तुनि समा श्रुतिः—"सदेव सौम्येदमग्र आसीत्", "असद्वा इदमग्र आसीत्ततो वै सदजायत" इति। किमत्र प्रतिपत्तव्यम्? यद्युक्तियुक्तं निश्चितं च भवति तदेवोपादेयं भवति नेतरदयुक्तियुक्तम्। यथाऽधस्ताद् युक्तिर्दर्शिता दर्शयिष्यते चोपरिष्टादपि तथा परमार्थत सृष्टिरेव नास्तीति भावः। का तर्हि सृष्टिश्रुतेर्गतिः? अस्त्यस्या अपरोऽभिप्रायः। "उपायः सोऽवताराय" [ ३।१५ ] इति प्रागेवावोचदाचार्यो वक्ष्यति चानन्तरकारिकायाम्। श्रुतेर्युक्तिर्गरीयसीत्यभिप्रैतीहाचार्यः। स्मर्यते च वसिष्ठेन—

अपि पौरुषमादेयं शास्त्रं चेद्युक्तिबोधकम्।
अन्यत्त्वार्षमपि त्याज्य भाव्यं न्यायैकसेविना॥

युक्तियुक्तमुपादेयं वचनं बालकादपि ।
अन्यत्तृणमिव त्याज्यमप्युक्तं पद्मयोनिना ॥ [यो० वा० २।१८।२-३] इत्यादि।

तत्र भाष्यमते—"तत्तेजोऽसृजत" इत्यादिश्रुतौ परमार्थभूता सृष्टिर्मायया वेति संदिह्य माययैवेति निर्णयः । परमार्थभूतसृष्टिस्वीकारेऽद्वैतश्रुतिविरोधात् । सृष्टिश्रुतेर्गौणत्वेनाप्युपपत्तेः । न च सृष्टिश्रुतेर्मुख्यत्वमाश्रित्य तद्विरोधेनाद्वैतश्रुतेरेव किमिति नान्यपरत्वमुच्यत इति वाच्यम्, अद्वैतस्य युक्तियुक्तत्वात् । युक्तिस्त्वद्वैतस्य निरवयवत्वविभुत्वादिरूपा । सृष्टेस्तु न युक्तियुक्तत्वम् । तथास्वभावस्य वस्तुनः स्वतः परतो वाऽन्यथाभावासम्भवात् । तदतिरेकेण च सृष्टेरयोगात् । अतः श्रुतियुक्त्यनुगृहीतमद्वैतमेव श्रुत्यर्थः । सृष्टिश्रुतिस्तु गौणया वृत्त्या मायामयसृष्टिपरा । तादृशसृष्टिप्रतिपादनं तु तदपवादेनाद्वैतप्रतिपादनायेति । वृत्तिकारमते तु सदुपादानिका सृष्टिरसदुपादानिका वेति संदेहे नास्ति सृष्टिरिति निर्णयो न घटते, संदेहाविषयत्वात् । न चासदुपादानकत्वेनैव सृष्टेरसत्त्वमर्थात्सेत्स्यतीति वाच्यम्; बीजादिध्वंसादसतः सदङ्कुरादिजन्माभ्युपगच्छता बौद्धाना तदसिद्धेः । किञ्च, असदुपादानकत्वस्य—"कथं नु खलु सौम्यासतः सज्जायेत" इति श्रुत्या युक्त्या च निरस्तस्य "सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम्" इति श्रुतिप्रतिपादितेन युक्तियुक्तेन च सदुपादानकत्वेन तुल्यबलत्वासंभवेन संदेहाऽसंभवोऽपि । किञ्च, भवन्मते निश्चितं युक्तियुक्त चेति समुच्चयानुपपत्तिः । तथा हि—यदेव युक्तियुक्तं तदेव निश्चितं भवतीति रीत्या युक्तियुक्तत्वस्य निश्चितत्वप्रयोजकत्वात् । यदेव युक्तियुक्त तदेव ग्राह्यमित्यनेनैव विवक्षितार्थोपपत्तौ निश्चितमित्युक्तेर्वैयर्थ्याच्च । भाष्यमते तु श्रुत्या निश्चितं युक्तियुक्त चेत्यद्वैतस्य श्रुत्यर्थत्वसाधकहेतुद्वयसमुच्चयोपपत्ति । किञ्च, भवन्मते "सदेव सौम्येदमग्र आसीत्", "असद्वा इदमग्र आसीत्" इति श्रुत्योः समत्व नोपपद्यते, प्रागुक्तरीत्या श्रुत्यन्तरबाधाबाधाभ्या विशेषवत्त्वात् । तथा च समा श्रुतिरिति वाक्यानुपपत्तिः । यदप्युक्त भवता—"श्रुतेर्युक्तिर्गरीयसीत्यभिप्रैतीहाचार्यः" इति, तदपि श्रुतिस्मृतियुक्तिविरुद्धम् । तथा हि श्रूयते—"नैषा तर्केण मतिरापनेया प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठ" [कठ०] इति, "तं त्वौपनिषद पुरुष पृच्छामि" इति च स्मर्यते च—"तर्काप्रतिष्ठानात्" इत्यादिना व्यासेन, "अचिन्त्याः खलु मे भावा न तास्तर्केण योजयेत्", "वेदशास्त्राविरोधिना । यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः" इति मनुना च । युक्तिश्च श्रीहरिणा प्रदर्शिता वाक्यपदीये ब्रह्मकाण्डे—"यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः । अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते ॥" इति । यत्तु भवता वसिष्ठवचन युक्तेः श्रुतिबलवत्त्व उपन्यस्तं तत्तु युक्तिमहत्त्वप्रख्यापकतया न भवदर्थसाधकम्, संभावनार्थकाऽपिशब्दघटितत्वात् । युक्ति-

विरोधे आप्तवचनस्यापि त्याज्यत्वं संभावितम्, किमुत पौरुषेयवचनस्येति। अपि गिरिं शिरसा भिन्द्यादितिवत्। न हि संभावनाविषयीभूतोऽर्थस्तथ्यो भवति।

चतुर्थप्रकरणे तृतीयकारिकाव्याख्यावसरे भाष्यकृता वैभाषिकाभिमतः सत्कार्यवादो योगाचाराणामसत्कार्यवादश्च साख्यनैयायिकादिमतवन्नोपन्यस्त इति न्यूनत्वेन व्याख्यादौर्बल्य संभाव्यते वृत्तिकारेणेति गम्यते–"दृश्यतामत्र वृत्तिकृतो व्याख्यानम्" इत्युक्त्या। तदपि न, सर्वसत्कार्यवादमूलभूतस्य साख्यदर्शनस्योपन्यासेन गतार्थत्वात्। असत्कार्यवादस्य चोपलक्षणतया तत्र न्यायमतत्वेनोपन्यासात् परिगणनाभावेनाविरोधादिति।

तथा चैवं शारीरकभाष्यकारकारिकाभाष्यकारयोर्भेदहेतुषु वृत्तिकारोक्तेषु पूतिकूष्माण्डीकृतेष्वप्रत्यूहा भगवती प्रसिद्धिरभेद साधयिष्यति। किञ्च, श्रीशङ्करभगवत्पादोक्तपद्धत्या प्रकरणचतुष्टयात्मकस्यास्य ग्रन्थस्यैकवाक्यतयैकग्रन्थत्वसंभवे ग्रन्थभेदकल्पना वाक्यभेदभिया नोचिता। किञ्च, प्रकरणचतुष्टयस्य भिन्नग्रन्थत्वे नियमेन सहस्थितिरूपं साहचर्यम्, नियतः पौर्वापर्यरूपः क्रमः, नियतक्रमिकमध्ययनमित्येतत्सर्वं नोपपद्यते।

अथ माण्डूक्योपनिषदो द्वादशगद्यभागेभ्यः प्राक् कारिकाणा सत्त्वं गद्यभागास्तु पश्चादुपनिबद्धा इति कारिका न गद्यभागव्याख्यारूपा इति मतं समीक्ष्यते। तत्र प्रथमं हेतुद्वयमुपन्यस्त तैः–१ "अत्रैते श्लोका भवन्ति" इति वाक्योपन्यासः, २ गद्यभागाना व्याख्यासापेक्षाणामव्याख्यान चेति। तथा हि—उपनिषत्सु तत्र तत्र "अत्रैते श्लोका भवन्ति" इति वाक्यमुपन्यस्यते। तेषा च मन्त्ररूपाणा श्लोकाना तेभ्यः प्राक् सत्त्वमवसितमेव। किञ्च, उद्ध्रियमाणस्योद्धरणाधिकरणग्रन्थप्राक्सत्त्व दृष्ट तत्र तत्र, युक्तं चेति। अत्रेद वक्तव्यम्—उपनिषत्सु तत्र तत्र पठ्यमानस्य "अत्रैते श्लोका भवन्ति" इति वाक्यस्य "प्रमाणभूताः" इति शेषः। ततश्च तेषा श्लोकाना प्राक्सत्त्वं युक्तम्। अत्र तु "व्याख्याभूताः" इति शेषः। ततश्च कथं प्राक्सत्त्वं कारिकाणामस्माद्वाक्यात्प्रतीयत इति विमृश्यताम्। न चात्र प्रमाणभूता इत्यस्यानध्याहारे व्याख्याभूता इत्यस्याध्याहारे च किं विनिगमकमिति वाच्यम्, प्रागुक्तरीत्या कारिकाणामासा गौडपादकृतत्वावधारणेनानुपनिषत्त्वात्। किञ्च, कारिकापदप्रयोगोऽप्यत्रत्यश्लोकानामनुपनिषत्त्वं ख्यापयति। तथा हि–क्रियन्त इति कारिका इति व्युत्पत्त्या कारिकापद योगरूढ मनुष्यकृतश्लोके। श्लोकपद तु मन्त्रेऽपि। कारिकापद तु न क्वचिन्मन्त्रश्लोके प्रयुक्त दृश्यते। कारिकापद च–"धात्वर्थनिर्देशे ण्वुल् वक्तव्यः" [ ३।३।१०८ वा० ] इति वार्त्तिकेन कर्मणि ण्वुलि निष्पद्यते, "कृत्यल्युटो बहुलम्" [ ३।३।११३ ] इत्यत्र बहुलमिति योगविभागात्। प्रकरणचतुष्टयात्मक-

स्यास्य ग्रन्थस्यैकस्य श्रीगौडपादकृतत्वम्, श्रीगौडपादाना श्रीगोविन्दपादगुरुत्वम्, गोविन्दपादानां च श्रीशङ्करभगवत्पादगुरुत्वमिति सर्वमपि-"...जलनिधेर्वेदनाम्नोऽन्तरस्थम्...कारुण्यादुद्धारामृतमिदम्... यस्तं पूज्याभिपूज्यं परमगुरुममुं पादपातैर्नतोऽस्मि" इत्येतद्भाष्यश्लोकवाक्यादवगम्यते। यैस्तु श्रीगौडपादो न श्रीगोविन्दपादगुरुरिति सप्रमाणावहेलमुच्यते तदा तैरेव श्रीगोविन्दपादगुरुः सप्रमाणं निर्देष्टव्यः। श्रीशङ्कराचार्याः स्वपरमगुरून् श्रीगौडपादान् तन्निर्मितान् ग्रन्थांश्च न विदन्ति स्वगुरूपदेशात् स्वपरमगुरुसाक्षात्काराद्वा, आधुनिका अपि चतुष्पीठाधीश्वरा आचार्यवंशपरम्पराया अविच्छेदेनायातास्तन्न विदन्ति, तेषामविच्छिन्ना प्रसिद्धिर्नात्रार्थे प्रमाणम्; श्रीमैक्समूलरादिकल्पना चात्रार्थे प्रमाणमित्यवहितैर्विचार्यमाणे चेखिद्यते चेतः।

द्वितीयोऽपि हेतुर्न संभवति, कारिकाणा गद्यभागेषु प्रमाणत्वेनोद्धरणानङ्गीकारात्। प्रत्युत प्रागुक्तपद्धत्या व्याख्यारूपा इत्यध्याहारेण गद्यभागानामेव व्याख्येयतया प्राक्सत्त्वसंपत्तेः। यत्तूक्तम्—व्याख्यासापेक्षाणा गद्यभागानामव्याख्यान कारिकाणामव्याख्यारूपत्वे हेतुरिति। उदाहृतं च यथा प्रथमयोर्गद्यबन्धयोर्न किञ्चित् कस्याञ्चित् कारिकायामस्तीति। तदपि न शोभनम्। तथा हि—प्रथमे गद्यबन्ध ओङ्कारस्य सर्वात्मकत्वमुक्तम्। द्वितीये तु सर्वात्मकस्योङ्कारस्य ब्रह्मरूपत्वं ब्रह्मणश्चात्मरूपत्वमात्मनश्च चतुष्पात्त्वमिति। तदेतद्गद्यबन्धद्वयमुद्देशवाक्यरूपम्। नाममात्रेण वस्तुसकीर्तनमुद्देश इति चोद्देशलक्षणम्। उद्देशवाक्यं च सर्वत्रैव ग्रन्थे स्वयमेव मूले व्याख्यायत इति सर्वत्र दृष्टम्। व्याख्यातं चात्राप्यग्रे स्वयमेवोपनिषदाऽऽत्मनः प्रणवस्य च चतुष्पात्त्वोपपादनेनेति। किञ्च, ओङ्कारस्य ब्रह्मत्वसर्वात्मकत्वे कारिकाभ्या षड्विंशसप्तविंशीभ्या व्याख्याते। प्राक् तु न व्याख्याते, अग्रे व्याख्यानस्य मूलानुरोधेनावश्यकत्वात्; तेनैव गतार्थत्वात्। किञ्च, कारिकाणा बह्वर्थविस्तरत्वेन गद्यभागाना च सक्षिप्तशब्दत्वेन यथाक्रमं व्याख्यारूपत्वं व्याख्येयत्वं चावगम्यते। किञ्च, कारिकाभ्यः पश्चाद् गद्यभाग उपनिबद्ध इत्यत्र कि फलम्? केऽर्थाः कारिकासूपेक्षिता यदर्थ गद्यभाग आरब्धः। गद्यभागोपनिबन्धस्य फल मृग्यमाणमपि भवन्मते न घटते।

यत्तु सप्ताङ्ग एकोनविंशतिमुख इति पदद्वयस्य कारिकास्वस्पष्टत्वेन न कारिका गद्यभागस्य व्याख्यानमिति। तदपि फल्गु; सप्ताङ्गत्वस्य भाष्यप्रदर्शितश्रुतिप्रसिद्धत्वात्। एकोनविंशतिमुखत्वमपि सूक्ष्मशरीरस्य श्रुतिस्मृतीतिहासपुराणप्रसिद्धत्वेन प्रसिद्धमेवेति व्याख्यानोपेक्षणात्। यदद्य भवता दुरूहं मन्यते तत्तदानीमपि दुरूहमासीदिति न वक्तुं पार्यते—"जन्मसस्कारविद्यादेः शक्तेः स्वाध्यायकर्मणोः। ह्रासदर्शनतो ह्रासः संप्रदायस्य मीयताम्॥" इति न्यायात्। किञ्चेदं

व्याख्यानं तात्पर्यविवरणं न तु पदार्थविवरणमिति सुप्रतीतमेवेति कः प्रश्नावसरः पदव्याख्योपेक्षायाः। यदप्युक्तम्—"गद्यभागे वैश्वानरशब्द एव दृश्यते, कारिकासु तु विश्वशब्द एव। किंनिमित्तकोऽत्र भेदः? व्याख्याकारः खलु यथोपलब्धं शब्दं व्याचक्षीत न पुनस्तं स्वैरं परावर्तयेत्। न पुनर्विश्ववैश्वानरशब्दौ पर्यायौ। दुर्विवरणमिदम्। छन्दोनुरोधेनेत्यश्रद्धेयम्" इति; अत्रेद वक्तव्यम्—वैश्वानरशब्दार्थस्य वैश्वानरशब्देनैव व्याख्यानं नोचितम्। न च विश्ववैश्वानरशब्दयोः पर्यायत्वाभावः, पर्यायत्वाभ्युपगमात्। तथा हि–विश्वश्चासौ नरश्चेति विश्वानरः। निपातनात्पूर्वपदस्य दीर्घत्वम्। विश्वानर एव वैश्वानरः ( स्वार्थे प्रज्ञाद्यण् ) इति व्युत्पत्त्या विराट्पुरुषवाचकत्वात्। विश्वशब्दस्यापि सर्वात्मकतद्वाचकत्वात्। दृश्यन्ते च केवलपूर्वपदमात्रप्रयोगास्तस्मिन्नेवार्थे देवदत्तसत्यभामाभीमसेनपदादिषु। दृश्यते चात्रार्थे विश्वशब्दो नृसिंहोत्तरतापिन्यादिषु। न च तत्र नपुंसकत्वमत्र तु पुंस्त्वमिति भेद इति वाच्यम्, विराजो जगदात्मकत्वेन जगद्विशेषणत्वे क्लीबत्वं पुरुषविशेषणत्वे पुंस्त्वमिति भेदसंभवात्। यदप्युक्तं गद्यबन्धेषु स्थानत्रयं निर्दिष्टमवस्थात्रयरूपम्, कारिकासु तु तन्निर्देशो न कृत इति। तदप्यशोभनम्; धामशब्देन कारिकाया [ १।५ ] तन्निर्देशात्। तदेवं कारिकाणा व्याख्यात्वेऽक्षतेऽनादिभूता माण्डूक्योपनिषद् गद्यबन्धरूपेति सिद्धम्। यतो नैषा गद्यबन्धाना कर्ता कश्चिदप्यद्यावध्युपलभ्यते। उपलभ्यते तु कारिकाणा कर्ता श्रीगौडपाद इति लोके। ततश्च गद्यबन्धाना मूलभूता बृहदारण्यकाद्युपनिषदः कारिकाश्चेति वचनममूलमेवेत्यलं प्रसक्तानुप्रसक्तकथया।

अथाधुना प्राधान्येन गौडपादीयदर्शनमेव निरूप्यते। तत्र प्रथमं गौडपादीयदर्शनस्य सौगतमतप्रभवत्वमेव श्रीभट्टाचार्यादिभिर्भ्रान्तिप्रतिपन्न निराकृत्य तत्त्व तस्य व्यवस्थाप्यते। तत्र प्रथमं तावद् बौद्धैरेव गौडपादकारिकाणा वेदान्तग्रन्थत्वमुच्यत इति सौगतप्रभवत्वं भवत्प्रतिज्ञातं तद्विरुद्धम्। तथा हि—औपनिषद मतं विवेचयता शान्तिरक्षितेनाऽऽगमशास्त्रस्य दश कारिका उद्धृताः। पञ्जिकाया च कमलशीलेनेदमागमशास्त्रमुपनिषच्छास्त्रमित्युक्तम्। यत्तु गौडपादीयकारिकासु बौद्धोक्तकारिकासाम्य युक्तिसाम्यं शब्दसाम्यं च न तदपि सौगतप्रभवत्वसाधकं तस्य। तत्तद्बौद्धाना तदितरबौद्धोक्तयुक्तिभिर्निराकरणस्य कण्टकेनैव कण्टकमिति रीत्याऽऽचार्यपादैः समाश्रितत्वात्। तद्युक्त्यैव तन्मतप्रतिषेधपुरःसरं स्वमतप्रसाधनस्य च कृतत्वात्। वाद्युक्तयुक्तिभिरेव स्वमतप्रसाधने हि परा प्रौढिः सुकरश्च वादिनिग्रहः। तदुक्तं कारिकाभाष्यकृद्भिः श्रीशङ्करभगवत्पादैः–"प्रज्ञप्तेः सनिमित्तत्वम्' इत्याद्येतदन्तं विज्ञानवादिनो बौद्धस्य वचनं बाह्यार्थवादिपक्षप्रतिषेधपरमाचार्येणानुमोदितम्। तदेव हेतुं कृत्वा तत्पक्षप्रतिषेधाय तदिदमुच्यते—तस्मा-

दित्यादि" [ ४।२८ ] इति। अग्रे [ ४।८७ ] च—"एवमन्योऽन्यविरुद्धत्वात् संसारकारणानि रागद्वेषास्पदानि प्रावादुकानां दर्शनान्यतो मिथ्यादर्शनानि तानीति तद्युक्तिभिरेव दर्शयित्वा चतुष्कोटिवर्जितत्वाद् रागादिदोषानास्पदं स्वभावशान्तमद्वैतदर्शनमेव सम्यग्दर्शनमित्युपसहृतम्। अथेदानीं स्वप्रक्रियाप्रदर्शनार्थं आरम्भः" इति। अय भाव.—पूर्वं परकीयरीत्या परमतनिराकरणमुखेनात्मतत्त्वमवधारितम्। अथाधुना स्वप्रक्रिययाऽवस्थात्रयोपन्यासमुखेनापि तदवधारयितुमारम्भ इति। तथा च न सौगतप्रभवत्वं कारिकाणाम्।

यदपि सौगतप्रभवत्वप्रसाधनाय काश्चनागमशास्त्रस्य कारिकाः समुद्धृताः। तद्यथा—२।३१–३२, ३५, ३८, ४४, ४६ इति। तत्र २।३१ कारिकाव्याख्यावसर उक्तं वृत्तिकारैः—'गन्धर्वनगरोपमा दुर्लभा प्राग्बौद्धेभ्यः" इति। तन्न, "असत्तु मृगतृष्णाभं गन्धर्वनगरं यथा" इति "स्त्रियाम्" इति सूत्रभाष्ये व्याघ्रभूतिवचनस्योल्लेखात्। व्याघ्रभूतिश्च पाणिनिशिष्य इति त्रिमुनिकल्पतरुकारेण वेङ्कटाचलेन निर्णीतम्। किञ्च, योगवासिष्ठे—"जीवदेतदवस्थाकं स्थितं पश्यति देहकम्। असन्तमेव गन्धर्वपुरं स्वप्ननरं यथा॥ गन्धर्वनगराकारमपि स्वप्ननरोपमम्। जगद्दुःखाय दुःखस्य कात्र युक्तिः परिक्षये॥" [ निर्वाण० ४१।५०–५१ ] इति गन्धर्वनगरोपमादर्शनात्।

यत्तु "न निरोधो न चोत्पत्तिः" इति कारिकायाः सौगतप्रभवत्वं प्रदर्शयितुं बहूनि सौगतवचनान्युपन्यस्तानि तदपि न। दृश्यते हि ब्रह्मबिन्दूपनिषदि नवमो मन्त्रः—"न निरोधो न चोत्पत्तिर्न बन्धो न च शासनम्। न मुमुक्षुर्न वै मुक्तिश्चेत्येषा परमार्थता॥" इति। ब्रह्मबिन्दूपनिषदोऽपि सौगतवचनमेव मूलमिति त्वश्रद्धेयमेव। किञ्च, निरोधोत्पत्त्यादिपदार्थानामभावस्तत्र तत्रोपनिषत्सु प्रतिपादित एवेति तदेव मूलमादायेयं गौडपादकारिका प्रवृत्तेति वक्तुं शक्यते।

यत्तु २।३५ कारिकायां प्रपञ्चोपशमशब्दं दृष्ट्वाऽयं शब्दो बौद्धागमादायातः कारिकायामित्युक्तम्, तदपि तदा युज्यते यदि प्रागुक्तरीत्याऽस्मर्यमाणकर्तृकत्वेन सर्वेषामास्तिकनास्तिकदर्शनकृतामविप्रतिपन्नया प्रसिद्धया च गद्यबन्धानामुपनिषत्त्वं न सिद्ध्येत। सिद्धे तु तेषामुपनिषत्त्वे तत एव प्रपञ्चोपशमशब्दः कारिकायां बौद्धैश्च परिगृहीत इति युज्यतेऽस्माभिर्वक्तुम्। गद्यबन्धानामनुपनिषत्त्वानुमानं तु भवतोऽविप्रतिपन्नसार्वलौकिकप्रसिद्धिबाधितम्।

यत्तु २।३८ कारिकायां मूलम्—"शून्यमाध्यात्मिकं पश्य शून्यं पश्य बहिर्गतम्" [म० वृ०, पृ० ३४८] इति बौद्धवचनमुपन्यस्तम्, तदप्यशोभनम्, कारिकायां हि तत्त्वस्याध्यात्मिकत्वं बाह्यत्वं चोक्तं न तु शून्यस्येति कः प्रसङ्गोऽत्र बौद्धवचनस्य।

यदपि च २।४४, ४६ कारिकयोर्बौद्धवचास्युपन्यस्य तोलनेन सौगतप्रभवत्वसमर्थनम्, तदपि सौगतमतपक्षपातनिबन्धनम्। तथा हि—किं कारिकातः प्राग्योगावस्थाबोधकानि वैदिकदर्शनानि नासन्? किं वा वैदिकाना योगावस्थातो बौद्धवचोवर्णितयोगावस्थाना वैजात्यम्? यत्कारिकाकृद्भिर्गृहीतमित्यवधानेनालोचयन्तु भवन्तः। किञ्च, प्रागुक्तभाष्यकृत्प्रदर्शितपद्धत्या तत्र तत्र बौद्धमतप्रत्याख्यातुर्गौडपादस्य दर्शन कथं बौद्धमतप्रभवमित्यपि विचिन्तनीयमेव।

ऋजुवक्रादिकाभासमलातस्पन्दितं यथा।
ग्रहणग्राहकाभास विज्ञानस्पन्दितं तथा॥ [ ४।४७ ]

इयं कारिका वृत्तिकारेण विज्ञानवादपरतया व्याख्याता। वासनया क्षुब्धं विज्ञानं परिणममान ग्राह्यग्राहकाभास भवतीति। वृत्तेरवतरणिकाया चोक्तम्—विज्ञानवादाद्गौडपादीयदर्शने न कोऽपि मौलिको भेद इति। तदपि न विचारसहम्, श्रीशङ्करभगवत्पादैरविद्यया विज्ञानस्पन्दस्यारोपितस्य गौडपादाभिप्रेतत्वेन वर्णनात्। युक्त च भाष्यकृद्व्याख्यानम्। तथा हि—"जात्याभास चलाभासम्.... अजाचलमवस्तुत्वम्", "एवं न जायते चित्तम्" [ ४।४५–४६ ] इति कारिकयोः कण्ठतो विज्ञानस्याजत्वाचलत्ववर्णनात्। तथा च विज्ञानवादे ग्राह्यग्राहकाकारो विज्ञानपरिणामो वासनया। स च वास्तवोऽध्यात्मम्। बहिस्त्ववास्तवः। अद्वैतवादे तु विज्ञानस्य विवर्त्तो मायायास्तु परिणामः कारणसाजात्यादनिर्वाच्य इत्यौपनिषदमेव गौडपादीयं दर्शन न तु सौगतविज्ञानवादानुगतम्।

यत्तु वृत्तेरवतरिकाया भट्टाचार्येण ३।३५–३७, ४६ इत्यादिकारिका आश्रित्य निगृहीतं निश्चलमलीयमान च मन एव ब्रह्मेति गौडपादीयं दर्शनमुक्तम्, तन्न सभवति, "अन्नमयं सौम्य मनः" इत्यादिश्रुतिविरोधात्। न हि ब्रह्मणोऽन्नमयत्वं श्रुतिसमतम्। उद्धृता गौडपादकारिकास्तु यदा समाधौ निगृहीत निश्चलं मनस्तदा ब्रह्म संपद्यत इति ब्रह्मणः परिचायकतया तादृशं मनो वर्णयन्तीत्यवधेयम्। यद्यपि चित्तशब्दः कारिकासु तत्र तत्र दृश्यते तथापि स यथायोग क्वचिन्मनसो बोधकं क्वचित्तु नित्यविज्ञानस्येति न मनोरूपत्वं ब्रह्मणः।

यदपि तत्रैवोक्त वृत्तिकारेण—गौडपादस्य समाधौ ब्रह्मदर्शनं योगिनामात्मदर्शन योगाचारविज्ञानवादिना च विज्ञप्तिमात्रतादर्शन चाभिन्नमेवेति। तदपि न गौडपादस्य योगाचारानुगतत्वसाधकम्, समाधिदर्शनस्य सर्वेषामेकरूपत्वात्। बौद्धेभ्यः प्राक्समाधिप्रकारस्तत्र स्वरूपसाक्षात्कारो वा कस्यापि नासीदित्यस्याश्रद्धेयत्वात्।

ख्याप्यमानामजातिं तैरनुमोदामहे वयम् ।
विवदामो न तैः सार्द्धमविवाद निबोधत ॥ [ ४।५ ]

अनया कारिकया बौद्धान् परामृश्य गौडपादोऽजातिवादमेव समर्थयते । नात्र वैदान्तिकानां किमप्यस्तीति वृत्तिकारः संमनुते । तत्रैतन्मतप्रख्यापनात्प्राग् आदितः कारिकापञ्चकवाक्यार्थ-निर्णय आवश्यकः, येन विना भवत्ययं विभ्रमः । तत्र प्रथमा कारिका वृत्तिकारेणेत्थ व्याख्याता— "य आकाशकल्पेन आकाशसदृशेन ज्ञेयाभिन्नेन ज्ञेयाद् विषयादभिन्नेनानन्येन ज्ञानेन । गगनो-पमान् आकाशसदृशान् धर्मान् पदार्थान् सबुद्धस्तं द्विपदा मानवाना वरं श्रेष्ठमह वन्दे" इति । ज्ञान आकाशकल्पत्व चासङ्गत्वरूप श्रुतिकारिकाबौद्धाचार्यवचोभिः साधितम्, ज्ञाने ज्ञेयाभिन्नत्व च विज्ञानवादिना सौगताना वचोभिः । धर्माणा ( पदार्थानाम् ) गगनोपमत्वं चापरिच्छेद्यत्व-निःस्वभावत्वादिना बौद्धवचोभिः समर्थितम् । धर्मशब्दः पदार्थवचनः सौगतग्रन्थेषु श्रुति-न्यायसूत्रभाष्ययोगसूत्रनिरुक्तादिषु ब्राह्मणग्रन्थेष्वपि प्रयुक्त इति । श्रीगौडपादश्चाद्वैतप्रकरणे वैतथ्ये वा पदार्थवचन भावशब्दं प्रयुङ्क्ते, अलातशान्तौ तु तत्रैवार्थे धर्मशब्द द्वाविंशतिकृत्वः प्रयुक्तवान् स्वस्य बौद्धमतश्रद्धामभिद्योतयितुम् । "सौगतभावभावितमिह चित्तमाचार्यस्यालात-शान्तौ" इति चोक्तम् । इदं चाप्युक्तम्—य आकाशकल्पेन ज्ञेयाभिन्नेन ज्ञानेन गगनोपमान् धर्मान् सबुबुधे तं वन्द इति बुद्धमेव द्विपदा वर वन्दते श्रीगौडपादः । बुद्धस्यैव ज्ञेयाभिन्न-ज्ञानेन गगनोपमधर्मसंबोधस्य बौद्धागमप्रसिद्धत्वात् । ईश्वरस्य तु नारायणस्य ज्ञेयाभिन्नज्ञानेन तथाविधधर्मसंबोद्धृत्व न क्वापि प्रसिद्धमिति । द्विपदावरशब्दश्च बौद्धग्रन्थेषु बुद्धे, महाभारते तु मनुष्ये प्रयुक्त इति नेश्वरे नारायणे प्रयोगार्ह इति चेति । भाष्यकारस्तु व्याचष्टे–य ईश्वरो ( वस्तुगत्या ) ईश्वरावतार इति यावत् । नारायणाख्यः ( इदानीं नारायणेति नाम्नाऽऽख्यात ऋषिः ), आकाशकल्पेन ( विभुत्वादिना सादृश्यमित्यानन्दगिरिः ) ज्ञेयाभिन्नेन ज्ञेयात्मस्वरूपा-व्यतिरेकेन ज्ञानेन ( अभेदे तृतीया ) गगनोपमान् ( अत्रापि विभुत्वादिनैव सादृश्यम् ) धर्मान् जीवान् आत्मनः संबुद्धः, ज्ञेयात्माभिन्नज्ञानाभिन्नान् जीवात्मनो बुबुधे तं वन्द इति । अय भावः—यज्ज्ञेयमात्मतत्त्वं तज्ज्ञानस्वरूपमेव न तु तदधिकरणम् । आकाशवत्सर्वगत च तदेव च जीवस्वरूपमिति नारायण ऋषिर्बुबुध इति । अयं च बोधो नारायणऋषेः पुराणप्रसिद्ध्याऽ-वगव्यः । तथा चास्मिन् ऋषौ द्विपदावरशब्दप्रयोगोऽपि घटत एव । नरनारायणावृषी भगवतो नारायणस्यावताराविति च सुप्रसिद्धं पुराणेष्विति नेह प्रतन्यते ।

अथेदानी विमृश्यते—अस्मिन् व्याख्यानद्वये परस्परविरोधिनि किं ग्राह्यमिति । तत्र भाष्य-

कृद्व्याख्यानमेव शोभन भाति। तथा हि—भवन्मते यो ज्ञानेन धर्मान् संबुद्ध इत्यत्र तृतीयार्थो नोपपद्यते, ज्ञानस्य पदार्थसबोधस्य चैकत्वेन ज्ञानस्य तत्करणत्वानुपपत्तेः। न च ममाप्यभेद एव तृतीयार्थ इति वाच्यम्, वैयर्थ्यात्। तथा हि–धर्मे ज्ञानाभेदान्वये वैयर्थ्यम्, ज्ञेयाभिन्नेन ज्ञाने-नेत्येतल्लब्धत्वात्। ज्ञेये ज्ञानाभेदं विना ज्ञाने ज्ञेयाभेदासभवात्। सबोधे तृतीयान्तार्थान्वये तु वैयर्थ्य स्पष्टमेव। किञ्च, भवन्मते ज्ञेयाभिन्नेनेति विशेषणवैयर्थ्यम्। ज्ञानेन धर्मान् सबुद्ध इत्यनेनैव ज्ञानाभिन्नान् पदार्थान् सबुद्ध इति सौगताभिप्रायसिद्धेः। किञ्च, भवन्मते "आकाश-कल्पेन", "गगनोपमान् धर्मान्" इति चाकाशसादृश्योक्तिरसंगता स्यात्, ज्ञानज्ञेययोरभेदानुप-पादकत्वात्, ज्ञानपरिणामत्वस्यैव ज्ञेये तदभेदोपपादकत्वात्। भाष्यकारस्य तु ज्ञानात्मनोरभेदं सभावयितुं विभुत्वादिना सादृश्योक्तेः संभवात्। न च ममापि बौद्धागमप्रसिद्धनिःस्वभावत्वा-दिना सादृश्यमुभयत्र वर्तमानमभेदसाधकमिति वाच्यम्, वादिप्रतिवाद्युभयासिद्धेर्दृष्टान्तत्वा-सभवात्। सर्वसमतो हि दृष्टान्तो भवति। जीवस्य विभुत्वमपि यद्यपि न बौद्धागमप्रसिद्धं तथा-प्यस्य वेदान्तप्रकरणत्वेन श्रुतिप्रसिद्धया तदुपन्यासस्य वैदिकान् प्रति कर्तुं शक्यत्वात्। तदित्थ न बौद्धाभिप्रेतार्थसाधिकेय कारिकेति।

द्वितीया (४।२) कारिका चैवं व्याख्याता वृत्तिकारेण–अस्पर्शयोगः सर्वसत्त्वसुखो हितोऽविवादोऽविरुद्धश्चास्मन्मतेन येन बुद्धेन देशित उपदिष्टस्तं नमामीति। इदमप्युक्तम्–अविवादोऽविरुद्धश्चेत्युक्त्या स्फुट व्यज्यते नायं योग आचार्यस्य स्वकीय आम्नायेऽपि तूपादी-यते परकीयादिति। प्रसिद्धश्चास्पर्शयोग एष तत्र तत्र बौद्धग्रन्थेष्विति च। अत्रेद वक्तव्यम्–किमस्पर्शयोगशब्दो बौद्धानामेव प्रसिद्धो न तु वैदिकानाम्? आहोस्विदर्थ एवायमप्रसिद्धो वैदिकानाम्? तत्र नाद्यः, व्याकरणनिष्पाद्यशब्दाना यौगिकाना तदर्थे योगरूढाना बौद्धमात्र-प्रसिद्धत्वोक्त्यसंगतेः। नापि चरमः, असंप्रज्ञातशब्देन तदर्थस्य वैदिकानामपि प्रसिद्धेः। न चासप्रज्ञाते कस्यापि विवादो विरोधो वेत्यस्य युक्तत्वात्। तत्रैव चाद्वयं ब्रह्म गृह्यत इत्यस्पर्श-योगशब्देन ब्रह्मोक्तं भाष्यकृता।

ब्रह्मणोऽद्वयत्वं जात्यभावे सिद्ध्यतीत्यजातिसमर्थनाय जातौ वादिना परस्परविवादं प्रदर्शयति तृतीयकारिकया (४।३)। कथ वादिना परस्परविवादेनाजातिसिद्धिरिति दर्शयितुं च विद्यते चतुर्थी कारिका (४।४)। अत्र वृत्तिकारोऽद्वया इति पाठमाद्रियते, भाष्यकारस्तु द्वया इति। तत्र वृत्तिकारव्याख्यानम्—भूत किञ्चिन्न जायते सत्त्वादेव। अभूतमपि किञ्चिन्न जायतेऽसत्त्वादेवेत्येवंरीत्या सत्कार्यवादिभिरसत्कार्यवादिभिश्च सह विवदन्तस्ते प्रसिद्धा अद्वया

विज्ञानाद्वयवादिनो बौद्धा अजातिं ख्यापयन्तीति । भाष्यकृतस्तु—भूतं किञ्चिन्न जायते, अभूतं किञ्चिन्न जायत इत्येवं परस्परं प्रतिविरुद्धं वदन्तस्ते प्रागुक्ता द्वयाः सत्कार्यवादिनोऽसत्कार्यवादिनश्चाजातिमेव ख्यापयन्ति । परस्परपराहतत्वादजातिः सिद्ध्यतीति ।

किमत्र न्याय्यमिति विमर्शे भाष्यमतमेव युक्तं भाति । वृत्तिकारव्याख्याने हि—"अस्पर्शयोगो वै नाम" इति कारिकाया अस्पर्शयोगसमाधिपरत्वे "भूतस्य जातिमिच्छन्ति" इति कारिकाया उत्थानासंभवः, तादृशसमाधेर्जात्याऽजात्या वा साकं संबन्धासंभवात् । भाष्यकृद्रीत्याऽद्वयात्मपरत्वे त्वद्वयत्वोपपादनार्थं जातिप्रत्याख्यानमावश्यकमिति संगतिसंभवः । तथा च चतुर्थकारिकायामद्वया इति च्छेदे सत्कार्यवादिभिरसत्कार्यवादिभिश्च सह विज्ञानाद्वयवादिना विवादपरतया व्याख्याने—"अविवादोऽविरुद्धश्च" इति प्रागुक्तं व्याहन्येत । न च ममाप्यस्पर्शयोग इत्यत्र विज्ञानाद्वयवाद एव विषय इति तदुपपत्तये जातिप्रत्याख्यानाय कारिकाद्वयोत्पत्तिरिति वाच्यम्, तथा सति—"अविवादोऽविरुद्धश्च" इत्यत्र विज्ञानवादिभिः सहाद्वैतवादिनोऽविवादोऽविरोधश्चेति प्रतीयेत । तथा चात्र विवादसामान्याभावं परित्यज्य विशेषलक्षणाया अनौचित्यम् । भाष्यकृद्व्याख्याने त्वद्वैतवादिनो न केनापि साकं विवादः, द्वैतिना द्वयाना परस्परं विवादादेवाजातिसिद्ध्या तदभिप्रेताद्वैतसिद्धेः । नापि विज्ञानवादिना सह विवादः, तेनाप्यजातिस्वीकारादिति विवादसामान्याभावः सिद्धः । तथा चायमेवार्थः—"ख्याप्यमानामजातिं तैरनुमोदामहे वयम् । विवदामो न तैः सार्धमविवादं निबोधत ॥" [ ४।५ ] इति कारिकया विवृत इति साधूत्पश्यामः ।

यत्तु ४।८५, ८६ कारिकयोः—"सर्वज्ञता च बुद्धत्वमेव" इत्युक्तम्, तत् किं व्याकरणसमाश्रयणेन ? आहोस्विदद्वैतिना ब्रह्मसाक्षात्कारे सति सर्वज्ञत्वासंभवेन ? उभयस्मिन्नपि विचार्यमाणेऽसगतमेवेद वचनम्, एकाद्वयब्रह्मविज्ञानेन सर्वविज्ञानस्य श्रुतिसूत्रसिद्धत्वात् ।

यद्यपि गौडपादीयकारिकास्वजातिवादो बहुधा विवृतस्तथापि मायावादोऽपि न बहुत्रोपदर्शित इति न शक्यते वक्तुम् । तथा चोभयोक्तिसामञ्जस्याय मायया जातिः परमार्थतोऽजातिरिति द्वयमभिप्रेतं श्रीगौडपादस्य । सर्वथाऽलीका निरधिष्ठाना च कल्पनेति मध्यमकमतं तु श्रीगौडपादैर्नाद्रियते, अद्वयात्मसत्तास्वीकारात् ।

तदेवं गौडपादाना भाषासाम्यप्रयोगेऽपि न बौद्धत्वं बौद्धश्राद्धत्वं बौद्धानुगामित्वं वा न वा कारिकोक्तसिद्धान्ताना बौद्धसिद्धान्ताभेदः । किन्तु भाषासाम्यमेव विभ्रान्तिकारणमिति श्रद्धया मनः समाधीय विमृश्यतामित्यभ्यर्थ्योपरम्यते ॥

---

# चार्वाकदर्शनरहस्यम्

श्री.आनन्दझा, ब्रह्मविद्यापाठशाला, काशी।

मन्ये नात्र विवादः स्यात्केषामपि यद् दर्शनानि तावद् देशस्यास्य भारतस्य वैशिष्ट्य-भूतानि। अभारतीया अपि मुक्तकण्ठमिदं कथयन्ति यद् यत्राभारतीयदर्शनानामन्तः समवलोक्यते तत्र भारतीयदर्शनाना विचारधाराया आदिरेवावलोक्यत इति। दर्शनपदेन किं नाम भवति विवक्षितमित्येतद्विषये-"कमपि लोकोपकारमभिलक्ष्य प्रवर्त्तिताया लोकसमादृताया विचार-धाराया मूलभूतो दृष्टिकोणापरपर्य्यायो निर्णय एव दर्शनपदार्थः" इति प्रतिपादितं मया स्वकीयस्य पदार्थशास्त्रस्य प्रथमभागभूमिकायाम्। तथा च समये समये लोकोपकाराय भूतले समाविर्भवता महापुरुषाणा समनुगतलोकाना स्तुत्याना जनस्तुत्या लोकोपकारिणो निर्णया एव भवन्ति दर्शनपदभाज इति पर्यवस्यति। महापुरुषाणामनेकतया दर्शनस्यापि नैकत्वमिति च सुनिश्चितं भवति। सर्वदर्शनसंग्रहप्रदर्शिताना दर्शनसख्यानाममान्यतायामपि चार्वाकचतुर्विध-बौद्धजैनेति नास्तिकदर्शनगताया एकायाः षट्त्वसंख्यायाः, वैशेषिकन्यायमीमासायोगसाख्य-वेदान्तेत्यास्तिकदर्शनगताया अपरायाः षट्त्वसंख्यायाश्च मान्यता सुचिरसर्वसिद्धैवेति दर्शनाना द्वादशत्वं सपद्यते। यदि च वैशेषिकन्याययोः, योगसाख्ययोः, मीमासावेदान्तयोश्च नन्वास्तिक-दर्शनयोः क्रियाज्ञानकाण्डमात्रतया भेददृष्टिर्न तु तत्त्वत इत्यास्तिकदर्शनाना त्रित्वमेव तत्त्वतः। एवं हीनयानमहायानेति प्रसिद्धया बौद्धानामपि चतुर्विधानामधिकारिमात्रभेदादेव भेदः, न तत्त्वत इति न चतुष्टमपि त्वेकत्वमेवेति सुसूक्ष्म कैश्चिन्निरीक्ष्यते तदा चार्वाकजैनबौद्धेति त्रीणि नास्तिकदर्शनानि वैशेषिकसाख्यवेदान्ता इति त्रीण्यास्तिकदर्शनानि च स्वीकृतानि स्युरिति नास्तिकास्तिकसाधारणी दर्शनसख्या षट्त्व एव पर्यवस्यति।

यद्भवतु यथा वा भवतु सवस्यामेव हि विभाजनप्रक्रियाया चार्वाकदर्शनस्यैकं स्थानं सुरक्षितमेवास्ते। तत्तु न कुत्राप्यन्तर्भावमर्हति, विषयवैचित्र्यात्। वैचित्र्यं च तद् गमिष्यत्येव सुस्पष्टतामेतेन निबन्धेन। इदमेव हि दर्शनं लोकायतदर्शनमप्युच्यते। सर्वेषु हि लोकेष्वायत-त्वाद् व्याप्तत्वादस्य लोकायतमिति नाम। आयतिर्हि दीर्घता, दीर्घभूतेन हि वंशादिना दृश्यत एव हि बहुस्थानव्याप्तिः। फलतो लोकेषु विस्तृतत्वादस्य लोकायतमिति नाम। दर्शनस्यास्य

लोकविस्तारः खल्वन्यैरपि तैस्तैर्दार्शनिकैर्भारतीयैरभ्युपगन्तव्यमेव, अन्यथा तत्तद्दर्शनसाध्यतत्त्वज्ञानस्यानावश्यकतापत्तेः। पश्चाज्ज्ञानिनामपि पूर्वमज्ञानिना सवषा शरीरस्यात्मत्वं गच्छत्येव बुद्धिविषयताम्। सर्वत्रोपनिषदि शरीराभ्यन्तरवर्त्तिनि विषये खल्वध्यात्माध्यात्मिकादिशब्दप्रयोगोपलब्ध्या भगवद्गीतादिष्वपि च शरीरे बहुश आत्मशब्दप्रयोगदर्शनाच्च साधु शक्यते विज्ञातुं यदाऽऽदिसृष्टेरद्यपर्यन्तं ज्ञातरूपेणाज्ञातरूपेण चास्य गरीयान् ननु प्रभावः कुत्र न पतित इति।

दर्शनस्यास्य सर्वपरिचितं संक्षिप्त स्वरूपमिदं यत्—प्रत्यक्षमेव हि प्रमाणम्, पृथिव्यप्तेजोवायव एव तत्त्वतया प्रमेयाः। शरीरमेवात्मा। नास्ति स्वर्गादिः परो लोकः। नास्ति पुण्यापुण्यत्वाभ्या ख्यायमानमदृष्टम्। कामार्थाविव पुरुषार्थौ। बृहस्पतिरेव प्रथमस्तत्त्वद्रष्टा। विषयसुखमरणे एव परापरनिर्वृतिरूपतया मुक्तिरिति।

तदिदं दर्शनं यथा लुण्ठन कुर्वन्नेव कश्चिल्लुण्ठको लोकैर्निगृहीतस्तत्र समुपस्थितैः सर्वैरेव सघृण सोद्वेगं च यदा सुदृढमाहन्यमानोऽनायासं विलोक्यते तथैव दर्शनैस्तैस्तैर्भारतीयैराहन्यमानमिद दर्शनं ननु लोकायतम्। मन्ये—

> यावज्जीवेत् सुखं जीवेद् ऋणं कृत्वा घृतं पिबेत्।
> भस्मीभूतस्य देहस्य पुनरागमनं कुतः॥
> स्वर्गः कर्तृक्रियाद्रव्यनाशेऽपि यदि यज्वनाम्।
> ततो दावाग्निदग्धाना फल स्याद्भूरि भूरुहाम्॥

इत्याद्यं तदीयं वचनं पश्यन्तोऽन्ये दार्शनिका दर्शनमिदं सर्वानेव हि जनान् इहलोकपरलोकभीतिमुक्तान् विधायातितरामौच्छृङ्खल्यप्रयोजकमिति विनिश्चिन्वानाश्चक्रुः खण्डनं स्वीये स्वीये दर्शनशास्त्रे। सर्वथा समुचितमिव च प्रतिभाति कृत्यं तद्भारतीयाना दार्शनिकानामन्येषाम्। यतो हि समाजे दौर्जन्यौच्छृङ्खल्यादिप्रसारिणी हि कस्यापि कापि दृष्टिर्न कथमपि क्षम्यतामावहति कस्यापि सचेतसो राष्ट्रहितचिन्तकस्य, किं पुनर्वक्तव्यं तत्त्ववेत्तृतया समाजहितचिन्तकमूर्द्धन्याना महापुरुषाणा तेषा तेषामन्येषामास्तिकनास्तिकतत्तद्दर्शनप्रणेतृव्याख्यातॄणा कपिलकणादगौतमजैमिनिपतञ्जलिबादरायणबुद्धतीर्थङ्करशङ्करादीनाम्।

परन्तु महानयमत्र सन्देहः समवतरति यद् औच्छृङ्खल्यजननी जनसन्नीतिविध्वंसिनी काचन कस्याप्येकस्य प्रवर्तकस्य कुत्सिता हि दृष्टिः किं कथमपि कदापि गन्तुमर्हति दर्शनपदवाच्यत्वयोग्यताम्? चौरैरपि न जनसमक्षं चौर्यं साधुकृत्यमिति ख्याप्यमानमवलोक्यते। लुण्ठकैरपि न परस्वलुण्ठनं समुचितमिति सर्वेषा पुरतः कथ्यमानं श्रूयतेऽधःपातिन्यप्यद्यत्वे केनापि

कदापि । इन्द्रपुरोधा हि सर्वदेवगुरुः—"बृहस्पतिः सुराचार्यो गीर्पतिर्धिषणो गुरुः" इत्यादि-कोशवाक्यघटकप्रत्येकनाम्ना महत्त्ववत्तया व्यपदिश्यमानः समनुश्रूयते किलास्य दर्शनस्य मूलप्रवक्ता प्रवर्तक आचार्यः । किमेतादृशोऽपि हि महान् विदध्यादेतादृशीं जनाधःपातसंपात-शताकुलामकुलानप्याकुलयन्तीं सस्वशिरःपतदुपलवृष्टिकल्पा दुर्दृष्टिमशिष्टत्वप्रणयिनीं कथमपि कदापि ? प्रचारयेद्वा ता जनतासु सर्वदा सर्वथा च स्वाभ्युदयमन्विष्यन्तीषु ? प्रचारयेच्चेद् भवितुमर्हेदसौ कथमपि कदापि केनापि प्रोक्तः सर्वथा महत्त्वख्यापकैर्यौगिकैः सुराचार्यगीर्प-त्यादिभिस्तैस्तैस्तदर्थं श्रूयमाणैर्नामभिः ? या हि देवगुरुर्बृहस्पतिर्देवशत्रूनसुरानधःपातयितु-मसुरनेतारं विरोचनं गोरोचनतया गोरोचनमिव वशीकारिदर्शनमिदमुपदिदेशेति जनप्रसृता किंवदन्ती, सापि न भवति सन्देहभञ्जनाय सचेतश्चेतोरञ्जनाय चालम् । यतो हि ततोऽपि प्रवर्त-कस्य तस्य बृहस्पतेः कापट्यकलङ्कपङ्कलेपस्तिष्ठत्येव प्रोक्त महत्त्वं विघटयन् ।

किञ्च, दर्शनस्यास्य प्रचारेण देवानामेव हि संपद्यमानं महदनिष्टमवलोक्यते गम्भीर-विचारेण नासुराणाम् । असुराणा तु प्रचारेणास्य दर्शनस्याभीष्टसिद्धिरेव । यतो हि यज्ञभागभुजो देवाः, ते हवींषि भुञ्जाना एव भवन्ति बलिन इति हि लोकशास्त्रोभयप्रसिद्धिः । मन्त्रिणो हि राजविजय एव भवति समभीष्टः । स च ध्रुवं बलाधीन इति परलोकानभ्युपगन्तृचार्वाकदर्शन-प्रचारेण यागयज्ञादीनामभावे भोज्यस्य हविषोऽभावेन भोज्याभावे दुर्बलाना दरिद्राणा मानवा-नामिव देवाना दौर्बल्य सभावितमेव । राज्ञो राष्ट्रस्य दुर्बलताया मन्त्रिणः पतनं विनिश्चितमेव विरोधिपक्षसमृद्धया । शरीरमेवात्मत्वेन मन्यमाना हि मल्लाः सर्वथा सर्वदा च शरीरपोषणमात्र-निरताः सन्तो भवन्ति बलिनो युद्धविजयिनश्चेति प्रत्यक्षमेव सर्वेषामिति कथमात्मघातमात्रफला चार्वाकपद्धतिमाविष्कुर्याद् बुद्धिमत्तमतया विख्यातो देवगुरुर्बृहस्पतिः ?

मा नाम भवतु देवविरोधिनामसुराणा वैषयिकसुखसमृद्धिविघातो दर्शनस्यास्य प्रचारेण तेषु, "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इति श्रुत्या वास्तविकात्मज्ञान-मात्रसाध्यतया ज्ञाप्यमाना हि निःश्रेयसनिर्वाणादिपदैरभिधीयमाना मुक्तिस्तेषा न स्याच्चार्वाक-दर्शनप्रचारेण भौतिकं शरीरमेवात्मत्वेन मन्यमानाना भ्रान्तानामिति महदनिष्टं सेत्स्यति विरोधिना ममेति मत्वा देवगुरुः शरीरात्मत्वख्यापकं दर्शनमिदमुपादिशदिति केषाञ्चित् कल्पनापि नावहति मनोरमताम् । यतो हि—असुराणा मुक्त्यलाभे न बृहस्पतेस्तदनुगामिना सुराणा वाभीष्टसिद्धिसभावना । असुराणा मुक्तिपथारूढतायामेव हि वरं तेषा निष्कण्टक-स्वाराज्यसिद्धिः, बृहस्पतेश्च मन्त्रित्वसुरक्षेति । ततो मुक्तिकारणीभूतवास्तविकात्मतत्त्वज्ञानविघट्ट-

नायाऽसुराणां देवगुरुश्चार्वाकदर्शनमिदं समुपादिशद्विरोचनपुरोगमेभ्यो नन्वसुरेभ्य इति कल्पना सर्वथा ह्यकिञ्चित्करी।

श्रौती चाख्यायिका कल्पनाया अस्याः सर्वथा विरुद्धा परिलक्ष्यते। न ह्यविदितं नाम परिचितश्रुतीनां केषाञ्चिदपि विपश्चितां यच्छ्रौती ह्याख्यायिका प्रतिपादयति ननु —इन्द्रविरोचनावुभौ खल्वात्मतत्त्वज्ञानाय प्रजापतेः समीपं जग्मतुः। प्रजापतिस्तावुभावेव स्वच्छे जले प्रपतन्तीं शरीरच्छायामेव प्रथमं स्थूलारुन्धतीन्यायेनात्मतयोपदिदेश। सहस्राक्षो ह्यन्तश्चक्षुषा शरीरं नश्वरं संपश्यन् ध्रुवं प्रजापतेस्तात्पर्यं किमप्यन्यदेव भवेदिति निर्णयवानात्मस्वरूपज्ञानाय पुनः प्रजापतिसमीपं ययौ। विरोचनस्तु प्रजापतेः प्रथमोपदेश एवास्थावान् बिम्बप्रतिबिम्बयोस्तत्त्वत एकत्वाद् विमलसलिलान्तर्निपतत्प्रतिबिम्बबिम्बभूतं शरीरमेवात्मत्वेन सुदृढतया विनिश्चितवानिति।

आख्यायिकया नन्वेतया विरोचनः स्वबुद्धिमान्द्यादेव प्रजापतेरुपदेशं शरीरस्यात्मत्वख्यापकं मेने न प्रजापतेरन्यस्य वा कस्यापि दोष इति स्फुटमुपगम्यते। सति चैवं बृहस्पतिः शरीरात्मवादपरं दर्शनमिदमसुराणां मुक्तिबाधायै तेभ्यः समुपदिदेशेति कल्पना कथं गन्तुमर्हेत् समीचीनताम्। अतो निश्चायकाभावेन प्रोक्तः सन्देहः समवतरत्येव। ध्रुवमेवात्र रहस्येन केनचित्तेन भवितव्यं यदज्ञानेन बहोः कालाल्लोकानां नास्ति वास्तविकं परिज्ञानं दर्शनस्यास्य प्रवर्तनविषये स्वरूपे च।

सुचिरं वारं वारमन्तश्चक्षुरत्र निक्षिपता मया यन्मनसावधारितम्, यः सामञ्जस्यमार्ग उद्भावितस्तस्यान्येषामपि परिज्ञानाय नन्विहेदानीं किञ्चिदुपक्षिप्यते पुरतो विवेकिनाम्।

संसारप्रवाहस्यानादित्वेऽपि मध्ये प्रलयसृष्ट्योरभ्युपगमो दार्शनिकसंप्रदायसिद्ध एव प्रायः। तत्र प्रलयोत्तरं सृष्टौ जातायां ससाराह्नः प्रथमे यामे चरणे वा संसारिणां प्रवृत्तयो भवन्ति निसर्गत एव सौम्याः समुचितस्वस्वधर्ममात्रविषयिण्यः। दृश्यन्त एव हि प्रतिदिनं प्रथमे यामे प्रायो मानवाः शान्ता दान्ताः पराभिभवमनिच्छन्तः स्वस्वधर्माचरणसंलग्ना इति महतः ससाराह्नोऽपि प्रथमे चरणे तथा स्थितिः सुकल्पैव। अतस्तस्मिन् हि काले न भवति दण्डनीतेः प्रयोजनमिति राजराज्यादिकल्पनापि तदा नैव भवति, निष्प्रयोजनत्वात्। अत एव हि–"न राज्यं न च राजासीत्" इत्यादिमहाभारतवाक्यमपि संगच्छते। युक्तं चैतत्। सृष्टेरनन्तरं बहुकालपर्य्यन्तं भोग्यवस्तूनामाधिक्यं भोक्तॄणां चाल्पता युक्तिसिद्धैवेति क्वास्त्यवसरो विरोधमयस्य संघर्षस्य, यन्निवृत्त्यर्थं शान्तिमये हि काले तस्मिन् प्रभवेदावश्यकता दण्डनीतेः।

ततः प्रवृद्धाया क्रमेण जनसंख्याया परस्परं भवति पराभिभवोन्मुखे जनसमाजे रागद्वेष-मोहदोषोद्गमेन प्रभवति दण्डनीतेः प्रयोजनम् । संभवति राजराज्याभ्युपगमप्रयोजनम् । 'नीयते अनया' इति व्याख्यया नीतिर्हि पद्धतिः । कापि हि पद्धतिर्गन्तव्य फलतः प्राप्तव्यं किमपि विशिष्ट-मभिप्रेत्य कामपि च विशिष्टा दृष्टिमपेक्ष्य प्रभवति समाश्रितेति प्रत्यक्षं सर्वेषाम् । अतः सामाजिक-सुव्यवस्थायै समाजशान्तिभङ्गप्रसङ्गनिरोधाय समपेक्षिताया दण्डनीतेर्निर्वाहायापि काचन दृष्टिरभ्युपगन्तव्यैव, किमपि दर्शनमभ्युपगन्तव्यमेव । तदेव हि दण्डनीतिदर्शनं चार्वाकदर्शन-लोकायतदर्शनादिशब्दैर्व्यपदिश्यत इति ।

## दण्डनीतिदर्शनमेव चार्वाकदर्शनम्

उभयत्रैव यदि युक्त्या सिद्धा भवत्येका दृष्टिराश्रयणीयतया को नाम प्रभवेत् समर्थः प्रतिवक्तुमत्र विषये ? या हि प्रत्यक्षमात्रप्रामाण्यशरीरात्मत्वादिदृष्टयः पिण्डीकृताः सत्यश्चार्वाक-दर्शनत्वेन प्रोच्यन्ते ताः परित्यज्य न कथमपि स्थातुमर्हति दण्डनीतिरिति सुस्पष्टं शक्यते द्रष्टुमव्यवहितं विधीयमानेन विचारेणानेन ।

## शरीरस्यात्मत्वम्

विवृद्धरागद्वेषमोहाना जनानामुत्पथतैवापराधः । सा ध्रुवं चौर्यपारदार्यादिरूपतया चेष्टात्मिका । चेष्टा हि शरीरमात्रधर्मः । एवमपराधाना तेषा तेषा दण्डप्रयोजकाना स्थूलशरीर-मात्रनिष्ठत्वेन शरीरस्यैवापराधित्वम्, तस्यैव च तर्हि कारानिरोधकशाघातोद्बन्धनादिदण्डविधान-मपि भवति । युक्तं चैतत् । न चान्येन कृते ह्यपराधेऽन्यस्य दण्डविधानमौचित्यं भजते । न कोऽपि सचेताः कृतहानाकृताभ्यागमौ समुचितौ पश्यति । अतो दण्डापराधयोः सामानाधि-करण्याय दण्डनीतौ शरीरस्यात्मत्वं मन्तव्यमेव, यन्मन्यते चार्वाकदर्शनशास्त्रे ।

यद्यत्र कश्चिद् ब्रूयात्—ज्ञानेच्छाप्रयत्नमूलिन्य एव भवन्ति सर्वाश्चेष्टाः । तानि च ज्ञानेच्छा-प्रयत्नानि न शरीरनिष्ठानि, अपि तु तदतिरिक्तात्मनिष्ठानि । तान्येव च मूलतोऽपराधभूतानि । दण्डो विधीयमानोऽपि च न कशाघातादिमात्रम्, अपि तु कशाघातादिजनिता वेदनाः । एवं च सति शरीरातिरिक्तात्मन्येवापराधदण्डयोः सामानाधिकरण्यसभवान्न कृतहानाकृताभ्या-गमसंभावना । येन हि शरीरातिरिक्तेनात्मनाऽनुचितज्ञानेच्छाप्रयत्नादिका अपराधा विधीयन्ते तेनैव च दुःखोपभोगरूपो दण्डः प्राप्यत इति क्व कृतहानाकृताभ्यागमसंभावना ? दण्डापरा-धयोर्वैयधिकरण्य एव हि तत्प्रसङ्गावकाशः, स च नास्त्येवेति ।

तत्रेदं वक्तव्यम्—दुःखस्य हि न दण्डत्वम्, तस्य हि सर्वत्र दुःखत्वेनैकविध्यात्। दण्डस्य च प्रत्यपराधभेदं विभिन्नता सकललोकशास्त्रोभयसिद्धा। अत एव हि समच्छते वाल्मीकीय-रामायणीयोऽयमितिहासो यत् सीतान्वेषणाय सुग्रीवेण प्रेषिते हि हनूमति नन्वशोकवाटिकाभङ्गज क्रोधानलसंतप्तेन राक्षसेश्वररावणेन तद्वधदण्डे समादिष्टे दण्डनीतिज्ञो विभीषणो नाम्नैव केवलम्—

> वैरूप्यमङ्गेषु कशाभिघातो मौण्ड्यं तथा लक्षणसन्निपातः।
> एतान् हि दूते प्रवदन्ति दण्डान् वधस्तु दूतस्य न नः श्रुतोऽस्ति॥

इति बोधयामास दूतेषु विधातुमर्हान् वधातिरिक्तान् दण्डान्। यद्येकविधेऽप्यपराधे विधीयन्ते विभिन्ना दण्डास्तर्हि विभिन्नेषु हि लघुगुरुभावापन्नेषु तावदपराधेषु का नाम प्रत्याशा दुःखात्मकदण्डाभेदस्य ?

किञ्च, अद्यत्वेऽपि हि दण्डशास्त्रे दण्डविधानालये च प्रत्यक्षं समुपलभ्यन्त एव निर्दिश्य-मानास्तदनुसारं विधीयमानाश्च प्रत्यपराध विभिन्ना दण्डाः। सति कशाघातादीना फलीभूतानां दण्डाना तत्प्रापकाना च चौर्यपारदार्यादीना शरीरमात्रनिष्ठत्वे दण्डनीत्या हि शरीरस्यैवात्मत्वं मन्तव्यमेवात्मदृष्ट्या शरीरातिरिक्ते नन्वात्मनि सत्यपि तत्त्वतः।

## प्रत्यक्षस्यैव प्रामाण्यम्

दण्डनीतौ हि प्रत्यक्षस्यैव प्रामाण्याभ्युपगमोऽपि युक्त एव। यतो हि प्रत्यक्षं प्रमाण-माश्रित्यैव हि प्रवर्तते दण्डः। न्यायालयेऽहि न्यायाधीशसमक्षं साक्ष्यमावहन् जनो यदि ब्रूते—"एतेन मत्समक्षमयमपराधो विहितः", तदैव न्यायाधीशेनापराधानुसारी नियतो दण्डः समादिश्यते। यदि च साक्षिणा तत्रैवमुच्यते न्यायालये यत्—"न मया दृष्टोऽयमभियुक्तो नन्वपराधं कुर्वन्, श्रुतं केवलं कस्यचिदमुकस्य वा मुखात्, अनुमित वा हेतुनाऽमुना" इति, तदा नादिशति न्यायाधीशोऽभियोगवति दण्डम्। अपराधसन्देहे दण्डाऽविधाननियमात्। सन्देहस्य तत्र भावाभावोभयकोटिकतयापराधाभावपक्षे समादिश्यमाने हि दण्डेऽकृताभ्या-गमस्य दोषस्य दुर्निवारतापत्तेः। अपराधनिर्णायकस्य प्रमाणस्याभावे मुच्यन्ता नाम शतमप्य-भियुक्ताः किन्तु नैकोऽप्यपराधरहितो भवेद्दण्डभागित्येव हि दण्डविदा समयः।

यद्यत्र कश्चिद् ब्रूयात्—प्रत्यक्षमेव हि दण्डनीतौ प्रमाणमिति न शक्यते वक्तुम्। यतो हि साक्षिप्रोक्त शब्दं विविधाश्च स्वपरोद्भाविता युक्तीः प्रमाणत्वेन गृह्णन्नेव हि न्यायाधीशो दण्ड विधत्त इति सुविदितमेव हि सर्वेषाम्। तथा च सति प्रत्यक्षातिरिक्तानामनुमानशब्दादीनामपि प्रामाण्यं समभ्युपगन्तव्यमेवेति। तत्रेदं प्रतिवक्तव्यम्—एकत्र हि विषये विविधप्रमाणप्रवृत्तौ

प्रमाणस्यैकस्यैवाज्ञातज्ञापकतया प्रामाण्यं न सर्वेषाम्। अन्ये हि ज्ञातज्ञापकतयाऽनुवादमात्रता भजन्ते न प्रमाणताम्। अग्निसेवनेन शीतनिवृत्तौ प्रत्यक्षतः समुपलभ्यमानायाम्, "अग्नि-र्हिमस्य भेषजम्" इत्यादिवाक्यशतमपि तद्विषयकमनुवादतामेव भजते न प्रामाण्यमित्येव हि विचारविदा प्रक्रिया। सति चैव प्रोक्ते स्थले साक्षिप्रत्यक्षमेव प्रमाणम्, तदनुगामिन्यश्च वाक्ययुक्तयोऽनुवादमात्रभूता गृहीतज्ञापकतयेति दण्डनीतौ प्रत्यक्षमेव हि प्रमाणमिति निर्णये न काचन बाधा शक्या समुपस्थापयितुम्। येऽपि हि काणादा आक्षपादाश्च विद्वासः—"किं प्रमाणानि प्रमेयमभिसम्प्लवन्ते, आहोस्विद्व्यवतिष्ठन्ते" इत्यादिना कस्मिंश्चिदेकस्मिन्नेव विषये प्रत्यक्षानुमानागमाना प्रामाण्यं भवति न वेति विचारमुत्थाप्य स्थलभेदेनोभयथा भवति, क्वचिदेकस्यैव प्रामाण्यं यथा च हस्तप्रत्यक्षस्थले प्रत्यक्षमेव हि प्रमाणं नानुमान नागमो वा। यत्र च नगनिकुञ्जेऽस्ति तावदग्निरिति वाक्यमाप्तीयं श्रुत्वा धूमान्नगनिकुञ्जोऽय-मग्निमानित्यनुमाय तत्र गतोऽग्निं चक्षुषा पश्यति तत्र त्रयाणामेव प्रत्यक्षानुमानागमाना प्रामाण्यमिति निगदन्ति, तेऽपि प्रत्यक्षानन्तरं प्रमाणान्तरान्वेषणविरत्या प्रत्यक्षस्य प्रमाणेषु श्रैष्ठ्य वदन्तो भङ्ग्यन्तरेण विषये नन्वेकस्मिन् बहुप्रमाणसंपातस्थले प्रत्यक्षस्यैवान्तिमनिर्णयप्रदतया प्रामाण्यमभ्युपगच्छन्त्येव। परोक्षमस्पष्टावभासं प्रत्यक्षमेव हि स्पष्टावभासं प्रवदन्तो योगिनः साख्या अपि च विविधप्रमाणसंभवस्थले प्रत्यक्षस्यैव प्रामाण्ये स्वकीयमिङ्गितं कुर्वन्त इव विलोक्यन्त एवेति।

## परलोकानभ्युपगमः

लोक्यत इति लोकः फलम्, "तद्यथेह कर्मचितो लोकः क्षीयते, एवमेवामुत्र पुण्यचितोऽपि लोकः क्षीयते" इत्यादिश्रुत्या दृष्टादृष्टयोः फलयोरेव लोकत्वप्रतिपादनात्। तत्र पुण्यापुण्य-द्वारा मरणानन्तर जायमाने हि सुखदुःखे क्रियया साक्षान्निष्पद्यमाने पुण्यापुण्ये एव वा पर-लोकपदप्रतिपाद्ये। मरणात्पूर्वमेव हि समुचितानुचितक्रियाभ्या संपद्यमानाः समृद्ध्यसमृद्ध्योऽपर-लोकपदप्रतिपाद्याः। परापरयोः फलात्मकयोरेतयोर्लोकयोर्न परं लोकमाश्रित्य दण्डप्रवृत्तिः शक्य-संपादा, चौर्यपारदार्यादिकर्तॄणा जनाना दण्डनीत्या हि समाजव्यवस्थार्थमत्रैव कशाघात-कारावासादीना विधानात्। अन्यथा मरणानन्तर यद्भविष्यति तद्भविष्यति, इदानी सुख यथा तथा निष्पद्यतामिति दुर्बुद्धिमद्भिर्दुराचारिभिर्विशीर्यमाणाया समाजव्यवस्थायाः शान्तिजनन्या रक्षणासंभवात्।

एकस्या अपि चौर्यपारदार्यादिक्रियायाः कशाघातादिरूपो दण्डनीत्या विधीयमानो

लोकोऽपि स्यान्निषिद्धतत्तक्रियाकर्तृणा नरकादिरूपो धर्मशास्त्रप्रतिपाद्योऽपि लोकः स्यादिति कुतः परलोकानभ्युपगमावश्यकतेति तु न शक्यं वक्तुम्; वस्तुस्थितेस्तथात्वेऽपि दण्डनीतिर्हि परलोके चक्षुरनिःक्षिप्यैव प्रवृत्ता स्यात्समाजव्यवस्थासंरक्षणायालमित्यस्यावश्यं स्वीकार्यत्वात्। अन्यथा दण्डविधातुर्मनस्येकस्या एव क्रियाया अनुचिताया अपि परत्रापि नन्वयं दण्डं प्राप्स्यत्येवे-त्यत्र महद्दण्डदान कठोरतामावहतीति कारुण्योदये दण्डशैथिल्यापरया समाजव्यवस्थायाः शान्ति-प्रणयिन्या भङ्गस्य दुर्वारतापत्तेः।

एतेन मीमासया हि व्रीहीनवहन्तीत्यत्र वैतुष्यात्मकदृष्टफलातिरिक्तस्य नियमादृष्टस्याप्य-भ्युपगमेनावघातक्रियाया दृष्टादृष्टलोकत्वस्वीकृत्या कथं परलोकानभ्युपगमः शक्यते वक्तुमिति प्रश्नोऽपि निरस्तो वेदितव्यः, स्वस्याविषयतया तत्र दण्डनीत्यप्रवृत्तेः। दण्डनीतिर्हि परलोकमन-भ्युपगम्यैव प्रवृत्ता भवति सकलेत्येतावन्मात्रस्यैवात्र प्रदर्शनीयत्वाद्। यद्यपि मनुयाज्ञवल्क्यादि-स्मृतौ दण्डनीतिप्रतिपादनात् कौटिल्यार्थशास्त्रेऽपि च धर्मविचारदर्शनान्नात्यन्तमसन्निकर्ष-स्तथापि व्याप्यव्यापकभावभावाद् व्रजत्यैव समर्थनीयता द्वयोस्तयोर्दृष्टिभेद इति नासामञ्जस्यम्। किञ्च, प्रोक्ताभिर्युक्तिभिर्दण्डनीतौ प्रत्यक्षस्यैव प्रामाण्ये स्वीकरणीये परेषा लोकाना तदविषयतयापि परलोकानभ्युपगमोऽत्र शक्यते समर्थयितुम्।

## शासकस्यैवेश्वरत्वम्

दण्डनीतौ हि दण्डाधिकारे निग्रहानुग्रहयोः प्रत्यक्षं विधातृतया शासके हि मानवेऽपि परमेश्वरदृष्टिः समुचितैव। अन्यथाऽनुमेयस्य शाब्दस्य वा परलोकप्रापकस्यान्याधिकारसिद्धस्य तस्याऽदर्शने दर्शने चोभयथाऽपि मानवशासकाद्भयाभावेनौच्छृङ्खल्यमयी हि रागद्वेषमोहदोष-प्रसूता दुष्प्रवृत्तिर्न त्यक्तुमर्हैत्पादप्रसारिकामिति नैव स्यात्समाजव्यवस्था सुशृङ्खला शान्तिप्रचुरा कथमपि। दर्शनपक्षेऽपि हि पारलौकिकस्य जगत्स्रष्टुः परमेश्वरस्य दुष्प्रवृत्तिपादप्रसारिका तावदेवं संपद्यते यत् परमेश्वरो हि भगवान् परमकारुणिकः। स हि कुकर्मिणोऽपि जनान् समुद्धरति स्वेन परमेण कारुण्येनेति कुकर्मिणमपि मामुद्धरिष्यत्येवेति कथं परित्यज्यता सुखं वैषयिकमिति विचारयता स्यादेव दुष्प्रवृत्तिपरम्परा। दृश्यन्त एव हि नन्वेवंविधाः परमेश्वर मन्यमानाः पूजयन्तो गायन्तश्च भृश भगवन्तं तं तत्तदनुचिताचरणचणा बहवोऽद्यत्वेऽपि। नात्र भगवतः कोऽपि दोषो भ्रान्तिरेव तेषा जनाना दुष्प्रवृत्तिप्रसरबीजभूतेति तु सत्यम्, परन्तु परमेश्वरं मन्य-मानानामपि मानवप्रशासनभयाभावे प्रायशो भ्रान्ताना जनाना दुष्प्रवृत्तिपादप्रसारिका बहुला स्यादिति मानवे प्रशासके परमेश्वरदृष्टिरावश्यकी सामाजिकसुव्यवस्थास्थैर्यसंपादिन्या दण्डनीतौ।

यदि कश्चिदत्र ब्रूयात्—सत्यपि हि मानवे प्रशासने सम्प्रति दृश्यन्त एव दुराचारा इति मानवेऽपि शासके परमेश्वरत्वदृष्टिरकिञ्चित्करैवेति । तत्रैवं प्रतिवक्तव्यं यद् दुराचारसामान्याभावे हि न प्रयोजन दण्डनीतेरिति तु ज्ञापितमेव पूर्वमिति दुराचारप्रवृत्तौ तद्वैरल्याय दण्डनीतेरपेक्षा तदुपपादिकायाश्च दृष्टेरपेक्षा युज्यत एव । स्वयमेव विचार्य्यता यदीदानीं न स्याद् दण्डभीतिः का नाम दशा स्याज्जनतायाः ?

महाभारते प्रोच्यते–दण्ड विना काकोऽपि न निवर्तते का नाम कथा दुराचारिणामुच्छृङ्खलाना जनानाम् ? अथवा दण्डनीतौ प्रवृत्तायामपि यो दुराचारप्रचारो लक्ष्यते तत्र न दण्डनीतेस्तन्मूलभूतस्य दर्शनस्य वा दोषः, अपि तु समुचिततया तद्विनियोगाभावस्येति दुष्प्रवृत्तिप्रसारनिरासार्थमत्यन्तमपेक्षितायाः सद्दण्डनीतेरादर्तव्यतया तन्निर्वाहाय प्रशासकस्य मानवस्यैवेश्वरत्वमभिमन्तव्यमेव सत्यपि महाब्रह्माण्डभाण्डोत्पादास्तित्वविनाशव्यसनिनि भगवति परमेश्वरे ।

## अर्थस्यैव पुरुषार्थत्वम्

ये हि प्राणिभिरर्थ्यन्ते कामनाविषयीक्रियन्ते ते सर्व एव भवन्त्यर्था इत्येकेनैव पुरुषार्थतया गृह्यमाणज्ञापकेनार्थपदेन सर्वेषामेव हि धनधर्मकाममोक्षाणा संग्रहसंभवेनार्थ एव पुरुषार्थ इति मन्तव्यम् । धनमात्रे हि स्वर्णरूप्याद्यात्मकेऽर्थपदप्रसिद्धिस्तु सुखदुःखनिवृत्तिसाधनतया लोकैरर्थ्यमानत्वेन न तु सामान्यतोऽर्थ्यमानत्वेन । इह तु सामान्यतोऽर्थ्यमानत्वेनार्थपदप्रवृत्तिर्बोध्येति नान्येषामसंग्रहः । व्यापकतया व्याख्यायमानोऽयमर्थ एव तत्र तत्राभियुक्तैः प्रयोजनफलादिशब्दैरुच्यते । तथा हि पारमर्ष सूत्रम्–"यमर्थमधिकृत्य प्रवर्तते तत्प्रयोजनम्" इति, "प्रवृत्तिदोषजनितोऽर्थः फलम्" इति च ।

यदि कश्चिदत्र ब्रूयात्—अस्मिन् विचारे 'काम'-पदेन किं ग्राह्यम् ? यदि हि काम्यन्त इति कामा इति व्याख्यया कामनाविषया सर्व एव भवन्ति संगृहीतास्तर्हि कामार्थशब्दयोः पर्यायतापत्त्याऽवान्तरतया सग्राह्यता न स्यात् कामस्य । यदि कामनैव काम इत्युच्यते तदापि रिरंसात्मके हि स्त्रीपुंसंभवे कामे कामनाविशेषरूपेऽर्थावान्तरार्थता दुर्घटैव । इच्छाकामनार्थनादीना शब्दानामेकार्थकतया रिरंसायास्तस्याः स्वत एवेच्छात्वेनार्थ्यमानत्वासंभवात् । स्वस्य स्वस्कन्धाधिरोहणवत् स्वस्य स्वविषयताया अप्यसंभवात् ।

तदेव प्रतिवक्तव्यम्—इच्छायाः कामनायाः प्रवृत्तिविषयत्वासंभवेऽपीच्छाविषयत्वं मन्तव्यमेव । अन्यथा साधनचतुष्टयान्तःपातिन्या मुमुक्षाया अपीच्छाविषत्वाभावप्रसक्त्या तामुद्दिश्य हि निर्विण्णाना जायमाना निष्कामकर्मणि प्रवृत्तिर्न स्यादनुभवसिद्धा । न स्याच्च

विविदिषोत्पादद्वारा निष्कामकर्मणो मोक्षोपयोगित्व सर्ववादिसिद्धम्। फलेच्छा हि भवत्युपायेच्छा प्रति हेतुरिति मुमुक्षुणा निष्कामकर्मात्मकोपायेच्छा प्रत्यात्मविविदिषाया मुमुक्षायाश्च फलत्वेनाभ्युपगन्तव्याया अपीच्छा मन्तव्यैवेति तद्वद्रिरसात्मककामस्यापि हीच्छाविषयत्वं मन्तव्यमेवेत्यर्थ्यमानतया न कामस्यार्थत्वबाधः। युक्तं चैतत्। कथमन्यथा ध्वजभङ्गरोगिणा रिरसायै चिकित्साप्रवृत्तिर्दृश्यमाना सगतिमीयात्। तथा च कामस्याप्यर्थत्वमक्षुण्णमेव। अत एवाह भाष्यकारो भगवान् वात्स्यायनोऽपि—"अर्थस्तु सुखं सुखहेतुर्दुःख दुःखहेतुश्चेति। सुखदुःख तत्साधनेषु सर्वान्तभावात् कामस्याप्यर्थत्वं मन्तव्यमेव सर्वथेति। न च तर्हि नन्वनर्थोऽप्यर्थः स्यादिति शक्यमाक्षेप्तुम्, प्रार्थ्यमानतादशाया तस्याप्यर्थत्वस्य स्वीकारात्। दृश्यन्त एव हि दोषरोगादिदूषितचित्ता विष भक्षयन्तः स्वयमुद्बन्धनं च गृह्णन्तः। "प्रवृत्तिदोषजनितोऽर्थः फलम्" इति पारमर्षसूत्रेणार्थफलयोरैकरूप्येण दण्डनीतौ च प्राणदण्डस्यापि फलत्वाभ्युपपत्त्याऽर्थत्वमर्थान् सिद्धं भवत्येव।

अर्थान्तःपातितया तृतीयपुरुषार्थो हि धर्मो नात्र शरीरातिरिक्तात्मनिष्ठो मनोनिष्ठो वा प्रतिपत्तव्यः, पूर्वोक्तयुक्तेः प्रत्यक्षप्रमाणाप्रसराच्च। अपि तु शरीरस्वरूपात्मनिष्ठो दण्डविन्महाजनानुमोदित कमव। वेदप्रतिपाद्यः प्रयोजनवदर्थो धर्म इत्यादिधर्मलक्षणं कुर्वद्भिः कर्ममीमासकैः, सगुणस्य परमेश्वरस्यैव कर्मफलदातृत्व नादृष्टस्येति वदद्भिर्ब्रह्ममीमासकैरपि तथैवाभ्युपगमेन कर्मधर्मत्वपक्षस्य बहुमतसिद्धतया प्राबल्यात्। लोकेऽपि चाचरणेनैव धार्मिकत्वव्यवहार परिदृश्यत एव।

मुक्तिस्तु तुरीया नन्वर्थान्तःपातिनी सुखरूपा तद्विपरीताऽभावरूपा च। सुखस्य दुःखःसंपृक्तत्वेऽपि ग्राह्यता। यथोक्तम्—

त्याज्य सुख विषयसंगमजन्म पुंसा दुःखोपसृष्टमिति मूर्खविचारणैषा।

व्रीहीन् जिहासति सितोत्तमतण्डुलाढ्यान् को नाम भोस्तुषकणोपहितान् हितार्थी॥ इति।

अन्येऽपि हि दार्शनिका एवमभ्युपगच्छन्तः समवलोक्यन्त एव। "स्वल्पः सकरः सपरिहारः सप्रत्यवमर्शः" इति पञ्चशिखोक्तवचनेन यज्ञफलभूतस्वर्गाद्युपभोगस्थलेऽपि दुःखोपसृष्टता सुखस्य स्वीक्रियत एव। अयमेवार्थो मिश्रवाचस्पतिनापि—"परसपदुत्कर्षो हीनसंपदं दुःखाकरोति", "मृष्यन्ते हि पुण्यसभारोपनीतस्वर्गसुखसुधामहाह्रदावगाहिनः कुशलाः पापमात्रोपपादिता दुःखवह्निकणिकाम्" इति च विलिखता प्रकटीक्रियत एव। दुःखोपसृष्टस्य सुखस्य मुक्तिता हि मा मन्यता तैः।

द्वितीया हि तद्विपरीताऽभावरूपा मुक्तिर्द्विविधा–दण्डाभावरूपा, दुःखबहुलशरीराभावरूपा च। दृश्यत एव हि दण्डाभावाय दुःखबहुलशरीराभावाय च तथाविधानामिच्छा प्रवृत्तिश्च लोके। तत्र सुखदण्डाभावयोर्जीवन्मुक्तित्वं प्रोक्तशरीराभावस्य च निर्वाणमुक्तित्वमिति समवगन्तव्यम्।

यदि चान्यदार्शनिकवदत्र प्रथमत एव चातुर्विध्यं समधिगम्यते पुरुषार्थाना तदापि नानिष्टं किञ्चिदपि, केवल तत्स्वरूपाणि प्रोक्तान्यवसेयानि। यत्तु प्रबोधचन्द्रोदये–"अर्थकामावेवात्र पुरुषार्थौ" इति धनरिरसयोरेवात्र पुरुषार्थत्वकथनं तत्तु तयोः सुखायैवापेक्षितत्वादयुक्तमेव। अतः साधनतयाऽपेक्षितयोस्तयोर्गौण फलत्वम्। तद्विपरीताभावपदेन गृह्यमाणस्य दुःखाभावस्य सुखस्य च मुख्यफलत्वम्। दण्डाभावशरीराभावयोरपि च दुःखाभावसंपादकतया गौणमेव फलत्वमवसेयम्।

## भूतचतुष्टस्यव तत्त्वता

प्रोक्तयुक्त्या प्रत्यक्षस्यैव प्रामाण्ये समभ्युपगते पृथ्वीजलतेजोवायूनामेव हि चतुर्णा भूताना प्रत्यक्षप्रमाणसिद्धतया तत्त्वतासमधिगमः समुचित एव। वायौ रूपाभावेन चाक्षुषप्रत्यक्षविषयतानभ्युपगमेऽपि नव्यानामिव नैयायिकाना स्पार्शनप्रत्यक्षविषयता मन्तव्यैव। अत एव हि–"अयमेति मन्दमन्दं कावेरीवारिपावनः पवनः" इत्यादिकाव्यप्रतीतिश्च संगच्छते। आकाशस्याप्रत्यक्षता त्वन्यैरपि दार्शनिकैरभ्युपगम्यत एव। अत एव हि–"अप्रत्यक्षे ह्याकाशे बालास्तलमलिनताद्यध्यस्यन्ति" इत्यादिशङ्कराचार्यादिलेखः सुसंगतिमर्हति। गुणकर्मणोः प्रत्यक्षविषयत्वेऽपि न तत्त्वतस्तयोराश्रयाद्भेदः समुपलभ्यतेऽत्र प्रभाकरमत इवेति न तौ समादाय तत्त्वाधिक्यशङ्का। आस्ता वा तयोरपि तत्त्वता परन्तु दण्डाधिकारानन्तःपातितया न तदधिकारे तच्चर्चा। ये चेदानीमपि कृष्णवर्णाना 'हब्सी' इत्यादिजातीयाना रूपात्मकगुणभेदेन लोकाधिकारतारतम्यमुचितं मन्यन्ते ते सर्वथा भ्रान्ता एवेति न दृष्टान्तेन रूपादीना गुणाना दण्डाधिकारता शक्या स्वीकर्तुम्।

## बृहस्पतेराचार्यत्वम्

देवगुरुर्हि बृहस्पतिर्नाचार्यश्चार्वाकदर्शनस्य। तस्य तथात्वे बाधा हि निबन्धस्यास्योपक्रम एव प्रतिपादिता। ततो बृहस्पतिरसौ न्यायवैशेषिकसाख्ययोगमीमासावेदान्तदर्शनप्रणेतृगौतमकणादकपिलपतञ्जलिजैमिनिबादरायणवत् कश्चिद् बुद्धिमत्तम ऋषिर्मानव एवेति मन्तव्यम्। बृहस्पतीति नाम्नैव तस्य देवगुरुत्वनिर्णयो रामेति नाममात्रेणान्येषा परशुरामबलरामादीना परस्सहस्राणा रामनामवतामन्येषा वा दाशरथित्वनिर्णयतुल्य एव। ततो बृहस्पतिरसौ

कश्चिन्मानव एव। वस्तुतस्तु चार्वाक एव दण्डनीतिनिपुणो दर्शनस्यास्य प्रवर्तको बृहस्पतिरिव विशिष्टप्रज्ञतया बृहस्पतिपदेन कथ्यमानः प्रतीयते। यच्च देवगुरुर्बृहस्पतिश्चार्वाकस्य गुरुः, ततः प्राप्य दर्शनमिदं मानवेषु प्रवर्तितवाँश्चार्वाक इति कथनमेतद्दर्शनानुयायिनामन्येषां च तत्खण्डनपराणां तत्तु देवगुरुर्बृहस्पतिरस्य दर्शनस्याचार्य इति किंवदन्तीप्रसूतमिव प्रतीयते, सर्वेषामेव ह्यन्येषां दर्शनानां तत्तदाचार्यनाम्नैव प्रचलितत्वदर्शनात्। दृश्यत एव हि गौतमीयदर्शनं काणाददर्शनं जैमिनीयदर्शनमित्यादिरूपेणैव तत्तद्दर्शनस्याद्यापि व्यपदेशः। लोकायतपदेन संसूच्यमानो लोकविस्तारस्तु विदित एव सर्वेषाम्। युक्तश्चायम्। यतो हि न कोऽप्येको मानवः शक्यस्तमवलोकयितुं यो हि न दध्याद् दण्डनीतिविषयत्वयोग्यताम्। प्रारब्धशेषं भुञ्जाना आत्मज्ञानिनोऽपि यदाश्रूयन्त दण्डनीतिविषयतां गतास्तत्तदितिहास पुराणादिषु तदा का पुनः कथान्येषाम्।

## सर्वदर्शनसामञ्जस्यम्

व्याख्याते ह्येवं चार्वाकदर्शनस्यास्य रहस्ये दाण्डनीतिकी हि सत्ता सिद्धा भवत्येतद्दर्शना-भिमतानां प्रमाणप्रमेयादीनामिति नान्यस्यास्तत्तद्दर्शनसिद्धपदार्थगतायास्तार्किक्याः सत्तायाः खण्डनं पर्यवस्यति। ततो न केनाप्यस्यानेनापि च कस्यापि विरोध आपतति। अयं भावः— यथा हि ब्रह्माद्वैतवेदान्तिभिः—"लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयात्" इति वदद्भिः प्रमाणप्रमेयादिभेदानां व्यावहारिकीं शुक्तिरूप्यादीनां च प्रातिभासिकीं ब्रह्मणश्च तात्त्विकीं सत्तां स्वीकृत्याविरोधः संपाद्यते तथा लौकिक्या अपि सत्तायाः प्रयोजनवशेन वैविध्यमभिमत्य दाण्डनीतिकीं सत्तामेवादाय प्रवृत्तमिदं चार्वाकदर्शनमिति स्वीकारे न विरोधगन्धस्याप्यवकाशः केनापि दर्शनेनास्येत्यलमिदानीम्॥

---

सावने तत्रोदयार्कः कथ्यते तन्निष्ठाहोरात्रवृत्ते यातकालः । एतदर्थं क्षेत्रदर्शनम्—

स ल इ इ' उदयक्षितिजम् । ल, लग्नम् क्रान्तिवृत्ते । ता, तात्कालिकार्कः । उ = उदयार्कः, ता इ=सावनेष्टम्, उ इ' = नाक्षत्रेष्टम् । र' ल ता उ, इति क्रान्तिवृत्तं बोध्यम् ।

अत्रादौ सावनेष्टवशतो लग्नसाधन प्रदर्श्यते—प्राक् सूर्यः साधनीयः। स च सायनः कार्यः, यतः सायनादेव भुक्तभोग्यकालावगमादनयोर्लग्नसाधने प्रयोजनाच्च । अथ च यदि स्वेष्टे रविः क्षितिजादुपरि ता बिन्दौ स्थितः कल्प्यते तदा ता ल क्रान्तिवृत्तीयचापसम्बन्धिकालमानमहोरात्रे ता इ, इत्येव । अतः—

इष्टासु = ता र. भो असु + अं. रा. उ असु + लभु. असु

अत्र तात्कालिकार्कस्य भोग्यासवोऽनुपातेन—

$$\text{सूर्यभोग्यासवः} = \frac{\text{रविनिष्ठराश्युदयासु} \times \text{रविभोग्यांशाः}}{\text{३०}}$$

ततः समीकरणेन—

इष्टासु–ता. र भोग्यासु–अ. रा. उ. असु = लभु असु

यस्य राशेरुदयमानमिष्टासुभ्यो न शुध्यति सोऽशुद्धराशिरिति व्यवह्रियते । यश्च शुध्यति स शुद्धराशिरिति । अशुद्धराशावेव लग्नम् । अतोऽनुपातेन लग्नभुक्तासुभ्योऽशादिमानमवगन्तुं शक्यते । अनुपातो यथा—

$$\frac{\text{३०} \times \text{लग्नभुक्तासु}}{\text{अशुद्धराश्युदयासु}} = \text{लग्नभुक्तलवाः}$$

शुद्धराशिः + लग्नभुक्तांशाः = सायनलग्नम् । अयनांशैर्हीनं सन्निरयनलग्नम् । यदि क्षितिजादधो र'. बिन्दौ रविश्चेत्तदा स्वेष्ट पष्टिशुद्धं सद् उदयात् प्राग्भवति, अर्थाद्

रात्रिशेषेष्टमुच्यते । तत्रापीयमेव युक्तिः, परन्तु तत्र रविभुक्तांशेभ्यो भुक्तासवः साध्याः ।- ते स्वेष्टासुभ्यो विशोध्याः। ततश्चान्तरालोदयासवः शोध्याः। शेषे लग्नभोग्यासवः सिध्यन्ति। यथा—

सां. इष्टासु—ता. र. भुक्तासु—अं. रा. उ. असु = लग्नभोग्यासवः

पूर्ववदत्रापि— $\frac{\text{३०} \times \text{लग्नभोग्यासु}}{\text{अशुद्धराश्युदयासु}}$ = लग्नभोग्यांशा.

अशुद्धराशिः—लग्नभोग्यांशाः = सायनं लग्नम् । अयनांशविहीन निरयनलग्नं सिध्यति ।

रात्रिलग्नसाधने विशेष. । इष्टकालाद्दिनमान प्रोज्झ्य शेषमस्तादिष्टमालम्ब्य सषड्भार्काद् भोग्यप्रकारानयनरीत्या लग्न साध्यम् । यतः सषड्भार्कोदयक्षितिजान्तरं यत्तदेवास्तक्षितिजस्वेष्टार्कान्तरम् । सषड्भार्कस्य क्षितिजादुपरि स्थितत्वाद् भोग्यप्रकारः समुचित एव ।

नन्वत्र लग्नसाधने सावनेष्टासुभ्यो रविभोग्यासूना विशोधनानन्तरं राश्युदया विजातीयाः कथ शोध्याः ? यतो योगान्तरमत्र समानजात्योर्विभिन्नजात्योश्च पृथक् स्थितिः स्यादिति योग-वियोगविधाननियमः सैद्धान्तिकः । अत इद प्रतिभाति यन्नाक्षत्रेष्टोदयार्काभ्या लग्नानयन समुचितम्, वैजात्यदोषप्रसङ्गाभावात्तत्र च शोध्यशोधकाना नाक्षत्राणामेकजातित्वात् । अत्रोच्यते, भोग्यप्रकारलक्षणे सावनेष्टासु = ता र. भोग्यासु + अं. रा. उ असु + लभु असु

नाक्षत्रेष्टासु = उदयार्कभोग्यासु + अ. रा. उ. असु + लभु असु

अत्रोभयत्रान्तरालोदयासूनामेकत्वम् । अतो यदि सावनेष्टासु—ता. र भोग्यासु = नाक्षत्रेष्टासु—उ. र. भोग्यासु। एव सिध्येत् तदोभयप्रकाराभ्या लग्नसाधने काचित्त्रुटिर्नायास्यति तदर्थं प्रयासः—नाक्षत्रेष्टासु = सावनेष्टासु + रविगतिकलोत्पन्नासु । उदयार्कभोग्यासु = ता. र. भो. असु + र. ग कलोत्पन्नासु । विशोधनेन, नाक्षत्रेष्टासु—उ. र. भोग्यासु = सावनेष्टासु—ता. र. भोग्यासु। अत उभयत्र साम्य निष्पन्नम् ।

अत एव भास्कराचार्यः सिद्धान्तशिरोमणौ गोलाध्याये—

लग्नार्थमिष्टघटिका यदि सावनास्तास्तात्कालिकार्ककरणेन भवेयुरार्क्ष्यः ।

आर्क्षोदया हि सदशेभ्य इहापनेयास्तात्कालिकत्वमथ न क्रियते यदार्क्ष्यः ॥ इत्याह ।

एतेनोभयपद्धत्या लग्नानयनेनैकरूपं लग्नं सिध्यति । किन्तूदयार्कस्य बिन्दुरूपत्वात् प्रत्यक्षदर्शनाभावान्नाक्षत्रेष्टस्य च बहुषु स्थलेषु प्रयोजनाभावादुपेक्षित महर्षिभिराचार्यैश्च नाक्षत्रेष्टोदयार्काभ्यां लग्नसाधनम् । सावनेष्टस्य छायादिसाधने प्रयोजनसत्त्वात् सावनेष्ट तात्कालिकार्काभ्यामेव लग्नं प्राचीनाचार्यैः साधितम् । विषयेऽस्मिन् भास्करोदितं वचनम्—

"ता एव खेटद्युतिसाधनार्थं क्षेत्रात्मकत्वात्सुधिया नियोज्याः" इति ।

एवं तात्कालिकार्कवशतो लग्नानयने भास्करोक्तिः—

"तात्कालिकार्केण युतस्य राशेरभुक्तभागैर्गुणितोदयात् स्यात् ।
भोग्यासवः खाग्निहतादवाप्ता भुक्तासवो भुक्तलवैः स्युरेवम् ॥
इष्टासु सघादपनीय भोग्यास्तदग्रतो राश्युदयाश्च शेषम् ।
अशुद्धहृल्खाग्निगुण लवाद्यमशुद्धपूर्वैर्भवनैरजाद्यैः ॥
युक्तं तनुः स्यादयनांशहीनम्" इति ।

प्रथमं सकलाचार्यपूज्यो भगवान् सूर्यः स्वसिद्धान्ते सावनेष्टासु तात्कालिकार्काभ्या लग्न-साधनमुपन्यस्तवान् । तत्र युक्तायुक्तत्व विविच्य भास्कराचार्येण सैव पद्धतिरङ्गीकृता । एता सिद्धान्तपद्धतिमनुसृत्यैव ग्रहलाघवकारादिभिर्व्यवहारगणितप्रदर्शकैः स्वस्वग्रन्थेषु लग्नानयन-प्रकारोऽभिहितः ।

नव्यास्तु सूक्ष्मलग्नानयनमेव कुर्वन्ति—प्रथममिष्टकालतो रवेर्मध्यविषुवांशास्ततो दशमलग्नमानं क्रान्तिवृत्तयाम्योत्तरवृत्तोत्पन्नकोणमानं यष्टिसंज्ञं दशमक्रान्तिकोटिमानं च ज्ञेयम् । अथ दशमलग्नात् क्षितिजावधिः क्रान्तिवृत्ते कर्णः । दशमलग्नात् क्षितिजावधिर्याम्योत्तरवृत्ते दशमलग्नस्योत्तरगोले तद्द्युज्याचापाक्षांशयोगः कोटिः, दक्षिणगोले च तदन्तरसमा कोटिर्भवति । कोटिकर्णान्तरगतकोणो यष्टिचापसमोऽत्र परमक्रान्तिसंज्ञः कल्प्यः । ततश्चापीयत्रिकोणमितितः कोटिपरमक्रान्तिज्ञानतः कर्णमानं सुबोधम् । कर्णदशमलग्नयोगसमं च सायनलग्नं स्फुटमतोऽ-यनांशविहीनं सन्निरयनलग्नं सिध्यति । अत्र क्षेत्रम्—

अत्र ∠ द कोणो यष्टिचापम् । द ल चापांशाः कर्णः क्रान्तिवृत्ते । स द चापांशा याम्योत्तरवृत्ते कोटिः । ल = लग्नम् । द=दशमम् । वृत्ताना स्थितिः परिस्फुटा, तन्नामोल्लेखात् । पू = पूर्व-स्वस्तिकम् । प = पश्चिमस्वस्तिकम् । स द=दशमराश्यादिकम् । सं द + द ल = दशमराशिः + कर्णः = लग्नम् ।



किं च, इ. घटी × ६ + रविविषुवांशाः = लग्नविषुवांशाः । ततः कमलाकरोक्त्या क्षेत्रांशाः साध्याः । एवमपि लग्नं सिध्यति ।

अत्र लग्नसाधनोपकरणविषये बहु वक्तव्यमस्ति । तथापि प्रकृतप्रसङ्गानुरूपं किञ्चिदुच्यते । उपकरणेष्वयनांशाना स्थानमपि प्रधानम् । ध्रुवाज्जिनांशवृत्ते कदम्बस्य चलितत्वात् क्रान्तिनाडीवृत्तयोः संपातोऽपि चालितो भवति । असौ सपातो निरयनमेषादिबिन्दुतः पूर्वस्यां प्रतीच्यां च गच्छति । अर्थाद् दोलाभ्रमणं भवति । एतच्च मतं न सर्वेषाम् । केषाञ्चिन्मते विपरीतगत्या चक्रभ्रमणमप्यस्ति । ते चायनांशा आधुनिककाले भिन्ना भिन्ना विविधसिद्धान्तेषु दृश्यन्ते । आधुनिकैः पाश्चात्त्यैरपि च विविधाः समुपलब्धाः सन्ति । अयनांशविषये भगवान् सूर्यः—

> त्रिंशत्कृत्यो युगे भानां चक्रं प्राक् परिलम्बते ।
> तद्गुणाद् भूदिनैर्भक्ताद् द्युगणाद् यदवाप्यते ।
> तद्दोस्त्रिघ्ना दशाप्तांशा विज्ञेया अयनाभिधाः ॥ इति ।

ग्रहलाघवे गणेशदैवज्ञोऽपि—"वेदाब्ध्यब्ध्यूनः खरसहृतः शकोऽयनांशाः" इत्याह ।

एवमनेके प्रकाराः सन्ति । पद्धतिभेदेन साधितेष्वयनभागेषु कतमो ग्राह्य इति विषये बहु विवादोऽस्ति । अधुना ५२″·२ अयनगतिरङ्गीक्रियते । गतिरियं च वार्षिकी बोध्या ।

ननु लग्नानयने स्वदेशीया उदया गृहीतास्ते कथं साध्याः ? अत्रोच्यते—लङ्कोदयाश्चरखण्डैरूनाधिकाः सन्तः स्वदेशीया भवन्तीति परिस्फुटम् । तद्यथा—क्रान्तिवृत्तस्थराश्यादिराश्यन्तयोर्ध्रुवप्रोतवृत्तकरणेन नाडीवृत्ते ध्रुवप्रोतद्वयान्तरं प्रत्येकस्य राशेरुदयमानं लङ्काया भवतीति क्षेत्रदर्शनात् स्फुटम्—



एवं मेषादित्रयाणां य उदयास्त एव विलोमेन कर्कादितः कन्यान्तानाम् । एवं कृते षण्णां राशीनामुदया भवन्ति । त एव पुनर्विलोमेन तुलादिषण्णाम् । साधनानि चैतेषाम्—"मेषादिराशित्रिगृहद्युमौर्व्या" इत्यादिना भास्करोक्तप्रकारेण भवन्तीति स्फुटम् । इत्थमत्र सिद्धलङ्कोदयेभ्यः स्वदेशीयाः साध्यन्ते ।

एतदर्थं क्षेत्रदर्शनम्—

स = समस्थान क्षितिजे ।

ध्रु = ध्रुवस्थानम् ।

अथात्र क्षेत्रे क्षितिजक्रान्तिवृत्त-सयोगे प्राक्क्षितिजे म = मकरादिः, अं तदन्तः, तर्हि मकरान्तनिष्ठाहोरात्रे अं ल इति मकरराशेर्लङ्कोदयमानम् । अं उ इति मकरस्य स्वोदयमानम् । उ ल चरखण्डमिति । अतः मकर-



लङ्कोदयमान चरखण्डैर्विहीन सन्मकरस्य राशेः स्वोदयमानं अ उ चापसमं प्रत्यक्षम् । एवं मिथुनान्त यावत् स्वोदयमान वोध्यम्, एकलक्षणलक्षितत्वात् ।

कर्कादितो धनुरन्ताना कृते क्षेत्रस्थितिः—

प्राक्क्षितिजे क्रान्तिवृत्तसयोगे क = कर्कादिः, अं तदन्तश्च । तदा कर्कान्तनिष्ठाहोरात्रे क्षितिज यावद् अं उ चापं कर्कस्य स्वोदयाः । कर्कादि-गतध्रुवप्रोतवृत्तकरणेन अं ल इति तस्य लङ्कोदयाः । उ ल चरखण्डम् । अतः कर्कस्य लङ्कोदयमानं चरखण्डयुतं सत् स्वोदयमान तस्य सिध्यतीति स्फुटम् । एव सर्वमुपपन्नं जातं धनुरन्तं यावदिति ।



चरखण्डसाधनं तु—

मेषादिगे सायनभागसूर्ये दिनार्धभा या पलभा भवेत्सा ।

त्रिष्ठाहता सा दशभिर्भुजङ्गैर्दिग्भिश्चरार्धानि गुणोद्धृतान्त्या ॥

इत्यनेन भवत्येव । इत्थमत्र स्वोदया निष्पन्नाः ।

"क्षेत्राणा स्थूलत्वात् स्थूला उदया भवन्ति राशीनाम्" इत्यादिवचनादेकैकराशिमानं परित्यज्य कमलाकरेण प्रत्येकांशस्योदयमानमानीय तानि पठितानि स्वग्रन्थे । तेभ्यो यदि

लग्नानयनं भवेत्तदा लग्नसाधने सूक्ष्मता समुपलब्धा भविष्यति । परन्तु व्यवहारे प्रत्येकांशोदयमानेभ्यः प्रयासासंभवात् सर्वैः प्राचीनैराचार्यैः राश्युदयमानेभ्यो लग्नं साधितम् । व्यवहारे चास्यैव प्रचारो दृश्यते विशेषरूपेण । इद लग्नमेवाश्रित्य धनादिभावाः प्रवर्तन्ते । सामान्यतो लग्नतः फलविषयेऽपि प्राचीनाचार्यमहर्षयो वराहमिहिरादयोऽपि च स्वस्वनिर्मितग्रन्थेषु ग्रहयोगदृष्टिसंयोगसंबन्धाज्जीवाना शुभाशुभफलान्यनेकविधानि वर्णयन्ति । यथा—

यो यो भावः स्वामिदृष्टो युतो वा सौम्यैर्वा स्यात्तस्य तस्यास्ति वृद्धिः ।
पापैरेव तस्य भावस्य हानिर्निर्देष्टव्या प्रश्नतो जन्मतो वा ॥ इति ।

एवं च—"होरास्वामिगुरुज्ञवीक्षितयुता नान्यैश्च वीर्योत्कटाः" इत्यादिना लग्नबलमुक्तम् । जन्मकाले बलवति लग्ने शारीरिकसुखस्वास्थ्यसमृद्धिर्भवति । एवं प्राश्निकफलविचारे लग्नबलात् कार्यसिद्धिः पृच्छकाभिप्रेता, अन्यथात्वेऽन्यथा फलं भवतीति स्फुटम् । इत्थमत्र लग्नस्य स्वरूप-साधनयुक्तिप्रदर्शनपूर्वकं फलनिर्देशोऽपि सामान्यत उपन्यस्त इत्यलमतिविस्तरेण ॥

# कामीयम्

श्री.अनन्तशास्त्री फडके, राजकीयसंस्कृतमहाविद्यालयः, काशी ।

अथेदमारभ्यते कामीय नामेदं प्रकरणम् । अत्र वेदत आरभ्य पुराणपर्यन्तवाङ्मये कामसंवन्धि यद् वृत्तजातमुपलभ्यते तत्किञ्चित्क्रममनुवध्य विदुषा मोदाय, तस्य प्राचीनकालतः कीदृशी स्थितिरिति ज्ञानाय च प्रदर्श्यते । प्रथमतश्चेतनाना जगत आरभ्य परस्परसंयोजन कारण प्रदर्श्य ततः प्रवृत्त प्रवाहद्वयं च वर्णयित्वा विस्तृत कामीय प्रदर्श्यते प्रासङ्गिक वैशिक पातिव्रत्यमपि च ।

प्रथमतो जगतो मूल काम इत्यृग्वेदादिग्रन्थतो ज्ञायते—

कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथमं यदासीत् ।
सतो वन्धुमसति निरविन्दन् हृदि प्रतीष्या कवयो मनीषा ॥

[ ऋ० १०।१२९।४ ]

अग्रे अस्य विकारजातस्य सृष्टेः प्रागवस्थाया परमेश्वरस्य मनसि कामः समवर्तत सम्यगजायत, सिसृक्षा जातेत्यर्थः । मनसः अतःकरणस्य समवेतं रेतो भाविनः प्रपञ्चस्य बीजभूत प्रथममिति श्रीसायण । परमेश्वरस्य सृष्ट्युत्पादने स्वस्यैकत्वेन ज्ञान ततश्च बहुत्वभवनकाम एव "एकोऽह बहु स्या प्रजायेय" [ छा० उ० ६।२।३ ] इत्यादिना प्रोक्तः । अन्यत्र च स्पष्टमेव— "तस्मादेकाकी न रमते द्वितीयमैच्छत्" [ बृ० उ० १।४।३ ] इत्यादिना रमणार्थ द्वितीयस्यापेक्षा प्रदर्शिता ।

मनुनापि सर्वथा प्रवृत्तेः कामस्यैव कारणत्वं प्रतिपादितम्—

अकामस्य क्रिया काचिद् दृश्यते नेह कर्हिचित् ।
यद्यद्धि कुरुते किञ्चित्तत्तत्कामस्य चेष्टितम् ॥ [ २।४ ] इति ।

कामो नाम सर्वप्रवृत्तेः कारणभूतः स्वभिन्नसंसर्गोत्पादक इच्छाविशेष एव । अत एव वैवाहिके प्रकरणे पाणिग्रहणरूपविशिष्टे कर्मणि वधूवरयोः परस्परमेलने काम एव दाता काम एव ग्रहीतेति श्रुत्या श्रावितम्—"क इद कस्मा अदात् कामः कामायादात्कामो दाता कामः प्रतिग्रहीता' 'कामेन त्वा प्रतिगृह्णामि" [ ऐतरेयब्राह्मणम् ] इति । कोऽदाद् दत्त-

वानिति स्वयमेव वरेण कृतः प्रश्नः। अथोत्तरम्—कामः अदात् कामाय अदात्, यतः कामो दाता कामः प्रतिग्रहीतेति तस्यार्थः।

एव च जगतः प्रारम्भादेव स्त्रीपुरुषादिसबन्धप्रयोजकस्य कामस्य प्रवृत्तेः सत्त्व ज्ञायते। अत एव श्रुत्यैकाकिनो रमणाभावपूर्वकं रमणेच्छारूपेण कामेन स्त्रीपुरुषोत्पत्तिरिति श्राव्यते—"स हैतावानास यथा स्त्रीपुमासौ सपरिष्वक्तौ स इममेवात्मानं द्वेधाऽपातयत्ततः पतिश्च पत्नी चाभवताम्" [ बृ० उ० १।४।३ ] इति।

एव चाकीटाद् ब्रह्मपर्यन्तं स्त्रीपुरुषभावेन जगतो विभागे स्वतः सिद्धः काम एव कारणम्। तस्यैवेच्छाविशेषस्य कामस्य नैकविधः पतिपत्नीरूपः कन्यापुत्रादिस्वरूपो विस्तारः। सर्वथा परिहर्तुमशक्यस्य स्वभावसिद्धस्य सर्वापेक्षयातिप्रबलस्य च कामस्य द्विधा प्रवृत्तिर्जगति दृश्यते। एकाऽप्रतिहतप्रवृत्ता, अन्या च नियन्त्रिता। नियन्त्रणं च कदाचित्प्रकृत्या किञ्चित्कालिकम्, यथा वृक्षादिषु पश्वादिषु च ऋतुकाल एव स्त्रीपुरुषसंबन्धोऽन्यदा सर्वथा तदभाव एव। क्वचिच्च प्रकृतिकृतस्वभावेन युग्मघटकविनाशपर्यन्तम्, यथा पक्षिषु युग्मघटकस्य स्त्रियाः पुरुषस्य वा विनाश-पर्यन्तं प्रायो नान्यया स्त्रिया पुरुषेण वा संबन्धः। इमं प्रकृतिस्वभावं समालोच्यैवाऽऽसृष्टेः काम-प्रवाहस्य विशोधनपूर्वकनियन्त्रणार्थं प्रबुद्धस्य विज्ञानशक्तियुतस्य मनुजस्य प्रबलः प्रयत्नो विद्यते। तस्य प्रबलस्यैव प्रयत्नस्य परमसुन्दरं नितान्तं रमणीयं फल पातिव्रत्यं नाम। परन्तु सर्वथा स प्रबलः प्रयत्नः सर्वत्र न फलतीति तथापि किञ्चिदंशेन नियमयति कामम्। तस्य निदर्शनं श्रीवात्स्यायनमुनिप्रोक्तं कामशास्त्रम्। कामस्याविशुद्धप्रवाहफलं वैशिकं नाम कर्म। शुद्धप्रवाहस्य फल चातुराश्रम्य चातुर्वर्ण्यं च नाम। तस्योभयविधस्य प्रवाहस्य वेदादिपुराणपर्यन्तं वाङ्मयजाते नैकानि नैकविधान्युदाहरणानि विद्यन्ते। यथानेकपतिकत्वं जटिलाचरिते दृश्यते। सा गौतम-वंशकन्या सप्तर्षीणा पत्नीति वर्णितं श्रीमन्महाभारते [ अनु० अ० २११ ]। माधवी च ययातिकन्या ब्राह्मणवरादनेकसबन्धेऽपि स्थितकन्याभावा हर्यश्व-दिवोदास-उशीनर-विश्वामित्राणा पत्नीति वर्णितम् [ महा० उद्योग० अ० ११५-१२० ]। द्रौपदी तु प्रसिद्धैव। मारिषा नैकप्रचेतसा स्त्री: [ विष्णु १।१५ ]। एवं बहुभार्यात्वे दृष्टान्ता रावणदशरथययातिप्रभृतयः। सोदरसंबन्धविषये प्रसिद्धमाद्यमुदाहरणं यमयम्योः। तत्र यमी यम विवाहार्थं प्रेरयति—

ओ चित्सखाय सख्या ववृत्या तिरः पुरू चिदर्णव जगन्वान्।

पितुर्नपातमा दधीत वेधा अधि क्षमि प्रतरं दीध्यानः॥ इति।

[ ऋ० १०।१०।१ ]

अस्यामृचि यमं प्रति यमी प्रोवाच। तिरः अन्तर्हितं निर्जनप्रदेशमित्यर्थः। पुरू चित् बह्वपि विस्तीर्णं च अर्णवं समुद्रैकदेशं अवान्तर्द्वीपं जगन्वान् गतवती यमी चिदिति पूजार्थे पूजितमिष्टं सखायं गर्भवासादारभ्य सखीभूतं यम सख्या सख्याय स्त्रीपुरुषसम्पर्कजनितमित्रत्वाय ओ वव्रुत्या आवर्तयामि आभिमुख्येन स्थित्वा लज्जा परित्यज्य त्वत्सम्भोग करोमीत्यर्थ इति सायणः।

यमस्तु नैतद्योग्यमिति नैकवारं निषेधति—

न यत्पुरा चकृमा कद्ध नूनमृता वदन्तो अनृत रपेम।
गन्धर्वो अप्स्वप्या च योषा सा नो नाभिः परमं जामि तन्नौ॥
[ ऋ० १०।१०।४ ]

पुरा पूर्वं प्रजापतेः यदगम्यागमनमपरिमितसामर्थ्योपेतत्वात्कृत तथा वय न चकृम नाकुर्म। वयमृता सत्यानि वदन्तोऽनृत कद्ध कदा खलु नून रपेम वदेम। अगम्यागमन न कुर्म इति यावत्। अपि च अप्सु अन्तरिक्षे स्थित. गन्धर्वः आदित्यः, अप्या अन्तरिक्षस्था आदित्यस्य भार्या सरण्यूश्च नौ आवयोर्नाभिरुत्पत्तिस्थान तत्तस्मात्कारणात् नौ आवयोः जामि बान्धवं परमम् उत्कृष्टम्। एवं सत्यावयोरगम्यागमनरूपत्वात् कर्तुमयुक्तमिति सायणः।

एवं पितापुत्रीसंबन्धः [ऋ० १०।६१।५–७], भ्रातृभगिनीविवाहः [अथ० २०।६६।१४], पितापुत्रीविवाहनिषेध [ ऐ० ब्रा० ३।३३, श० ब्रा० १।७।४।१–४ ] इत्यादय उपलभ्यन्ते।

परस्परमनेकजातिषु विवाहस्येदमेव प्रधानकारणं प्रबलकामेनोपहतचेतनात्वम्। प्रदर्शितं च वेनचरिते पौराणिकैः। यथा—

स महीमखिला भुञ्जन् राजर्षिप्रवरः पुरा।
वर्णाना संकरं चक्रे कामोपहतचेतनः॥ [ मनु० ६।६७ ]

तथानेकविभिन्नजातिसबन्धः कामनिमित्तो जात इत्यपि नैकचरित्रेषु श्रूयते—प्रियव्रतस्य ज्येष्ठपुत्रस्याग्नीध्रस्य विवाहोऽप्सरःकुलोत्पन्नपूर्वचित्त्या सह जातः [विष्णु० २।१]। ऐरावतकुलोत्पन्न-कारव्यनागकन्ययोलुप्या सह क्षत्रियकुलोत्पन्नपण्डुपुत्रस्यार्जुनस्य विवाहः [भार० आदि० २१४], भृगुकुलोत्पन्नजरत्कारुणा सह तक्षकनागभगिन्या जरत्कार्वा विवाहो जातः [ दे० भा० २।१२; भार० आदि० ४८]। क्षत्रियब्राह्मणविवाहोदाहरणं ययातिदेवयान्योः प्रसिद्धमेव। तथा राक्षस-कन्यया शर्मिष्ठया सह ययातेः क्षत्रियस्य संबन्धो जात इति भारत आदिपर्वणि [ ७५–८० ] प्रसिद्धम्। एवमनेकान्युदाहरणानि पुराणभारतवेदादिवाङ्मयेषूपलभ्यन्ते।

एवं बहुभार्यात्वे करणीये प्रथमाया अलङ्कारद्रव्यदान कृत्वा तस्याः समत्यापरया सह विवाह·

कर्तव्य इति रुक्माङ्गदचरित्रमिषेण नारदपुराणमनुशास्ति [२।१८।६१]। बहुभार्यात्वत्रदेकभार्यात्वमपि श्रीभगवतो रामचन्द्रादेश्चरिते दृश्यते। तेन रामचन्द्रेण यज्ञार्थं स्वर्णमयी सीता कृतेति प्रसिद्धं रामायणे। क्वचिच्च पतिमरणानन्तरं द्वितीयपतिसम्बन्धोऽपि दृश्यते कौरव्यनागकन्यया पाताल वासिन्योलुप्या सहार्जुनस्य। एवमनेकदृष्टान्तसंकुलेऽत्र कामप्रवाहविषये प्रबलस्यापि तस्य स्वाभाविकस्य कामप्रवाहस्य शोधनार्थं विवाहनियन्त्रणमावश्यकं कृतं तैः प्राचीनैः परमपूज्यैरार्यैर्ऋषिभिरेतदेव तेषामितरोपधर्मापेक्षया परमपूतं वैशिष्ट्यम्। यथा चोद्दालकेन—

व्युच्चरन्त्याः पतिं नार्या अद्यप्रभृति पातकम्।
भ्रूणहत्यासमं घोरं भविष्यत्यसुखावहम्॥
भार्यां तथा व्युच्चरतः कौमारब्रह्मचारिणीम्।
पतिव्रतामेतदेव भविता पातकं भुवि॥

[भार० आदि० १२२।२०-२१]

इत्यादिना प्रत्यपादि। प्रद्वेष्या भर्त्रा दीर्घतमसा च सर्वथापि जीवन्तं मृतं वा पतिं नोल्लङ्घयेत् स्त्रीरिति मर्यादा स्थापिता—

अद्यप्रभृति मर्यादा मया लोके प्रतिष्ठिता।
एक एव पतिर्नार्या यावज्जीवं परायणम्॥
मृते जीवति वा तस्मिन्नापरं प्राप्नुयान्नरम्।
अभिगम्य परं नारी पतिष्यति न संशयः॥

[भार० आदि० १० ।३३-३४]

तदेव च वृत्तं श्रीसावित्रीसीताप्रभृतिभिरादरणीयार्यस्त्रीभिरनेकान् कष्टान् सोढ्वापि प्रदर्शितम्। भगवता मनुनाप्यस्यैव सदाचारस्य पालनमुपदिष्टम्, तदभावे दण्डविधानमपि श्रावितम्। यथा—

अन्योऽन्यस्याव्यभिचारो भवेदामरणान्तिकः।
एष धर्मः समासेन ज्ञेयः स्त्रीपुंसयोः परः॥
तथा नित्यं यतेयातां स्त्रीपुंसौ तु कृतक्रियौ।
यथा नाभिचरेतां तौ वियुक्ताविततरेतरम्॥ [९।१०१-१०२] इति।
भर्तारं लङ्घयेद्या तु स्त्री ज्ञातिगुणदर्पिता।
तां श्वभिः खादयेद्राजा संस्थाने बहुसंस्थिते॥
पुमांसं दाहयेत्पापं शयने तप्त आयसे॥ [८।३७१-२] इति च।

अत एव ऋग्वेदोऽपि दम्पत्योरुभयोः सहैव कर्मानुशास्ति—

या दम्पती समनसा सुनुत आ च धावतः ।
देवासो नित्ययाशिरा ॥ [ ऋ० ८।३१।५ ]

हे देवासो देवाः समनसा समनसौ कर्मणि समानमनस्कौ या यौ दम्पती यज्ञकारिणौ जायापती सुनुतः सोमाभिषवं कुरुतः यौ दम्पती ततस्तमभिषुत सोमम् आधावतः शोधयतः । तथा नित्यया नित्यसम्बन्धेन आश्रयेण गोक्षीरेण संयुतं सोम यौ प्रयच्छत इति श्रीसायणः ।

अनियमितस्य कामप्रवाहस्यातिहीन सर्वथा वर्जनीयं फल वैशिकं नाम । अस्यापि वर्णनमृग्वेदादितो ज्ञातुं शक्यते । तथा हि—

अप्सरा जारमुपसिष्मियाणा योषा बिभर्ति परमे व्योमन् ।
[ ऋ० १०।१२३।५ ]

अप्सरा अपा सारयित्री अप्सु क्रीडार्थं सरन्ती वा उपसिष्मियाणा कान्तसमीपमुपगत्य ईषद्धसन्ती····ईदृशी योषा स्त्री····जार उपपतिः····तं बिभर्ति पोषयति धारयति वेति श्रीसायणः ।

पुरूरवसः स्वर्वेश्योर्वश्या सह सहवासानन्तरं तस्या निगमने प्राणत्यागार्थं प्रवृत्तस्य बोधनार्थमुर्वश्या वचनं वेश्यास्वभावं सर्वथाभिव्यनक्ति—

पुरूरवो मा मृथा मा प्र पप्तो मा त्वा वृकासो अशिवास उ क्षन् ।
न वै स्त्रैणानि सख्यानि सन्ति सालावृकाणा हृदयान्येता ॥
[ ऋ० १०।९५।१५]

हे पुरूरवः, त्वं मा मृथा मृतिं मा प्राप्नुहि । तथा मा प्र पप्तः अत्रैव पतनं मा कार्षीः तथा त्वा त्वा अशिवासोऽशुभा वृकासो वृका मोक्षन् उ इत्येवकारार्थः । अक्षन् माभ्यवहरन्तु। अथ स्नेहस्यासारतामाह–स्त्रैणानि स्त्रीणा कृतानि सख्यानि न वै सन्ति न सन्ति खलु । अभावे कारणमाह–एता एतानि सख्यानि सालावृकाणा हृदयानि तेषा हृदयानि यथा वत्सादीना विश्वासापन्नाना घातुकानि तद्वदिति श्रीसायणः ।

नीतिमञ्जरीकारेणेममेव दृष्टान्तमवलम्ब्योपदिष्टम्—

न स्त्रीजितः प्रमूढः स्याद् गाढरागवशंगतः ।
राजोर्वश्या जितो मूढो दुःखमाप पुरूरवाः ॥ इति ।

पुराणादिषु प्रायस्तत्संबन्धाद्धनादिहानिः पुरुषवञ्चनरूपं च तासां कार्यं वर्णितमुपलभ्यते—

तेन वेश्याकुसगेन पैत्र्य वित्तं तु नाशितम् ।
धुन्धुकारी गृहेऽतिष्ठत्पञ्चपण्यवधूवृतः ॥

[ पद्मपु० उ० ख० भाग० मा० ५।११ ]

गणिकास्तत्र गच्छन्तु रूपवत्यः स्वलङ्कृताः ।
प्रलोभ्य विविधोपायैरानेष्यन्तीह सत्कृताः ॥ [ वा० रा० बा० १० ]

अस्य प्रबलस्य स्वाभाविकस्य जगदुत्पादकस्य कामस्यानियमितत्वे सर्वथा हानिर्भवेन्न पशुतो मानवस्य कथमप्युन्नतिपथाशा, अतोऽयं पशुधर्मः सर्वथा निषिद्ध एव मन्वादिभिः—

अयं द्विजैर्हि विद्वद्भिः पशुधर्मो विगर्हितः ॥ [ ९।६६ ] इति ।

वेदोऽप्यर्यमादिभिर्देवताभिः कन्याया दानं वराय कृतमतो हेतोर्वरवार्धक्यं यावद्वधूसंबन्धो न नश्यतीति कथयति—

गृभ्णामि ते सौभगत्वाय हस्तं मया पत्या जरदष्टिर्यथासः ।
भगो अर्यमा सविता पुरन्धिर्मह्यं त्वादुर्गार्हपत्याय देवाः ॥

[ ऋ० १०।८५।३६ ]

हे वधूस्ते हस्तं गृभ्णामि गृह्णामि किमर्थं सौभगत्वाय सौभाग्याय मया पत्या त्वं यथा जरदष्टिः प्राप्तवार्धक्या असः भवसि । भगः अर्यमा सविता पुरन्धिः पूषा एते देवाः त्वा त्वा मह्यं अदुः दत्तवन्तः । किमर्थं गार्हपत्याय यथाहं गृहपतिः स्यामिति श्रीसायणः ।

एव चानियमितस्य कामस्य रजोगुणोत्पन्नत्वेन महापापरूपत्व महाशनरूपत्वं वर्णितं भगवता तोत्रवेत्रैकपाणिना रुक्मणीजानिना श्रीकृष्णेन—

काम एष क्रोध एष रजोगुणसमुद्भवः ।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥ इति ।

एवं च सर्वथा प्रबलस्य तस्य कामस्य नियन्त्रण विवाहद्वारा शोधनं पातिव्रत्यपत्नीव्रतरूपेण परमपुरुषार्थप्रापकमार्गप्रदर्शनमेवार्याणामितरधर्मप्रवर्तकेभ्यः श्रेयस्करो विशेष इति शम् ॥

---

# पाश्चात्त्यसाहित्यसिद्धान्तः

श्रीद्विजेन्द्रनाथमिश्रः, राजकीयसंस्कृतमहाविद्यालयः, काशी ।

काव्यविषयविवेचने प्रस्तुते समस्त ब्रह्माण्ड नाम काव्यस्य विषयो भवितुमर्हति, कवि-श्रेष्ठश्चात्मप्रतिभया नवानपि स्वयं कल्पयितु विषयान् प्रभवतीति पाश्चात्त्यसाहित्यिकाना सिद्धान्त-सरणिः । समस्त स्थास्नुजङ्गम भावगत च जगत्, जगतः प्रत्येकमङ्गप्रत्यङ्गानि, नृणा मानसा-ध्यात्मिकसामाजिकराजनीतिकविचारधाराश्च काव्यविषयीभवितुमर्हन्तीति ।

तत्र विषयनिरूपणमात्राश्रयः काव्यशैलीविभाग इति प्रवदन्ति पाश्चात्त्यविद्वासः । इत्थं च ते काव्यप्रतिपादनस्य तिस्रः शैलीर्मन्यन्ते । ताश्च १—बाह्यवादिनी, २—अन्तर्वादिनी, ३—बाह्यान्तर्वादिनी च ।

( १ ) तत्र बाह्यवादिन्या तटस्थो दर्शक इव बाह्यरूपेणेह काव्यगतं वस्तु कविरभिव्यनक्ति ।

( २ ) अन्तर्वादिन्या च स्वान् विचारानात्मनश्च भावनाः समुपादाय काव्यगतं वस्तु कविश्चित्रयति । यथा चित्रकारः कश्चित् स्वकल्पनया स्वतूलिकया च चित्रमारचयति ।

( ३ ) बाह्यान्तर्वादिनी शैली तूपर्युल्लिखितशैलीद्वयमात्रसमष्टिफला ।

एता एव शैलीराश्रित्य काव्यप्रभेदाः प्रकल्प्यन्ते । तद्यथा—बाह्यवादिनीतो वर्णनात्मकं काव्यम्, अन्तर्वादिनीतो गीतकाव्यम्, बाह्यान्तर्वादिनीतश्च व्याख्यात्मकं काव्यमिति ।

बाह्यान्तर्वादिशैलीप्रसूतेषु वर्णनात्मककाव्येष्वेव समस्तानि महाकाव्यखण्डकाव्य-स्फुटकाव्यानि परिगण्यन्ते । तत्रेत्थं पाश्चात्त्या महाकाव्यलक्षणं लक्षयन्ति—

महाकाव्ये ( Epic ) परम्पराप्राप्तमेवोपनिबध्यते कथावस्तु । वीरपुरुषो देवो वा कश्चिन्नायकत्वेनोपस्तूयतेऽत्र । नायकजीवनेन संबद्धं वस्तुजात चैकविधेनैव च्छन्दसोपश्लोक्यते कविना ।

महाकाव्यप्रभेदाश्चेत्थं क्रियन्ते—

१—सञ्चितमहाकाव्यम् ( Epic of growth ) । खण्डकाव्यमप्यस्यैव प्रभेदस्याशभूतम् ।

२—साहित्यिकमहाकाव्यम् ( Literary Epic )। स्फुटकाव्य चास्मिन् प्रभेदेऽन्तर्भूतम्।

( १ ) तत्र सञ्चितमहाकाव्ये हि परम्परागतामेव कथा कविरात्मप्रतिभया काव्यरूपे निष्पादयति। विश्वस्य प्राचीनमितिवृत्तम्, तत्रत्या जातीः, तासा रूढीः, आदर्शान्, अन्धविश्वासान्, धर्मभावान्, आचारविचाराश्चादाय सञ्चितमहाकाव्य सृज्यते। अथ च खण्डकाव्यमपीहैव परिगण्यते।

( २ ) साहित्यिकमहाकाव्य तु स्पष्टाङ्कितसञ्चितमहाकाव्यगतकियदशमपीद ततो भिद्यते। प्रभेदश्चाय कथावस्तुप्रतिपादनशैलीगत एव। यथा सञ्चितमहाकाव्य मतिमन्नैसर्गिके प्रकृतरूपे वर्णयितु पार्यते न तथा साहित्यिकमहाकाव्यम्। साहित्यिकमहाकाव्यस्य प्रतिपादने कवेर्विशद ज्ञान समधिकमपेक्ष्यते, अथ च केवलया कविप्रतिभयेदमुपबृह्यते। साहित्यिकमहाकाव्यस्यास्येमे मुख्याः प्रभेदाः प्रभवन्ति—

१—उपहासमहाकाव्यम् ( Mock Epic )।

२—उपहासनृत्यगीतम् ( Mock Ballad )।

३—साहित्यिकनृत्यगीतम् ( Literary Ballad )।

४—प्रामाणिकनृत्यगीतम् ( Authentic Ballad )।

( १ ) तत्रोपहासमहाकाव्यं हास्यरसप्रधान शब्दाडम्बरपूर्णमतिशयोक्तिप्रोत च भवति। अतिसामान्यं कथावस्तु, हास्यमयी महाकाव्यच्छाया चेति स्वरूपमस्य।

( २ ) उपहासनृत्यगीतमुपर्युल्लिखितकाव्यलक्षणसमन्वितं भवति। यस्याः कस्याश्चिद् भावनाया विचारधाराया घटनाया वाऽऽतिशय्यस्योपहासास्पदीकरणमेवास्योद्देश्यम्।

( ३ ) साहित्यिकनृत्यगीतं व्यक्तिविशेषसंबन्धसमन्वितमभ्युपगम्यते। रूढैराधुनिकैश्च विशेषणैर्युक्ता भाषा भवति। कस्याप्यादर्शस्य प्रतिपादनं भवति। ऐच्छिको नृत्यसंयोगः समायाति। ऐतिह्यमूलः पौराणिको वा विषयो विचार्यते, रोमाञ्चोल्लासिका च कथा कथ्यते।

( ४ ) प्रामाणिकनृत्यगीत जात्या संबद्धं संजायते। प्रेमघृणे, ममताकरुणे, युद्धमृगये च विषयाः। सामान्येनैव काचिदिह कथोपवर्ण्यते। बाह्यवादिनी शैली, अथ च रोचकं छन्दः। रूढविशेषणमयी भाषा, अथ च स्थायिपदस्याऽऽवर्जकता। नृत्यमत्रापेक्षितमेव, न त्वादर्शवादोऽत्यावश्यकश्चेति मीमासास्य प्रभेदस्य।

साहित्यिकमहाकाव्यसबद्धस्य स्फुटकाव्यस्य चेमे प्रभेदाः प्रभवन्ति—

१—रूपकम् ( Allegory ), २—दृष्टान्तः ( Parable ), ३—कल्पितकथा ( Myth ), ४—प्रबोधकम् ( Didactic poetry ), ५—व्यङ्ग्योक्तिः ( Satire ), ६—पत्रम् ( Epistles ), ७—ग्राम्यम् ( Pastorals ), ८—प्रत्युत्तरम् ( Ecologues ) इति ।

( १ ) तत्र रूपकम्—प्रभेदस्यास्य लक्ष्यं सामान्यतः शिक्षोपदेश एव, परन्तु स्पष्टतः प्रत्यक्षतश्च नैव दीयते । धार्मिकः सामाजिको वा विषयो भवितुमर्हति ।

( २ ) दृष्टान्तः—शिक्षामयलघुकथात्मकोऽयं प्रभेदः । इह च कवेः प्रशिक्षणमपि प्रचलति । विषयाश्च स्नेहः, स्वार्थः, मैत्री, जीवनस्यानुभूतिविशेषा वेति ।

( ३ ) कल्पितकथा—पृथिव्यन्तरिक्षयोर्दृश्याण्यादायैवैषानुभवाश्रया कल्पितकथानिर्मितिः । सूर्योदयास्तमयनचन्द्रागमनप्रावृट्शिशिरादीनवलम्ब्यात्र कथोपनिबन्धनम् । तद्यथा—वाजिजव-शीलोऽयं दिनकरदेवोऽन्धकाररूपमरिं विजेतुमितस्ततो विचरति गगनरणप्राङ्गणे ।

( ४ ) प्रबोधकम्—इह हि कविः स्वकीयान् विचारान् शिक्षामयांश्चोपदेशान् पद्येषु गुम्फति । अथ च समाजसुधार एव प्रधानमुद्देश्यमस्य ।

( ५ ) व्यङ्ग्योक्तिः—आदाविहाश्लीलवाक्यानि पराक्षेपकदूक्तयश्च प्रायुज्यन्त । साम्प्रतं तु कविरेतन्माध्यमेन सुधारलक्ष्यमुपस्थापयति ।

( ६ ) पत्रम्—पत्रेण प्रेष्यते परोक्षस्थितान् प्रेमसन्देशः । पत्राणीमानि चातिविस्तृतानि, शिक्षामयाणि, परामर्शात्मकानि च भवन्ति । अधुना तु कविवराः प्रेमशोकप्रतिपादनायाप्येतानि प्रयुञ्जन्ते ।

( ७ ) ग्राम्यम्—निसर्गनिर्मलनिरीहशान्तात्मतुष्टसहजस्वाभाविकजीवनमिह चित्र्यते । इत्थं चात्र नागरिकाजटिलजीवनादुन्मनस्को लोकः समाकृष्यते । परन्तु साम्प्रतं नानया रीत्या निर्मीयन्ते कृतयः ।

( ८ ) प्रत्युत्तरम्—ग्राम्यजीवनसबद्धमथवा जीवनस्यैकं लघु चित्ररूपमिदं काव्यं भवति । गोपालकाना शान्ता दान्ता जीवनपरिपाटी, तेषां संयोगवियोगौ, सुखदुःखानि चेह चित्र्यन्ते ।

एतावत्पर्यन्त बाह्यवादिनी शैली प्रपञ्चिता । अधुनान्तर्वादिनी प्रस्तूयते—

प्रसङ्गेऽस्मिन् प्रागेव प्रोक्त यच्चित्रकारश्चित्रमिव कविरिहात्मप्रतिभया यत्किञ्चिदुपकल्प-यतीति । शैल्यामस्या च सर्वाणि गीतकाव्यानि परिगणनामर्हन्ति । 'लिरिक' ( Lyric ) इति

पदार्थाभिप्रेतोऽयं गीतकाव्यशब्दः। लिरिक ( Lyric ) शब्दश्च वीणाभिधानमेव। जातुचिदुपवीणनार्हाणि गीतान्येव कविभिः प्रागुपकल्पितानि। कालान्तरे च तान्येव 'लिरिक' इति शब्देनाभिहितानि। वीणासाहचर्यविरचितानि च शनैः शनैरिमानि देवीदेवमहापुरुषाणा गाथा स्वरूपाणि विजयप्रशस्तिरूपाणि चाभवन्। साम्प्रतं च कविरेभिर्गीतैरात्मनो निगूढतममान्तरं भावमभिव्यनक्ति। गीतेष्वेषु कविरात्मनः सदाशा निराशा करुणा दया चाङ्कयति। गीतानामेषा च रसास्वादाय भावाना नैसर्गिकयाथार्थ्ये स्वभावसरला भावाभिव्यक्तिश्चापेक्ष्यते। आन्तरभावानामानन्त्यान्निस्सीमत्वाच्चैतेषामप्यनेके प्रभेदाः प्रभवितुमर्हन्ति। वस्तुतस्त्वेतानि गीतानि कविचित्तवृत्तेश्चित्राण्येव भवन्ति। संक्षेपतो गीतकाव्यलक्षणे वस्तूनामेतेषा समावेशः—

आदाविह गेयता परमावश्यकी। तदनन्तरं च कवेरात्मानुभूतीनामभिव्यक्तिः। पारम्पर्येण चैकस्यैव भावविशेषस्य प्रतिपादनम्। निर्बाधः सन्ततो भावप्रवाहः। हृदयावर्जक तर्कातीत च माधुर्यम्। अन्ते च भावानुभूतेस्तीव्रता, अभिव्यक्तेश्च सरलता। सर्वमिद वस्तुजात गीतानामुत्कर्षसिद्धये।

सामान्यतो गीतानामित्थं विभागकरणम्—

१—धार्मिकस्तुतिगीतम् (Hymns), २—राष्ट्रियगीतम् ( Patriotic songs ), ३—प्रणयगीतम् (Love lyrics), ४—शोकगीतम् (Elegy), ५—गौरवगीतम् (Ode), ६—उत्सवगीतम् ( Conavivial lyrics ), ( ७ ) चतुर्दशी ( Sonnet ) इति।

( १ ) तत्र धार्मिकस्तुतिगीतम्—पुरा प्रकृतिप्रभावप्रभावितो मानवः प्रकृतिस्तुतिं स्तुवँस्ततो ह्यात्मनो रक्षामकामयत। तदनन्तर च देवान्, ततः पर च परमेश्वरं प्रस्तोतुमारभत। सैषा धार्मिकगीताना परम्परा। गीतेष्वेषु यद्यपि कविरात्मानमेवाङ्कयति परन्तु वस्तुतस्त्वेतानि गीतानि कृत्स्नस्य मानवसमाजस्यान्तरतमभावाना चित्राणीव जायन्ते, हेतुश्चात्रास्माकं मानवीयः सबन्ध एव।

( २ ) राष्ट्रियगीतम्—धार्मिकस्तुतिगीतेभ्यः पश्चादेव जनिरेतेषा राष्ट्रियगीतानाम्। अथ च वीरगाथाकाले बीजमेषामन्तर्निहितम्। निसर्गपूजको मानवो वीराणाम्। क्रमेण यथा वीरपुङ्गवाना व्यक्तित्व राष्ट्रिये व्यक्तित्वे विलीनं सजात तथैवैषा वीरपूजा राष्ट्रपूजाया परिवर्तिता। ततश्च वीरप्रसविन्या देशभूमेः स्तुतिः प्रारभत। अधुना तु विश्वेऽस्मिन् सर्वेषा देशाना साहित्येषु राष्ट्रियगीताना विशिष्टमेव पदमास्ते। अथ च साम्प्रतिकं राष्ट्रियगीतं न केवल राष्ट्रियभावानेवोद्बोधयति, अपि त्वागामिने सन्तानायोच्चादर्शमपि प्रस्तौति।

( ३ ) प्रणयगीतम्—प्रेमैकाश्रयाणि ननु प्रणयगीतानि । विश्वसाहित्येऽस्याक्षयो वर्तते निधिः । विषयाश्चास्य प्रभेदस्य प्रेमिकाणामाशानिराशे हृदयानुरक्तिरातुरता सन्तापविलाप-प्रभृतय एव । किन्तु वियोगवर्णनपराः कृतयो नूनं मर्मस्पर्शिन्यः संजायन्ते, यतो हि शोक-सवेदनामयचित्तवृत्तिमानेव मानवः । एषु च करुणरसाश्रितानि गीतानि सर्वाधिकमाधुर्यपूर्णानि भवन्तीति गवेषकाणा धारणा ।

( ४ ) शोकगीतम्—मित्रकलत्राणा स्वसबन्धिजनाना महता च देशस्य पुरुषाणा निधना वसरे शोकप्रदर्शनार्थमेतानि शोकगीतानि निर्मीयन्ते । शोकवियोगभावैः स्वभावत एव कवयोऽ-धिकमाकृष्यन्ते । गीतैरेभिश्च मानवजीवनस्यासारत्वमपारदुःखसङ्कुलत्वं चाङ्कयति कलाकारः ।

( ५ ) गौरवगीतम्—अनियतच्छन्दोमयं विस्तृतमिदं भवति काव्यम्, गौरवपूर्ण-विषयकमोजोमयं च । भावानुरूप चात्रारोहावरोहाः क्रियन्ते तथैव चोपनिबध्यन्ते छन्दासि ।

( ६ ) उत्सवगीतम्—वैवाहिकेषूत्सवेषु, विजयदिवसेषु, ऋतूत्सवेषु च समवेतस्वरेण गीयमानानि नूनमुत्सवगीतान्युच्यन्ते । माहात्म्यं चैतेषा सामाजिकमेव । सहजाङ्कितस्नेह-लालसानीमानि गीतानि समधिकमावर्जयन्ति सर्वेषामेव मनासि ।

( ७ ) चतुर्दशी—गीतमिदं द्विधा विभज्यते । अष्टभिः पङ्क्तिभिः प्रथमः, षड्भिश्चापरो भागो भवति । पूर्वत्र विषयप्रवेशोऽपरत्र च भवत्युपसंहारः ।

इत्थमन्तर्वादिनीं शैलीं विविच्याधुना तृतीया बाह्यान्तर्वादिनी शैली प्रस्तूयते—

बाह्यान्तर्वादिनी शैली तूपर्युल्लिखितशैलीद्वयस्य सम्मिश्रणेन संजायते । वस्तुतस्त्विय-मेव नाट्यकाव्यमिति वक्तुं शक्यते । यदस्माक साहित्यशास्त्रे दृश्यकाव्यत्वेन प्रसिद्धम् ।

नाट्यकाव्यमेतच्च बाह्यवादिनीशैलीतः कथावस्तु, अन्तर्वादिनीतश्च पात्रानुभूतीनामभि-व्यक्तिमादाय निर्मीयते । व्याख्यात्मककाव्यनाम्नाप्येतदभिधीयते । इह च विषयमुपवर्णयँस्तत्र तत्रात्मनः स्वतन्त्रामपि व्याख्यामुपन्यस्यति कविः, येन वर्ण्यवस्तुन्यावर्जकत्वमाधीयते । समस्त नाट्यसाहित्यमित्थमस्यामेव शैल्यामन्तर्भवति ।

विस्तृतो ननु नाट्यसाहित्यविषयः । अग्रिमे निबन्धे विषयोऽयं प्रस्तोष्यते । तदनन्तरं चास्मद्भारतीयसाहित्यशास्त्रेण तुलयित्वाऽऽलोचयिष्यते किमस्मासु ततो वैशिष्ट्यं न्यूनत्व चेति । आशास्यते पाश्चात्त्यसाहित्यसिद्धान्ताना परिचयार्थं कश्चिदेवाशमादाय सक्षेपतो निबद्धोऽय निबन्धो विदुषा नैवातिवैरस्यमावक्ष्यतीति विनिवेद्य विरम्यतेऽधुना ॥

---

# मोकाटेश्रीगणपतिशास्त्रिणाम्

## जीवनेतिवृत्तम्

श्रीमुरलीधरमिश्र., राजकीयसस्कृतमहाविद्यालय , काशी ।

दक्षिणस्या दिशि सुसमृद्ध हैदराबादाख्य राज्यं शोशुभीति । तत्रैव नान्देडमण्डलान्तर्गत–वसमत–नामक ग्राममलङ्करिष्णवो महामहिमशालिनः सदाशिवस्य भवानीजानेः करुणाकटाक्षेण भक्तानानन्दपूरे प्रवाहयत. परमेश्वरस्य परमा भक्तिमभिलषन्तः पण्डितश्रीवेङ्कटेशशर्माणः पत्नीद्वयेन पुत्रादिसुखमनुभवन्तोऽपि सापत्न्यकलहेन स्वीयवैमात्रेयतनयेषु मनोमालिन्यमवलोकयन्तो वार्धक्ये विरक्तास्तत्रत्या विशाला सम्पद गेहादिकं च ज्येष्ठपत्न्यास्तोकेषु व्यवस्थाप्य कनिष्ठा जाया ततो जातमेक तनय स्वमात्रशरण्यमादाय भगवन्तमनन्यशरणमानन्दकन्द श्रीविश्वनाथ पतितपावनीं स्वकीयाद्भिः जीवाना मलरूपमघ क्षालयन्ती भागीरथी निकटवर्तिनीमेव वाराणसीमविमुक्तक्षेत्र च सस्मरन्त पदातय एवात्रागत्य काश्या दशाश्वमेधघट्टे न्यवात्सुः ।

तत्र ते स्वीय सहानीत बालक श्रीमारुतिशास्त्रिनामानमत्रत्यव्ययादिक्लेशमनुभवन्तोऽपि सस्कृतमाङ्गलभाषा व्यवहारकौशल्यसंपादिनीमनेकविधा विद्या च सपाठ्य पण्डितश्रेणिषु समतिष्ठिपन् । एतेऽपि श्रीमारुतिशास्त्रिणः पैतृक गुण सदाशिवविश्वनाथसेवारूप लभमाना अपि स्वीयं जीविकोपार्जन सुखेन विधातु श्रीजयनारायणमाध्यमिकपाठशालाया सस्कृताध्यापकपदमलङ्कृतवन्तः । एतेषामत्रैव काश्या परमपातिव्रत्यादिरमणीगुणाढ्यया दुर्गादेव्या सह पाणिग्रहसंस्कारः समजनि । तत एव ज्येष्ठपुत्राः श्रीरघुनाथशास्त्रिणो लब्धसाहित्याचार्यपदवीकाः परमशान्ता मिर्जापुरमण्डले माध्यमिकपाठशालाया यावज्जीवमध्यापनमकार्षुः । तेषामेव मारुतिशास्त्रिणा द्वितीयतनयाः श्रीगुरुचरणाः श्रीगणपतिशास्त्रिणो 'मोकाटे' इत्युपाह्वाः परमपुण्या महाभागाः समजनिषत ।

एतेषा बाल्यकाल एव पितरो दुर्दैववशात् परमपुनीताविमुक्तक्षेत्रे लप्स्यमानमोक्षेऽतिगृध्नवः शीघ्रमेवेमा लोकलीला विससृजुः । ज्येष्ठभ्रातुरप्यल्पवयस्कत्वाजननीमात्रशरणाः पूर्वजन्मोपात्तविद्यासस्कारा अध्ययनादिव्यवस्था परमकष्टेन सपादयन्तोऽपि महामहोपाध्यायाना महर्षिपतञ्जल्यवताराणा वैयाकरणकेसरिणा श्रीदामोदरशास्त्रिभारद्वाजानामन्तेवसन्तः संपूर्ण शब्दा-

नुशासन पूर्वोत्तरमीमासा न्यायवैशेषिकौ धर्मशास्त्रादिशास्त्राणि चाधीत्य परमानन्द-नगवा-रण-वीरपाठशालासु कतिपयैर्वर्षैः समध्याप्य वहून् शिष्यान् योग्यतमान् विदधुः। अध्यापनकार्येण सहैव जैनव्याकरण-पाणिनीयव्याकरणदीपिका-वाक्यपदीयप्रभृतयोऽनेके ग्रन्थाः सशोध्यैभिः सपादिताः।

१९१६ ईशवीये काशीस्थराजकीयसस्कृतमहाविद्यालयाधिकारिणो निजे विद्यालयेऽध्यापयितु विद्वद्रत्नान्वेषणतत्परा वैयाकरणरत्नानेनान् तत्रैव नियोजयामासुः। तत्र नियुक्ता एते १९४४ ईशवीयवर्षपर्यन्तं परमनैपुण्येन सहायकप्राध्यापकपदे प्राध्यापकपदेऽन्ते च प्रधानाध्यापकपदे स्थित्वा पारेशत भारतवर्षस्यानेकप्रान्तेषु लब्धयशसा विद्वत्तल्लजान् सपादयामासुः। तेष्वेव श्री.अनन्तशास्त्रिफडकेमहोदया अधुना पुराणप्राध्यापकपदेऽस्मिन्नेव महाविद्यालयेऽध्यापयन्त उत्तरप्रदेशे सस्कृतविश्वपरिषदोऽन्तर्गतर परमावश्यक प्रचारकार्यमपि विदधतो वर्तन्ते। अस्येतिवृत्तस्य लेखकोऽपि व्याकरणविभागे प्रधानप्राध्यापकपदेऽस्मिन्नेव राजकीयविद्यालये तेषामेव गुरुचरणानामाशीर्वादादध्यापनकार्यं विदधाति। अपरे च तेषा शिष्या इन्दौरप्रधानराजकीयविद्यालये टिल्लुविनायकशास्त्रिणोऽध्यक्षपदे वर्तमानाः, द्विवेदिश्रीचन्द्रशेखरशास्त्रिणश्च जयपुरे राजकीयसंस्कृतमहाविद्यालयेऽध्यक्षपदमध्यासीनाः सन्ति। अन्ये च ग्वालियरराजकीयविद्यालयेऽपरेषु चानेकविद्यालयेषु प्रतिष्ठितपदेऽध्यापनकार्यं संपादयन्तो वर्तन्ते।

एतेषु गुरुचरणेषु महद्वैशिष्ट्य यदेकाकिनमपि तनयं श्रीकृष्णशास्त्रिण सस्कृतभाषाया गाढानुरागवशादस्मिन्नपि समये केवल सस्कृतमेवाध्यापयामासुः। सोऽयमेतेषा पुण्यगरिम्णा नव्यव्याकरणाचार्यपरीक्षाया सर्वप्रथमो भूत्वा परीक्षाविषये सर्वप्रथमान् पितॄननुकुर्वन्, "आत्मा वै जायते पुत्रः" इति श्रुति सफलयन्, न्यायवेदान्तशास्त्रिपरीक्षामप्युत्तीर्य परमनिपुणो विद्वान् संजातः।

इतोऽवकाशमधिगम्य श्रीविश्वनाथस्य भगवतश्चरणारविन्देषु सर्वत आकृष्य मन आधित्समाना अपि मारवाड़ीसस्कृतमहाविद्यालयस्याधिकारिभिर्विशेषतः श्रीकाशीराममहोदयैर्भूतपूर्वसस्कृतपाठशालानिरीक्षकैर्वार वारमभ्यर्थिता अनिच्छन्तोऽपि तेषा सौहार्देन हठाद्वशीकृताः कियत्कालं तत्राप्यध्यापिपन्। परन्तु ततोऽपि विरक्ता भगवच्चरणरक्ताः स्वीये पदे स्वाशं सर्वथा योग्यं श्रीकृष्णशास्त्रिणं नियोज्य नैजं कर्तव्यमेव पालयन्ति।

महानुभावैरेतैर्महामहोपाध्यायाना परमोदारचरिताना श्रीतात्याशास्त्रिणा परिभाषेन्दुशेखरस्य भूतितिलकस्योपरि महत्वपूर्णा गवेषणागर्भिता तत्त्वप्रकाशिकानाम्नी व्याख्या समपादि।

निबन्धाश्चानेके विद्वत्तापूर्णाः "सारस्वत्या सुषमायाम्" एतेषा प्रकाशिता वर्तन्ते । इदानीमपि शब्देन्दुशेखरं-व्याकुर्वाणा आसते । मन्ये यदस्य ग्रन्थस्य प्रकाशनेन विद्यारसिकाना महानुपकारो जनिष्यते ।

एतेषा पाणिगृहीती दयादाक्षिण्यादिनारीगुणसम्पन्ना गार्हस्थ्ये कर्मणि पुरः कीर्तनीया दुर्दैववशात् पञ्चचत्वारिंशत्कल्पे वयस्येव द्वे कन्ये नववर्षदेशीयमेक पुत्रं च परित्यज्य श्रीभगवतः परमकारुणिकस्य भवानीपतेः परमसायुज्यं प्राप्तवती । तत ऐहिकात् कार्यजाताद्विरक्ताः केवल शास्त्रादिचिन्तनेऽपत्यजाताना योगक्षेमयोश्च सक्ताः परमतपोमूर्तयोऽपत्यजातानामुद्वाहादि संस्कारान् सपाद्य गेहादिकार्यसपादनचणे तनये गार्हस्थ्यधुरा समर्प्य च "तत्वमसि" इत्यादि वेदान्तमूर्धन्यमहावाक्याना श्रवणमनननिदिध्यासनेषु स्वीय कालमतिवाहयन्तः समये समये ह्यस्माक प्रवर्तमानाना शास्त्रीयसन्देहाना निराकरणेन परमोपकार विदधानाः परमदयालवो विराजमानाः सन्ति ॥

# म०म० खिस्ते श्रीनारायणशास्त्रिणाम्

## जीवनेतिवृत्तम्

श्रीबटुकनाथशास्त्रिखिस्ते, राजकीयसंस्कृतमहाविद्यालयः, काशी।

एतेषां महानुभावानां जन्म वाराणसेये सुप्रतिष्ठिते महाराष्ट्रब्राह्मणकुले प्रायः षष्टिवर्षेभ्यः प्राक् १८८३ ईशवीयाब्दे समभूत्। बाल्य एव काले दुःखकरं पितृवियोगमनुभवन्तोऽपि सर्वतो निःसहाया अप्येते परिश्रमशीलतया प्रतिभासंपन्नतया गुरुजनशुश्रूषया च सर्वथैवाऽविगणय्य नानाविधं विघ्नजातमध्ययनैकतत्परा बभूवुः।

बाल्यादेव महानुभावानां प्रतिभा लोकविस्मयजननी, स्वभावश्च निर्भीकः सर्वेषां कुतूहलोत्पादकः समवर्तत। सर्वतः प्रथमं महामहोपाध्याय-सी.आई.ई.-पदालङ्काराणां श्रीगङ्गाधरशास्त्रितैलङ्गमहोदयानां शिष्यवरैर्लोकोपकारव्ययिताशेषजीवनैर्बाबाशास्त्रिनामधेयैर्गुरुवरैर्दत्तहस्तावलम्बाः सुतनिर्विशेषमङ्गीकृताश्चैते व्याकरणाध्ययने कृतप्रवृत्तय आसन्। परन्तु श्रीमद्भिर्गङ्गाधरशास्त्रिभिरेतेषां स्वाभाविकं साहित्यानुरागं काव्यरचनासौष्ठवं चालोक्य साहित्यशास्त्राध्ययने स्वाज्ञया प्रवर्तिता इमे महाभागाः। ततः प्रभृति तेभ्यो म.म.गङ्गाधरशास्त्रिगुरुवरेभ्यस्तदनुजेभ्यो म म रामशास्त्रिगुरुवरेभ्यश्च चिरकालं साहित्यदर्शनधर्मशास्त्रादीनि शास्त्राणि प्राचीनपद्धत्या पठितुमारभन्त शास्त्रिवर्य्याः। राजकीयसंस्कृतमहाविद्यालये तदानीन्तनच्छात्रमण्डले प्रगल्भताया रचनापाटवे विशिष्टं स्थानमेतेषामासीत्। संस्कृताध्ययनेन सहैवाङ्गलभाषाध्ययनमपि प्रवर्तितमेभिः। तात्कालिको राजकीयसंस्कृतमहाविद्यालयाध्यक्षो डा०वेनिसमहोदयोऽपि शास्त्रिवरेषु सुतनिर्विशेषं स्निह्यति स्म। तस्मादध्यक्षवरात् 'एपिग्राफी'-विषयेऽपि शास्त्रिवरैर्महनीयः समुपार्जितो ज्ञानराशिः। एवं सम्यगध्ययनं संपादयद्भिरेभिः १९१५ ईशवीयाब्दे सर्वप्राथम्येन साहित्याचार्यपदवी पदकेन सह समुपार्जिता।

तदनु 'साधोलालरिसर्चस्कालर'-वृत्तिमधिगम्य प्राचीनग्रन्थसंशोधनादौ चिरमेभिः परिश्रमोऽकारि। डा०वेनिसमहोदयानन्तरं म.म.डा०गङ्गानाथझामहोदयानामाध्यक्ष्ये सरस्वतीभवनपुस्तकालयीयहस्तलिखितग्रन्थाध्यक्षस्थाने नियुक्तिरेतेषां १९२० ईशवीयाब्दे डा०वेनिसमहोदया-

नामन्तिमं पत्रमुपलभ्य तदनुसारमेवाभूत्, न तु शास्त्रिवरैरत्र किञ्चिदावेदनपत्रादिक दत्तमासीत्।

ततः प्रभृति शास्त्रिवरैः सरस्वतीभवनपुस्तकालये महता परिश्रमेण दुर्लभो बहुमूल्यश्च ग्रन्थसमवायः संगृहीतो योऽद्यापि भारतवर्षे प्रथमश्रेणीमेवाधितिष्ठति। शास्त्रिवरैः संगृहीताना ग्रन्थाना सख्या प्रायः पञ्चाशत्सहस्रतोऽन्यूनैवाऽऽस्ते। विविधाना साहित्यतन्त्रधमशास्त्र-कोषव्याकरणादिविषयकाणा प्राचीनदुर्लभग्रन्थाना चत्वारिंशदधिकाना संपादनमपि सरस्वती भवनग्रन्थमालायामन्यत्र च शास्त्रिवरैः कृत वर्तते। एवम् 'अमरभारती' इति काचन सरसा संस्कृतमासिकपत्रिकापि वर्षद्वय यावत् सपाद्य प्रकाशिता महाभागैः। 'विद्वच्चरितपञ्चकम्', 'दरिद्राणा हृदयम्', 'दिव्यदृष्टिः' इत्यादयः सस्कृतचरितकथाप्रबन्धाः, पारेशतं काव्यरचनाः, शाकुन्तलस्वप्नवासवदत्तप्रभृतिनाटकाना टीकाग्रन्थाश्च शास्त्रिवरैः सन्निबद्धाः सुरभारत्याः कोष वर्धयन्तो वर्तन्त एव। बङ्गप्रदेशीयतारकेश्वरमन्दिरस्य व्यवहारवादे प्रचलति राजकीयादेशात् शङ्कराचार्यस्य तन्त्रप्रामाण्याङ्गीकर्तृत्वं शास्त्रिवरैस्तथा युक्तिप्रमाणसहस्रैरुपपादितं यथा तदानीन्तनः प्रतिपक्षिवर्गोऽपि प्रशंसकः संवृत्तो महाभागानाम्।

एवं गच्छता कालेन १९४६ ईशवीयाब्दे भारतसम्राजा शास्त्रिवराणा वैदुष्यसमानार्थ 'महामहोपाध्याय'-पदवी सादरमेभ्यः समर्पिताभूत्। ततः १९४८ ईशवीयाब्दे डा०मङ्गलदेव-शास्त्रिमहोदये गृहीतावकाशे तदानीन्तनोत्तरप्रदेशीयशिक्षामन्त्रिवरो गुणग्राही श्रीसम्पूर्णानन्द-महोदयः शास्त्रिवरान् राजकीयसंस्कृतमहाविद्यालयस्याध्यक्षपदे प्रतिष्ठापयामास। अतीतेऽप्यव-काशग्रहणवयसि वर्षद्वयं यावन्महाविद्यालयाध्यक्षपदगौरवं विशुद्धसंस्कृतपण्डितैरद्यावध्यनधिगतं समनुभूय शास्त्रिवराः १९५० ईशवीयाब्दे सेवातोऽवकाशमभजन्त। साम्प्रतमपि च गीर्वाणवाणी-गौरवं वर्धयन्तस्तपसि विशेषतः कृतमनोयोगा गमयन्ति कालं काशिकायामेव। एतेषामेक एव पुत्रः श्रीबटुकनाथशास्त्री खिस्ते साहित्याचार्यो राजकीयसंस्कृतमहाविद्यालय एव साहित्यशास्त्र-मध्यापयतीति।

---

# [1]दीक्षान्तभाषणम्

**बृहस्पतिर्नयतु दुर्गहा तिरः पुनर्नेषदघशंसाय मन्म ।**

**क्षिपदशस्तिमप दुर्मतिं हन्नथा करद् यजमानाय शं योः ॥**

श्रीमन्तः शिक्षामन्त्रिणः, समवेता विद्वांसः, प्रियाः स्नातकाः !

इतः पूर्वं मया भवता पुरतो विभिन्नरूपेण बहुवारं भाषणं कृतम् । अतोऽसंभवमिदं यदद्य किञ्चित् सर्वथा नवीनं वस्तूपस्थापयितुं शक्नुयाम् । न च तस्यैव वस्तुनः पुनः पुनरावृत्त्या पिष्टपेषणं श्रेयस्करं स्यात् । तथापि मया यदा शिक्षामन्त्रिश्रीहरगोविन्दसिंहमहोदया-नामाज्ञाया अनुल्लङ्घनकार्यदौर्बल्यं दर्शितं तदा श्रीमता स्वल्पः समयो ग्रहीतव्य एव ।

संस्कृतस्य पुनः पुनर्महत्त्वघोषणाथवा तस्य प्रचारप्रसारयोरावश्यकतायाश्चर्चा तथैव भवति यथा द्वौ च द्वौ च चत्वार इत्यस्यार्थस्य पुनः पुनः साग्रहं विज्ञापनम् । इदानीं शिक्षितेषु भारतीयेषु स्वल्पसंख्याका एव ते भवेयुर्ये तत्त्वानीमानि न स्वीकुर्युः । इदानीमयं विषयः केवलं मनसा वचसा वा स्वीकृतिमात्रे न सीमितः परन्त्वस्माकं समक्षमेव संस्कृतस्य प्रसारो वृद्धिं गतः । कामं बहुभिः कारणैर्विश्वविद्यालयेषु माध्यमिकशिक्षालयेषु च संस्कृतं पठतां संख्या न्यूना संजाता, पाठशालास्वधीयानानां छात्राणां च संख्योत्तरोत्तरं ह्रासं भजते । सन्ति च तत्र प्रबलान्यार्थिककारणानि । परन्तु संस्कृतं पिपठिषूणां प्रौढवयस्कानां संख्या वर्धते । अधुना तत्त्वमिदं सर्वैः स्वीकृतं यत्संस्कृतज्ञानं न केवलं प्राचीनवाङ्मयस्य भारतीयदर्शनानां चाध्यय-नार्थमपेक्षितम्, अपि तु राष्ट्रभाषाया हिन्द्या बङ्गाली-गुजराती-मराठ्यादिप्रादेशिकभाषाणां चोन्नत्यर्थमपि तस्य न्यूनाधिकं ज्ञानमावश्यकम् । अद्य खलु हिन्दी राष्ट्रभाषा । अपेक्ष्यन्ते च तत्र बहवः पारिभाषिकशब्दाः । यासां विज्ञानशाखानामद्य पठनपाठनादिकं भवति, पूर्वकाले तासामुदय एव नासीत् । राजनीतिर्यद्यप्यतिप्राचीनो विषयः, तथापि राष्ट्राणामाभ्यन्तरे पारस्परिके

---

[1] काशिकराजकीयसंस्कृतमहाविद्यालयीयाष्टमोपाधिवितरणोत्सवावसरे यशस्विना मनीषिणा श्रीसम्पूर्णानन्दमहाभागेन वितीर्णमिदम् । अत्र नैव स्नातकानां विदुषामपि विमर्शार्हाः प्रेरणाप्रस्रोतारः सामयिकाः प्रश्नाः पुरतः संस्कृतजगतः समुपस्थापिताः क्रान्तदर्शिना विदुषा—सम्पादकः ।

च व्यवहारे याऽद्यत्वे जटलिता संजाता तदभिव्यञ्जकाः शब्दाः पुरा नासन्। इयमेव दशा तेषामपि शब्दाना ये खल्वाधुनिकप्रशासनेनेदानीमपेक्ष्यन्ते। सर्वस्यास्य कार्यस्य सिद्ध्यर्थं नवीनशब्दानां निर्माणमावश्यकम्। ईदृशाना च यौगिकाना योगरूढाना च शब्दाना निर्माणं तदैव भवितुमर्हति यदा संस्कृतभाषाया सस्कृतव्याकरणस्य च न्यूनाधिकं ज्ञानं नून भवेत्। भारतस्य तत्तत्प्रदेशेषु विशेषतः प्रादेशिकप्रशासनकार्यालयेषु ये शब्दा अद्य निर्मीयन्ते तेषु केचिच्छ्रूयमाणाः सन्तः सस्कृतविदुषा चेतासि संतापयन्ति। परन्तु मन्मतेनैतादृशविरूपशब्द-द्वारापि सस्कृतभाषायाः सेवा भवत्येव। या सस्कृतभाषा 'मञ्जुश्रीमूलकल्प'-सदृशबौद्धतन्त्रभाषा-मात्मसात्कृत्य पारेसमुद्रं स्याम-बाली-यवद्वीपपर्यन्तं पुरा प्रचारमाप्नोत् साऽऽधुनिकाना नवीन-शब्दानामपि पाचने शक्ति बिभर्त्येव, इत्येष मेऽभिप्रायः। तन्निर्मातॄणा संस्कृतज्ञाने किञ्चिन्न्यूनता भवितुमर्हति, परन्तु तेषा संस्कृतं प्रत्यगाधं प्रेम वर्तते। यदि भवादृशा विद्वांसोऽस्मिन् कर्मणि स्वल्पं सहयोग दद्युस्तर्हि नूनमत्र सन्तोषजनिका प्रगतिः स्यात्।

संस्कृतविश्वपरिषदः संस्कृतप्रचारस्य यत्कार्यं क्रियमाणमस्ति तस्य प्रशंसाकरणमहं स्वकर्तव्यं मन्ये। गतवर्षे काश्मीरमस्या यदधिवेशनं जात तद् भवता सहयोगेनात्यन्तं सफल-मासीत्। इद ज्ञात्वा भवन्तः प्रसन्ना भविष्यन्ति यत्तदधिवेशनानन्तरमपि परिषदोऽधिकारिणः संस्कृतभाषायाः सेवाया सर्वथा दत्तचित्ताः सन्ति। विभिन्नाना प्रादेशिकप्रशासनाना केषाञ्चिद् धनमानभाजा सज्जनाना च साहाय्येन य उपदेशकाः प्रचारकाश्च नियुक्ताः सन्ति ते सस्कृतस्य सन्देश समन्तात् प्रसारयन्ति, सस्कृत प्रति जनाना सुप्तप्रायं स्नेहमभिरुचिं चोद्दीपयन्ति। तत्र तत्र श्रूयते चेयमभ्यर्थना यत् तादृश्यः संस्थाः संस्थापयितव्या यत्र साधारणपाठशालासु पठितुमशक्नुवन्तो व्यापारिणः शासनाधिकारिणोऽध्यापकाः प्रौढवयस्का अन्ये जनाश्च यथावकाशं संस्कृतं पठितुं शक्नुयुः।

पूर्वमपि मया बहुशो निवेदित यदस्माभिः संस्कृतशिक्षाविषये विशेषतः सावधानैर्भवि-तव्यम्। एकतस्तु तत्र सर्वेषा नवीनविषयाणा संनिवेशः कार्यः, येन संस्कृतभाषामवलम्ब्य प्राप्तशिक्षः स्नातकः सार्वभौमज्ञानसंपन्नो भूत्वान्योपाधिधारिभिस्तुल्यः स्यात्, धनोपार्जनस्य च सर्वाणि द्वाराणि तत्कृतेऽपावृतानि स्युः, सर्वस्मिन् क्षेत्रे च स समाजसेवा कर्तुं शक्नुयात्। अयं खेदस्य विषयो यत् प्रतिभायामन्येभ्योऽन्यूनोऽपि, उत्साहेन विविदिषया च सपन्नोऽपि, संस्कृतस्य च्छात्रो हताशस्तिष्ठति। तस्याः सपत्तेरुपयोगं कर्तुं न प्रभवति, या तस्य समाजस्य च कृते कल्याणकारिणी भवितुं शक्नोति। न हि सर्वे जना एकमेव प्रयोजनमुद्दिश्याध्ययन कुर्वन्ति।

संस्कृतमधीयाना अपि सर्वे एव वीतरागास्तपस्विनो न भवन्ति। कामं भवतु तेषां प्रबला धार्मिक्यो भावनाः परन्तु तेषामप्यन्यसुसंस्कृतव्यक्तीनामिव धर्माविरोधेनार्थे कामे च प्रवृत्तिर्भवत्येव। हठान्निग्रहोऽस्याः प्रवृत्तेर्न कल्याणाय कल्पते। अत्रेदमप्यस्माभिः स्मर्तव्यं यद् यस्या विद्यायाः संरक्षणमस्माकमाचार्यैरनेकशताब्दीपर्यन्त प्राणपणेन कृतम्, सांसारिकभोगेभ्यो विमुखीभूय सहर्षं दैन्यं दारिद्र्यं राजानाश्रयणं चाङ्गीकृतम्, तस्या लोपो न भवेत्। सर्वेषु देशेषु सर्वेषु च समाजेषु भवन्त्येव केचित् सरस्वत्या नैष्ठिका उपासकाः। तेषां कृते प्रकृष्टविद्योपार्जनाय पूर्णरूपेण सौविध्यमुपस्थापयितव्यम्। यथा ते नवीनतातरङ्गे निमग्ना न भवेयुस्तथास्माभिः सर्वात्मना प्रयतितव्यम्।

"पुराणमित्येव न साधु सर्वं न चापि सर्वं नवमित्यवद्यम्" इति वचनं यथा सत्यं तथैवेदमपि यथार्थं यत्—"नवीनमित्येव न साधु सर्वं पुराणमित्येव न वास्त्यवद्यम्" इति। कैश्चित् सज्जनैरेवंविधः प्रस्ताव. कृतो यत् प्राचीनविद्वत्सु ये स्वस्वशास्त्रे सर्वसम्मतविशेषज्ञाः, एवं वयस आधिक्यादन्यकारणेभ्यो वा शिक्षालयेष्वध्यापनकार्यं सम्पादयितुमशक्तास्तेषां सम्मानाय तेभ्यः काचिद् स्थिरा दक्षिणा निवेदयितव्या। तथा च प्रबन्धः कार्यो यथाऽऽचार्यपरीक्षोत्तीर्णाः कतिचिद् वृताश्छात्रास्तेषां विदुषामन्ते वसेयुर्विद्योपार्जनं च कुर्युः। प्रस्तावोऽयं मां समीचीनः प्रतिभाति। भूयो विचारार्होऽयं विषयः प्रशासनेन।

आङ्गलभाषाया यद् रिसर्चपदवाच्यं सशोधनं तदप्यत्यावश्यकम्। न चेदं नूतनं किञ्चिद्वस्तु देशेऽस्माकम्। प्राचीनकालस्येयमासीदेतादृशी महती विशेषता या दृष्ट्वा विदेशीया विद्वांसश्चकिता भवन्ति। पुरातनपरिपाटीतो लब्धवैदुष्येण विद्वत्समाजेन यादृशं विचारस्वातन्त्र्यं प्रदर्शितम्, यथा च महतो महतामाचार्याणां सिद्धान्तानां निर्भयं किन्तु शालीनतापूर्वकं समालोचनं कृतम्, तदुभयं जनानामाश्चर्यजनकं शिक्षाप्रदं चासीत्। नूनमिदमासीद् यत् खण्डनं भवति स्म केवलं सिद्धान्तानाम्, न तु तत्प्रतिपादकानां पुरुषाणाम्। अद्यास्या एव परिपाट्याः पुनरुज्जीवनमावश्यकम्। पाश्चात्त्यविद्वद्भिस्तदनुयायिभिश्च कामं प्रमादाः कृताः स्युः, परन्तु तेषां सद्भावना प्रशंसामर्हति। एतत्तु स्वीकर्तव्यमेव यत्तेषां प्रयत्नैर्भारतेऽन्यत्र च बहूनां जनानां हृदयेषु प्राचीनभारतीयवाङ्मयं प्रत्यादरः समुत्पादितः। अस्माकं बहवः प्राचीना ग्रन्था अप्रकाशिताः सन्ति। प्रकाशितेषु च बहूनां संस्करणमशुद्धं दृश्यते। अपरञ्च तेषु प्राचीनग्रन्थेषु भारतीयेतिहासस्य प्रकाशप्रदा या प्रभूता सामग्री निहिता वर्तते तस्या उपयोगो न भवति। अस्य परिणामोऽयं भवति यदस्माकमितिहासस्य दीर्घकालव्याप्यंशोऽन्धकाराच्छन्नस्तिष्ठति। व्याकरण-

महाभाष्यगतम्–"इह पुष्यमित्र याजयामः" इति वाक्यं कृष्णमेघेषु विद्युल्लेखेव प्रकाशते। डा० वासुदेवशरण-अग्रवालविरचितम् "इण्डिया ऐज नोन टु पाणिनि" इतिसंज्ञक पुस्तकमधुना प्रकाशितं वर्तते। तद् दृष्ट्वा चित्तं प्रसन्न भवति। तत्र प्रतिपादिता विषयाः प्राचीनग्रन्थान् परिशीलयता दृष्टिगोचरा न भवन्तीति न, परन्तु कस्या अपि सामग्र्या एकत्रकरणेन या ज्ञानोपलब्धिर्भवति सा न सभवति सामग्र्या विप्रकीर्णायां सत्याम्।

उक्तपूर्वमेव मया बहुशः, अद्य च पुनरपि नम्रतापूर्वकं परन्तु दृढतापूर्वकं कथ्यते यदस्माक विद्वद्भिः प्राचीनशास्त्राणामाधुनिकविज्ञानस्य च सामञ्जस्यसिद्धये प्रयत्नः कर्तव्यः। विज्ञानं प्रत्यक्षस्य तत्त्वमूलकानुमानस्य चाधारशिलाया स्थितमस्ति। उपेक्षामात्रेण तस्य प्रत्याख्यानं कर्तुं न शक्यते। प्रतिष्ठिततमविद्वत्प्रतिष्ठापितोऽपि सिद्धान्तोऽनेन प्रत्यक्षमूलकेन ज्ञानेनासवदन्नवश्यं धराशायी भविष्यति। अद्य यूरोपीयदार्शनिकानामपि समक्षमयं प्रश्नः समुपस्थितः। प्राचीनं तर्कशास्त्रमसंपूर्णं प्रतिभाति। अद्य खलु मनुष्यो भौतिकविज्ञानस्य गणितस्य च समाश्रयणेन तादृशस्य जगतः परिचयं करोति यत्र किं स्थिर किमस्थिरं किं भौतिक किं मनोराज्यमात्रमिति विनिश्चेतु न शक्यते। जगद्वन्द्यगणिताचार्यश्री.आईन्स्टाइनमहाभागाना कथनानुसारेण विश्वमिदं परिमित चासीमं चास्ति। दिक्कालौ परस्परसापेक्षौ प्रतीयेते कालश्च दिशोऽभिन्न एव। अद्य खलु ज्योतिर्विदोऽनेकनवनवसूर्यादिखवर्तिपिण्डाना सृष्टिं प्रलयं च साक्षात् पश्यन्ति।

वैज्ञानिकाना मनसि समुल्लसतीयमाशा यत् स्वल्पेनैव कालेन मनुष्यः सशरीरमनेककोटि-क्रोशदूरवर्तिज्योतींषि गन्तुं शक्नुयादिति। इदमपि कथ्यते यत् संभावनामहासागरे तत्र तत्रावकाशो वर्तते, सोऽवकाश एवास्मान् जगद्रूपेण प्रतिभासते। कस्यचिन्महतो ज्यौतिषि-कस्य वाक्यमिद यजगदिद कस्यचिन्महागणितज्ञस्य बुद्धौ विचारतरङ्गमात्रमस्ति। एते विषयाः केवलमुदाहरणरूपेणोपस्थापिता मया। तेभ्योऽस्माभिरिदमनुमातुं शक्येत यदद्यत्वे वैज्ञानिक-स्तस्मिन्क्षेत्रे निवसति यत्राध्यात्मिकानुभूतिदर्शनानामवधयश्च सयोगं भजन्ते। गीयते खल्वस्माभि-र्भारतीयदर्शनाना गाथा। यदि भारतीयदर्शनैः प्रश्नानामेषा समाधानं न क्रियते तर्हि न तानि संसारेऽस्मिन् चिरस्थायीनि स्युः। अद्य यावद् यूरोपे 'अरस्तू'-विरचितं तर्कशास्त्रं प्राचलत्। यद्यपि तत्र प्रत्यक्षरूपेण त्र्यवयवात्मकमनुमानं स्वीक्रियते तच्च पञ्चावयवात्मकेनास्माकमनुमानेन साम्यं भजते। अस्माकमाचार्यैर्बौद्धादिभिः सह संघर्षे जाते तत्प्रतिविधानार्थं नव्यन्यायस्य सृष्टिः कृता। तथा यूरोपेऽपि विज्ञानोदये संजाते 'फ्रांसिस-बेकन'-नाम्ना विदुषाऽरस्तूविरचिते

तर्कशास्त्रे संशोधनं प्रारब्धम्। एवं संशोधितमपि न्यायशास्त्रमद्यानुपयोगि संजातम्। केवलमनिश्चिततैव निश्चितेत्यनुभवेन सिद्धे स्थिरतामूलकं हेतूदाहरणयुक्तं तर्कशास्त्रमनुपयोगि सिद्धयति। अपेक्ष्यते खल्वस्मिन् युग आपाततो नवीनं किञ्चिन्न्यायशास्त्रम्। पाश्चात्त्यविद्वद्भिस्तदेवान्विष्यते। सत्यं च सत्यमेव। न तद्भौगोलिकसीमप्रतिबद्धं भवति। यत् तथ्यं पाश्चात्त्यविदुषा पुरतो वर्तते तदेवास्माकं पुरतोऽपि विद्यते। भारतीयविद्वांसोऽत्रावधातुमर्हन्ति, तस्मिन् मार्गेऽग्रेसराश्च भवितुमर्हन्ति। यदि प्राचीनसिद्धान्ता नवीनरूपेणोपस्थापयितुं न शक्यन्ते तर्हि तेषु जनाना विश्वासोऽवश्यमेव शिथिलो भवेत्। यद् दर्शनं जनाना वैयक्तिके सामूहिके च जीवने पथप्रदर्शनं कर्तुं न शक्नुयात् तत् केवलं कतिपयविदुषा मनोविनोदनसामग्रीत्वे पर्यवस्यति। यथा जनाः प्रहेलिकाभिः कथाभिश्च कालक्षेपं कुर्वन्ति तथा लोकव्यवहारानुपयोगिभिर्ग्रन्थैरपि जनैर्मनोविनोदः करिष्यते। अद्यतनो मनुष्यो विद्यमानाया परिस्थितौ स्वकीयशङ्काना समाधानमपेक्षते। अनेकवर्षशतेभ्यः पूर्वमन्यादृशपरिस्थितावन्येषा मनसि समुद्भूताः शङ्काः स न जिज्ञासते नापि स्वर्गादिधिपति। तस्य मनसि यः कर्तव्याकर्तव्यसङ्घर्षः प्रवर्तते तस्य शमन सपादनीयम्। को हि कर्तव्यस्य निकषः? न "चोदनालक्षणोऽर्थो धर्मः" इति सूत्रोद्धरणेन किञ्चित्कार्यं सिद्धयति। न वा "तद्वचनादाम्नायस्य प्रामाण्यम्" इत्यपि पर्याप्तम्। देशकालपात्रभेदेन धर्मेऽपि भेदो भवतीति यथार्थवचनम्। न धर्मस्वरूपनिरूपण कस्मिश्चिद् ग्रन्थे समुपलभ्यते। तस्य निर्णयस्तु समये समये विद्वद्भिरेव विधेयः, निर्णयसमये च "ऋषिषूत्क्रामत्सु देवा मनुष्येभ्यस्तर्कमृषिं प्रायच्छन्" इति वाक्य मनसि निरन्तर निधातव्यम्।

विद्वज्जन एव समाजस्य नेता भवति। अनुयायिनामग्रतो गत्वा मार्गप्रदर्शनमेव नेतुः कर्तव्यम्। न सोऽनुयायिमुखात् प्रार्थनाया प्रतीक्षा करोति। कदाचित् तेन कर्णकट्वपि सत्यं वक्तव्यं भवति। यो जनाप्रियताया बिभेति स समाजस्य कल्याण कदापि कर्तुं न शक्ष्यति। व्यास-विश्वामित्र बुद्धदेव-महावीर-शङ्कराचार्य-रामानुज-कबीर-नानक-महात्मगान्धिप्रभृतिभिर्यो मार्गः समादृतः स एवास्माकमादर्शो भवितुमर्हति। सत्यं यथाशक्त्यवबुद्धय लोकहितदृष्ट्या लोभं भयं च त्यक्त्वा जनाना पुरतस्तस्योपस्थापनं महान् धर्मः। आधुनिको मानवोऽनेकशतसंख्याकैरन्तर्द्वन्द्वैर्व्यथितो वर्तते। भृशं विषण्णो भूत्वा स नैराश्याऽश्रद्धागर्ते निमग्नो भवति। यदि विद्वज्जनोऽग्रतो भूत्वा तस्य हस्तावलम्बनं न करिष्यति तर्हि ऋषिऋणान्न मुक्तो भविष्यति।

यदाहं वर्तमानसमस्यानामद्यतनकर्तव्याना च चर्चां करोमि तदा मे मनसि केवलं पूजापाठस्य संकुचितं क्षेत्र न तिष्ठति। सभ्यजगति महान्तः प्रश्ना प्रादुर्भवन्ति। तेषा विषये

स्वमतप्रकाशनमावश्यकं भवति। तद्विषयकं विधानमपि निर्मातव्यं भवति। तत्रोदाहरणमेकं तद्द्वयं वा प्रदीयते—बहुषु देशेषु जनसंख्या वर्धते, खाद्यसामग्र्याश्च न्यूनता प्रतीयते। एवं-भूतेषु देशेषु भारतवर्षमप्यन्तर्गतम्। जनसंख्यावृद्धिप्रतिविधानार्थं कानिचित् सन्ततिनिरोध-साधनान्यपि प्रकाशं गतानि। तेषां प्रचारोऽपि भवति। बहवो जनास्तत्पक्षपातिनः। विरोधिनामपि न दृश्यते न्यूनता। रोमनकैथोलिकसम्प्रदायाचार्यैस्तस्य महान् विरोधः कृतः। कृत्रिमः सन्तति-निरोधः परमेश्वरकृतनियमविरुद्ध इति तेषां प्रवादः। तत्समर्थनार्थं तैर्न केवलं बाइबिलवाक्यानि समुद्धृतानि प्रत्युत बहवस्तर्का अपि पुरस्कृताः। गान्धिमहात्मभिरप्येतादृशोपायानां विरोधः कृत आसीत्। सन्ततिनिरोधानुकूलं विधानं कर्तव्यं न वा? तादृशेन विधानेन विद्यमाना आगा-मिनश्चानेककोटिसंख्याका जनाः प्रभाविता भविष्यन्ति। किं श्रीमद्भिरपि कदाचिद् विचारः कृतोऽस्मिन्विषये? पक्षे विपक्षे वा काश्चिद्युक्तयः समुपस्थापिताः किम्? यस्मिन् समाजे समु-द्भूतोऽयं प्रश्नस्तस्मिन् श्रीमन्तोऽपि सन्ति, युष्मत्कुटुम्बिनोऽपि युष्मदनुयायिनोऽपि सन्ति भवि-ष्यन्ति च। किं कदाचित्विचारितं श्रीमद्भिर्यदस्मिन् विषये कस्याश्चित् सुविचारिताया व्यव-स्थायाः प्रदानं स्वकीयं परमं कर्तव्यमस्ति। बहवो वादाः पृथिव्यां प्रसृताः। तत्र द्वयोः पूंजी-वादसमष्टिवादयोर्नामनी मयात्र गृह्येते। यूरोपीया धर्माचार्या विद्वांसश्च तत्र स्वमतं प्रकटयन्त एवा-सते। भारतीयजनतायाः पुरतोऽपि मतमिदमुपस्थितम्, तत्संबद्धः प्रश्नश्चोपस्थितः। सुरभारती-समुपासका विद्वांसोऽपि सन्ति धर्मगुरवश्च। ज्ञातुमिच्छन्ति जना अस्मिन्विषये तेषां कोऽभिप्राय इति। साम्प्रतिकश्रोतॄणां तुष्टिः श्लोकानामवतरणैर्निन्दात्मकालोचनाभिर्वा न भवितुं शक्नोति। न हि लोको वितण्डामिच्छति। स तु श्रीमतां मुखादेव युक्तिसहितं स्वमतस्थापनं श्रोतुमिच्छति। एत एव युगस्यास्य सजीवाः प्रश्ना इति कृत्वा तेषां मया चर्चा क्रियते। एतादृशप्रश्नानामेव विषये भवन्ति जनानां शङ्काः। यदि संस्कृतविद्वांसो विषयानिमान् सम्यग् विचार्य जनानां नेतृत्वं स्वहस्ते ग्रहीष्यन्ति तर्हि भविष्यति समाजस्य कल्याणम्।

समावर्तनसमारोहावसरे नवीनस्नातकानां कृते उपदेशदानस्य प्रथाऽस्ति। तत्र नाहं बहु वक्तुमिच्छामि। यान् विषयानधिकृत्य मयाऽधुनैव चर्चा कृता तत्र नवीनैः स्नातकैरवधानं देयम्। तेषां पुरतो निखिलमपि जीवनमवशिष्टं वर्तते। गुरुभ्यः समधिगतां विद्यां समवलम्ब्य स्वदेशीयप्राचीनादर्शेभ्यः प्राचीनसंस्कृतेश्च स्फूर्तिं गृहीत्वा नवीनभारतनिर्माणे ते सहयोगं कुर्वन्तु। उपलक्ष्यते किलैका नवीना प्रवृत्तिः संस्कृतमधीयमानेषु च्छात्रेषु। तैः स्वप्राचीन-वेषभूषायाः परिवर्तनं क्रियते, आङ्गलभाषाध्येतृच्छात्रानुकरणं च सर्वत्र कर्तुमिष्यते। परम्परागता

चारविचाराश्रयणे तैर्लज्जानुभूयते । लज्जैवेयं लज्जास्पदमिति तु मे विश्वासः । गौरवास्पद प्राचीनपद्धतिर्नाम । नवीनताया यो हि वास्तविक उत्कर्षः स त्ववश्यं ग्राह्यः । परन्तु परानुकरणमपकर्षबुद्धेरात्मसमानाभावस्य च द्योतक भवति । अस्माक विश्वविद्यालयाना संस्कारः पाश्चात्त्यविश्वविद्यालयसस्कारस्यानुकरणमेव । अनुकरणानुकरणे किं नाम गौरवम् ? सस्कृतविद्यार्थिना वैशिष्ट्य न हि परेषा पृष्ठानुगमने किन्तु धर्मनिष्ठायामेव। विषमपरिस्थितिस्थितोऽयमद्यास्माकं देशः । आ समन्ताद् युद्धस्य सङ्घर्षस्य द्वेषस्य च मेघाः परापतन्ति । अस्मिन् जगति जीवितव्यं भारतवर्षेण, जीवितव्यं च गौरवेण सह । न वय कमपि देशमाक्रमितुमिच्छामः, परन्तु स्वकीय स्वातन्त्र्यमवश्यं रक्षणीयमस्माभि॰ । तत्र योऽपि त्याग उत्सर्गो वाऽऽवश्यकः, तं कर्तुमस्माभिः सज्जैर्भवितव्यम् । भारतीयपरम्पराप्रतीकभूतैर्युगपुरुषैर्गान्धिमहात्मभिर्यास्माकं दीक्षा कृता तामविस्मृत्य वय स्वस्य जगतश्च कल्याणं संपादयिष्यामः। युद्धज्वालामध्यगतैरप्यस्माभिश्चतसृष्वपि दिक्षु शान्तिसन्देश॰ प्रसारयितव्यः। काममयं कार्यभारः सर्वेषामपि स्कन्धे वर्तते, परन्तु यैः सस्कृतवाङ्मयस्यावगाहनं कृत ते तदुद्वहने विशेषतः क्षमा भवन्ति । इतः परं यस्मिन् कस्मिन्नपि क्षेत्रे कर्म कुर्वन्तु भवन्तः, यस्मिन् कस्मिन्नपि व्यवसाये व्यापृता भवन्तु, मातृभूमेस्त्विदमृण मा विस्मरत ।

भगवानर्धनारीश्वरः सदैव वः सहायो भूयात् ॥

---

# [1]कुलपतिभाषणम्

वेदवेदान्तवेद्याय नीलनीरदमूर्तये ।
श्रीमते रामचन्द्राय जानकीजानये नमः ॥
गोष्पदीकृतवारीशं मशकीकृतराक्षसम् ।
रामायणमहामालारत्नं वन्देऽनिलात्मजम् ॥

आदरणीयाः सभापतिमहोदयाः, सज्जना , देव्यश्च !

एष महतो हर्षस्य भूरिशो भागधेयस्य च प्रसङ्गो यदद्य वयं काशिकराजकीयसंस्कृत-महाविद्यालयस्याष्टममुपाधिवितरणमहोत्सवं संपादयितुमत्र संगताः स्मः । अस्मिन्नानन्दमये समयेऽहमात्मनो महाविद्यालयपरिवारस्य च पक्षेण सर्वेषां भवतां ससमादरं सुस्वागतं व्याहरामि ।

वाराणसी हि विद्यागुरोर्विश्वनाथस्य नगरी, जगदम्बाया अन्नपूर्णाया विलासभूमिः, भगवत्या भागीरथ्या विनोदवनी, अमरभारत्याः क्रीडाकुञ्जम्, वैदिकधर्मसभ्यतासंस्कृतीनां विकास-क्षेत्रम्, प्रेयःश्रेयसोरुभयोरपि पुरुषार्थयोः श्लाघ्या समन्वयस्थली च । अत्र किल पारेसहस्रं समुत्कृष्टाः कवयो दार्शनिका ज्ञानिनो भक्ताः कर्मयोगिनो देशभक्ताश्च तनुपातन्तपस्यन्तो मानव-तायाश्चरमविकासस्य मार्गं प्रादर्शयन् । अस्याः समक्षमनेकानि विद्याकेन्द्राणि प्रादुर्भूतान्यस्तं-गतानि च, परमियमात्मनः पुरातनीं ज्ञानविज्ञानयोरादानप्रदानपरम्परां प्रायः पूर्वमिवैव साम्प्रत-मपि संरक्षति । अस्याः समग्र इतिहासो नितान्तं निर्मलः समुज्ज्वलश्च । अस्माकमयं महा-विद्यालयोऽस्या एवादर्शनगर्या मणिमयो मुकुटो यो द्विषष्ट्यधिकशताब्दानां वृद्धे वयस्यपि तरुणायमानो भौतिकविज्ञानविविधाविष्कारचाकचिक्यचमत्कृतमपि विश्वं स्वात्मनः प्रशान्तपावन-प्रज्ञानप्रभापुञ्जेन प्रगल्भं प्रलोभयति । इमं महाविद्यालयमुत्तरप्रदेशस्य राज्यान्तराणां च पञ्चदशशततोऽप्यधिकाः पाठशालाश्चकोर्यश्चन्द्रमिव सौभाग्योल्लसितलोचनाः सोत्कण्ठा निरी-

---

१ काशिकराजकीयसंस्कृतमहाविद्यालयीयाष्टमोपाधिवितरणोत्सवावसरे महाविद्यालयप्रधाना-चार्येण स्वर्गतेन श्रीत्रिभुवनप्रसादोपाध्यायेनाधीतम्—सम्पादकः ।

क्षन्ते । अतोऽस्य महाविद्यालयस्य प्रादेशिकप्रशासनेन संस्कृतविश्वविद्यालयपदेऽभिषेचनं स्थान एव निर्णीतमुद्घोषितं च ।

महाविद्यालयोऽयं १–शिक्षाविभागः, २–पुस्तकालयविभागः, ३–परीक्षाविभागः, ४–निरीक्षणविभागश्चेति चतुर्भिः प्रकारैः सुरभारतीं सेवते ।

## ( १ ) शिक्षाविभागः

अस्य विभागस्य कार्यमस्मिन्नेव महाविद्यालयभवने प्रचलति, अत्र संस्कृतवाङ्मयस्य प्रायः सर्वासामेव शाखानामध्ययनाध्यापने भवतः । तदर्थं च शास्त्रपरिशीलनप्राचीनपरिपाटीपटीयांसः षोडश विद्वांसो विभिन्नवेतनक्रमेषु नियुक्ताः सन्ति । यद्यपि संस्कृतशास्त्राणामुद्भटपाण्डित्यपरिरक्षणमेवास्य महाविद्यालयस्य लक्ष्यं तथाप्यस्य स्नातकाः शास्त्राणां विशिष्टवैदुष्येण सह देशकालोचितेन कौशलेनापि सम्पन्ना भवेयुरित्यभिप्रायेणास्य पाठ्यक्रमे नूतनविषयाणामपि सन्निवेशः पर्याप्तमात्रया कृतो वर्तते । येषामध्यापनार्थं च सप्ताध्यापका नियुक्ताः सन्ति । शासनेन यदाप्रभृति प्रथमा, पूर्वमध्यमा, उत्तरमध्यमा, शास्त्रीति परीक्षाणां क्रमेण जूनियरहाईस्कूल, हाईस्कूल, इण्टरमीडियट, बी० ए० इत्याधुनिकपरीक्षाभिः सह समकक्षतोद्घोषिता तदाप्रभृति संस्कृतच्छात्राणां संख्या संवर्द्धमाना विद्यते । यदि क्रियते कालाय शासनेनास्य महाविद्यालयस्य स्नातकानां कृते विभिन्नेषु राजकीयसेवाविभागेषु कियन्ति स्थानानि सुरक्षितानि क्रियेरँस्तदा संस्कृतभाषायाः प्रचारे निश्चयेन महती प्रगतिर्भवेदिति मे दृढतरो विश्वासः ।

स्वस्थे शरीर एव प्रज्ञायाः समुचितो विकासो भवतीति विभाव्य विविधव्यायामेषु प्राचीनार्वाचीनक्रीडाप्रकारेषु सैनिकशिक्षायां चात्रत्या विद्यार्थिनः सप्रयत्नं प्रोत्साह्यन्ते प्रवर्त्यन्ते च ।

## पुनःशिक्षणसत्रम्

संस्कृताध्यापकेषु स्वल्पेन कालेन सरलेन च प्रकारेण विविधविषयाणां शिक्षणकलाकौशलमाधातुमत्र पुनःशिक्षणसत्रमपि विगतैः कतिपयैर्वर्षैर्व्यवस्थापितमस्ति । प्रतिवर्षमस्य द्वौ पर्यायौ भवतः, किन्तु किञ्चित्कारणवशादेषमः केवलमेक एव पर्यायः समपद्यत । अत्र राज्यस्य विभिन्नेभ्यः संस्कृतविद्यालयेभ्यः प्रायः पञ्चाशदध्यापकाः सममिलन्, ये सैद्धान्तिकप्रायोगिकाभ्यामुभाभ्यामपि प्रकाराभ्यां शिक्षाविज्ञानादिषु सम्यक् शिक्षिताः परीक्षिताश्च । अयं कार्यक्रमोऽत्यन्तमुपयोगितया सर्वेषां स्पृहणीयोऽस्ति । परमस्य समुन्नयनार्थं पूर्णसाफल्यार्थं च पुनःशिक्षणसत्रे शिक्षितानां वेतने किञ्चिद्वैशिष्ट्यसंपादनेन प्रोत्साहनमन्यान्याल्पकालिकपुनःशिक्षणसत्रशिक्षितैः सह समानमान्यता-

दान च नितान्तमावश्यकम् । यदि शासनेनैतत्कार्यद्वय क्रियेत तदा कमनीयोऽयमुपक्रमो वाञ्छनीयमुच्चयमासाद्य संस्कृतशिक्षा सविशेषमुपकुर्वीतेति नात्र मनागपि सन्देहः ।

## सारस्वती सुषमा

'सारस्वती सुषमा" अस्य महाविद्यालयस्य त्रैमासिकी मुखपत्रिका । अस्या विदुषा गवेषणापूर्णा गभीरा लेखा, ग्रन्थानामालोचनानि, अमुद्रितानि प्राचीनसस्कृतपुस्तकानि च प्रकाश्यन्ते । पूर्वमस्याः प्रचारस्य, विक्रयस्य, विनिमयस्य च काचिद् व्यवस्था नासीत् परमधुना शासनेन सह पत्रव्यवहार कृत्वाऽस्या मूल्यनिर्धारण कारितं विक्रयादीनामादेशश्च प्राप्तः । फलत इदानीमिय प्रवर्धमानचतुरस्रप्रचारा संस्कृतज्ञानधिकाधिकमावर्जयति, सस्कृतसाहित्यस्य श्रीवृद्धि च वितनोति ।

## विद्वद्गोष्ठी

इयं गोष्ठी महाविद्यालयस्याध्यापकैः कृतसयोजनास्ति, अस्या अनेकान्यधिवेशनानि वर्षे भवन्ति, येषु बाह्या अपि विशिष्टा विद्वासो निमन्त्र्यन्ते । अधिवेशनेषु कदाचिन्निबन्धपाठः, कदाचिद् व्याख्यानम्, कदाचिच्च शास्त्रीयो विचारविनिमयः, शास्त्रार्थादिश्च जायते । एतेषूच्चकक्षीयाश्छात्रा अपि समिलिता भवन्ति । गतवर्षे परीक्षोत्तरकाले विद्वद्गोष्ठ्यास्तत्त्वावधाने मासपर्यन्त व्याख्यानमाला प्रावर्तत, यत्र पौराणिकेषु शास्त्रान्तरीयेषु च विभिन्नविषयेषु विदुषा गवेषणापूर्णानि प्रश्नोत्तरमयानि व्याख्यानान्यभूवन् । तेषु बहूना "सारस्वतीसुषमायाम्" प्रकाशनमप्यजायत । ग्रीष्मावकाशोत्तरकाले च विद्वद्गोष्ठ्याः प्रबन्धेन तुलसीजयन्ती, कालिदासजयन्ती, गीताजयन्तीना च चारुतरमायोजन निरवर्तत । वर्षाभ्यन्तरे सजातेषु व्याख्यानेषु विद्यावाचस्पति-पण्डितश्रीगिरिधरशर्मचतुर्वेदमहोदयस्य, आचार्यश्रीहजारीप्रसादद्विवेदिमहाभागस्य, मुम्बापुरीस्थितभारतीयविद्याभवनस्थश्रीदीक्षितारमहाशय-काशीस्थपण्डितश्रीरामाज्ञापाण्डेयमहोदययोः, डा० श्रीरघुवीरमहाशयस्य च क्रमेण "वैदिकी सृष्टिरचना", "संस्कृताध्ययनस्य नवीनो दृष्टिकोणः", "संस्कृतप्रचारस्योपायाः","विदेशेषु सस्कृतसाहित्यम्" इत्येतद्विषयेषु व्याख्यानानि मुख्यानि सन्ति।

## छात्रपरिषत्

अत्र महाविद्यालये विगतैः कतिपयवर्षैरेका छात्रपरिषदपि सघटिता वर्तते । पूर्वमस्याः किञ्चिद्विधानं नाविद्यत । गतवर्षे ग्रीष्मावकाशोत्तरकालिकमहाविद्यालयसत्रारम्भे छात्रेभ्यः विधाननिर्माणनिर्देशः कृतः । ऐषमश्च छात्रैरुपस्थापितं विधान स्वीकृतं येन विद्यार्थिवर्गे आनन्दोत्साहयोः संचारोऽभूत् । विश्वसिमि यदेतद्विधानानुसारं संघटिता छात्रपरिषच्छात्राणा

हिताय, संस्कृतशिक्षानुरूपस्य प्राचीनगुरुशिष्यसबन्धस्य संरक्षणाय, नागरिकतौपयिकानुशासनस्य विकासाय, महाविद्यालयस्य कीर्त्युपचयाय च प्रभविष्यतीति ।

## वेधशाला

विश्वविद्यालयीभविष्यतोऽस्य महाविद्यालयस्याङ्गरूपेण यस्या वेधशालायाः स्थापनप्रबन्धो भूतपूर्वशिक्षामन्त्रिभिर्माननीयैः श्रीसम्पूर्णानन्दमहोदयैरुपाक्राम्यत, आवश्यकयन्त्रजात च समगृह्यत, तदर्थं सारनाथ एक आयतो भूमिखण्ड आयत्तीकृतो यत्र न चिरमेव निर्माणंस्यमाणे भवने तत्स्थापन भविता । तदौपयिक समयसूचकयन्त्र ( स्टैण्डर्ड टाइम आपरेटस ) शर्मण्यदेशादानीतम् , यन्माननीयशिक्षामन्त्रिश्रीहरगोविन्दसिंहमहोदयानुग्रहप्राप्तप्रचुरार्थसाहाय्येन विगतादप्रैलमासाद् डा०अवधेशनारायणसिंहमहोदयस्य निर्देशकत्वेऽत्रैव भवने पण्डितश्रीगौरीनाथशर्मणा यान्त्रिकेण परिचाल्यमानमस्ति । फ्रासदेशात षड् घटीयन्त्राणि क्रीतानि यानि तालिकादानानपेक्षयैव चलन्ति व्यावहारिक नाक्षत्रिक च समय सूचयन्ति ।

## ( २ ) पुस्तकालयविभागः

सरस्वतीभवनं नाम पुस्तकालयोऽस्य महाविद्यालयस्य महनीयमङ्गम् । अय हि संस्कृतस्य हस्तलिखितप्राचीनपुस्तकाना देशस्य सर्वश्रेष्ठः सग्रहालयः । किन्त्वद्यावधि तेषा ग्रन्थाना काचित्प्रामाणिकी सूची मुद्रिता नासीदतः सस्कृतज्ञाना समुचितो लाभो न भवति स्म । परं विगते मार्चमासे शासनस्य तत्प्रकाशनादेशमासाद्य वेदोपनिषत्कर्मकाण्डाना प्रामाणिकी सूची चतुर्षु भागेषु मुद्रिता यया तत्तद्विषयविशेषजिज्ञासवो भृशमुपक्रियमाणा विद्यन्ते । अनेन च सरस्वतीभवनेन पण्डितपत्र ( काशीविद्यासुधानिधि )–सरस्वतीभवनग्रन्थमाला–सरस्वतीभवनानुशीलनपत्रिकादिद्वारानेकेषा सुदुर्लभसस्कृतग्रन्थाना प्रकाशनमकारि, साम्प्रतमपि च "सारस्वती सुषमा" नाम्न्या त्रैमासिकपत्रिकाया क्रियते । परं पत्रिकाया अल्पकायतया कर्तव्यस्य च गुरुतया कार्यमिदमनेन प्रकारेण केवलमकरणान्मन्दकरणं श्रेय इति न्यायेन जायतेऽत एतस्योचितसम्पत्तये पृथगर्थव्यवस्थाऽऽवश्यकी, अतोऽस्या दिशि शासनस्य ध्यानं साग्रहमाकृष्यते ।

अस्य सरस्वतीभवनस्य बृहत्तरानुसन्धानमन्दिररूपे परिणमनं शासनेन कियद्वर्षपूर्वमेवोद्घोषितम् । तच्च कार्यं सस्कृतविश्वविद्यालयविधेयकस्वीकृतेरिदानीमप्यसपन्नतया यद्यपि न निर्वृत्तं तथापि विशिष्टाचार्यवृत्तिं साधोलालवृत्तिं च लभमानैः स्नातकैरनुसन्धानकार्यं संपाद्यमानमस्ति । इदानीमेते स्नातकाः पौराणिकाना लघूना महता च समस्तविषयाणा वर्णानुक्रमसूचीनिर्माणे सप्रयत्न सलग्ना सन्ति ।

एतद्वर्षपूर्वमत्र विद्युत्प्रबन्धो नासीत् । किन्त्वस्मिन्वर्षे शासनस्य कृपया तत्प्रबन्धो जातः; येन जीर्णशीर्णलिखितपुस्तकाना छायाचित्रणकार्यमुपक्रान्तम् । मन्ये, स्वल्पेनैव समयेन तादृक्पुस्तकाना जीवनरक्षण सपन्न भविष्यति । एतत्कार्यार्थं शासनं धन्यवादार्हम् ।

सरस्वतीभवने स्थानस्य रक्षोपकरणस्य च न्यूनतयाऽऽवश्यकानामपि नूतनपुस्तकाना सग्रहो निरुद्धप्रायो वर्तते । प्रथमतः सगृहीतानामपि पुस्तकाना यथावत्सरक्षणं सुदुष्करमिव संजातमस्ति अध्येतॄणामनुसन्धातॄणा च स्थानसंकोचकृत महदसौविध्यमस्त्यतो भवनविस्तार-हेतव आवश्यकार्यव्यवस्थार्थं प्रशासन सानुरोधमभ्यर्थ्यमानं वर्तते ।

## ( ३ ) परीक्षाविभागः

परीक्षाविभागोऽस्य महाविद्यालयस्य तादृशं महत्त्वपूर्णमङ्ग यद्द्वारा न केवलमुत्तर-प्रदेशस्यैवापि तु मध्यप्रान्तस्य, मध्यभारतस्य, राजस्थानस्य, महाराष्ट्रस्य, कर्णाटकस्य, मुम्बापुर्याः, गुर्जरदेशस्य, सौराष्ट्रस्य, नयपालस्य च संस्कृतपाठशाला अस्य महाविद्यालयस्य विभिन्नासु परीक्षासु स्वच्छात्रान् प्रेष्यानेन सह सबन्धसौभाग्य भजन्ति । अस्य परीक्षाः प्रथमा, पूर्वमध्यमा, उत्तरमध्यमा, शास्त्री, आचार्य, इत्येतन्नामभिः प्रसिद्धाः सन्ति । स्त्रीणां कृते ज्ञानप्रभा, ज्ञानश्री, भारती, इत्येतन्नाम्न्यः पृथक् परीक्षा अपि सन्ति । भारतीपरीक्षा समुत्तीर्णा अनेकाः स्त्रियो गतवर्षादेव संस्कृतशिक्षापरिषदो विशेषानुमत्याऽऽचार्यपरीक्षाया प्रवेशाधिकार प्राप्नुवन्ति ।

इदं हि संस्कृतशिक्षायाः कृतेऽत्यन्तं शुभलक्षणं यद्देशस्यान्याः संस्कृतसंस्था अस्माकं संशोधिताः परीक्षा आदर्शीकृत्य स्वकीयपरीक्षास्वावश्यकं परिवर्तनं कर्तुं चेष्टन्ते । अनेन कर्मणा विभिन्नाना संस्कृतपरीक्षाणा समीकरणं संभविष्यति । इयमपि सूचना संस्कृतज्ञाना प्रमोदमाधा-स्यति यदस्मिन्वर्षे शासनेन विशेषपरीक्षार्थं स्वीकृतिर्दत्ता येन प्राचीनक्रमेण ता ता परीक्षा-मुत्तीर्णा विद्यार्थिनः केवल नवीनविषयेषु तत्तत्परीक्षा दातुं शक्ष्यन्ति नवीनक्रमेणैकस्मिन्मुख्यविषये तत्तत्परीक्षोत्तीर्णाश्च वैकल्पिकविषयानगृहीत्वैव मुख्यविषयान्तरे तत्तत्परीक्षासु प्रवेशं प्राप्स्यन्ति । पूरकपरीक्षास्वीकृतयेऽपि शासनेन सहास्माकं पत्रव्यवहारः प्रचलति । विश्वसिमि शासनेन तत्स्वीकृतिरप्यविलम्बमेव दास्यते येन संस्कृतच्छात्राणा महती समयरक्षा भूयानुपकारश्च भविष्यतः । एतत्सर्वकार्यसौकर्यायास्मिन्वर्षे शासनेनैकः सहायकपरीक्षाध्यक्षः कियन्तोऽतिरिक्त-लेखकाश्च परीक्षाविभागीयकार्यालये नियोजिताः ।

## ( ४ ) निरीक्षणविभागः

अयमपि विभागोऽस्य महाविद्यालयस्य मुख्यमङ्गम् । एतद्विभागद्वारा राज्यस्यानेकाभ्यः संस्कृतपाठशालाभ्यो राजकीयाऽऽर्थिकी सहायता दीयते तासां सुव्यवस्था च क्रियते । अस्मिन् विभाग एकः प्रधाननिरीक्षकस्त्रयः सहायकनिरीक्षकाश्च सन्ति । ऐषमः शासने सहायकनिरीक्षकेभ्यः प्रामाणिकाधिकारिणामधिकारं दत्त्वा तत्पदमहत्त्वमभिवर्द्धितं यदर्थं शासनमत्यन्तं धन्यवादमधिकरोति । यद्यपि साम्प्रतं चत्वारो निरीक्षकाः सन्ति परं निरीक्षणीयविद्यालयानां विस्तार एतावान् विपुलो वर्तते यदेतावन्मात्रैः समयेन तन्निरीक्षणं नैव कर्तुं शक्यतेऽतो निरीक्षकद्वयस्यापरस्यापि नियुक्तिरत्र विभागेऽनिवार्या वर्तते, विश्वसिमि संस्कृतोन्नयनोत्सुकं शासनमिदं कार्यं न चिरेणैव निर्वर्तयिष्यति ।

सर्वे संस्कृतानुरागिण इदं विज्ञाय भृशं प्रसन्ना भविष्यन्ति यदस्य विभागस्य प्रयत्नेन गतवर्षे प्रायः शतसंख्याकेभ्यः संस्कृतविद्यालयेभ्योऽतिरिक्तमार्थिकं साहाय्यं दत्त्वा शासनेन तेषामादर्शविद्यालयत्वप्राप्तेरवसर उपस्थापितः । परं स्वतन्त्रभारतस्य नवविधानानुसारं पुरातन्यामार्थिकव्यवस्थाया महतः परिवर्तनस्य जातत्वेन संस्कृतविद्यालयानामायस्रोतोऽन्तरस्य शुष्कतया नैतावन्मात्रेणार्थसाहाय्येन तेषामादर्शविद्यालयत्वप्राप्तिः प्रगतिश्च संभवत्यतो राज्येन तेभ्योऽधिकाधिकार्थसाहाय्यदानमावश्यकम् । यैश्च विद्यालयैस्तावदप्यर्थसाहाय्यं न लब्धं तेभ्योऽप्यस्मिन्नूतने वर्षे हस्तावलम्बदानं शासनस्यानिवार्यं कर्तव्यमतो यथासंभवमतिशीघ्रं प्रान्तीयसंस्कृतविद्यालयानां कृते शासनेन पञ्चविंशतिलक्षरूप्यकाणामनुदानं स्वीकार्यमिति मे महीयाननुरोधः ।

### महाविद्यालयस्य तात्कालिक्य आवश्यकताः

विद्यार्थिन एव विद्यालयस्य प्राणा देशस्य भाविनः कर्णधाराश्च । अतः सर्वतोभावेन तत्परिपोषणं सर्वाभ्यर्हितं कर्म । तच्च शिक्षायाः, छात्रवृत्तेः, निवासस्य च सुव्यवस्थया संपाद्यते । तेष्वत्र शिक्षायाः सुव्यवस्था तु वर्तते परं छात्रवृत्तेर्व्यवस्था पर्याप्ता नास्ति । या छात्रवृत्तिर्दीयते तया वर्तमाने घोरमहर्घतासमये न कथञ्चिदपि निर्वाहः संभवति । जातेऽपि भारतस्वातन्त्र्ये, घोषितेऽपि हिन्द्या राष्ट्रभाषात्वे, जेगीयमानेऽपि राष्ट्रनायकैर्गीर्वाणवाण्या गरिमण्यद्यापि वित्तहीना एव जनाः संस्कृतमधीयतेऽतः संस्कृताध्ययनार्थं समुचितायाश्छात्रवृत्तेः प्रबन्धः परमावश्यकः । अतोऽत्र महाविद्यालये दीयमानानां छात्रवृत्तीनां समयानुरूपस्य स्तरोन्नमनस्य नवीनानां द्विशतच्छात्रवृत्तीनां वितरणस्य च कृते शासनं सानुनयं प्रार्थ्यते ।

छात्राणां निवासप्रबन्धविषये किमुच्येत। स त्वत्र शून्यप्राय एव, येन विद्यार्थिना महत्सङ्कटम्। काश्या अस्य महाविद्यालयस्य च प्रतिष्ठयाऽऽकृष्टा विद्यार्थिनः संस्कृताध्ययनार्थं सुदूरदेशादत्र प्रत्यब्दमायान्ति परं छात्रावासस्याभावेन ते महान्तं क्लेशं सहन्तेऽनेके च निवासस्थानसुविधामलब्ध्वा यथागतं निवर्तन्ते। यस्य महाविद्यालयस्य विश्वविद्यालयपदेऽभिषेचनं शासनेन समुद्घोषितं तस्य कृते एकस्य समुचितच्छात्रावासस्यापि प्रबन्धाभावो विचित्र इव प्रतिभाति। अतश्छात्रावासस्य निर्विलम्बं निर्माणव्यवस्थार्थं शासनं साग्रहं प्रार्थ्यते, विश्वस्यते चात्यावश्यकं कार्यमिदं शासनेन नूनमेवास्मिन् वर्षे संपादयिष्यत इति।

यद्यपि शासनेनास्य महाविद्यालयस्याध्यापकानां वेतनस्तरः पूर्वापेक्षया पर्याप्तमुन्नमितो यदर्थं शासनं सहस्रशो धन्यवादार्हं तथाप्यन्योपाधिमहाविद्यालयीयवेतनतुलनायामत्रत्यवेतनेषु यो न्यूनतातिरेकस्तन्निराकरणार्थं शासनं सानुरोधमभ्यर्थ्यते।

उत्तराध्ययनस्यानुसंधानस्य च प्रोत्साहनार्थं प्रतिमासं शतरूप्यकाणामन्ततः पञ्चदश च्छात्रवृत्तीनां व्यवस्थापनं नितान्तमावश्यकमिति तदर्थं शासनं प्रति मे महत्यभ्यर्थना।

अस्य महाविद्यालयस्य नवीने पाठ्यक्रमे शास्त्रिकक्षापर्यन्तमाधुनिकविषयाणां सन्निवेशोऽस्ति, अत आचार्यकक्षायामेव तत्तच्छास्त्राणां विशिष्टं विस्तृतं चाध्ययनं संभवत्यतस्तत्र गम्भीरपाण्डित्योपार्जनप्रणयिनां प्रतिभाशालिनामेव च्छात्राणां प्रवेशस्य नियमस्तेषां कृते प्रतिमासं चत्वारिंशद्रूप्यकाणां छात्रवृत्तिप्रबन्धश्च नूनमेव कर्तव्यः। दैनन्दिनं वर्धमानं शास्त्रीयसत्पाण्डित्यापचयं निरोद्धुमत्यावश्यकीयं व्यवस्था शासनेन सद्यः कर्तव्येति मे भूयसी प्रार्थना।

उत्तरमध्यमापरीक्षा इण्टरमीडियटपरीक्षायाः, शास्त्रिपरीक्षा च बी.ए.परीक्षायास्तुल्यतया शासनेनोद्घोषिता, परं विश्वविद्यालया उत्तरमध्यमोत्तीर्णानां बी.ए.कक्षायां शास्त्रिपरीक्षोत्तीर्णानां च एम ए कक्षायां प्रवेशं न कुर्वन्त्यतः शासनेन स्वसमानरक्षणार्थं संस्कृतं प्रति जनाकर्षणाभिवृद्ध्यर्थं च विश्वविद्यालयैः सह वार्तां कृत्वा मध्यमोत्तीर्णानां बी.ए.कक्षायां शास्त्रिपरीक्षोत्तीर्णानां च एम ए.कक्षायां प्रवेशस्य व्यवस्थाऽविलम्बमेव कारयितव्या।

एतन्महाविद्यालयस्थापनासमयेऽत्राध्यापयितव्यविषयेष्वायुर्वेदस्यापि नामाङ्कितमासीत्, किन्तु तस्य शिक्षायाः प्रबन्धोऽत्र नाधुनावधि जातः, संस्कृतभाषानुबद्धविद्यासु चायुर्वेद एवैकार्थकरी विद्या विद्यान्तरापेक्षया लोकहितोपयुक्ता च। आयुर्वेदीया चिकित्सैव चास्मद्देशवासिनामार्थिकस्थितेर्देशीयवातावरणस्य चानुकूला। अतः प्राचीनविद्यानां रक्षोद्धारबद्धपरिकरे-

णास्माकं शासनेन प्राचीनरीत्याऽऽयुर्वेदस्याध्ययनाध्यापनयोः परीक्षायाश्च व्यवस्थाऽत्र महाविद्यालयेऽवश्यं कर्तव्येति मे बलवत्तरोऽनुरोधः।

वाद्यसङ्गीतादिकं मानवजीवनस्यान्यतममावश्यकमङ्गम्। तत्रात्रत्यानां विद्यार्थिनां रुचिरपि प्रत्यब्दं महाविद्यालयस्योपाधिवितरणोत्सवदिनेऽभिनयादौ दृश्यते। परं तत्प्रबन्धोऽत्रेदानीं यावन्न सपन्न इति तदर्थमपि शासनमभ्यर्थ्यते।

महाविद्यालये विद्यार्थिनां कृते वाचनालयस्याध्यापकानां च कृते विश्रामस्थानस्य काचिदपि व्यवस्था न विद्यत इति तत्संपादनमपि शासनात्प्रार्थ्यमानमस्ति।

अत्र स्थानसङ्कोचात्प्रतिकक्षं कक्षाद्वयकार्यं परिचालयितव्यं भवति येनाध्यापकद्वयस्य ध्वनिसङ्घर्षेणाध्यापनं विकृतं भवति, विद्यार्थिवर्गश्च खेदमनुविन्दत्यतोऽस्मिन् भवने स्थापिताभ्यां परीक्षानिरीक्षणविभागयोः कार्यालयाभ्यां महाविद्यालयभूमावेव भवनान्तरं निर्माप्यास्य भवनस्य ततो रिक्तीकरणमत्यावश्यकमित्येतत्कार्यस्य शीघ्रतरमपत्तये शासनं सानुरोधं निवेद्यते।

## संस्कृतस्य सामयिक्यावश्यकता

संस्कृतं संसारस्यानादिभाषा। अस्याः साहित्यमत्यन्तं सुविस्तृतं समृद्धं च। अस्य दर्शनान्यनुपमान्यमूल्यानि च। अतस्तज्ज्ञानाय संस्कृताध्ययनस्यावश्यकता त्वस्त्येव परमस्य सामयिक्यावश्यकतापि वर्तते। यतो ह्यद्य हिन्दी देशस्य राष्ट्रभाषा, तस्या चाधुनातनस्य विस्तृतविज्ञानस्याधुनातन्या विस्तृतायाः राजनीतेश्चानुवादः करणीयो विद्यते। अतस्तत्पारिभाषिकशब्दा आत्मीयभाषायां परिवर्तनीयाः सन्ति। कार्यं चेदं केवलं संस्कृतेनैव शक्यसम्पादनम्। अतः संस्कृतस्याधिकाधिकः प्रचारो नितान्तं वाञ्छनीयो विद्यते। तदर्थं संस्कृतस्य विभिन्नग्रन्थेभ्यः सरलानि पद्यानि कथानकानि च संगृह्य सरलतमेन संस्कृतेन लघुकायान् नवीनग्रन्थान् लेखयित्वा च सरलसंस्कृतस्यैकः पाठ्यक्रमो निर्मातव्यः, तदाश्रिता चैका संस्कृतस्य साधारणपरीक्षाऽस्मान्महाविद्यालयात्परिचालयितव्या येन विभिन्नक्षेत्रेषु कार्यकर्तारो जना अपि स्वल्पेन समयेन श्रमेण च तं पाठ्यक्रमं पठितुं तत्परीक्षायां समिलितुं च शक्नुयुः।

संस्कृतं प्रत्युत्तरप्रदेशीयस्य शासनस्य, वर्तमानस्य राज्यपालस्य, मुख्यमन्त्रिणः, शिक्षामन्त्रिणः, गृहमन्त्रिणश्चासाधारणप्रेम्णो दर्शनेनायं विश्वासो बलादुत्पद्यते यदस्य महाविद्यालयस्य निर्दिष्टास्तात्कालिकीरावश्यकताः किञ्चिद्विलम्बं विनैव शासनं नूनं निःसन्देहं पूरयिष्यति।

अन्ते महोत्सवस्यास्य शुभावसरमुपस्थापितवते भगवते काशीविश्वनाथाय प्रणतीरर्पयन् सर्वथा संमानार्हमुत्तरप्रदेशीयं शासनं माननीयान् गृहमन्त्रिणः श्रीसम्पूर्णानन्दमहाभागान् मान-

# विविधम्

## राजशेखरीयकाव्यमीमांसाया रचनास्थानम्

डा० दशरथशर्मा, दिल्लीविश्वविद्यालय, दिल्ली।

राजशेखरेण काव्यमीमांसाया रचना कान्यकुब्जे कृतेति केचिद् विद्वासः। एतन्मतं निराकुर्वाणैर्महामहोपाध्यायैः श्रीमीराशीमहोदयैराङ्गलभाषया यल्लिखितं तस्यायं भावानुवादः—

"मृत्युपर्यन्त राजशेखरस्त्रिपुर्यामेव वासमकल्पयदिति प्रतीयते। काव्यमीमांसाया तेन स्वीयसम्कृननाटकेभ्यः केचिदंशाः समुद्धृताः। अतः काव्यमीमांसैव तस्यान्तिमो ग्रन्थ इति सुनिश्चितम्। "महोदय मूलमवधीकृत्य दिशो विभजेत" इत्येकत्र काव्यमीमांसाया कथनान्नैतदनुमानं सगत यत् काव्यमीमांसाया रचनास्थानं कान्यकुब्जमेव। श्रीहर्षस्य समयात् प्रभृति कान्यकुब्ज भारतसम्राजा मुख्यमधिष्ठानमासीत्। एतच्च सुव्यक्तमेव यत्तस्मै नगराय राजशेखरस्य हृदये तथैवादरोऽभूद् यथा कान्यकुब्जेश्वराय श्रीमहेन्द्रपालाय, यस्य स्वशिष्यत्वेन निर्देशस्त्रिपुर्यामपि विरचिताया स्वीयविद्धशालभञ्जिकानाटिकाया राजशेखरेण क्रियते" इति।

परं नायमपि पक्षः सर्वथा शुद्धः। राजशेखरेणानेकश एकमेव पद्य तेनैव रूपेण सामान्येन परिवर्तनेन वा स्वीयेषु विभिन्नेषु ग्रन्थेषु प्रयुक्तमिति सुविदितमेव। अतस्त्रिपुर्यो स्थितेन कविना ये ग्रन्था निबद्धास्तेभ्य एव केचिदंशविशेषाः समुद्धृता इति सनिश्चयं कः कथयितु शक्नुयात्? एवं साधने सदिग्धे सति साध्यस्य सशयापन्नता सुनियतैव।

अपरं चैतदपि द्रष्टव्यम्। कथोत्थमुक्तककाव्यस्य काव्यमीमांसायामिदमुदाहरणम्—

> दत्वा रुद्धगतिः खसाधिपतये देवीं ध्रुवस्वामिनीं
> यस्मात्खण्डितसाहसो निववृते श्रीशर्मगुप्तो नृपः।
> तस्मिन्नेव हिमालये गिरिगुहाकोणक्वणत्किन्नरे
> गीयन्ते तव कार्तिकेय नगरस्त्रीणा गणैः कीर्तयः॥

अत्रस्थं 'कार्तिकेय' इति सबोधनपद काव्यकारेण प्रतिहारेन्द्राय महीपालाय प्रयुक्त-मित्यात्मनोऽन्यस्मिन् निबन्धे श्रीमीराशीमहोदयैरेव प्रतिपादितम् । उपपन्नमेतच्चेत् काव्यमीमासाया कान्यकुब्जे रचना सर्वथोपपन्नेति ब्रूमः । प्रकृत्यमित्राणा प्रतिहारनरेन्द्राणामीदृशी स्तुतिं चेदिराजधान्या त्रिपुर्या को मर्षयेत् ? कान्यकुब्जे कान्यकुब्जेशेन महीपालेनैव सरक्षितेन केनचित् कविनेदृशी कार्तिकेयापरनाम्नो महीपालनरेन्द्रस्य स्तुतिरुपपद्येत । स च कविः स्वय काव्यमीमासाकारो राजशेखर इति किं न सगच्छते ?

अन्यच्च, चेदीशपरिपालिताया त्रिपुर्या यद्यय ग्रन्थो रचितस्तर्हि कीदृशोऽय कवेश्चेदिपु बहुमानो यत् काव्यमीमासाया चेदीशस्य त्रिपुर्या वा तेन सकृदपि नामग्रहण न कृतम् । कान्यकुब्जस्य मध्यदेशस्य च सर्वत्र प्रशसा दृश्यते ।

"विनशनप्रयागयोर्गङ्गायमुनयोश्चान्तरमन्तर्वेदि । तदपेक्षया दिशो विभजेत" इत्याचार्यैः कथितेऽपि-"तत्रापि महोदय मूलमवधीकृत्य" इति राजशेखरेण नियमः कृतः । काव्यमीमासाया अयमंशश्च श्रीमीराशीमहोदयैः स्वयमेव सूचितः । किन्त्वस्मादपि काव्यमीमासाया रचनास्थानस्य निर्णयेऽधिकमन्वर्थकं ग्रन्थस्यान्यत् स्थल न तेषामवधानस्य विषयो जात इति प्रतिभाति । भारतवर्षस्य पूर्वदेश-पश्चाद्देश-दक्षिणापथोत्तरपथादिभागाना देशान् पर्वतान् सरितो द्रव्याणि च निर्दिश्य "तत्प्रसिद्धिसिद्धम्" इत्युक्त्वा राजशेखरेण मध्यदेशवर्तिनो देशादयो न निर्दिष्टाः । अनेनैतत् स्पष्टमेव यन्मध्यदेशे स्थितेन कविना राजशेखरेण मुख्यतो मध्यदेशीयेभ्यः कविभ्य एव काव्यमीमासाया रचना कृता । दाक्षिणात्येभ्यो विलिखन् दक्षिणापथस्थो दाक्षिणात्यो वा राजशेखरोऽन्यथा दक्षिणदिग्भवानेव पर्वतादीन् प्रसिद्धिसिद्धान् मन्येत न तु मध्यदेशीयान् ।

त्रिपुर्यो काव्यमीमासा रचितेति मतं मया ।
यन्निराकुर्वतालेखि विमृश्य तद्विचक्षणैः ॥

---

# महीधरीयमनादिदीपविवरणम्

श्रीव्रजवल्लभद्विवेदः, सरस्वतीभवनम्, काशी ।

'सुषमायाः' पञ्चमोपाधिवितरणोत्सवाङ्के महीधरविषयक एको लेखः प्रकाशितः । सप्तमवर्षद्वितीयाङ्के च सौत्रामणीविनियोगसूत्रार्थशीर्षकोऽपरो निबन्धः प्राकट्यं नीतः, यत्र महीधररचितेषु ग्रन्थेषु नास्ति कोऽप्येतन्नामको ग्रन्थोऽपि तु भ्रमवशादेव कात्यायनश्रौतसूत्र-व्याख्यानस्य तद्विरचितस्य केनचित् सौत्रामणीविनियोगसूत्रार्थ इति नाम स्थापितमिति सप्रमाण प्रतिपादितम् । निबन्धयोरनयोः प्रकाशनानन्तर महीधरसम्बन्धिनी बहुविधा सामग्री दृष्टिपथमायाता प्रकाशिताऽप्रकाशिता च । प्रकाशितासु सामग्रीषु सरस्वतीभवनग्रन्थमालायां प्रकाशितयोर्वेणी दत्तप्रणीतयोः पदार्थमण्डनभेदजयश्रीनाम्नोर्ग्रन्थयोर्भूमिके, ब्रह्मविद्यायां [ व० ४, पृ० १३५ ] श्रीके एम.के शर्मणा, भाण्डारकरप्राच्यगवेषणासंस्थानशोधपत्रिकायां [ व० २१, पृ० २४८ ] श्रीपी के गोडेमहाशयेन च प्रकाशितौ लेखौ, द्वित्राश्च महीधरविरचिता ग्रन्थाः, अप्रकाशितासु च सरस्वतीभवने विद्यमाना विविधविषयका हस्तलेखा अवसेयाः । समुपलब्धायामेतस्यां सामग्र्यां प्रथमे निबन्धे परिवर्तनपरिवर्द्धनयोरतीवावश्यकता समनुभूयते । सा च सति काले पूर्तिं गमिष्यत्येव । अधुना त्वज्ञातचरस्य महीधररचितस्यानादिदीपविवरणनाम्नो ग्रन्थस्य परिचयो विदुषां पुरतः समुपस्थाप्यते । मन्ये महीधरविषयेऽपि कापि नूतनानेन सूचनाधिगता स्यात् ।

सरस्वतीभवनस्थे महीधरसंग्रहे २२३० संख्याङ्किनो विद्यतेऽस्य ग्रन्थस्य हस्तलेखः । हस्तनिर्मितसुपुष्टतूलपत्राधारे पृष्ठमात्रादिविशेषतायुतैर्देवनागराक्षरैर्लिखितोऽयं ग्रन्थो धारयत्या-त्मनोऽखण्डित वपुः १–१६० पत्रात्मकम् । १५८–१५९ पत्रयोर्द्वयोरपि १५९ आत्मिका सख्यैव स्थापितेति ता विहायान्यत्र पत्रसख्याङ्कने न कोऽपि व्यतिक्रमः । प्रतिपत्र षोडश पङ्क्तयः, प्रतिपङ्क्त्यक्षराणि चत्वारिंशदासते । मुखपृष्ठ रिक्तप्रायम्, अन्तिमे पत्रे च चतुर्दश पङ्क्तयो विद्यन्ते । पत्राणामाकारः ११" × ४½" परिमित । ग्रन्थान्ते लिपिकालः १६७८ विक्रमसंवत्सरः स्थापितः । [1]लेखकस्य तु नाम तत्र न दृश्यते । हस्तलेखोऽयमतीव शुद्धः, शोभनाक्षराङ्कितः,

---

1 वेणीदत्तरचितस्य पदार्थमण्डनस्य भूमिकायाम् [ पृ० ५ ]—" लक्ष्मणः १६७८ वैक्रमसंवत्सरे स्वपितामहरचितस्यानादिदीपटीकाविवरणस्य प्रतिलिपिलेखक." इत्युक्तिर्हस्त-लेखसमाप्तौ–"पुस्तकमिदं भ[ट ? ट्ट]लक्ष्मणस्य" इति वाक्यदर्शनमूला । एतच्च वाक्य नैव प्रतिलिपिलेखकस्य, तत्र भिन्नाक्षरत्वस्य स्पष्टत्वात् ।

सुरक्षितदशाया च तिष्ठन्नास्ते । अस्यैकस्यैव हस्तलेखस्य साहाय्येनैतस्य ग्रन्थस्य शुद्धतरं संस्करणं सम्पादयितुं शक्यते ।

साम्प्रतमत्र हस्तलेखस्य ग्रन्थारम्भमध्यसमाप्तिस्था आवश्यकांशा उद्ध्रियन्ते—

ग्रन्थारम्भः—ॐ नमो गुरुभ्यः शिवादिभ्यो नमः ॥ नृसिंहशर्वार्करमाभवानीगणेशवाणीगुरुपाद-पद्मान् । प्रणम्य तेषां कृपयैव सम्यगनादिदीपं विवृणोमि काश्याम् ॥ १ ॥ वृद्धा लेखाऽसमर्थोऽहं स्वापतेयाल्पतान्वितः । नारायणाग्रहादेवानादिदीप प्रकाशये ॥ २ ॥ संसारार्णवमग्नानामज्ञानजम्बालव्याकुलानामीशानभजनहीनाना नृणामनुजिघृक्षयानादिभूपोऽनादिदीपमाविरकरोत्कृपया । तत्रादौ शिष्टाचारावनाय निर्विघ्नग्रन्थसमाप्त्यै गणेशादिस्मरणरूपं मङ्गलमाचरति–देवमिति ॥ देवं विघ्नभिदं शिवं शशिभृतं देवीं गिरां मातरं विद्याकल्पतरोर्गुरोश्च चरणाम्भोजे प्रणम्यादरात् । विश्वं नेतुमनादिभूरमुनिनाऽनादिप्रदीपोऽधुना स्वर्मुक्त्योः पथि मोहवत्यतितमस्त्यत्रेऽधिकं द्योत्यते ॥ १ ॥ अनादिभूप एव मुनिस्तेनानादिदीपो नाम ग्रन्थो द्योत्यते प्रकाश्यते ।

पुष्पिकाः—[1]इति श्रीमहीदासकृतेऽनादिदीपविवरणे सन्ध्याविधिः ।

[2]इति परमशैवाचार्यसरोजराजीभास्वतः प्रणतिनतधराधीशधोरणिचिकुरच्चयान्धकार-परिचयरोचिष्णुचरणनखनक्षत्रमयूखस्य श्रीमदनादिभूपस्य कृतौ स्नानतर्पणविधिर्नाम अनादिदीपके नित्याधिकारे प्रथमप्रकरणे प्रथमः समुद्देशः ॥ छ ॥ इत्यनादिदीपविवरणे महीदासकृते प्रथमोद्देशः ॥

[3]चौलुक्यकुलपरमाराध्यस्य चरमजलधिवेलाविपिनालीविस्तृताश्रमसोमेश्वरापरवपुष पश्चिमगोलकीवशमुक्तामणेः परमशैवाचार्यश्रीमदनादिभूपस्य कृतौ प्रथमप्रकरणे नित्या-धिकारे सूर्यार्चनं नाम द्वितीयः समुद्देशः ॥

[4]इति सकलजगतीयाचकचकोरपारणापूर्णपीयूषमयूखस्य निरन्तरविसृज्यमानमानदान-मन्दाक्षीकृतकल्पवृक्षस्य श्रीमदनादिदेवभूपस्य कृतावनादिदीपके प्रथमप्रकरणे

---

१ सप्तविंशतितमपत्रस्य षष्ठ्यां पङ्क्तौ । २ प० ३१, पं० ५ ।
३ प० ३७, पं० १६ । ४ प० ७२, पं० १ ।

तृतीयः समुद्देशः ॥ इत्यनादिबोधविवरणे महीदासकृते शिवपूजाप्रतिपादन तृतीयः समुद्देशः ॥

[१]इत्यनादिबोधविवरणे महीदासकृते शिवार्चनं नाम प्रकरणम् ॥

[२]इत्यनादिदीपविवरणे चण्डार्चनविधिः दशम प्रकरणम् ॥

[३]इत्यनादिदीपविवरणे महीदासकृते धेनुपूजादिप्रकरणम् ॥ ११ ॥

[४]इति निरन्तरार्थिजनदीयमानदानजितचिन्तामणिकल्पवृक्षकनकाद्रिधनदप्रभृतिप्रस्तूयमानयशसः । इति परमशैवाचार्यश्रीमदनादिदेवभूपस्य कृतावनादिप्रदीपे नित्याधिकारे प्रथमप्रकरणे चतुर्थः समुद्देशः ॥ इत्यनादिप्रदीपविवरणे महीधरविरचिते भोजनादिनिरूपणं द्वादशं प्रकरणम् ॥

[५]इत्यनादिदीपविवरणे महीदासकृते हेरम्बार्चाप्रकरण त्रयोदशम् ॥

[६]इति परमशैवाचार्यश्रीमदनादिदेवस्य कृतावनादिदीपके द्वितीये नैमित्तिकाधिकारप्रकरणे पवित्राधिवासन नाम प्रथमः समुद्देशः ॥ छ ॥ इति महीदासकृतेऽनादिदीपविवरणे पवित्राधिवासनम् ॥ छ ॥

[७]इति निमित्तकारे प्रथमप्रकरणे (?) यत्तपोरुपतपनसमाचामितत्रिलोकीवर्तिमहामोहान्धकारस्य श्रीमदनादिदेवभूपस्य कृतावनादिदीपके नैमित्तिकाधिकारे द्वितीयप्रकरणे द्वितीय. समुद्देश. ॥ छ ॥ इति महीदासकृतेऽनादिदीपविवरण पवित्रार्पणविधिश्चतुर्दश प्रकरणम् ॥

[८]इति नैमित्तिकाधिकारे द्वितीयप्रकरणेऽनादिदीपके तृतीयः समुद्देशः ॥ इति श्रीमहीदासकृतेऽनादिदीपविवरणे दमनोत्सवान्दोलनाविधिः पञ्चदश प्रकरणम् ॥ १५ ॥

[९]इत्यनादिदीपके द्वितीयप्रकरणे प्रायश्चित्तं नाम चतुर्थः समुद्देश. ॥ इत्यनादिदीपविवरणे महीदासकृते प्रायश्चित्ताधिकार. ॥ १७ ॥

[१०]इति श्रीस्वच्छन्दभैरवागमे विविधपूजार्च्चनेऽयुतलक्षार्चनविधिः सपूर्णः ॥ छ ॥ इति महीदासविरचितेऽनादिदीपविवरणे लक्षपुष्पार्च्चनविधिः ॥

---

१ प० ७५, पं० ८ ।　　२ प० ७६, पं० १५ ।　　३ प० ८४, पं० १ ।
४ प० ९१, पं० ५ ।　५ प० ९५, पं० १३ ।　६ प० १२३, पं० ६ ।　७ प० १२९, पं० २ ।
८ प० १३५, पं० १ ।　　९ प० १४१, पं० ९ ।　　१० प० १६५, पं० ६ ।

ग्रन्थसमाप्तिस्तत्रत्या पुष्पिका च —

[१]इत्युक्तः शशिशेखरेशवदनप्रोद्गीतदुग्धाम्बुधिप्रख्यातागमसारशीकरचितो दीक्षाधिकारः क्रमात् । स्वस्मै बोधकृते मुदे गुणवता त्रातु भवाम्भोनिधेर्विश्वं श्रीमदनादिभूपमुनिना प्रत्यक्षकामारिणा ॥ ७३ ॥.......इति सेवामिलितमहीशमौलिमाणिक्यमयूखमाला-मांसलितचरणनखचन्द्रचन्द्रिकाचान्तत्रैलोक्यान्तरतिमिरनिकरस्य परमशैवाचार्यस्य श्रीमदनादिदेवभूपस्य कृतावनादिदीपके नैमित्तिकाधिकारे द्वितीयप्रकरणे पञ्चमः समुद्देशः ॥ छ ॥

[२]श्रीमदनादिदेवभूपरचितेऽनादिदीपाख्ये ग्रन्थे नैमित्तिकाधिकारे द्वितीयप्रकरणे पञ्चम उद्देशः । कीदृशस्यानादिभूपस्य—सेवेति । सेवार्थे मिलिता आगता ये महीशा राजानस्तेषां मौलिषु मुकुटेषु माणिक्यानि रत्नानि तेषां मयूखमाला किरणपङ्क्तिस्तया मांसलिता पुष्टीकृता चरणनखरूपचन्द्रस्य या चन्द्रिका कान्तिस्तया चान्तो नाशितस्त्रैलोक्यान्तर्वर्ती तिमिरनिकरोऽन्धकारसमूहो येन तस्य, परमो मुख्यः शिवभक्तानामाचार्यस्तस्य ॥ छ ॥ इति श्रीमहीदासरचितेऽनादिदीपविवरणे व्रतोद्धारा ॥ छ ॥ स्वर्णकाररमणीयवंशजो विष्णुदास इति वैष्णवोऽभवत् । श्रीमदाद्य इह पालसञ्ज्ञकस्तस्य नन्दनवरः शिवार्चकः ॥ १ ॥ कनककारवरो द्विजसेवको बहिचरोऽभवदस्य तनूद्भवः । सुरसरिन्निकटे मणिकर्णिकामधिगत. सुकृतैः स्वयमर्जितैः ॥ २ ॥ तत्सूनुनारायणदासनामा श्रीकण्ठपादार्चनसक्तचित्तः । आस्ते धरादेवपदारविन्दभक्तो यशश्वेतितसर्वलोकः ॥ ३ ॥ तत्प्रेरितो विन्महिदासनामा वाराणसीवासरतोऽजभक्तः । अनादिदीपे विवृतिं बुधानां प्रीत्यै व्यधात्तेन हरिः प्रतुष्यात् ॥ ४ ॥ भाष्य समाप्तम् । संवत् १६७८ वर्षे द्वितीयाषाढसिते पक्षे षष्ठीगुरौ लिखितोऽय ग्रन्थ. ॥ श्रीरस्तु ॥ श्रीमालज्ञातीयसोनीबहिचरसुतेन नारायणदासेन [ लिखायतः ? लेखितः ] शिवभक्तानामवलोकनार्थं परोपकारार्थम् ॥ छ ॥ छ ॥ श्रीशिवो जयतु ॥ छ ॥ छ ॥

( भिन्नाक्षरेषु )—पुस्तकमिद भ[ट ? ट्ट]लक्ष्मणस्य ।

अनेन विवरणेनादिदेवभूपरचितस्यानादिदीपकस्य महीदासरचितस्यानादिदीपविवरणस्येति द्वयोर्ग्रन्थयोः परिचयोऽधिगम्यते । द्वयोरप्येतयोर्ग्रन्थयोः शर्मण्यदेशीयाफ्रेख्टमहाशय-

---

१ पृ० १८९, पं० ८ । २ पृ० १९०, पं० २ ।

सगृहीताया बृहत्सूच्या डा०वी०राघवसंगृहीताया नूतनाया बृहत्सूच्या च नामापि नोपलभ्यते। तत्रानादिवीरशैवसंग्रहानाद्यागमनामानौ द्वौ ग्रन्थौ दृश्येते शैवागमप्रतिपादकौ। अयमपि ग्रन्थः शैवागमस्यैव, विशेषेण नित्यनैमित्तिकक्रियाप्रतिपादक इत्यत्रोद्धृतपुष्पिकाभ्यः स्पष्टमेव। अत्र च नित्याधिकारनैमित्तिकाधिकारनामनी द्वे प्रकरणे स्तः। तत्र प्रथमे प्रकरणे चत्वारः, द्वितीये च पञ्च समुद्देशा वर्तन्ते। विवरणकारो महीदासः स्वपुष्पिकास्वेतदतिरिक्तामपि कामपि प्रकरणसख्या स्थापयति, एकत्र च वदति—"इति श्रीस्वच्छन्दभैरवागमे ..." इति। किमत्र मूलमिति नैव ज्ञायते।

कोऽ[1]यमनादिदीपकप्रणेतानादिदेवभूपतिरिति मनीषिणामैतिहासिकाना विचारणीयो विषयः। अत्र खलु तेषा प्रथमप्रकरणीयद्वितीयसमुद्देशसमाप्तिस्था—"चौलुक्यकुलपरमाराध्यस्य चरमजलधिवेलाविपिनालीविस्तृताश्रमसोमेश्वरापरवपुषः पश्चिमगोलकीवशमुक्तामणेः परमशैवाचार्य-श्रीमदनादिभूपस्य कृतौ ..." इयं पुष्पिका किमपि साहाय्य गमिष्यत्येव। गुर्जरदेशीया मूलराज-प्रभृतयश्चौलुक्या राजानः परमशिवभक्ता आसन्निति नैव तिरोहितमितिहासविदाम्। तत्रत्यायामेव कस्याञ्चिद्वंशपरम्परायामनादिदेवो जनिमलभतेति बाढ कल्पयितुं शक्यते। अनादिदीपविवरण-कारस्य महीदासस्य [2]गुर्जरदेशप्रभवत्वमुक्तानुमानसमर्थकमेव स्यात्।

विवरणकारो महीदासस्तु प्रसिद्धाद्वेददीपकारान्महीधरादभिन्न[3] एव। अत्रत्यं मङ्गलमपि तमिममर्थ स्पष्ट सूचयति। किञ्च, अनादिदीपविवरणपुष्पिकास्वेकत्र [ ६१ प०, ८ प० ] दृश्यमानम्—"महीधरविरचिते" इति वाक्यखण्ड नावशेषयति तद्विषयिकीं शङ्काकणिकामपि।

वित्तकार्श्यपीडितेन तेन महानुभावेन वृद्धावस्थावशात्स्वय लेखासमर्थेन च [4]नारायणा-ग्रहादेवान्यस्मात् कस्माच्चित्पुरुषादेष ग्रन्थो लेखितः। १६७८ वि० वर्षस्य द्वितीयाषाढशुक्ल-

---

१ मूलग्रन्थपुष्पिकासु ग्रन्थस्यानादिदीपकानादिप्रदीपे इति द्वे नामनी, विवरणकारपुष्पिकासु चानादिदीपविवरणानादिबोधविवरणानादिदीपभाष्यमित्यादीनि विवरणनामानि दृश्यन्ते।

२ 'सुषमायाः' पञ्चमोपाधिवितरणोत्सवाङ्के १७२ तमे पृष्ठे द्रष्टव्यम्। तत्रत्येन विवरणे-नोत्तरप्रदेशीयबरेलीमण्डलसमीपस्थाऽहिच्छत्रपुर-( रामनगर ) वास्तव्य आसीन्महीधर इति केषाञ्चिद्वाचोयुक्तिर्नैव साध्वीति प्रतीयते।

३ 'सुषमायाः' पञ्चमोपाधिवितरणोत्सवाङ्के १७१ तमे पृष्ठे द्रष्टव्यम्।

४ एष नारायणश्च विष्णुदासस्य प्रपौत्रः, श्रीपालस्य पौत्रः, बहिचरस्य पुत्रः, श्रीमालज्ञातीयः स्वर्णकार आसीदिति ग्रन्थसमाप्तिपुष्पिकातो ज्ञायते। श्रीमालज्ञातीयानां गुर्जराणां स्वर्ण-काराणां वसतिः साम्प्रतमपि तत्रैव विद्यते यत्र हि महीधरेण नृसिंहभगवतो मूर्त्तिः

पक्षस्य षष्ठ्यां गुरौ लिखितोऽयं ग्रन्थः। ईश्वरकृष्णरचितायाः साङ्ख्यकारिकायाः प्रतिलिपिः स्वयमेव महीधरेण १६६८ तमे वि० वत्सरे[1] कृता। अनादिदीपविवरणे च स वदति–"वृद्धो लेखासमर्थोऽहम्" इति। अतः १६६८ वत्सरानन्तरं कतिचित्सु वत्सरेषु व्यतीतेष्वेव तस्य लेखासामर्थ्यं संभाव्यते। महीधरस्य जीवनवेलायां तत्समक्षमेवास्य हस्तलेखस्य लेखनकार्यं सजातं स्यादिति किं न कल्पयितुं शक्यते?

महीधरविषये विस्तरेणास्माभिः–'महीधरसंग्रहः' इति शीर्षके निबन्धे एवोहापोहः कृतः। इयांस्त्वत्र विशेषः—स्वगुरोः केशवसुतरत्नेश्वरस्योल्लेखो महीधरेण स्वकृतशुल्बसूत्रविवृतिसमाप्तौ–"श्रीरत्नेश्वरमिश्रस्य गुरोः केशवजन्मनः" इत्यादिना कृत इति। अपि च महानैयायिको वेणीदत्तो न महीधरस्य साक्षात्पौत्रः; किन्तु तत्पौत्रस्य पौत्र इति। तथा च पदार्थमण्डनभूमिकायां [पृ० ५] ग्रन्थकर्तृवंशपरिचयः–" ···तदेव प्रसिद्धस्य विद्वद्वरस्य महीधरस्य पुत्रः कल्याणस्तत्पुत्रो रामानुजो लक्ष्मणः तस्य पुत्रो भट्टवीरेश्वरस्तस्य पुत्रः सुगृहीतनामधेयस्तर्कवागीशभट्टाचार्य-तर्कधुरन्धरादिविरुदावलिविराजितस्तत्रभवान् प्रस्तुतग्रन्थकर्ता वेणीदत्त आसीत्। ग्रन्थकर्तुः पुत्रश्च कृष्णदत्त आसीदिति " इति। अत्र च प्रमाणान्तरमपि विद्यते। महीधरसंग्रहे स्थितस्य १२७० संख्याङ्कितस्य हस्तलेखस्यान्तिमपृष्ठे—"फनुभट्टपुस्तकं ·· भट्टमहीदासपुस्तकं कल्याणभट्टपुस्तकं रामभट्ट-भट्टलक्ष्मणपुस्तकं भट्टभट्टवीरेश्वरपुस्तकं भट्टवेणीदत्तपुस्तकं भट्ट-कृष्णदत्तपुस्तकम्" इति लिखितं दृश्यते। अस्य ग्रन्थस्य स्वामी च कृष्णदत्त इति तस्मादेव हस्तलेखात्प्रतीयते। अपि च वेणीदत्तेन स्वरचितस्यालङ्कारचन्द्रोदयस्य[2] समाप्तौ स्ववंशपरिचयं इत्थं स्थापितः—

"नागच्छत्रधराद्विजोत्तमकुले विख्यातकीर्त्तिर्वरः
सजातो हि महीधराभिधबुधः काशीपुरीमान्त्रिकः।
तत्पुत्रः सकलार्त्तिमर्दनकरः कल्याणनामाभवत्
तस्यानन्दनरामलक्ष्मणवरौ जातौ धराधीश्वरौ॥ १॥

---

स्थापिताऽऽसीत्। एतच्च निकेतनमधुना दण्डपाणिकालभैरवयोः प्रसिद्धतरयोर्मन्दिरयोः समीपस्थे घासीटोलाख्ये स्थाने द्रष्टुं शक्यते।

१ 'सुषमायाः' पञ्चमोपाधिवितरणोत्सवाङ्के १७० तमे पृष्ठे द्रष्टव्यम्।

२ सरस्वतीभवनस्थे महीधरसंग्रहे १९४२ संख्याङ्कितोऽस्य हस्तलेखो द्रष्टव्यः।

तत्र श्रीवरलक्ष्मणाङ्गजबुधो वीरेश्वरः श्रीवरो
येन स्वेष्टगुणिः सदाशिवपरब्रह्मापरोक्षीकृतम् ।
तज्जन्याखिलतर्कवारिधिपरं पारङ्गमोऽय बुधो
वेणीदत्त इति प्रभासमुदयाच्चन्द्रोदयोऽलङ्कृतः ॥ २ ॥” इति ।

एवमेभिः सुदृढैः प्रमाणजातैर्या हि महीधरवंशावलिः प्रमिता भवति तस्याश्चित्रं पदार्थ-मण्डनभूमिकाया [ पृ० ७ ] द्रष्टव्यम् । एतेषा च सर्वेषामन्येषामपि च महीधरवंशीयानामपर-पुरुषाणा समयादिविषये स्वतन्त्रे कस्मिंश्चिदपरे निबन्धे विचारः करिष्यते ।

अनादिदीपविवरणातिरिक्ताना सप्तदश महीधरग्रन्थाना नामान्याफ्रेक्टसूच्या दृश्यन्ते । महीदासरचितानामन्येषामपि षण्णा ग्रन्थाना नामानि तत्रावलोक्यन्ते । किमेषा समेषामपि ग्रन्थाना रचयितैक एव पुरुषः, आहोस्विदन्यः ? एषु भूयासो ग्रन्था महीधररचिता एवेति श्रीपी० के० गोडेमहाशयनिबन्धतो ज्ञातु सुशकम् । सौत्रामणीविनियोगसूत्रार्थविषयेऽस्माभि-र्लेखारम्भ एव निवेदितम् । अन्यान् ग्रन्थानुपलक्ष्य च स्वतन्त्रस्त्व निबन्ध आवश्यक इति साम्प्रतमेतावदेवोक्त्वा विरम्यते ॥

---

# दीर्घजिह्वी

श्रीशान्तिभिक्षुशास्त्री, शान्तिनिकेतनम् ।

पाणिनिः सूत्रयामास—"दीर्घजिह्वी च च्छन्दसि" [४।१।५९] इति । अत्राह वृत्तिकारः—"दीर्घजिह्वी वै देवाना हव्यमलेट्" [ अन्यतमब्राह्मणग्रन्थवचनम् ] इति । सायणो दीर्घजिह्वी-मधिकृत्यान्यतम ब्राह्मणग्रन्थसन्दर्भमन्ववोचत् [ ऋग्वे० १।६७ "अप नः" इत्यष्टर्चसूक्तप्रस्ता-वनायाम् ]। श्रुतिवचनान्तरेष्वप्यस्ति दीर्घजिह्वीसमुल्लेखः । जैमिनीयब्राह्मण तु सविस्तर श्रावयति तदाख्यानम् ।

सैषा कथा भवत्यश्लीलतमा । तत एव न भाषायामनुवादमर्हति । पर पाणिनिप्रणयी सूत्रे वृत्तौ च दीर्घजिह्वी पठति । तदाख्याने च परिचयाभावान्नीरस सूत्र मतौ स्थापयन् खेद-मावहति । सोऽय खेदो जैमिनीयब्राह्मणे [ जै० ५३ ] दीर्घजिह्वीकथापठनेनापनोदनीयो जिज्ञासुभिरिति ॥



स्वर्गीयाः-**श्रीत्रिभुवनप्रसादोपाध्यायाः** ( व्याकरणाचार्य, एम० ए० )
काशिकराजकीयसंस्कृतमहाविद्यालयस्य
भूतपूर्वप्रधानाचार्याः ।

## सिद्धान्ततत्त्वविवेकीयभूभास्वरूपविमर्शः

**श्रीमीठालाल ओझा, राजकीयसंस्कृतमहाविद्यालयः, काशी ।**

श्रीकमलाकरभट्टेन भास्कराचार्यमुनीश्वरादीना भूभास्वरूपमखण्डि । तद् युक्तियुक्तमेव, चन्द्रकक्षाबहिर्गतत्वात् । स्वयं च श्रीभट्टः सूर्यभूबिम्बयोः क्रमस्पर्शरेखान्तर्गतचन्द्रकक्षाचाप-पूर्णज्यारूपं भूभास्वरूपमसाधयत् । वस्तुतः पूर्वाचार्यापेक्षया श्रीकमलाकरभट्टसाधितभूभास्वरूपं साधु । तथापि तेन सह चन्द्रबिम्बस्य स्पर्शावसरे चन्द्रकक्षाऽधोभागे भूबिम्बसूर्यबिम्बयोः क्रम-जनितसूच्या चन्द्रबिम्बस्य ग्रासो भवति । अर्थाच्चन्द्रकक्षास्थभूभया सह स्पर्शात्प्रागेव चन्द्र-कक्षाधःस्थभूभया चन्द्रस्य स्पर्शो भवति, चन्द्रकक्षापार्श्ववर्तिपूर्वोक्तसूच्याः क्रमशोऽपचीय-मानत्वात् । अतः श्रीभट्टेन चन्द्रकक्षाऽधोभागे पूर्वोक्तसूच्या सह स्पर्शावसरे चन्द्रबिम्बभूभाबिम्बयोः केन्द्रान्तर साधितम् । परन्तु स्पर्शोचितभूभासाधन नो विहितम् । अतस्तन् प्रदर्श्यते । चन्द्रकक्षा-ऽधःस्थसूच्या चन्द्रबिम्बस्य यत्र स्पर्शो भवति तद्बिन्दुतः सूर्यभूबिम्बकेन्द्रगतमध्याख्यसूत्रोपरि भूभासूच्यन्तर्वर्ती यो लम्बः स वास्तवस्पर्शोचितभूभास्वरूपः । तत्साधनाय मदीयपद्यानि—

भूचन्द्रव्यासयोगार्धवर्गेण रहिता कृतिः ।
इन्दुकर्णस्य तन्मूलं कुभाक्षेत्रभुजाहतम् ॥ १ ॥
तत्कोटिभाजित लब्धमिन्दुव्यासदलान्वितम् ।
शोध्यं योगार्धतस्तच्च शेषसज्ञ हि जायते ॥ २ ॥
शेष कुभाकोटिहतं यमघ्न तत्कर्णहृल्लब्धफलं कुभायाः ।
स्पर्शोचिता विस्तृतिरिन्दुमार्गाऽधःस्था सुसूक्ष्मा सुधियाऽवगम्या ॥ ३ ॥

अस्योपपत्तिस्तत्त्वविवेके भूभासाधनप्रसङ्गे केन्द्रान्तरसाधकक्षेत्रतः स्पष्टा ॥

---

# सम्पादकीयम्

**स्वर्गीयाः पण्डितश्रीत्रिभुवनप्रसादोपाध्यायाः**

"सारस्वत्याः सुषमायाः" प्रधानसंपादका वाराणसेयराजकीयसंस्कृतमहाविद्यालयस्य प्रधानाचार्याः पण्डितश्रीत्रिभुवनप्रसादोपाध्यायाश्चैत्रकृष्णषष्ठ्या गुरुवासरे ( २५-३-५४ ) प्रातः सहसैव हृद्गतिरोधेन पञ्चत्वं गता इति हन्त ! वज्रपात इव संजातो विद्वत्समाजाय, विशेषतोऽस्मै महाविद्यालयाय । उपाध्यायमहोदयानां जनिरुत्तरप्रदेशीयबलियामण्डलान्तर्गतसुखपुराग्रामे काशिकराजकीयसंस्कृतमहाविद्यालये प्रधानाध्यापकानां वैयाकरणप्रवराणां श्रीराम-भवनोपाध्यायानां गृहे १९०२ ईशवीयवर्षस्य जुलाईमासस्य १६ तारिकायां संजाता । पित्रा सविशेषं लालितैः प्रखरमतिभिरेभिर्महानुभावैर्विद्वत्पितृसान्निध्यतः, अस्य महाविद्यालयस्य भूतपूर्व-प्रधानाचार्याणां म०म०डा०गङ्गानाथझामहोदयानां स्नेहातिशयवशाच्च वयसश्चतुर्विंशे वर्ष एव व्याकरणाचार्यपरीक्षा, एम०ए०परीक्षा च सोत्साहं समुत्तीर्णा । तद्वर्षीयाचार्यपरीक्षायां सर्वाति-शायितया महाविद्यालयेनानेनैते स्वर्णपदकप्रदानेन पुरस्कृताः । अध्ययनसमाप्तिसमकालं भवतां नियुक्तिर्बिहारप्रदेशीयनालन्दामहाविद्यालये प्राध्यापकपदे संजाता, तदनु वर्षद्वयाभ्यन्तर एव चोत्तरप्रदेशीयसंस्कृतपाठशालानिरीक्षकपदभारमङ्गीचक्रुः । तत आरभ्य १९५१ ई० पर्यन्तं सवि-शेषं कृतावधानैरेभिः संस्कृतपाठशालानां पण्डितानां छात्राणां संस्कृतवाङ्मयस्य च समुन्नत्यै दिवारात्रं भागीरथः प्रयत्नो विहितः । सुदीर्घकालिक्योपाध्यायमहोदयानां सेवया प्रीतमुत्तरप्रदे-शीयं राष्ट्रियं प्रशासनं १९५१ ई० वर्षस्य जुलाईमासे एतान् राजकीयसंस्कृतमहाविद्यालयस्य प्रधानाचार्यपदे न्ययोजयत् । स्वकीये स्वल्पे कार्यकाल एवैभिर्महानुभावैर्महाविद्यालयस्य चतुरस्त्रोन्नतिर्विहिता । संस्कृतज्ञाः पूर्ववत् साम्प्रतमपि राजकीयानन्यांश्च महत्त्वपूर्णान् पदभारान् प्राप्नुयुर्जीवनस्य प्रत्येकस्मिन् क्षेत्रे च ते साफल्यमधिगन्तुं शक्नुयुरेष महाविद्यालयश्च संस्कृतविश्व-विद्यालयपदवीमधिकुर्यादिति तेषां महानभिलाषस्तत्र प्रयत्नश्चासीत् । एतेषामास्तिक्यमयं विद्या-मयं भक्तिमयं धर्मोज्ज्वलं जीवनं लोकचेतस्यद्भुतां स्पृहणीयां प्रेरणां निश्चप्रचं प्रसूते स्म ।

सुदुःसहं दुष्प्रसङ्गमिमं विधिविधानेनात्मनो वैवश्येन च कथञ्चित् सहमाना वयं स्वर्गीयोपाध्यायमहोदयानां शाश्वतशान्तिलाभाय भगवन्तं काशीविश्वनाथं तदुपास्यं रामभक्तं हनूमन्तं च भृशमभ्यर्थयामहे ॥

## संस्कृतविश्वविद्यालयः

**संस्कृतं नाम दैवी वागन्वाख्याता महर्षिभिः ।**

परःसहस्रवर्षेभ्य आविर्भूतान् सांस्कृतिकाध्यात्मिकविचारानिवहान् सवहन्ती नूनमियं दैवी वाक् संस्कृतं नाम । साम्प्रतमपि दशसहस्रपरिमितासु पाठशालासु कृत्स्ने जीवने संस्कृतभाषाध्ययनायात्मानं विनियुञ्जानैः सा सजीवभाषात्ववद्रूप्रयुज्यते । अत्र देशे पञ्चविंशतिसहस्रेभ्योऽभ्यधिका जना एनां वाग्मितया व्यवहरन्तीति निश्चप्रचम् । पञ्चलक्षमितेभ्योऽन्यूना अनया पौरोहित्यवृत्तिमनुतिष्ठन्ति । जनने, विवाहे, मरणे, स्तुतौ, संस्कारपद्धतौ च विंशतिकोटिपरिमितानां मानवानां जीवनं पवित्रस्य मधुरस्वरस्य संस्कृतोच्चारणस्य प्रतिध्वनिना पूरितं भवति । किं बहुना, सम्पूर्णस्य भारतराष्ट्रस्य जीवनं संस्कृतेनौतप्रोतमिव दरीदृश्यते संस्कृतानुप्राणितैर्विविधभाषाव्यवहारनिर्मितम् ।

विक्रमप्रथमसहस्राब्दीसमाप्तिपर्यन्तं सैषा भाषा चूडान्तमुत्कर्षमधात् । ततः परं विविधापायग्रस्ता वागियं केदाररक्षणार्थं कण्टकशाखावरणवत् तत्परिरक्षणप्रयोजनेषु नव्यन्यायव्याकरणादिशास्त्रेषु प्रतिष्ठां प्रापत् । सुदृढैरेभिर्वर्मभिः सुरक्षितमपि संस्कृतवाङ्मयं राजाश्रयजनाश्रयविरहितं लोकव्यवहारपरित्यक्तं च साम्प्रतं सकृच्छ्रं निःश्वसिति । आयातः स कालो यदा कालकवलितमिव विस्मृतिगर्ते निलीनमिवैतत्कृत्स्नं संस्कृतवाङ्मयं पुनरपि विविधविभीषिकाभीतस्य विश्वस्य कल्याणाय ज्योतीरूपतामियात् ।

कथमेतत् सम्भवेत् ? संस्कृतविश्वविद्यालय एव तत्र क्षमतामर्हति । आसन् पूर्वं तक्षशिलानालन्दाप्रभृतयो विश्वविद्यालयाः, यत्र राष्ट्रौपयिकीनां सर्वासामपि विद्यानां पुरुषार्थप्रापकाणां च शास्त्राणां भवति स्माध्ययनाध्यापनम् । तदा विश्वस्य नानादेशेभ्यः समेत्य जिज्ञासवः स्वज्ञानपिपासां शमयन्ति स्म तत्र । महानयं परीवर्तः समुत्पन्नो दृश्यतेऽत्र विषये । विक्रमस्य विगतायां सहस्राब्द्यां तनुतामलभत सोऽयमास्माकीनो महान् ज्ञानराशिः । विगतासु कतिपयशताब्दीषु पाश्चात्त्यदेशेषु नूतना ज्ञानविज्ञानशाखाः प्रस्फुटिताः । राजनीतिविज्ञानादिगतं संस्कृतवाङ्मयमधुनातनीः समस्याः समाधातुं नालम् । फलतस्तत्र विश्वविद्याप्रातिनिध्यं नैवाधातुं शक्यतेऽद्य । नूतनोऽयं विश्वविद्यालयो नैव भवितुमर्हति विश्वविद्यानामालयः, किन्तु संस्कृते निबद्धानां विश्वासां विद्यानामालयस्तु भविष्यत्येव ।

पूर्वापरान्तोत्तरापथदेशीयाः प्रायो निखिलाः संस्कृतपाठशालाः, दक्षिणापथस्थाश्च बह्व्यः काशिकराजकीयसंस्कृतमहाविद्यालयपरीक्षया सम्बद्धाः खलु । अत्रत्याः स्नातका इदम्प्रथमतया

सर्वत्र पाठशालासु सबहुमानमध्यापनकर्मण्यपेक्ष्यन्ते नूनम् । महिमाय ज्ञानखनेर्विश्वेतिहासे प्राचीनतमायाः काशीनगर्याः । विरोधिभिर्नाशितेषु नामधेयेषु विद्याकेन्द्रेषु सेयमधुनाऽपि समुन्नत-शिरस्का वितरति मानवाय ज्ञानोपदेशम् । सोऽयं महाविद्यालयोऽनादधानोऽपि विश्वविद्यालयपदवीं तत्कार्यं विदधात्येवेत्युत्तरप्रदेशीयप्रशासनेनास्य संस्कृतविश्वविद्यालयत्वं वैधं चिकीर्ष्यते ।

इतरविश्वविद्यालयवदन्यराज्येषु संस्कृतविश्वविद्यालया यावन्न स्थापिता भवन्ति तावद् भाविनोऽस्य संस्कृतविश्वविद्यालयस्य कार्यक्षेत्रं सपूर्णमेव भारतवर्षम् । विभिन्नेषु राज्येषु विभिन्नाः संस्कृतपरीक्षासंस्थाः स्वस्वपाठ्यक्रममनुरुध्य सुरभारतीं सेवन्ते । तासामनेन विश्वविद्यालयेन कीदृशः स्यात् सम्बन्धः, परस्परं सर्वासां संस्कृतपरीक्षाणां मान्यता, पाठ्यक्रमस्य प्रतिमानीकरणम्, नूतनविषयाणां संनिवेशः, उत्तराध्ययनप्रबन्धः, तुलनात्मकस्य समालोचनात्मकस्य चाध्ययनस्य प्रोत्साहनम्, नूतनगवेषणासाहित्यपरिचयः, परीक्षास्वसमावेशिनानां विषयाणां चयनम्, ज्यौति-षायुर्वेदयोः प्रायोगिकमध्ययनम्, पालिप्राकृतापभ्रंशवाङ्मयस्य सिंहलद्वीप-स्वर्णद्वीप-यवद्वीप-बाली-सुमात्रा-कम्बोज-चीन-तिब्बतादिप्रातिवेशिकदेशीयवाङ्मयस्य च सुरभारतीसंबद्धस्याध्ययनप्रबन्धः, बृहत्तरभारतस्य सांस्कृतिकेतिहासपरिचयः, सर्वेष्वेषु देशेषूपलब्धानां शिलालेख-ताम्रलेख-हस्तलेख-तत्तद्भाषालिपिप्रभृतिपुरातत्त्वसामग्रीणां संकलनं संरक्षणमध्ययनं च, विश्वप्रसिद्धानां भारतीय-स्थापत्यचित्रसंगीतादिकलानामुन्नयनमित्यादयो विषया भाविनोऽस्य विश्वविद्यालयस्य मुखा-पेक्षिणोऽवतिष्ठन्ते । भारतीया वास्तुकला विलीनेव दृश्यते साम्प्रतम् । आस्तां तावदत्र नवीनानां ज्ञानविज्ञानानां साकल्येन समावेशः, यदि भारतीयसंस्कृतेरङ्गभूतस्य समस्तस्यास्य विषयजातस्य समावेशः स्यात्तदापि प्राच्यविद्यानामध्ययनानुशीलनयोर्महत्केन्द्रं विश्वप्रतिष्ठितं भविष्यत्येव । तेनैव चास्य विश्वविद्यालयत्वं साफल्यमाप्नुयात् ।

"सा विद्या या विमुक्तये" सा च परा विद्योपनिषत्प्रतिपादिता नाम । प्रायेण भौतिक विद्यानामेवाध्ययनाध्यापनप्रबन्धसंपादनव्यस्तेष्वधुनातनेषु विश्वविद्यालयेषु द्वन्द्वात्मकस्य भौतिकवादस्यैव विद्वेषाङ्कुरप्रसूतेः सातिशयं प्रतिपादनं कथं नाम शान्तिसन्देशं प्रसारयितुं प्रभ-वेत् ? कथं वा युद्धज्वालाधुक्षितं जगत् परित्रातुमर्हेत् । भारतीयाऽऽर्यसंस्कृतिरात्मवत्सर्वभूत-प्रतिपादिका युद्धद्वेषादिबिभीषिकामिमां शमयितुमलमिति तदाधारभूतस्य पराविद्याप्रतिपादकस्य भारतीयवाङ्मयस्याध्ययनकेन्द्रत्वेन कृतपदो नूतनोऽयं संस्कृतविश्वविद्यालयो विरोधिनोर्जडचेतन-वादयोरविरोधमुत्पाद्य प्राच्यपाश्चात्त्यविचारसरण्योर्विरोधं विधूय सामञ्जस्यमार्गकल्पनेन स्वकीया-स्तित्वं सफलयेत्, सर्वेषामितरविश्वविद्यालयानां पुरतश्च नवीनं कमप्यादर्शमुपस्थापयेदिति ज्ञानगुरुर्महेश्वरः प्रार्थ्यते ॥

## हस्तलेखानामुपेक्षा

भारतस्य पारतन्त्र्यवेलाया परःसहस्राणि भारतीयवाङ्मयरत्नानि विधर्मिभिर्भस्मसात्कृतानि। तक्षशिला-नालन्दा-विक्रमशिलाप्रभृतीना विशालानि ग्रन्थागाराणि नामशेषता नीतानि। सहस्र-शाखस्य वेदस्यापि साम्प्रतमङ्गुलिगण्या एव शाखा उपलभ्यन्ते, इतरवाङ्मयस्य तु कथैव का ? एवं सत्यपि भारतीयमनीषिभिरार्यसभ्यतासंस्कृत्योराधारभूतस्य तस्यैतस्य वाङ्मयस्य प्राणपणेन रक्षा विहिता। विभिन्नेषु ग्रन्थागारेषु मठमन्दिरादिषु पण्डितकुलेषु च भूरिशो विकीर्णो ग्रन्थराशिः सुरक्षितस्तिष्ठति; तथापि बहूनि ग्रन्थरत्नानि साम्प्रतमप्यज्ञानान्धकारे विलीनानि, अन्धविश्वासोपहितानि चावतिष्ठन्ते।

विक्रमस्य विंश्या शताब्दया पाश्चात्त्यविद्वद्भिरेषा समुद्धाराय भागीरथः प्रयत्नो विहितः। कन्याकुमारीत आहिमालय रत्नाकरत आमहोदधि न केवल भारते, अपि तु मध्यैशियादेशेषु दक्षिणपूर्वैशियादेशेषु च परिभ्रमद्भिरेभिस्तपस्विभिर्विद्यानुरागिभि. शिलाखण्डेषु ताम्ररजतस्वर्ण-चर्मपट्टेषु भूर्जतालतूलपत्रेषु चोत्कीर्णानि भारतीयवाङ्मयस्य जाज्वल्यमानानि रत्नानि प्रकाशतां नीतानि, प्राचीनाया भारतीयाया सभ्यतायाः संस्कृतेश्च महती प्रशस्तिः श्राविता। प्राचीनेषु शिलापट्टादिषूत्कीर्णा ब्राह्मयादयो लिपयोऽपरिचितप्राया आसन् भारतीयविदुषाम्। तुगलकफिरो-जशाहस्य सम्राजोऽकबरस्य च समयेऽशोकशिलालेखाना वाचकः कोऽपि नासीत्। सरविलियम-जोन्समहाशयस्य समयेऽशोकशिलालेखो वाराणसीस्थेन केनचिद्विदुषा युधिष्ठिरस्य गुप्तवनवास-कालीनोऽय लेख इति कृत्वा पठितः। ट्रायर-मिल-जेम्सप्रिंसेप-रेवरेण्डजेम्सस्टीवेन्सन-लासनप्रभृति-मनीषिभिरन्ततो ब्राह्मयादिलिपीना समुद्धारः कृतः। कोलब्रुक-विल्किन्स-टेलर-जान्सनफ्लीट-वेलेन्टाइन-वर्नेल-मेकेंजी-राहुलसांकृत्यायनप्रभृतिभिः कोविदैर्हस्तलेखाना सग्रहः कृतः। गन्धिना-मापणेभ्यः, धूम्रपानरतेभ्यः सैनिकेभ्यः, ध्वसावशेषेभ्यः, व्यवहारपदोपनीतनरनिबन्धनेभ्यश्च समुद्धृता बहवो ग्रन्थाः।

प्राचीनतमेषु हस्तलेखेषु पाशुपताचार्यविरचितौ कुसुमाञ्जलिटीका-प्रबोधसिद्धिनामानौ ग्रन्थौ, कस्यचिन्नाटकस्य त्रुटिताशाश्च क्रमश ईशवीयप्रथमद्वितीयतृतीयशताब्दीयास्ताडपत्रेषूत्कीर्णाः; द्वितीयचतुर्थशताब्दीलिखितौ धम्मपदसंयुक्तागमयोर्भूर्जपत्रीयौ हस्तलेखौ, यारकन्दनगरसमीपे समुपलब्धास्तूलपत्रीयाः पञ्चमशताब्दीलिखिता ग्रन्थाश्चावसीयन्ते। शिलापट्टादिषूत्कीर्णयैतया विशालया सामग्र्या निर्भ्रान्ता ऐतिहासिका निर्णया अक्रियन्त। सर्वमेतद्भारतस्य पारतन्त्र्यवेलाया प्रायः पाश्चात्त्यविद्वद्भिः ससाधितम्।

भारतीयगणतन्त्रमहामात्येन महामान्यश्रीजवाहरलालनेहरुमहाभागेन भारतस्येतिवृत्तं वर्णयता कथितम्—"अमूल्यो हस्तलिखितग्रन्थराशिरस्माकं राष्ट्रेऽधुनाप्युपेक्षितदशायामितस्ततः पतित उपेक्षितश्च विद्यते। स्वातन्त्र्यवेलाया समायाताया यान्यभीष्टान्यस्माक भविष्यन्ति तेष्वस्यामूल्यग्रन्थराशेरुद्धारोऽपि प्रधानतमं कार्यम्" इति। सजातः स्वातन्त्र्यसूर्योदयः। तेन सहैव काश्मीरीया ग्रन्थसपद्स्त गतेव दृश्यते। हन्त! निकाम शोचनीयोऽय समयः। पठ्यते वृत्तपत्रेष्वधुनापि भारताद्बहिर्गमन हस्तलेखानाम्। प्राचीनपण्डितकुलभवनप्रान्तप्रोतानि वेष्टनान्युपदीकाभोजनानि भवन्ति। गन्धिनामापणेषु क्रय्याधारत्वेनोपयुज्यन्ते हस्तलेखाः। अन्धविश्वासग्रस्तैर्जनैर्जलसमाधिर्दीयते तेभ्यः, रहस्यभेदभिया भित्तिषु वा चीयन्ते ते।

कथमेषाऽनर्थपरम्परा विराममीयात्? सर्वप्रथमं ग्रन्थभर्तृषु कृतपदयोरन्धविश्वासमिथ्यामोहयोरपनोदन विधेयम्। एतच्च कार्यं सस्कृतानुरागिणा भारतीयजनमनस्सु साम्प्रतमपि श्रद्धाभाजा पण्डितानामेव। राष्ट्रियेन प्रशासनेन च विनाशोन्मुखानामेषा हस्तलेखाना समुद्धारायागामिन्या पञ्चवर्षीययोजनाया कापि व्यवस्थाऽवश्यमेव विधेयेति सविनयमनुरुध्यते केन्द्रीय प्रशासनम्॥

## स्वर्गीया पण्डिता क्षमादेवी 'राव'

सत्याग्रहगीता-उत्तरसत्याग्रहगीता-तुकारामचरित-रामदासचरित-ज्ञानेश्वरचरितादीनामभिनवाना काव्यग्रन्थाना नैकशो लघुकथानामाख्यायिकाना च रचयित्री पण्डिता क्षमादेवी विगतस्य १९५३ ईशवीयस्य अप्रैलमासस्य २२ तमे दिवसे दिव गतेति हन्त! महान् कष्टकर. शोचनीयोऽय सवादः। काव्यानामेतेषा सारस्वत्या सुषमायामन्यत्र च प्रकाशिताना लघुकथाना च सरसाना भाषासौष्ठव काव्यमाधुर्य च पायं पायं कस्य नाम सहृदयस्य चेतः सौहित्य न लभेत। विदुष्या अस्याः काव्यानीमानि सस्कृतं मृतभाषेति मन्यमानाना प्रत्युत्तरदानायालम्। कर्णाटदेशीयेय महिला यूरोपादिदेशभ्रमणलब्धवैदुष्या स्वकाव्यसौष्ठवेन विज्जका-विकटनितम्बाप्रभृतिप्राचीनकवयित्रीः स्मारयतीव। शोचामहे वयमद्यापूरणीया क्षतिमेनाम्, प्रार्थयामहे च भगवन्त विश्वनाथं दिवगतात्मनः शान्त्यै॥

---

पङ्क्तिर्यजमानाशीः। मयि त्यत्। तद् इन्द्रियं वीर्यं बृहत् तदस्तु। मयि दक्षः क्रतुः। 'दक्ष वृद्धौ [ शीघ्रार्थे च ]' [ ६०८ भ्वादिः ] अतिवृद्धिमानस्तु। यद्वा क्रतुः संकल्पः दक्षः फलपर्यन्तोऽस्तु। मयि घर्मस्त्रिशुक्। [1]त्रिषु लोकेषु शोचते शोभत[2] इति त्रिशुक्। विराजति विशेषतो दीप्यते। केन सह विराजत इति ? विराजा ज्योतिषा सह। [3]विराजा आदित्याख्येन ज्योतिषा सह विराजते। ब्रह्मणा अग्न्याख्येन तेजसा सह। यद्वा ब्रह्मणा वेदलक्षणेन तेजसा सह विराजते ॥ ३४ ॥

[4]पयसो रेत आभृतं तस्य दोहमशीमह्युत्तरामुत्तराᳬं समाम् ॥ ३५ ॥

अनवसाना गायत्री यजमानाशीर्देवत्या। [5]माध्यन्दिनशाखाया वाजसनेयशाखाया त्वेको मन्त्रः [6]पाङ्क्तः प्रगाथो यजमानाशीर्देवत्यः[7]। किं च, पयसो यद्रेतः वीर्यं जगदुत्पत्त्यादिबीजम् आभृतम्। तस्य एवमा[वृ ? हृ]तस्य रेतसः। दोह प्रपूरणम्। अशीमहि व्याप्नुयाम। उत्तरामुत्तरा समाम्। उत्तरामुत्तरा समा प्रतिसंवत्सरम्। आदरार्थं इय वीप्सा। प्रतिसंवत्सर चाशीमहि। सदेत्यभिप्रायः ॥ ३५ ॥

[8]भक्षण दधिघर्मस्य—

[9]त्विषः संवृक् क्रत्वे दक्षस्य ते सुषुम्णस्य ते सुषुम्णाग्निहुतः।

इन्द्रपीतस्य प्रजापतिभक्षितस्य मधुमत उपहूत उपहूतस्य भक्षयामि ॥३६॥

[10]घर्मदेवत्या [11]जगती। सपूर्वो वृजिः स्वीकरणे वर्तते। त्विषः दीप्तेः स्वीकारः त्विषः संवृक् यस्य तस्य। कथभूतस्य ? क्रत्वे क्रतोः क्रतुभूतस्य। दक्षस्य वृद्धस्य सकलपसिद्धिभूतस्य। सुषुम्णस्य सुखरूपस्य। अग्निहुतः। षष्ठ्यन्तं पदम्। अग्नौ हूयत इत्यग्निहुत्, तस्य अग्निहुतः।

---

१ त्रिलोकेषु—ख०।
२ 'शोभते' नास्ति—ख०।
३ 'विराजाख्येन ज्योतिषा सह' इत्यधिकम्—ख०।
४ काण्वसंहितायां पूर्वमन्त्रस्यैवायमन्तिमो भाग., माध्यन्दिनसंहितायां तूत्तरमन्त्रस्यादिमो भाग.।
५ अत्र माध्यन्दिनशाखावाजसनेयशाखापदयोः पृथक्प्रयोगाभिप्रायो नैव स्फुटीभवति।
६ 'पाङ्क्त. प्रगाथ.' नास्ति—ख०।
७ यजमानाशीर्देवत्या—ख०।
८ द्रष्टव्यम्—का० श्रौ० (२६।७।५६)।
९ ( मा० ३८।२८; का० ३८।२७ )।
१० दधिघर्मदेवत्या—सर्वा०।
११ अतिजगती—सर्वा० टी०।

इन्द्रपीतस्य इन्द्रेण पीतशेषस्य । प्रजापतिभक्षितस्य प्रजापतिभक्षितशेषस्य [1]मधुमतः[1]। सर्वत उपहूतस्य आहूतस्य ते तव भागम्। हे॰ सुषुम्ण सुखभाव । अहमुपहूतः सन् भक्षयामि ॥ ३६ ॥

इति [2]श्रीशुक्लयजुःकाण्वसंहिताभाष्यसंग्रहेऽष्टत्रिंशोऽध्यायः ॥ ३८ ॥

---

१ 'मधुमतः' नास्ति—ख॰ । २ श्रीकाण्ववेदमन्त्रभाष्यसंग्रहे—ख-ग॰ ।

# एकोनचत्वारिंशोऽध्यायः

[1]स्वाहा॑ प्रा॒णेभ्यः॒ साधि॑पतिकेभ्यः पृथि॒व्यै स्वाहा॒ग्नये॒ स्वाहा॒न्तरि॑क्षाय॒ स्वाहा॑ वा॒यवे॒ स्वाहा॑ दि॒वे स्वाहा॒ सूर्या॑य॒ स्वाहा॑। दि॒ग्भ्यः स्वाहा॑ च॒न्द्राय॒ स्वाहा॒ नक्ष॑त्रेभ्यः॒ स्वाहा॒द्भ्यः स्वाहा॒ वरु॑णाय॒ स्वाहा॑। नाभ्यै॒ स्वाहा॑ पू॒ताय॒ स्वाहा॑॥ १॥

[2]इत उत्तरं प्रवर्ग्यमेदप्रायश्चित्तम्[3]—स्वाहा प्राणेभ्यः साधिपतिकेभ्य इति। मान्त्रवर्णिकदेवत्यानि यजूंषि। "सर्वेषां वा एष भूतानाम्" इत्यारभ्य—"घर्मो विदीर्यते तत्र [4]प्रायश्चित्ति.॥ १॥ पूर्णाहुतिं जुहोति। सर्वं वै पूर्णं सर्वेणैवैतद् भिषज्यति यत्किञ्च विवृढं यज्ञस्य" [ शत० ब्रा० १४।३।२।१-२ ] लिङ्गोक्तदेवत्यानि यजूंषि। दध्यङ्ङाथर्वण ऋषिः। "मनो वै प्राणानामधिपतिर्मनसि[5] हि सर्वे प्राणाः प्रतिष्ठिताः। तन्मनसैवैतद् भिषज्यति यत्किञ्च विवृढ यज्ञस्य" [ शत० ब्रा० १४।३।२।३ ] इत्यारभ्य श्रुतिर्विस्तरतो व्याचष्टे। प्राणेभ्यः [6]साधिपतिकेभ्यः लक्षणाधिपतिसहितेभ्यः साधिपतिकेभ्यः स्वाहा। पृथिव्यै [ स्वाहा ]। प्रसिद्धार्था एते मन्त्राः। अग्नये, अन्तरिक्षाय, वायवे स्वाहा। दिवे स्वाहा[7]। सूर्याय, दिग्भ्यः, चन्द्राय, नक्षत्रेभ्यः, अद्भ्यः, वरुणाय, नाभ्यै, पूताय स्वाहा। स्वाहेति होमार्थः॥ १॥

[8]वा॒चे स्वाहा॑ प्रा॒णाय॒ स्वाहा॑ प्रा॒णाय॒ स्वाहा॑।
चक्षु॑षे॒ स्वाहा॒ चक्षु॑षे॒ स्वाहा॒ श्रोत्रा॑य॒ स्वाहा॒ श्रोत्रा॑य॒ स्वाहा॑॥ २॥

वाचे स्वाहा [9]प्राणाय स्वाहा प्राणाय चक्षुषे [ चक्षुषे ] [10]श्रोत्राय श्रोत्रायेति सप्तैता आहुतीर्जुहोति॥ २॥

---

१ (मा० ३९।१-२)। २ अध्यायारम्भे—"श्रीकृष्णाय नमः। हरिः ॐ" इति—ख०, 'ॐ' इति—ग०।
३ द्रष्टव्यम्—का० श्रौ० [ २६।७।४९ ]। ४ प्रायश्चित्तम्—क ख-ग०।
५ 'मनसि हि सर्वे प्राणाः प्रतिष्ठिताः' नास्ति—क-ख-ग०।
६ साधिपतिकेभ्यः मनोलक्षणाधिपतिकेभ्यः मनोलक्षणाधिपतिसहितेभ्यः साधिपतिकेभ्यः—ख०।
७ 'स्वाहा' नास्ति—ख०। ८ ( मा० ३९।३ )।
९ 'प्राणाय स्वाहा' नास्ति—क-ग०। १० 'श्रोत्राय' नास्ति—क-ग०।

[1]मनसः काममाकूतिं वाचः सत्यमशीय ।
पशूनाꣳ रूपमन्नस्य रसो यशः श्रीः श्रयतां मयि स्वाहा ॥ ३ ॥

[2]बृहती यजमानाशीर्देवत्या । मनसः कामं मनसो धर्मं विषयाभिलाषरूपम् । आकूतिम् अभिप्रायविशेषम् आत्मनो धर्मं मनसः संयोगाज्जायमानम् । वाचः सत्यं यथावस्तु[वदन]रूपं वाचो धर्मम् । अनया पूर्णाहुत्या । अशीय 'अशू[3] व्याप्तौ [ सघाते च ]' [ १२६५ स्वादिः ] व्याप्नुयाम् । किं च, पशूनां रूपं पशूनां स्वरूपं सारभूतम्, रूप्यन्ते पशवोऽनेनेति रूपं क्षीरम् । किं च, अन्नस्य य एष प्रसिद्धो मधुरादिरसः । [4]यशः अनिन्द्यकीर्तिश्च । श्रीश्च धनधान्यादि-संपत्तयः । प्रत्येकं श्रयतां मयि । विभक्तिव्यत्ययः । मयीति मां श्रयताम् । यन्महावीरभेदेन [पठितं? अपचित] तत्सर्वमुपचीयतामित्यर्थः । स्वाहा सुहुतमस्तु ॥ ३ ॥

[5]प्रजापतिः संभ्रियमाणः सम्राट् संभृतो वैश्वदेवः संꣳसन्नो घर्मः प्रवृक्तस्तेज उद्यत आश्विनः पयस्यानीयमाने पूषा विष्यन्दमाने मारुतः क्वथन् । मैत्रः शरसि संताय्यमाने वायव्यो ह्रियमाण आग्नेयो हूयमानो वाग्घुतः ॥ ४ ॥

[6][अ? य]थाकालप्रायश्चित्तदेवत्या श्रुतिः, महावीरावस्थाप्रतिपादिका[7] । संभ्रियमाणो महावीरः प्रजापतिः प्रजापतिस्वरूपो भवतीति स्तूयते । "प्रजापतिदेवत्यो वा तदजायत" इति श्रुतेः । यदा महावीरः संभृतस्तदा सम्राट् । यदा संसन्नः संपन्नस्तदा वैश्वदेवो भवतीति । घर्मः यदा प्रवृक्तः । तेजः तेजोरूपो भवति यदा उद्य[ते? तः] । पयसि आनीयमाने आश्विनो भवति । पूषा विष्यन्दमाने सति पूषा भवति । मारुतः य[द्वा? दा] क्वथन् क्वथनं गच्छन् स्थितः तदा मारुतो भवति । मैत्रः मित्रदेवत्यः । शर[दि? सि] उपरि घनीभूते रसे संहार्यमाणे सति मैत्रो भवति । वायव्यो ह्रियमाणः यदा[8] ह्रियमाणस्तदा वायव्यो भवति । आग्नेयः यदा हूयमानः तदाग्नेयो भवति । यदा हुतस्तदा वाक् वाग्देवत्यो भवति ॥ ४ ॥

---

१ ( मा० ३९।४ ) । २ अनुष्टुब् यजमानाशीः श्रीर्देवता–सर्वा० ।
३ अशूङ्–क-ख-ग० । ४ 'यशः' नास्ति–ख० । ५ ( मा० ३९।५ ) ।
६ प्रजापतिः संभ्रियमाणो यथाकालं प्रायश्चित्तदेवता.–सर्वा० ।
७ द्रष्टव्यम्–का० श्रौ० [ २६।७।५० ] । ८ 'यदा ह्रियमाणः' नास्ति-ख० ।

[1]सविता प्रथमेऽहन्नग्निर्द्वितीये वायुस्तृतीय आदित्यश्चतुर्थे

चन्द्रमाः पञ्चम ऋतुः षष्ठे मरुतः सप्तमे बृहस्पतिरष्टमे ।

मित्रो नवमे वरुणो दशम इन्द्र एकादशे विश्वेदेवा द्वादशे ॥ ५ ॥

प्रत्यह [2]देवतासम्बन्धविधानेन स्तौति । [3]प्रत्येक क्रमेण तद्देवत्यानि यजूंषि । सविता प्रथमेऽहन्निति सविता देवता । अग्निः द्वितीये अग्निर्देवता । तृतीये वायुर्देवता । चतुर्थेऽहनि आदित्यो देवता । पञ्चमे चन्द्रमा देवता । षष्ठेऽहनि ऋतुर्देवता । सप्तमे मरुतो देवताः । अष्टमे बृहस्पतिर्देवता । नवमेऽहनि मित्रो देवता । दशमेऽहनि वरुणो देवता । एकादशेऽहनि इन्द्रो देवता । द्वादशे विश्वेदेवा देवताः ॥ ५ ॥

'उग्रश्च' इत्यादिकानामरण्येऽध्येयत्वसामान्यादिह पाठः—

[4]उग्रश्च भीमश्च ध्वान्तश्च धुनिश्च ।

सासह्वाꣳश्चाभियुग्वा च विक्षिपः स्वाहा ॥ ६ ॥

मारुती गायत्री, यजुरन्ता । [5]मुख्ये मन्त्रो विनियुक्तस्तस्मादाग्निक एव ऋषिः । परमेष्ठी प्राजापत्यो वा । उग्रः । चकारः समुच्चयार्थः । भीमश्च ध्वान्तश्च धुनिश्च सासह्वांश्च[6] अभियुग्वा च विक्षिपश्चेत्येव सप्त मरुतः । स्वाहेति होमार्थः ॥ ६ ॥

[7]अग्निꣳ हृदयेनाशनिꣳ हृदयाग्रेण पशुपतिं कृत्स्नहृदयेन भवं यक्ना ।

शर्वं मतस्नाभ्यामीशानं मन्युना महादेवमन्तःपर्शव्येनोग्रं

देवं वनिष्ठुना वसिष्ठहनुः शिङ्गीनि कोश्याभ्याम् ॥ ७ ॥

[8]'अग्निꣳ हृदयेन', 'उग्रं लोहितेन' इति[9] चाश्वमेधिकौ । अनयोररण्येऽध्ययनसामान्यादिह पाठः । तत्रोक्त एव ऋषिर्द्वयोः कण्डिकयोः । श्रुत्युक्त एव देवता, पश्ववयवसंबन्धविधानात् । आद्यो नानादेवत्य औष्णिहः प्रगाथः, द्वितीयो बार्हतः प्रगाथो नानादेवत्यः । अश्वस्य हृदयाद्यवयवैरग्न्यादिदेवताः प्रीणाति । अग्निं हृदयेन, प्रीणातीति शेषः । अशनिं देवता हृदया-

---

[1] ( मा० ३९।६ ) । [2] द्रष्टव्यम्-का० श्रौ० [ २६।७।५१ ] । [3] प्रत्यहम्–सर्वा० ।
[4] ( मा० ३९।७ ) । [5] विमुखाख्यो मन्त्रोऽग्नौ विनियुक्तः–सर्वा० । [6] 'च' नास्ति–क० ।
[7] ( मा० ३९।८ ) । [8] 'अग्निꣳ हृदयेन' नास्ति–क० । [9] 'इति' नास्ति–क-ग० ।

ग्रेण प्रीणाति । पशुपतिं देवता कृत्स्नहृदयेन प्रीणाति । भवं यक्ना अवदानविशेषेण प्रीणाति ।" [1]शर्वं मतस्नाभ्याम् । मन्युना ईशानं प्रीणाति । [2]महादेवमन्तःपर्शव्येन । उग्रं देवं वनिष्ठुना प्रीणाति । [3]वसिष्ठहनुः शिङ्गीनि च देवते कोश्याभ्यामवयवाभ्यां प्रीणाति ॥ ७ ॥

[4]उग्रं लोहितेन मित्रꣳ सौव्रत्येन रुद्रं दौर्व्रत्येनेन्द्रं प्रक्रीळेन मरुतो बलेन साध्यान्प्रमुदा । भवस्य कण्ठ्यꣳ रुद्रस्यान्त पार्श्व्यं महादेवस्य यकृच्छर्वस्य वनिष्ठु पशुपतेः पुरीतत् ॥ ८ ॥

उग्रं देवं लोहितेन प्रीणाति । मित्रं देवं सौव्रत्येन प्रीणाति । रुद्रं देवं दौर्व्रत्येन प्रीणाति । इन्द्रं प्रक्रीळेन प्रीणाति । मरुतो बलेन प्रीणाति । साध्यान् देवान् प्रमुदा प्रीणाति । भवस्य कण्ठ्यं भवस्य [5]देवस्य कण्ठ्यं कण्ठे भव दास्यामि । रुद्रस्य देवस्य अन्तःपार्श्व्यं दास्यामि । महादेवस्य यकृत् दास्यामि । शर्वस्य देवस्य [ यकृत् ? ] वनिष्ठु [ देवः ? ] । पशुपतेर्देवस्य पुरीतत् सर्वनाडीसु[ष्ण ? स्थ]प्रदेशो देशः ॥ ८ ॥

इत उत्तरम् [आ] अध्यायसमाप्तेः प्रायश्चित्ताहुतीराह—

[6]लोमभ्यः स्वाहा लोमभ्यः स्वाहा त्वचे स्वाहा त्वचे स्वाहा
लोहिताय स्वाहा लोहिताय स्वाहा मेदसे स्वाहा मेदसे स्वाहा ।
माꣳसेभ्यः स्वाहा माꣳसेभ्यः स्वाहा स्नावभ्यः स्वाहा स्नावभ्यः स्वाहा-
स्थभ्यः स्वाहास्थभ्यः स्वाहा मज्जभ्यः स्वाहा मज्जभ्यः स्वाहा ।
रेतसे स्वाहा पायवे स्वाहा ॥ ९ ॥

[7]लोमभ्यः स्वाहेत्यादयश्चत्वारिंशत्प्रायश्चित्ताहुतयः । लोमभ्यः स्वाहा पुनश्च लोमभ्यः

---

१ 'शर्वं मतस्नाभ्याम्' नास्ति—ख० । २ 'महादेवमन्तःपर्शव्येन' नास्ति—ख० ।
३ 'वसिष्ठहनुः' नास्ति—ख० । ४ ( मा० ३९।९ ) । ५ 'देवस्य' नास्ति—क० ।
६ ( मा० ३९।१० ) । ७ 'लोमभ्यः' नास्ति—क० । लोमभ्यः स्वाहेति प्रायश्चित्ताहुतयो द्विचत्वारिंशत्—सर्वा०, अष्टत्रिंशदिति काण्वसर्वानुक्रमपाठः । माध्यन्दिनमन्त्रेषु द्विचत्वारिंशदाहुतयः पठिताः, काण्वमन्त्रेषु चाष्टत्रिंशत् । आनन्दबोधेन तु "रेतसे स्वाहा पायवे स्वाहा" इत्यनयोरावृत्तिं विधाय चत्वारिंशदाहुतयः पठिताः । किमत्र मूलमिति न जानीमः ।

स्वाहा । त्वचे स्वाहा पुनश्च त्वचे स्वाहा । लोहिताय स्वाहा पुनश्च लोहिताय स्वाहा । मेदसे स्वाहा पुनश्च मेदसे स्वाहा । मासेभ्यः स्वाहा पुनश्च मासेभ्यः स्वाहा । स्नावभ्यः स्वाहा पुनश्च स्नावभ्यः स्वाहा । अस्थभ्यः स्वाहा पुन अस्थभ्य. स्वाहा । मज्जभ्यः स्वाहा पुनः मज्जभ्यः स्वाहा । रेतसे स्वाहा पुनः रेतसे स्वाहा । पायवे स्वाहा पुनः पायवे स्वाहा । [रेतसे पायवे] इति द्वे [द्वे] नामनी द्वयोरावृत्तिः कार्येति न्यायतो ज्ञातव्य न तु पाठतः ॥ ९ ॥

[1]आयासाय स्वाहा प्रायासाय स्वाहा सयासाय स्वाहा वियासाय स्वाहोद्यासाय स्वाहा । शुचे स्वाहा शोचते स्वाहा शोकाय स्वाहा ॥ १० ॥

[2]तपसे स्वाहा तप्यमानाय स्वाहा तप्ताय स्वाहा ।
निष्कृत्यै स्वाहा प्रायश्चित्यै स्वाहा भेषजाय स्वाहा ॥ ११ ॥

[3]यमाय स्वाहान्तकाय स्वाहा मृत्यवे स्वाहा ।
ब्रह्महत्यायै स्वाहा विश्वेभ्यो देवेभ्यः स्वाहा द्यावापृथिवीभ्याᳬ स्वाहा ॥ १२ ॥

आयासाय स्वाहा । प्रायासाय स्वाहा । सयासाय स्वाहा । वियासाय स्वाहा । उद्यासाय स्वाहा । शुचे स्वाहा । शोचते स्वाहा । शोकाय स्वाहा । तपसे स्वाहा । तप्यमानाय स्वाहा । तप्ताय स्वाहा । निष्कृत्यै स्वाहा । प्रायश्चित्यै स्वाहा । भेषजाय स्वाहा । यमाय स्वाहा । अन्तकाय स्वाहा । मृत्यवे स्वाहा । ब्रह्महत्यायै स्वाहा । विश्वेभ्यो देवेभ्यः स्वाहा । द्यावापृथिव्या स्वाहा ॥ १०–१२ ॥

इति [4]शुक्लयजुःकाण्वसंहिताभाष्यसग्रहे एकोनचत्वारिंशोऽध्यायः[5] ॥ ३९ ॥

---

१ ( मा० ३९।११ )। २ ( मा० ३९।१२ )।
३ ( मा० ३९।१३ )। ४ श्रीकाण्ववेदमन्त्रभाष्यसंग्रहे–ख ग० ।
५ अध्यायसमाप्तौ–"इति श्रीमद्गजाननार्पणमस्तु" इति–क० ।

## चत्वारिंशोऽध्यायः

ईशा वास्यमिदꣳ सर्वं यत्किञ्च जगत्यां जगत्।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम्॥ १॥

( ख० ) [1]दर्शपूर्णमासाद्यश्वमेधान्तं कर्मकाण्ड समाप्तम् । अथेदानीं ज्ञानकाण्ड प्रस्तूयते–ईशा वास्यमिति । 'ईशा वास्यम्' इत्यादीना मन्त्राणामपि यथाकथचन कर्मसु विनियोगः किं न स्यादिति क्केनचित्पृ[ष्टः?ष्टम्]–"नियुक्तान् पुरुषान् ब्रह्मा दक्षिणतः पुरुषेण नारायणेनाभिष्टौति–'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्' [३५।१] इत्यनेन षोडशर्चेन" [शत० ब्रा० १३।६।२।१२] इत्यादि। [ततः?तन्न;] 'ईशा वास्यम्' इत्यादिमन्त्राणा कर्मसु प्रमाणतोऽविनियोगात्। यागकल्पनाया तु विशेषं परिहृत्यैव यागकल्पना सा भवति नेतरेति श्रीभगवच्छङ्कराचार्यो विरोधादेवाविनियोगस्तेषां मन्त्राणा कर्मणीति प्रतिपादयति–"'ईशा वास्यम्' इत्यादयो मन्त्राः कर्मस्वविनियुक्तास्तेषामकर्मशेषस्यात्मनो याथात्म्यप्रकाशत्वात्" [ ई० शा० भा० १ ] इति। तमेवं सविस्तरं प्रतिपादयति–"याथात्म्यं [च] आत्मनः शुद्धत्वापापविद्ध[त्वैकत्वनित्य]त्वाशरीर[त्वसर्वगत]त्वादि वक्ष्यमाणम्। [तच्च] कर्मणा विरुध्यत इत्यतो युक्तस्तेषा कर्मस्वविनियोगः। न चैवंलक्ष[णत्व?णम्] [आत्मनो] याथात्म्यमुत्पाद्य [विकार्यमाप्य] संस्कार्यं [ कर्तृत्व भोक्तृत्व ? कर्तृभोक्तृरूप वा ], येन कर्मशेषता स्यात्। सर्वासामुपनिषदामात्मयाथात्म्यनिरूपणेनैवोपक्षयात्, गीताना मोक्षधर्माणा चैतत्परत्वात्। तस्मादात्मनोऽ[2]नेकत्वकर्तृत्व-

---

१ "श्रीकृष्णाय नम.॥ हरि ॐ" इत्येवं खपुस्तकेऽध्यायारम्भे। अत्रेदं बोध्यम्–गसंज्ञको हस्तलेख एकोनचत्वारिंशदध्यायसमाप्तिपर्यन्त एव विद्यते, कसंज्ञके हस्तलेखे चास्या उपनिषदः शाङ्करभाष्यमेवाविकलरूपेण क्वचन क्वचन पाठभेदेन सहाऽऽनन्दबोधनाम्ना स्थापितमास्ते; अतोऽत्रानन्दबोधभाष्यं केवलं खसंज्ञकहस्तलेखमवलम्ब्याऽऽनन्दाश्रममुद्रिततद्भाष्यसाहाय्येन सपाद्यते। विज्ञाः कसंज्ञकहस्तलेखपरिचयमप्यासादयन्त्विति धिया च गौणरूपेणात्र तस्यापि प्रकाशने मतिर्नियोजिता।

२ 'अनेकत्व ··चोपादाय' इत्यस्य स्थाने–'अपृथक्त्वाकर्तृत्वादि शुक्रत्वादि नोपादाय तस्य' इति पाठः–ख-आ०।

भोक्तृत्वादि चाशुद्धत्वपापविद्धत्वादि चोपादाय लोकबुद्धिसिद्धानि कर्माणि विहितानि । यो हि [1]कर्मफलेनार्थी दृष्टेन ब्रह्मवर्चसादिनाऽदृष्टेन स्वर्गादिना च द्विजातिरहं न काण[त्व]कुब्जत्वाद्यनधिकारप्रयोजकधर्मवानित्यात्मानं मन्यते सोऽधिक्रियते कर्मस्विति ह्यधिकारविदो वदन्ति । तस्मादेते मन्त्रा ह्यात्मनो याथात्म्यप्रकाशनेनात्मविषय स्वाभाविकमज्ञानं निवर्तयन्तः शोकमोहादिसंसारधर्मविच्छित्तिसाधनमात्मैकत्वादिविज्ञानमुत्पादयन्ति । [2]एवमुक्ताधिकार्यभिधेयसबन्धप्रयोजनान् मन्त्रान् संक्षेपतो व्याख्यास्यामः" [ ई० शा० भा० १ ] [इति]। अस्य कृत्स्नस्याध्यायस्य दध्यङ्ङाथर्वण ऋषिः, आत्मा देवता प्रतिमन्त्र च । 'ईशा वास्यम्', 'कुर्वन्नेव', 'असुर्या नाम' इति तिस्रोऽनुष्टुभ आत्मदेवत्याः, दध्यङ्ङाथर्वण ऋषिः । अत्र च कञ्चन पुत्रं शिष्यं वा गर्भाधानादिभिः संस्कारैः सस्कृतशरीरमधीतवेदमुत्पादितपुत्रमिह जन्मनि जन्मान्तरे वा यथाशक्त्यनुष्ठितयज्ञादिना क्षपितकल्मषं नित्यानित्यवस्तुविवेकवन्तं दैववशात् कथञ्चिदिहामुत्रार्थफलभोगविरागयुक्तं शमदमादिसपन्न मुमुक्षु शिक्षय[ति ? न्ती] स्वयमाचार्यस्वरूपा सती श्रुतिराह—ईशा वास्यमिति । 'ईश ऐश्वर्ये' [१०२० अदादिः] । अस्य क्विबन्तं तृतीयान्तं रूपमीशेति । ईष्ट इतीट् तेनेशा ईशित्रा ईशानेन परमेश्वरेण परमात्मना सर्वजन्तूनामात्मभूतेन स्वेनाऽऽत्मना ईशा । वास्यम् 'वस निवासे' [१००५ भ्वादिः] । वास्य निवसनीयम् । किमिति ? इदं प्रत्यक्षादिभिः प्रतीयमानं साक्षिदृश्य च, इदमात्मव्यतिरिक्तं सर्वम्, इदमीशा वास्यम्, सर्वेषु स्वकार्येषु स्वकारणभूते[न] निवास्यं [जगति ? जगत्] । जगत्या पृथिव्या जगत्युपलक्षिते जगति । किञ्चेति चकारो भिन्नक्रमः । जगति व्यक्त च लोकप्रसिद्धं वस्तुजातं तत्सर्वमीशा वास्य निवास्य स्वेनात्मना निवास्यम् । किं च, 'वस आच्छादने' [ १०२३ अदादिः ] "अहमेवेद सर्वम्" [ छान्दो० ७।२५।१ ] इति परमसत्यरूपेण ईशा परमात्मनाऽनृतमिद सर्व वास्य छादनीयमाच्छादनीयम्, कार्यस्य कारणसत्ताप्रकाशव्यतिरेकेणारोपितस्याधिष्ठान[सत्ता]प्रकाशव्यतिरेकेण पृथक्सत्ताप्रकाश[न ?]भावादेवेदं सर्व जगदीशा वास्यम्, यतः प्रत्यगात्मनः सच्चिदानन्दलक्षणपुरुषार्थरूपं स्वत एव सिद्धम् । तेन स्वस्मिन्नारोपितस्याहमिदं ममेदमित्येवमनात्मकस्य सर्वस्यानर्थभूतस्य जगतः, त्यक्तेन त्यागेन सर्वाधिष्ठानभूतस्वस्वरूपयाथात्म्यानुभवसामर्थ्यसिद्धेन त्यक्तेन त्यागेन । आत्मानं भुञ्जीथाः ।

---

१ 'कर्मफलेनार्थी ···धर्मवान्' इत्यस्य स्थाने 'इष्टेन कर्मफलेन ब्रह्मवर्चसा वाऽदृष्टेन स्वर्गादिना वाऽनुमीयते तत्र च द्विजातिरहं लक्षणाद्यधिकारधर्मवान्' इति पाठः—ख-आ० ।

२ एवमुक्तसंबन्धविषयप्रयोजनम्—ख० ।

[1]'भुजोऽनवने' इत्यस्य रूपम् (?)। पालनेऽपि च्छन्दस्यात्मनेपदं भवति। अत आत्मानं भुञ्जीथाः पालयेथाः। कृ[त? त] कृत्य प्राप्त प्रापणीयम्, "आत्मलाभान्न परं विद्यते" इति श्रुतेः। एवं त्यक्तैषणस्त्वं मा गृधः कस्यस्विद्धनम्। 'गृधु अभिकाङ्क्षायाम्' [ १२४७ दिवादिः ]। कस्यस्वित् परस्य। धनं मा गृधः अभिकाङ्क्षां मा कार्षीः, धनविषयाभिकाङ्क्षां मा कार्षीरित्यर्थः। स्विदिति निपातो वितर्कवचनः [निरु० ३।१५, ११।२८]। अस्य संपूर्णकामत्वादेवान्यार्थविषयाकाङ्क्षा किं नु कर्तव्या? न कर्तव्येत्यर्थः। विचार्यमाणे तथाविधस्यार्थस्याभावादेव। अथवा मा गृधः कस्यस्विद्धनमित्याक्षेपार्थः। न कस्यचिद्धनमस्ति यद् गृध्येत। "आत्मैवेदं सर्वम्" [छान्दो० ७।२५।२] इतीश्वरभावनया सर्वं द्वैतमात्रं त्यक्तम्, अत आत्मन एवेदम्, आत्मन एव तु सर्वम्। परस्य कस्यचित् संबन्धित्वेन प्रतीयमानस्य स्व[य?]संबन्धित्वमापादयितुमभिकाङ्क्षां मा कार्षीः। अतः स्वव्यतिरेकेण मिथ्याविषयं ग्रहं मा कार्षीरित्यर्थः॥ १॥

(क०) [2]येनात्मना परेणेशा व्याप्तं विश्वमशेषतः।
सोऽहं देहद्वयीसाक्षी वर्जितो देहतद्गुणैः॥

'ईशा वास्यम्' इत्यादयो मन्त्राः कर्मस्वविनियुक्ताः, तेषामकर्मशेषस्यात्मनो याथात्म्यप्रकाशकत्वात्। याथात्म्यं चात्मनः शुद्धत्वापापविद्धत्वैकत्वनित्यत्वाशरीरत्वसर्वगतत्वादि वक्ष्यमाणम्। [तच्च] कर्मणा विरुध्यत इति युक्त एवैषां कर्मस्वविनियोगः। न ह्येवंलक्षणमात्मनो याथात्म्यमुत्पाद्यं विकार्यमाप्यं संस्कार्यं वा कर्तृभोक्तृ[रूपं] वा, येन कर्मशेषता स्यात्, सर्वासामुपनिषदामात्मयाथात्म्यनिरूपणेनैवोपक्षयात्, गीतानां मोक्षधर्माणां [3]चैवात्मयाथात्म्यपरत्वात्। तस्मादात्मनोऽनेकत्वकर्तृ[त्व]भोक्तृत्वादि चाशुद्धपापविद्धत्वादि चोपादाय लोकबुद्धिसिद्धं कर्माणि विहितानि। यो हि [4]कर्मफलेनार्थी दृष्टेन ब्रह्मवर्चसादिनाऽदृष्टेन स्वर्गादिना च द्विजातिरहं न काण[त्व]कुब्जत्वाद्यनधिकार[प्रयोजक]धर्मवानित्यात्मानं मन्यते सोऽधिक्रियते कर्मस्विति ह्यधिकारविदो वदन्ति। तस्मादेते मन्त्रा आत्मनो याथात्म्यप्रकाशनेनात्मविषयं

---

१ अनवनेऽर्थे भुजधातोरात्मनेपदप्रतिपादकं सूत्रम् [ १।३।६६ ] इदम्। धातुस्तु 'भुज पालनाभ्यवहारयोः' [ १४५५ रुधादिः ] इति।

२ 'अथेशोपनिषत्प्रारम्भः॥ ॐ नमोऽव्यक्ताय नमः॥ ॐम्' इत्येवं कपुस्तकारम्भः। 'येनात्मानम्' इति श्लोकः शाङ्करभाष्ये नास्ति।

३ चैवंपरत्वात्–शां० भा०। ४ कर्मफलेनार्थादृष्टेन–क०।

स्वाभाविकमज्ञानं निवर्तयन्तः शोकमोहादिसंसारधर्मविच्छित्तिसाधनमात्मैकत्वादिविज्ञानमुत्पादयन्तीति। एवमुक्ताधिकार्यभिधेयसबन्धप्रयोजनान् मन्त्रान् संक्षेपतो व्याख्यास्यामः। [1]पाठस्तु—

[2]ईशा वास्यमिदꣳ सर्वं यत्किञ्च जगत्या जगत्। तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम्॥ १॥ इति। ईशा ईष्ट इति ईट्, तेन ईशा। [ईशा ?] ईशिता परमेश्वरः परमात्मा सर्वस्य। स हि सर्वमीष्टे सर्वजन्तूनामात्मा सन् [ प्रत्यगात्मतया ]। तेन स्वेन [रूपेण] आत्मना ईशा वास्यम् आच्छादनीयम्। किम् ? इद सर्वं यत्किञ्च यत्किञ्चित् जगत्या पृथिव्या जगत् [तत्] सर्वम्। स्वेनात्मना [ईशेन] प्रत्यगात्मतया "अहमेवेद सर्वम्" [छान्दो०७।२५।१] इति परमार्थसत्यरूपेणानृतमिद सर्वं [चराचरम्] आच्छादनीय स्वेन परमात्मना। यथा चन्दनागर्वादेरुदकादिसबन्धजक्लेदादिज [ औपाधिक ] दौर्गन्ध्य तत्स्वरूपनिघर्षणेनाच्छाद्यते स्वेन पारमार्थिकगन्धेन, तद्वदेव हि स्वात्मन्यध्यस्तं स्वाभाविक कर्तृत्वभोक्तृत्वादिलक्षण जगद् द्वैतरूप [जगत्या] पृथिव्याम्। जगत्यामित्युपलक्षणार्थत्वात् सर्वमेव नामरूपकर्माख्य विकारजातं परमार्थसत्यात्म भावनया त्यक्त स्यात्। एवमीश्वरात्मभावनया युक्तस्य पुत्राद्येषणात्रयसन्यास एवाधिकारो न कर्मसु। तेन त्यक्तेन त्यागेनेत्यर्थः। न हि त्यक्तो मृतः पुत्रो [वा] भृत्यो वाऽऽत्मसबन्धिताया अभावादात्मान पालयति, अनस्त्यागेनेत्ययमेवार्थः। भुञ्जीथाः पालयेथाः। [3]आत्मानमिति शेषः। एवं त्यक्तैषणस्त्व मा गृधः गृधिमाकाङ्क्षा मा कार्षीर्धनविषयाम्। कस्यस्वित् कस्यचित्। धन स्वस्य परस्य वा धन मा कांक्षीरित्यर्थः। स्विदित्यनर्थको निपातः। अथवा, मा गृधः। कस्मात् ? कस्यस्विद्धनमित्याक्षेपार्थः। न कस्यचिद्धनमस्ति यद् गृध्येत। "आत्मैवेद सर्वम्" [छान्दो० ७।२५।२] इतीश्वरभावनया सर्वं त्यक्तम्, अत आत्मन एवेदं सर्वम्, आत्मैवेद[4] सर्वम्। अतो मिथ्याविषया गृधिमभिलाष[5] मा कार्षीरित्यर्थः॥ १॥

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः।
एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे॥ २॥

( ख० ) एवमात्मविदः पुत्राद्येषणात्रयसन्यासेनात्मज्ञानविषयतयाऽऽत्मा रक्षितव्य इत्येष वेदार्थः। अथैतस्यार्थस्य [6]ग्रहणस्य तु साधनत्वेनेदमुपदिशति–कुर्वन्नेवेति। इह

---

१ 'पाठस्तु' इति नास्ति सर्वत्र शाङ्करभाष्ये। २ ईशा वास्यमित्यादि–शां०।
३ 'आत्मानमिति शेष.' नास्ति–शां०। ४ आत्मैव च–शां०।
५ 'अभिलाषम्' नास्ति–शां०। ६ आत्मग्रहणरूपस्येत्यर्थः।

कर्मभूमौ। शत समाः शत वर्षाणि। जिजीविषेद् यदि भवान् जीवितुमिच्छेत्। तर्हि कर्माण्यग्निहोत्रादीनि कुर्वन्नेव भवान् जिजीविषेत्। शत समा इति जीवतः पुरुषस्य जीवित परमायुरनूद्य कुर्वन्कर्माणीत्येतद्विधीयते। एव त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे। नराभिमानिनि त्वयि। एव जीवति सति कर्म न लिप्यते, कर्मणा न लिप्य[त?स] इत्यर्थः। नान्यथेतोऽस्ति। इतोऽस्माद् यथोक्तप्रकारादन्यथा प्रकारान्तरं नास्ति। एको ज्ञानमार्गः, द्वितीयः कर्ममार्गः। एवं प्रकारद्वयादन्यत् प्रकारान्तरं नास्तीत्यर्थः। देवताभक्तिरप्युभयात्मिकैव, अतो न विरोधः। एव चेदशुभ कर्म न लिप्यते। केचिदेव योजयन्ति–इह लोके कर्माणि "यज्ञेन दानेन" [बृह० ४।४।२२] इत्यादिना मुक्तिसाधनत्वेन विहितानि कर्माणि कुर्वन्नेव शत समाः सवत्सराणि जिजीवि[षेदि?षेरि]ति व्यत्ययः। एवमिहैवं त्वयि वर्तमाने सति। तव मुक्तिरस्त्विति शेषः। नान्यथेतोऽति। इतः प्रकारादन्यथा मुक्तिर्नास्तीति। एतदुक्त भवति–यथा स्वर्गप्राप्तेर्नानाभूता विशेषास्तथा मुक्तेर्न मार्गभेदोऽस्ति, अपि त्वेक एव मार्गो ज्ञानलक्षणः। कर्म लिप्यते नास्ति, येन प्रकारान्तरेण विद्यमानेन कर्म लिप्यते तथा प्रकारान्तर नास्तीत्यर्थः। अतः शास्त्रविहितान्यग्निहोत्रादीनि कर्माणि कुर्वन्नेव जिजीवि[षेदि?षेरि]ति ॥ कथ पुनरिदमवगम्यते–आद्येन मन्त्रेण ससंन्यासज्ञाननिष्ठोक्ता, द्वितीयेन तदशक्तस्य कर्मनिष्ठेति? ज्ञानकर्मणोर्विशेषोपरोध पर्वतसर्षपवदेवोक्त–न स्मरसि किम्? इ[त्याद्यु?हाप्यु]क्तम्–यो जिजीविषेत [1]स कर्म कुर्वन्नेवेति। "ईशा वास्यमिद सर्वं यत्किञ्च जगत्या जगत्। तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम्" इति [च]। [2]"न जीविते मरणे वा गृधिं कुर्वीतारण्यमियादिति पदं ततो न पुनरेयात्" इति संन्यासशासनात्। उभयोः फलभेद च वक्ष्यति। [3]"इमौ द्वावेव पन्थानावनुनिष्क्रान्ततरौ[4] भवतः, क्रियापथश्चैव पुरस्तात् संन्यासपथश्च, तयोर्न्यास एवात्यरेचयत्" इति तैत्तिरीयके। "द्वाविमावथ पन्थानौ यत्र वेदाः प्रतिष्ठिताः। प्रवृत्तिलक्षणो धर्मो निवृत्तिश्च [5]विभाषितः॥"

---

१ 'स कर्म' इत्यस्य स्थाने 'स्वकर्म' इति–ख०।

२ एतेन जीवितेन मरणेन वा–ख० अत्र–"तेन जीविते मरणे वा गृधिं मा कुर्विति अरण्यमियादिति पदमतो न पुनरियादिति व्यासशासनात्" इति मुद्रितः पाठोऽशुद्धः प्रतीयते।

३ "नारायणोपनिषद्वाक्यमपि भिन्नाधिकारित्वे प्रमाणयति–इमौ द्वावेवेति" इत्यानन्दगिरिः। तैत्तिरीयारण्यकस्थनारायणोपनिषदि "न्यास एवात्यरेचयत्" इत्येतावानंश उपलभ्यते।

४ अनुविक्रान्ततरौ–ख०। ५ सुभाषितः–ख-आ०।

इत्यादि पुत्राय विचार्य निश्चितमुक्तं श्रीवेदव्यासेन वेदाचार्येण । श्रीभगवता [च]—"लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ । ज्ञानयोगेन साङ्ख्याना कर्मयोगेन योगिनाम् ॥" [ गीता ३।३ ] इति । विभाग चानयोर्दर्शयिष्यामः ॥ २ ॥

( क० ) एवमात्मविदः[1] पुत्राद्येषणात्रयसन्यासेनात्मज्ञाननिष्ठतयाऽऽत्मा रक्षितव्य इत्येष वेदार्थः । अथेतरस्यानात्मविदो[2]ऽनात्मज्ञतया [3]स्वस्वरूपाज्ञानतयाऽऽत्मग्रहणायाऽशक्तस्येदमुपदिशति [मन्त्र ] । पाठस्तु—कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः । एव त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥ २ ॥ इति । कुर्वन्नेव इह निर्वर्तयन्नेव । कर्माणि अग्निहोत्रादीनि । जिजीविषेत् जीवितुमिच्छेत् । शतं शतसङ्ख्याकाः । समाः संवत्सरान् । [4]शतावधि हि पुरुषस्य परमायुरुचितम्[5] । [6]यथाप्राप्तानुवादेन यज्जिजीविषेच्छत वर्षाणि तत्कुर्वन्नेव कर्माणीत्येतद्विधीयते । एवम् एवंप्रकारे त्वयि जिजीविषति नरे नरमात्राभिमानिनि । इतः एतस्मात् [ अग्निहोत्रादीनि कर्माणि ] कुर्वतो वर्तमानात् प्रकारादन्यथा प्रकारान्तरं नास्ति, येन प्रकारेणाऽशुभ कर्म न लिप्यते, कर्मणा न लिप्य[त ? स] इत्यर्थः । अतः शास्त्रविहितानि कर्माण्यग्निहोत्रादीनि कुर्वन्नेव जिजीविषेत् ॥ कथं [7]पुनरिहावगम्यते—पूर्वेण मन्त्रेण संन्यासिनो ज्ञाननिष्ठोक्ता, द्वितीयेन तदशक्तस्य [8]कर्मनिष्ठोक्तेति ? उच्यते—ज्ञानकर्मणोर्विरोध पर्वतवदकम्प्यं यथोक्तं न स्मरसि किम् ? इहाप्युक्तम्—यो हि जिजीविषेत् स कर्म[ाणि] कुर्वन् [ एवेति ], "ईशा वास्यमिद सर्वम्", "तेन त्यक्तेन भुञ्जीथा मा गृध. कस्यस्विद्धनम्" इति च । "न जीविते मरणे वा गृधिं कुर्वीतारण्यमियादिति पदं ततो न पुनरेयात्" इति [च] संन्यासशासनात् । उभयोः फलभेदं च वक्ष्यति । "इमौ द्वावेव पन्थानावनुनिष्क्रान्ततरौ भवतः, क्रियापथश्चैव पुरस्तात् संन्यासश्च", तयोः संन्यास एवातिरेचयति—"न्यास एवात्यरेचयत्" [तैत्ति० आ० १०।६२।१] इति तैत्तिरीयके । "द्वाविमावेव[9] पन्थानौ यत्र वेदाः प्रतिष्ठिताः । प्रवृत्तिलक्षणो धर्मो निवृ[त्तौ ? त्तिः] च विभाषितः ॥" इत्यादि पुत्राय विचार्य निश्चितमुक्तं व्यासेन वेदाचार्येण भगवता । विभागं चानयोर्दर्शयिष्यामो [10]वयम् ॥ २ ॥

---

१ आत्मविदा—क० । २ 'अनात्मविदः' नास्ति—शां० । ३ 'स्वस्वरूपाज्ञानतया' नास्ति—शां० ।
४ तावद्धि—शां० । ५ निरूपितम्—शां० । ६ तथा च—शां० ।
७ पुनरिदम°—शां० । ८ कर्मनिष्ठेति—शां० ।
९ अथ—शां० । १० 'वयम्' नास्ति—शां० ।

असुर्या नाम ते लोका अन्धेन तमसाऽऽवृताः ।
ताꣳस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥ ३ ॥

( ख० ) अथेदानीमविद्वन्निन्दाऽऽरभ्यते विद्वत्प्रशंसार्थम्—असुर्या नाम त इति । परमात्मभावमद्वयमपेक्ष्य देवादयोऽप्यसुराः, असुषु रमन्त इति । तेषा [स्व]भूता लोका असुर्याः । नामशब्दः प्रसिद्धवचनः । ते लोकाः, कर्मफलानि जन्मानि येषु लोक्यन्ते दृश्यन्त भुज्यन्त इति । अन्धेन अदर्शनात्मकेन । तमसा अज्ञानलक्षणेनान्धकारेण । आवृताः आच्छादिताः । तान् स्थावरान्तान् लोकान् । ते प्रेत्य मृत्वा, इम देहं परित्यज्य । अभिगच्छन्ति यथाकर्म यथाश्रुतं ते तान् गच्छन्ति । ते क इति ? तानाह—ये के चात्महनो जना इति । आत्मान घ्नन्तीति आत्महननमात्मभेददर्शनं तत्कुर्वन्ति । ते के ? अविद्वासः स्वस्वरूपाविदः । तद्विपर्ययेण विद्वासो मुच्यन्ते, न त्वात्महनः ॥ ३ ॥

( क० ) अथेदानीमविद्वन्निन्दार्थोऽय मन्त्र आरभ्यते । पाठस्तु—असुर्या नाम ते लोका अन्धेन तमसाऽऽवृताः । ताꣳस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥ ३ ॥ इति । असुर्याः परमात्मभावमद्वयमपेक्ष्य देवादयोऽप्यसुराः । तेषा [च] स्वभूता [लोकाः] असुर्या नाम । नामशब्दोऽनर्थको निपातः । ते लोकाः, कर्मफलानि लोक्यन्त [1]इति दृश्यन्ते भुज्यन्त इति जन्मानि । अन्धेन अदर्शनात्मकेनाज्ञ[ानेन] तमसा । आवृताः आच्छादिताः । तान् स्थावरान्तान् । प्रेत्य त्यक्त्वा । इम देहम् अभिगच्छन्ति यथाकर्म यथाश्रुतम् । ये के च आत्महनः आत्मानं घ्नन्तीत्यात्महनः । के ? ते [ जनाः ] येऽविद्वासः । कथ त आत्मान नित्य हिंसन्ति ? अविद्यादोषेण विद्यमानस्यात्मनस्तिरस्करणात् । विद्यमानस्यात्मनो यत्कार्य फलम् अजरामरत्वादिसवेदनादिलक्षण[2] तद् हतस्येव तिरोभूत भवतीति प्राकृता अविद्वासो जना आत्महन उच्यन्ते । तेन हि [3]स्वात्महननदोषेण ससरन्ति [ते] ॥ ३ ॥

अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन्पूर्वमर्षत् ।
तद्धावतोऽन्यानत्येति तिष्ठत्तस्मिन्नपो मातरिश्वा दधाति ॥ ४ ॥

( ख० ) तर्हि तत्कीदृशमात्मतत्त्वमिति ? तदाह—अनेजदेकमिति । आत्मदेवत्या त्रिष्टुप् ।

---

१ 'इति' नास्ति—शां० । २ 'आदि' नास्ति—शां० । ३ आत्महनन—शां० ।

अतिवेगवान् वायुः प्रसिद्धः, ततो हि वेगवत्तर मनः, ततोऽप्यतिवेगवत्तरमात्मतत्त्वम्। कथं विरुद्धमिदमुच्यते–निश्चलं जवीय इति। नैष दोषः, निरुपाध्युपाधिमत्त्वोपपत्तेः। तत्र निरुपाधिस्वरूपेणोच्यते–अनेजदेकमिति। सोपाधिस्वरूपेणोच्यते–मनसो जवीय इति। मनसः [जवेन ? जविनः] अन्तःकरणस्य सकल्पादिलक्षणस्योपाधेरनुवर्तमानात्। तत्र प्रवृत्तिश्च व्य[र्थ ? र्था]। पुरतः पुरतश्चात्मतत्त्वं प्रकाशत इति [1]ज्योतिर्ब्राह्मणे प्रसिद्धम्। इहैव [ दु.? देह]स्थस्य मनसो ब्रह्मलोकादिदूरसंकल्पन नानागमनं क्षणमात्रादित्यतो मनसो जविष्ठत्वं लोके प्रसिद्धम्। तस्मिन् मनसि ब्रह्मलोका[द्वि ? दि] दूर गच्छति [रात्रि] प्रथम प्राप्त इवात्मचैतन्याभासो गृह्यतेऽतो मनसो जवीय इत्याह। किं च, नैनद्देवा आप्नुवन्निति। एनद् आत्मतत्त्वम्, देवाः द्योतनसाधनत्वात्, सर्वथापि तदात्मतत्त्वं चक्षुरादीन्द्रियाणि देवाः। नाप्नुवन् न प्राप्नुवन् न विप[यी ? र्य]कुर्वन्निति, प्रकाशविपयीकर्तु वा श्रम एव, ततस्तेभ्यो मनो जवीयः। मनो[व्यवहारो ? व्यापार]व्यवहितत्वा-[न्ना ? दा]भासमात्रमप्यात्मनो नैव देवाना विषयो भवति, य[स्त्या ? स्मा]न्मनसोऽपि पूर्वमर्षत्पूर्वमेव गतम्, व्योमवद्व्यापित्वात्। सर्वथापि तदात्मतत्त्व सर्वससारधर्मवर्जितं स्वेन [2]निरुपाधिकेन [ स्वरूपेण ] अविक्रियं सदुपाधिकृताः सर्वाः ससारविक्रिया अनुभवतीवाऽविवेकिना मूढाना[मेक?]मनेकमिव [च] प्रतिदेह [3]प्रत्यवभासत इत्येतदाह–तद्धावत इति। तद्यत्प्रसिद्धमात्मतत्त्वं तद्धावतो [4]द्रुत गच्छतः। अन्यान् मनोवागिन्द्रियप्रभृतीनात्मविलक्षणान्। अत्येति अतीत्य गच्छतीव। इवार्थं स्वयमेव दर्शयति–तिष्ठदिति। तिष्ठन् स्वयं सदित्यर्थः। तस्मिन्नात्मतत्त्वे सति [ नित्य ]चैतन्यस्वभावे। मातरिश्वा, मातर्यन्तरिक्षे श्वसिति [निरु० ७।२६] इति मातरिश्वा सर्वप्राणभृत्क्रियात्मकः, [5]यदाश्रयाणि कार्यकारणजातानि यस्मिन्नोतानि प्रोतानि [ च ], यत्सूत्रसञ्ज्ञक सर्वस्य जगतो विधारयितृ, स मातरिश्वा। अपः, अप इति कर्मनाम [ निघ० २।१ ]। अपः कर्माणि प्राणिना चेष्टालक्षणानि, अग्न्यादित्यपर्जन्यादीना ज्वलनदहनप्रकाशवर्षादलक्षणानि यज्ञदानहोमादीनि। दधाति स्थापयति विभजतीत्यर्थः, समष्टिव्यष्टिरूपो ह्यसौ वायुर्धारयतीति वा; "भीषाऽस्माद्वातः पवते" [ तैत्ति० २।८ ] इत्यादिश्रुतिभ्यः। सर्वा हि कार्यकरणादिविक्रिया नित्यचैतन्यात्मस्वरूपे सर्वादिभूते सत्येव भवन्तीत्यर्थः॥ ४॥

---

१ ज्योतिर्ब्राह्मणप्रसिद्धम्–ख०। २ नीरूपेण–ख-आ०। ३ प्रत्याचक्षते स्वतः–ख-आ०। ४ दूरम्–ख-आ०। ५ यदा सर्वाणि–ख-आ०।

(क०) यस्यात्मनो हननादविद्वांसः संसरन्ति, तद्विपर्ययेण विद्वांसो [जनाः] मुच्यन्तेऽनात्महनः, तत्कीदृशमात्मतत्त्वमित्युच्यते। पाठस्तु—अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन् पूर्वमर्षत्। तद्धावतोऽन्यानत्येति तिष्ठत्तस्मिन्नपो मातरिश्वा दधाति ॥ ४॥ इति। अनेजत् न एजत्। 'एजृ कम्पने' [ २३४ भ्वादिः ] कम्पनं चलनं स्वावस्थाप्रच्युतिः, तद्वर्जितम्; सर्वदैकरूपमित्यर्थः। तच्चैकं सर्वभूतेषु। मनसः संकल्पा[दि]लक्षणाज्जवीयः जववत्तरम्। कथं विरुद्धमुच्यते–ध्रुवं निश्चलमिदम्, मनसो जवीय इति च। नैष दोषः, निरुपाध्युपाधिमत्त्वेनोपपत्तेः। तत्र [1]निरुपाधिना स्वेन रूपेणोच्यते–अनेजदेकमिति। मनसोऽन्तःकरणस्य [2]संकल्पादिलक्षणस्योपाधेरनुवर्तनात्। इह देहस्थस्य मनसो ब्रह्मलोकादिदूरस्थं संकल्पनं क्षणमात्राद्भवतीत्यतो मनसो जविष्ठत्वं लोके प्रसिद्धम्। तस्मिन्मनसि ब्रह्मलोकादीन् द्रुतं गच्छति सति प्रथमं प्राप्त इवात्मचैतन्यावभासो गृह्यतेऽतो मनसो जवीय इत्याह। नैनद्देवाः द्योतनाद्देवाः चक्षुरादीनि इन्द्रियाणि। एनत् प्रकृतमात्मतत्त्वं नाप्नुवन् न प्राप्तवन्तः। तेभ्यो मनो जवीयः। मनोव्यापारव्यवहितत्वादाभासमात्रमप्यात्मनो नैव देवानां [3]विषयो भवति। यस्माज्जवनात् मनसोऽपि पूर्वमर्षत् पूर्वमेव गतम्, व्योम[व]द् व्यापित्वात्। सर्वव्यापि तदात्मतत्त्वं [सर्व]संसारधर्मवर्जितं स्वेन निरुपाधिकेन स्वरूपेणाविक्रियमेव सदुपाधिकृताः सर्वाः संसारविक्रिया अनुभवतीवाऽविवेकिनां मूढानामनेकमिव च प्रतिदेहं प्रत्यवभासत इत्येतदाह—[4]तद्धावतोऽन्यानत्येति तिष्ठत्तस्मिन्नपो मातरिश्वा दधाति। तद्धावतः द्रुतं गच्छतः। अन्यान् मनोवागिन्द्रियप्रभृतीनात्मविलक्षणान्। अत्येति अतीत्य गच्छतीव। इवार्थं स्वयमेव दर्शयति–तिष्ठदिति। स्वयमविक्रियमेव सदित्यर्थः। तस्मिन्नात्मतत्त्वे सति नित्यचैतन्यस्वभावे। मातरि[श्वा], मातर्यन्तरिक्षे [5]श्वसिति [निरु०७।२६] [ गच्छतीति मातरिश्वा ] वायुः सर्वप्राणभृत्क्रियात्मकः, यदाश्रयाणि कार्यकारणजा[ता]नि यस्मिन्नोतानि प्रोतानि च, यत्सूत्रसंज्ञकं सर्वस्य जगतो विधारयितृ, स मातरिश्वा। अपः कर्माणि [प्राणि]नां चेष्टालक्षणानि, अग्न्यादित्य[पर्जन्या]ा[दी]नां [6]च ज्वलनदहनप्रकाशाभिवर्षणादिलक्षणानि। दधाति विभजतीत्यर्थः, धारयतीति वा, "भीषाऽस्माद्वातः पवते [7]भीषोदेति सूर्यः [ तैत्ति० २।८ ] इत्यादिश्रुतिभ्यः। सर्वा हि कार्यकरणादिविक्रिया नित्यचैतन्यात्मस्वरूपे सर्वास्पदभूते सत्येव भवन्तीत्यर्थः ॥ ४॥

---

१ निरुपाधिकेन–शां०। २ संकल्पविकल्पल°–शां०। ३ विषयी–शां०। ४ 'तद्धावतः....दधाति' नास्ति–शां०। ५ श्वयति–शां०। ६ 'च' नास्ति–शां०। ७ 'भीषोदेति सूर्यः' नास्ति–शां०।

तदे॑जति तन्नैज॑ति तद् दू॒रे तद्व॑न्ति॒के ।

तद॒न्तर॑स्य सर्व॑स्य तदु सर्व॑स्यास्य बाह्यतः ॥ ५ ॥

( ख० ) न मन्त्राणा जामितास्तीति [1]पूर्वमन्त्रोक्तमप्यर्थं कञ्चिद्विशेषं दर्शयन्नाह– [ तदेजतीति ] । 'तदेजति', 'यस्तु सर्वाणि भूतानि', 'यस्मिन् सर्वाणि भूतानि' इत्यात्मदेवत्या-स्तिस्रोऽनुष्टुभः । तदेजति । तद्यत्प्रकृतमात्मतत्त्वं तदेजति उपाधित एजति चलति । तन्नैजति । तदेव त्वात्मतत्त्वमतो नैजति नैव चलति । अचलमेव सच्चलतीव भवतीत्यर्थः । तद् दूरे वर्षकोटिशतैरप्यविदुषामप्राप्यत्वात् तद्दूर एव । तत् उ एव । अन्तिकेऽतिसमीपे विदुषामा-त्मत्वात्तदन्तिक एवात्यन्तसमीप एव । न केवलं दूरेऽन्तिके, तदन्तः अस्य सर्वस्य जगतोऽन्त-रात्मैव, "एष त आत्मा सर्वान्तरः" [ बृह० ३।४।१ ] इति श्रुतेः । अस्य सर्वस्य, जगतः नामरूपक्रियात्मकस्य सर्वस्य तदेव । बाह्यतः, व्यापित्वात् । आकाशवन्निरतिशयसूक्ष्मत्वादन्तः, "प्रज्ञानघन एव" [रामो० २।३] इति शासनान्निरन्तरम् [च] ।। ५ ॥

( क० ) न मन्त्राणा जामितास्तीति[2] पूर्वमन्त्रोक्तमप्यर्थं पुनराह । पाठस्तु—तदेजति तन्नैजति तद्दूरे तद्वन्तिके । तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः ॥ ५ ॥ इति । तद् आत्मतत्त्व यत्प्रकृतं तदेजति चलति । तदेव[च] नैजति स्वतो नैव चलति । [स्वतः] अचलमेव सच्चलतीवेत्यर्थः । किं च, तद्दूरे वर्षकोटिशतैरप्यविदुषामप्राप्यत्वा[द्] दूर इव । तदु अन्तिके समीपेऽत्यन्तमेव विदुषाम्, आत्मत्वात् । न केवलं दूरे, अन्तिके च, तद् अन्तः अभ्यन्तरे [अस्य] सर्वस्य, "य आत्मा सर्वान्तरः" [बृह० ३।४।१] इति श्रुतेः । अस्य सर्वस्य, जगतः नामरूपक्रियात्मकस्य । तद् उ अपि । सर्वस्यास्य बाह्यतः, [3]व्यापित्वात् । आकाशवन्निर-तिशयसूक्ष्मत्वादन्तः, "प्रज्ञानघन एव" [रामो० २।३] इति शासनान्निरन्तरम् [च] ॥ ५ ॥

यस्तु सर्वा॑णि भू॒तान्या॒त्मन्ये॒वानु॒पश्य॑ति ।

स॒र्व॒भू॒तेषु॑ चा॒त्मानं॒ ततो॒ न विजु॑गुप्सते ॥ ६ ॥

( ख० ) यस्तु शोधिततत्त्वपदार्थो मुमुक्षु । सर्वाणि भूतानि अव्यक्ता[दी]नि स्थाव-

१ पूर्वतोक्तमप्यर्थः–ख०, पूर्वोक्तोऽर्थ.–आ० । २ नास्तीति–क० । ३ व्यापकत्वात्–शा० ।

रान्तानि चेतनाचेतनानि। [१]आत्मन्येव अनुपश्यति, आत्मव्यतिरिक्तानि न प्रपश्यति, अपि त्वात्मन्यात्मत्वेन पश्यतीत्यर्थः। सर्वभूतेषु चात्मानम्, तेषु सर्वेषु भूतेषु चात्मानमनुपश्यति, तेषामपि भूतानामात्मानमात्म[तत्त्व ? त्वे]न पश्यति, यथास्य कार्यकरणसघात[रूपमात्मानं ? स्याहमात्मा] सर्वप्रत्ययसाक्षिभू[त?त·] स[त्य?त्यः] केव[लम्?लो] निर्गुणोऽनेनैव स्वरूपेणाव्यक्ता[दी]ना स्थावरान्तानामहमेवात्मेति सर्वभूतेषु चात्मानं यस्तु पश्यति। ततः तस्माद्दर्शनात्। न विजुगुप्सते जुगुप्सा घृणा न करोति, 'गुपू रक्षणे' [३९५ भ्वादिः] देहादिकं गोप्तुं [न ग ? ने]च्छतीति वा। ज्ञानप्राप्तस्यैवानुवादोऽयम्। सर्वा हि घृणाऽऽत्मनोऽन्य[द् ? द]द्रष्टव्य पश्यतो भवति, आत्मानमेव त्वनन्तेपु विशुद्धं निरन्तर पश्यतो न [प्राणादि ? घृणा]निमित्तमस्तीति प्राप्तमेव-ततो न विजुगुप्सत इति ॥ ६ ॥

( क० ) पाठस्तु—यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति। सर्वभूतेषु चात्मानं ततो न विजुगुप्सते ॥ ६ ॥ इति। यस्तु यः परिव्राट् मुमुक्षुः। सर्वाणि भूतानि अव्यक्तादीनि स्थावरान्तानि। आत्मन्येव अनुपश्यति, आत्मव्यतिरिक्तानि न पश्यतीत्यर्थः। सर्वभूतेषु [२]सर्वेषु भूतेषु च तेष्वेव च आत्मानम्, तेषामपि भूताना [३]स्वात्मानम्, आत्मत्वेन यथास्य [देहस्य] कार्यकरण सघातस्यात्मा अह सर्वप्रत्ययसाक्षिभूतश्चेतयिता केवलो निर्गुणोऽनेनैव [स्व]रूपेणाव्यक्तादीना स्थावरान्तानामहमेवात्मेति सर्वभूतेषु चात्मान [४]यस्तु निर्विशेष पश्यति, स ततः तस्मादेव दर्शनात्। न विजुगुप्सते विजुगुप्सा घृणा न करोति। इति[५] प्राप्तस्यैवानुवादोऽयम्। सर्वा हि घृणाऽऽत्मनोऽन्यद् दुष्ट पश्यतो भवति, आत्मानमेवात्यन्तविशुद्धं निरन्तर पश्यतो न घृणानिमित्त[मर्थान्तर]मस्तीति प्राप्तमेव-ततो न विजुगुप्सत इति ॥ ६ ॥

यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः।
तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥ ७ ॥

( ख० ) इममेवार्थमन्योऽपि मन्त्र आह सर्वासां श्रुतीनामत्रैव तात्पर्यमिति प्रदर्शयितुम्-यस्मिन् सर्वाणि भूतानीति। यस्मिन् यथोक्त आत्मनि। सर्वाणि भूतानि तान्येव भूतानि परमार्थदर्शनादात्मैवाभूदात्मैव सवृत्तः, परमार्थतो विजानतः। एवमात्मतत्त्वं विजानत, [एतत् ? तत्र]

---

१ 'आत्मन्येव अनुपश्यति' इत्यत्र 'आत्मानं त्वामनु अन्वेति सदा पश्यति' इति पाठः-ख-आ०।
२ 'सर्वेषु भूतेषु' नास्ति-शां०।
३ स्वमात्मानम्-शां०।
४ निर्विशेषं यस्त्वनुपश्यति-शां०।
५ 'इति' नास्ति-शां०।

तस्मिन् काले, तस्मिन्नवस्थाविशेषे, तत्र चात्मनि। को मोहः, 'मुह वैचित्ये' [११६८ दिवादिः] को मोहः कः शोकः कः संसार एकत्वमनुपश्यतः। शोकमोहौ कामबीजमजानतो भवति, न त्वात्मैकत्वं विशुद्धं गगनोपमं पश्यतः। को मोहः कः शोक इति शोकमोहयोरविद्याकार्ययो[राक्षेपात्] संसारोऽसंसार इत्यज्ञानयोराक्षेपेण[ासंभव]संप्रदर्शनात् सकारणस्य संसारस्यात्यन्तमेवोच्छेदः प्रदर्शितो भवति ॥ ७ ॥

( क० ) इममेवार्थमन्योऽपि मन्त्र आह। पाठस्तु—यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः। तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥ ७ ॥ इति। यस्मिन् सर्वाणि भूतानि यस्मिन् काले यथोक्तात्मनि [वा], तान्येव भूतानि [सर्वाणि] परमार्थ[ात्म]दर्शनात् आत्मैवाभूत् आत्मैव संवृत्तः, परमार्थवस्तु विजानतः। तत्र तस्मिन्काले तत्र [1]चात्मनि। को मोहः कः [शोकः।] शोकश्च मोहश्च कामकर्मबीजमजानतो भवति, न त्वात्मैकत्वं विशुद्धं गगनोपमं पश्यत.। को मोहः कः शोक इति शोकमोहयोरविद्याकार्ययोराक्षेपेणासंभवप्रदर्शनात सकारणस्य संसारस्यात्यन्तमेवोच्छेदः प्रदर्शितो भवति ॥ ७ ॥

**स पर्यगाच्छुक्रमकायमव्रणमस्नाविरꣳ शुद्धमपापविद्धम्।**

**कविर्मनीषी परिभूः स्वयंभूर्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः ॥ ८ ॥**

( ख० ) योऽयमतीतेन मन्त्रेणोक्त आत्मा [स] किंलक्षण इत्यपेक्षायामय मन्त्रः प्रवर्तते–स पर्यगादिति। आत्मदेवत्या जगती। स यथोक्त आत्मा पर्यगात्, परित. समन्तात् अगात्, परितो गच्छति सर्वमवगच्छति व्याप्नोति च, आकाशवद्व्यापी[त्यर्थः]। शुक्र [2]'शुच दीप्तौ' शुचिमद् दीप्तिमदित्यर्थः। अकायम् अशरीरं लिङ्गशरीरवर्जितम्। अव्रणम् अहतम्। अस्नाविर स्नावाः शिरा न विद्यन्ते यस्य तदस्नाविरम्। कविः क्रान्तदर्शी, [3]"नान्यदतोऽस्ति द्रष्टृ" [बृह० ३।८।११] इत्यादिश्रुतेः। मनीषी मनस ईशिता, सर्वज्ञ ईश्वर इत्यर्थः। परिभूः सर्वेषा [परि] उपरि भवतीति परिभूः। स्वयमेव भवतीति स्वयभूः। येषामुपरि भवति यश्चोपरि भवति स स्वयमेव सर्वो भवतीति स्वयभूः। स नित्यमुक्त ईश्वरः। याथातथ्यतः, यथातथाभावो याथातथ्य [तस्मात्]; यथाश्रुतकर्म-

---

१ आत्मनि वा–शां०। २ निघण्टौ ज्वलतिकर्मसु [ निघ० १।१६ ] 'शोचति' इति पठितः। धातुपाठे तु 'शुच शोके' [ १८३ भ्वादिः ] इत्येव।

३ 'नान्योऽतोऽस्ति द्रष्टा' इति–ख-आ०।

[ बृह० १।४।१७ ] इत्यादिवचनादज्ञत्वं कामित्वं च [ कर्मनिष्ठस्य ] निश्चितमवगम्यते । तथा च [ तत्फलं सप्तान्नसर्गस्तेष्वात्मभावेन ] आत्मस्वरूपावस्थानम् । जायाद्येषणासन्यासेनात्मविदा कर्मनिष्ठाप्रातिकूल्येनात्मस्वरूपनिष्ठैव [ दर्शनात् ? दर्शिता ]–"किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोकः" [बृह० ४।४।२२] इत्यादिना । [ यत् ? ये तु ] ज्ञाननिष्ठाः संन्यासिनस्ते[भ्यः] "असुर्या नाम ते" [ ई० ३ ] इत्यादिनाऽविद्वन्निन्दाद्वारेणात्मनो [याथात्म्यम्] "स पर्यगात्" [ ई० ८ ] [1]इत्येतदन्तैर्मन्त्रैरुपदिष्टम् । ते ह्यत्राधिकृता न कामिन इति । यथा च श्वेताश्वतराणा मन्त्रोपनिषदि–"अत्याश्रमिभ्यः परम पवित्र प्रोवाच सम्यगृषिसङ्घजुष्टम्" [ श्वेता० ६।२१ ] इत्यादि विभज्योक्तम् । ये तु कर्मनिष्ठाः कर्म कुर्वन्त एव जिजीविषवः, तेभ्य इदमुच्यते–'अन्धं तमः' इत्यादिना । कथ पुनरिदमवगम्यते ? [ ज्ञानिना ] साध्यसाधनभेदोपम[र्शनम् ? र्दनात्] । "यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः । तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥" [ ई० ७ ] [इति] यदात्मैकत्वविज्ञान [2]तन्न केनचिदपि कर्मणा ज्ञानान्तरेण वा [ स ? ह्य]मूढः समुच्चिचीषति । [भवतु ? इह तु ] समुच्चिचीषयाऽविद्वन्निन्दा । तत्र च यस्य येन समुच्चयः संभवति न्यायतः शास्त्रतो वा तदिहोच्यते । दैव वित्त देवतादिज्ञान कर्मसंबन्धित्वेनोपन्यस्त न परमात्मविज्ञानम्; "विद्यया देवलोकः" [बृह० १।५।१६] इति पृथक्फलाश्रयणात् । त[तो?योः] ज्ञानकर्मणोरिहैकैकानुष्ठाननिन्दा समुच्चिचीषयाऽनिन्दापरा एकैकस्य पृथक्फलाश्रयणात्–"विद्यया तदारोहन्ति", "विद्यया देवलोकः" [ बृह० १।५।१६ ] "न तत्र दक्षिणा यन्ति", "कर्मणा पितृलोकः" [बृह० १।५।१६] इति । न हि शास्त्रविहितं किञ्चिदकर्तव्यतामियात् । अन्ध तमः प्रविशन्ति । षडनुष्टुभ आत्मदेवत्याः । अन्धं तमः अदर्शनात्मक तमः प्रविशन्ति । के ? येऽविद्याम् [ विद्याया अन्या ] अविद्या कर्मेत्यर्थः, अविद्यामग्निहोत्रादिलक्षणामेव केवलामुपासते; तत्पराः सन्तोऽनुतिष्ठन्तीत्यभिप्रायः । ततो भूय इव ते तमः । ततः तस्मादन्धात्मकाद् भूय इव बहुतरमेव तमः प्रविशन्ति । ते क इति ? य उ विद्याया रताः । ये तु कर्म हित्वा य उ एव विद्यायामेव रताः, ज्ञान एव रताः; ततो बहुतरमेव तमः प्रविशन्ति– "अनन्दा नाम ते लोका अन्धेन तमसाऽऽवृताः । तास्ते प्रेत्याभिगच्छन्ति अविद्वांसोऽबुधा जनाः" [ बृह० ४।४।११ ] इति श्रुतेः ॥ ९ ॥

---

१ 'इत्येतदन्तैर्मन्त्रैरुपदिष्टम् । ते ह्यत्रा' इत्यस्य स्थाने 'इति वदतो मन्त्रैरुपादिष्टो ? यत्र तत्रा' इति पाठः–ख-आ० ।   २ तत्र–आ० ।

( क० ) अत्राद्येन मन्त्रेण [1]एषणात्रयपरित्यागेन ज्ञाननिष्ठोक्ता प्रथमो वेदार्थः "ईशा वास्यमिद सर्वं ... मा गृधः कस्यस्विद्धनम्" [ई०१] इति। अज्ञाना जिजीविषूणा ज्ञाननिष्ठाऽसंभवे "कुर्वन्नेवेह कर्माणि जिजीविषेत्" [ई० २] इति कर्मनिष्ठोक्ता द्वितीयो वेदार्थः । अनयो[श्च] निष्ठयोर्विभागो मन्त्र[द्वय]प्रदर्शितयोर्बृहदारण्यकेऽपि प्रदर्शितः–"सोऽकामयत जाया मे स्यात्" [बृह०१।४।१७]इत्यादिना अज्ञस्य कामिनः कर्माणीति।"मन एवास्यात्मा वाग्जाया"[बृह०१।४।१७] इत्यादिवचनादज्ञत्व [कामित्व] च [ कर्मनिष्ठस्य ] निश्चितमवगम्यते । तथा च तत्फल सप्तान्न-सर्गस्तेष्वात्मभावेनात्मस्वरूपावस्थानम्। जायाद्येषणात्रयसन्यासेन चात्मविदा कर्मनिष्ठाप्रातिकूल्येनात्मस्वरूपनिष्ठैव दर्शिता–"कि प्रजया करिष्यामो येषा नोऽयमात्माऽय लोक." [ बृह० ४।४।२२ ] इत्यादिना । ये तु ज्ञाननिष्ठाः सन्यासिनस्तेभ्यः "असुर्या नाम" [ई० ३] इत्यादिनाऽविद्वन्निन्दाद्वारेणात्मनो[2] याथात्म्य "स पर्यगात्" [ई० ८] इत्येतदन्तैर्मन्त्रैरुपदिष्टम्। ते ह्यत्राधिकृता न कामिन इति। तथा [ च ] श्वेताश्वतराणा मन्त्रोपनिषदि–"अत्याश्रमिभ्यः परम पवित्र प्रोवाच सम्यगृषिसघजुष्टम्" [श्वेता० ६।२१] इत्यादि विभज्योक्तम्। ये तु [ कामिनः ] कर्मनिष्ठाः कर्म कुर्वन्त एव जिजीविषवः, तेभ्य इदमुच्यते । पाठस्तु —अन्ध तमः प्रविशन्ति येऽविद्यामुपासते । ततो भूय इव ते तमो य उ विद्यायाꣳ रताः ॥ ९ ॥ इति । [3]अन्ध तमः प्रविशन्तीति । कथ पुन[रेवम]वगम्यते, न तु सर्वेषामिति ? उच्यते–अकामिनः साध्यसाधनभेदोपमर्देन–"यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः । तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥" [ई० ७] [इति] यदात्मैकत्वविज्ञान तन्न केनचित्कर्मणा ज्ञानान्तरेण वा [ह्य]मूढः [समुच्चिचीषति । इह तु] समुच्चिचीषयाऽविद्वदादिनिन्दा [ क्रियते ]। तत्र च यस्य येन समुच्चयः संभवति न्यायतः शास्त्रतो वा तदिहोच्यते। यद्दैव वित्तं [4]देवतादिज्ञानं कर्मसम्बन्धित्वेनोपन्यस्तं न परमात्मज्ञानम्; "विद्यया देवलोकः" [ बृह० १।५।१६ ] इति पृथक्फलश्रवणात्। तयोर्ज्ञानकर्मणोरिहैकैकानुष्ठाननिन्दा समुच्चिचीषया न निन्दापरैव, एकैकस्य पृथक् फलश्रवणात्–"विद्यया तदारोहन्ति", "विद्यया देवलोकः" [ बृह० १।५।१६ ] "न तत्र दक्षिणा यन्ति", "कर्मणा पितृलोकः" [ बृह० १।५।१६ ] इति। न हि शास्त्रविहित किञ्चिदकर्तव्यतामियात्। तत्र अन्धं [ तमः ] अदर्शनात्मकं तमः प्रविशन्ति। के ? येऽविद्याम्, विद्याया अन्या अविद्या ता कर्मेत्यर्थः,

---

1 सर्वैषणाप°–शां० ।
2 आत्मना–शां० ।
3 अन्धं तम इत्यादि–शां० ।
4 देवताविषयं ज्ञानम्–शां० ।

[ कर्मणो विद्याविरोधित्वात् ] । तामविद्यामग्निहोत्रादिलक्षणामेव केवलामुपासते, तत्पराः सन्तोऽनुतिष्ठन्तीत्यभिप्रायः । ततः तस्मादन्धात्मकात्तमस । भूय इव बहुतरमिव[1] ते तमः प्रविशन्ति । [ के ] ? कर्म हित्वा ये [ उ ये तु ] विद्यायामेव देवताज्ञाने [ एव ] । रताः अभिरताः ॥ ९ ॥

अन्यदेवाहुर्विद्ययाऽन्यदाहुरविद्यया ।
इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥ १० ॥

(ख०) अत्रावान्तरफलभेदं विद्याकर्मणोः समुच्चये कारणमाह । अन्यथा फलवदफलवतोः सनिहितयोरङ्गाङ्गितैव स्यादिति-अन्यदेवाहुरिति । अन्यत् पृथगेव विद्यया क्रियते फलमित्याहुः । अन्यदेवाहुरविद्यया कर्मणा अन्यदेव फल क्रियत इत्याहुर्वेदाः, "कर्मणा पितृलोकः, विद्यया देवलोकः" [बृह० १।५।१६] इत्यादयः । इति एवम् । शुश्रुम श्रुतवन्तो वयम् । धीराणा धीमता वचनं शुश्रुम । ये आचार्या नः अस्मभ्यम् । तत्कर्म च ज्ञानं च विचचक्षिरे व्याख्यातवन्तः, तेषामयमागमः पारम्पर्यागत इत्यर्थः ॥ १० ॥

तत्रावान्तर[फल]भेदं विद्याकर्मणोः समुच्चयकारणमाह । अन्यथा फलवदफल[व]तोः संनिहितयोरङ्गाङ्गितैव स्यादिति । पाठस्तु-अन्यदेवाहुर्विद्ययाऽन्यदाहुरविद्यया । इति शुश्रुम धीराणा ये नस्तद्विचचक्षिरे ॥ १० ॥ इति । अन्यत् पृथगेव विद्यया क्रियते फलमिति आहुः वदन्ति वेदाः[2] । अन्यदाहुरविद्यया कर्मणा क्रियते [ फलम् ] इति । तथा चोक्तम्-"कर्मणा पितृलोकः, विद्यया देवलोकः" [ बृह० १।५।१६ ] इति । [इति] एवम् । शुश्रुम श्रुतवन्तो वयम् । धीराणा धीमता वचनम् । ये आचार्या नः अस्मभ्यम् । तत्कर्म च ज्ञान च विचचक्षिरे व्याख्यातवन्तः, तेषामयमागमः पारम्पर्यागत इत्यर्थः ॥ १० ॥

विद्यां चाविद्यां च यस्तद्वेदोभयꣳ सह ।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥ ११ ॥

( ख० ) यत एवम् [अतः] विद्या च अविद्या चेति देवताज्ञानं कर्म चेत्यर्थः । यस्तद्वेद तदुभय ज्ञान कर्म च सह एकेन रूपेणानुष्ठेयं यो वेद, तस्यैव समुच्चयकारिण एकपुरुषार्थसबन्धक्रमेण किं स्यादित्युच्यते-अविद्यया मृत्यु तीर्त्वेति । अविद्यया कर्मणा अग्निहोत्रादिना । मृत्युम्, स्वाभाविकं

---

१ एव-शां० ।　　२ 'वेदाः' नास्ति-शां० ।

रागतः क्रियमाणं कर्म ज्ञानं च मृत्युशब्दवाच्यम् । तदुभयं तीर्त्वा अतिक्रम्य । विद्यया वेदान्तज्ञानेन। अमृतं देवतात्मभावम् । अश्नुते व्याप्नोति । [1]तद्धयमृतमुच्यते, यद्देवतात्मगमनम्॥११॥

( क० ) पाठस्तु—विद्यां चाविद्यां च यस्तद्वेदोभयꣳ सह । अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते ॥११॥ इति । यत एवम् [अतः] विद्या चाविद्या च देवताज्ञानं कर्म चेत्यर्थः । यस्तत् एतदुभयं सह एके[न] पुरुषेण अनुष्ठेयं वेद, तस्यैवं समुच्चयकारिण [ एक ]एकपुरुषार्थसंबन्धः क्रमेण स्यादित्युच्यते-अविद्यया कर्मणा अग्निहोत्रादिना । मृत्युम्, स्वाभाविक कर्म ज्ञान च मृत्युशब्दवाच्यम्, उभय तीर्त्वा अतिक्रम्य। विद्यया देवताज्ञानेन। अमृतं देवतात्म-[भावम् ?] भावम् । अश्नुते प्राप्नोति । तद्धयमृतमुच्यते, यद्देवतात्मगमनम् ॥ ११ ॥

अन्धं तमः प्रविशन्ति येऽसंभूतिमुपासते ।
ततो भूय इव ते तमो य उ संभूत्याꣳ रताः ॥ १२ ॥

( ख० ) अधुना व्याकृताव्याकृतोपासनयोः समुच्चिचीषया प्रत्येकं निन्दोच्यते—अन्धं तम इति । अन्ध तमः प्रविशन्ति । के ? येऽसंभूतिम्, संभवन सभूतिः,सा यस्य कार्यस्य [सा] संभूतिः, तस्या अन्या असभूतिः प्रकृतिः, प्रक्रियते कार्यं यया [2]सा प्रकृतिः, कारणमव्याकृताख्यम्[3], तामसभूतिमव्याकृताख्या प्रकृति कारणमविद्या कामकर्मबीजभूतामदर्शनात्मिकामुपासते [ये]; ते तदनुरूपमेव फलम्, तमः अदर्शनात्मक प्रविशन्ति । ततः तस्मादपि भूयो बहुतरमिव तमः प्रविशन्ति। के ? य उ एव । सभूत्या रताः, सभूत्या कार्यब्रह्मणि हिरण्यगर्भाख्य एव रताः । ते ततो भूय इव तमः प्रविशन्ति ॥ १२ ॥

( क० ) अधुना व्याकृताऽव्याकृतोपासनयोः समुच्चिचीषया प्रत्येक निन्दोच्यते । पाठस्तु—अन्ध तमः प्रविशन्ति येऽसंभूतिमुपासते । ततो भूय इव ते तमो य उ सभूत्याꣳ रताः ॥ १२ ॥ इति । येऽसभूतिम्, [ सवनं ? संभवनं ] संभूतिः, सा यस्य कार्यस्य सा संभूतिः, तस्या अन्या असभूतिः प्रकृतिः कारणमव्याकृताख्यम्, तामसंभूतिमव्याकृताख्या प्रकृतिं कारणमविद्या [काम]कर्मबीजभूतामदर्शनात्मिकाम् उपासते ये, ते तदनुरूपमेव अन्धं तमः अदर्शनात्मक प्रविशन्ति । ततः तस्मादपि भूयो बहुतरमिव तमः [ ते ] प्रविशन्ति ये उ संभूत्या कार्यब्रह्मणि हिरण्यगर्भाख्ये रताः ॥ १२ ॥

---

१ तद्वदत्रामृतमश्नुते-ख-आ० । २ 'सा' नास्ति-आ० । ३ अव्याकृताख्याम्-आ० ।

गुणकः ३६ क २० क ५ नखशरमितयोर्योगे कृते जातो गुणकः–क ४५ क ३६

गुणिते जातं तदेव–रू २१ क ७२०

अपि च—

रूपद्वयाढ्यकरणीद्वितयेन निघ्ना दन्तस्मृतीनयु[गु[1]ग]लप्रमिताः करण्यः ।
किं स्यात्फलं कथय यस्त्वरितं करण्या निघ्ना यमलोन्मितयाथवा ताः ॥ १७ ॥

प्रथमं न्यासः–गुण्यः क ३२ क १८ क ८ क २ गुणकः क ४ क २

गुणिते जातम्–क १२८ क ७२ क ६४ क ३६ क ३२ क १६ क ८ क ४

एतास्वासाम्–क ६४ क ३६ क १६ क ४ मूलानि रू ८ रू ६ रू ४ रू २

योगे रू २० पुनरेताः–क ६४ क ३६ क १६ क ४ द्विकेन च्छिन्नाः ।

आसां मूलयुतिः–२० स्वघ्ना ४०० पूर्वच्छेदेन गुणिता जाता करणीनां योगः ८००

यथाक्रमं न्यासः– रू २० क ८०० अथवा गुण्यकरणीनां योगः क २००

गुणकः क ४ क २ गुणितं जातम्–( [1]वर्गकरणीनां योगः ८०० पूर्वावर्ग ) तदेव रू २० क ८००

द्वितीयोदाहरणे गुण्यः– क ३२ क १८ क ८ क २ गुणकः क ८ क २ गुणिते योगे च कृते जातम्– रू ६०

इति करणीगुणनम् ॥

---

अत्र $-\sqrt{१२९६} = -३६$ ( क्षयगतकरणीमूलं क्षयागतं भवतीत्यादिपूर्वोक्तेन )

तथा $\sqrt{१६२०} - \sqrt{१८०} = \sqrt{७२०}$

$\sqrt{१६२०} - \sqrt{१८०}$
अत्र १८० अपवर्तनाङ्केनापवर्त्य
$\sqrt{९} - \sqrt{१} = ३ - १ = २ = \sqrt{४}$
अपवर्तनाङ्केन गुणिते $\sqrt{४ \times १८०} = \sqrt{७२०}$

तथा $\sqrt{२२५} = १५$

∴ गुणनफलम् $= -३६ + १५ + \sqrt{७२०}$
$= -२१ + \sqrt{७२०}$

सुगममन्यत् ।

१ कोष्ठान्तर्गतः पाठोऽसंबद्धः प्रतीयते ।

करणीभागहारे सूत्रम्—

[1]छेदकरण्यो निखिलाः कत्यपि वा वर्गसिद्धये हन्यात् ।
तासां मूलसमासो रूपसमानो यथा भवति ॥ ३३ ॥
लब्धकरण्यो गुणकास्तद्गुणहारं त्यजेद्भाज्यात् ।
शुद्धिर्न भवेद्यदि वा तद्गुणकच्छेदकरणीनाम् ॥ ३४ ॥
योगमपि भाज्यराशेर्जह्यात् सदृशखण्डे च ।
रूपाभावे हारो येन घ्नः शुद्ध्यति तत्फलं स्यात् ॥ ३५ ॥

पूर्वगुणफलस्य स्वगुणच्छेदस्य भागार्थं [2]न्यासः—

| रू ५ क ६४८ क १८० क ९० | रू २१ क ७२० | रू २० क ८०० |
|---|---|---|
| छेदः क ३६ क ५ | छेदः क ३६ क ५ | छेदः क ४ क २ |

---

१ छेदकरण्य इति । येनाङ्केन गुणितस्य हारस्य भाज्याङ्के व्यवकलन संभवेत्तस्य हारेण ( छेदेन ) घातं कृत्वा भाज्यतो व्यवकलनं कार्यम् । तावदेषा क्रिया कार्या यावन्न भाज्यसमाप्तिः स्यात् । एव भागफलं लभ्यते । अथवा, समेन केनाप्यङ्केन यदि भाज्यहारौ निहन्येते तदा लब्धिरस्त्वविकृतैव भवेत् । तत्र यदि भाजकस्थितााया एकस्याः करण्या धनर्णताव्यत्ययं कृत्वा तादृशेनेष्टेन भाज्यभाज्यकावुभौ गुण्येते तदापि फले नास्ति विकृतिः । एव च योगान्तरयोर्घातो वर्गान्तरसम इति नियमेन भाजके करण्यन्तरतुल्यरूपराशिरुत्पद्यते, तथा करणीनामप्यल्पत्वं च जायते । एवमसकृत्करणेनान्त एकैव करणी भाजकेऽवशिष्यते । अनयापि रीत्या भागफल सुलभम् । "छेदेऽभीष्टकरण्या क्षयधनताव्यत्ययोऽसकृत्कार्यः" [ श्लो० ३७ ] इत्याद्याचार्योक्तवचनमप्यत एव संगच्छते ।

२ यथा—भाज्यः $५ + \sqrt{६४८} + \sqrt{१८०} + \sqrt{९०}$ ।

भाजक. $\sqrt{३६} + \sqrt{५}$

$$= \frac{५ + \sqrt{६४८} + \sqrt{१८०} + \sqrt{९०}}{\sqrt{३६} + \sqrt{५}} = \sqrt{५} + \sqrt{१८}$$

एवं सर्वत्र ।

$\sqrt{३६} + \sqrt{५}$ ) $\sqrt{२५} + \sqrt{६४८} + \sqrt{१८०} + \sqrt{९०}$ ( $\sqrt{५}$
$\sqrt{२५}$ $+ \sqrt{१८०}$
× ×

$\sqrt{३६} + \sqrt{५}$ ) $\sqrt{६४८} + \sqrt{९०}$ ( $\sqrt{१८}$
$\sqrt{६४८} + \sqrt{९०}$
×

प्रथमोदाहरणे च्छेदकरण्यो निखिलाः कत्यपि वा वर्गसिद्धये हन्यादिति च्छेदकरणी क ३६ क ५ एतयोरियं ५ वर्गसिद्धये पञ्चगुणिता २५ अस्या मूलं ५ रूपसमं रू ५ एतत्समकरण्यो गुणः क ५ एतद्गुणं हरं रू ५ क १८० भाज्याद्विशोध्य शेषं क ६४८ क ९० रूपाभावे हरो येन घ्नः शुद्ध्यति तत्फलं स्यादिति। अष्टादश-करण्या गुणं हरं भाज्याद्विशोध्य लब्धं करणी १८ इति लब्धो गुणः–क २५ क १८

द्वितीयोदाहरणे–षट्त्रिंशत्करणीमृणषट्त्रिंशत्करण्या क ३६ पञ्च करणी पञ्च चत्वारिंशत्करण्या ४५ सङ्गुण्य जातं क १२९६ क २२५ मूलैक्यं रूपसमम्। करण्यौ–क ३६ क ४५ एतद्गुणं हरं भाज्याद्विशोध्य लब्धं करणी–क ३६ क ४५

| | |
|---|---|
| तृतीयोदाहरणे–रू २० क ८००<br>छेद. क ४ क २ | अत्र च्छेदे द्विकरणी द्विशतकरण्या क २०० |

सङ्गुण्य जातं क ४०० मूलं रूपसमं रू २० द्विशत्या गुणं हरं भाज्याच्छोध्य लब्धं करणी क २००।

| | |
|---|---|
| चतुर्थोदाहरणे रू ६०<br>छे० क १८ | अत्र द्विशतकरण्या गुणितं हरं भाज्याद्विशोध्य लब्धं |

करणी क २०० यथाक्रमं लब्धकरण्यः क १८ क ५ क ३६ क ४५ क २००। क २००

[1]करणीविश्लेषणे सूत्रम्—

योगजकरणीकृत्या कयापि शुद्धिर्यथा भजेद्विभजेत्।
तत्खण्डानि स्वगुणितानि लब्ध्या हतानि च करण्यः॥ ३६॥

पूर्वं खण्डत्रयमासीदिति प्रथमलब्धकरणी–क १८ क ५ अत्र योगजकरणी १८

---

१ करणीविश्लेषण इति। गुणनखण्डेनैव सुगमं योगजकरणीनां पृथक्करणम्। यथा पूर्वोक्त-भागहारोदाहरणे। प्रथमोदाहरणे—

लब्धि. $= \sqrt{१८} + \sqrt{५} = \sqrt{९ \times २} + \sqrt{५} = ३\sqrt{२} + \sqrt{५}$

$= २\sqrt{२} + १\sqrt{२} + \sqrt{५} = \sqrt{८} + \sqrt{२} + \sqrt{५}$

एव द्वितीयोदाहरणेऽपि $\sqrt{४५} =$

इय योगजकरणी गुणनखण्डरीत्या पृथग् भवति। यथा लब्धिः $= \sqrt{३६} + \sqrt{४५}$

$= \sqrt{३६} + \sqrt{९ \times ५} = \sqrt{३६} + ३\sqrt{५} = \sqrt{३६} + २\sqrt{५} + १\sqrt{५}$

$= \sqrt{३६} + \sqrt{२०} + \sqrt{५}$ एवमग्रेऽपि।

त्रिवर्गेण ९ हृता लब्धम्–क २ त्रयाणां रू २ रू १ स्वघ्ने क ४ क १ लब्ध क २ गुणिते जाते करणी खण्डे क ८ क २ एवं लब्धम्–क ८ क ५ क २

द्वितीयोदाहरणे लब्धम्–क ३६ क ५ तृतीयस्य खण्डचतुष्टयमासीदिति इय क २०० दशवर्गाच्छताल्लब्धं क २ दशानां खण्डानि रू ४ रू ३ रू २ रू १ एतानि स्वगुणानि क १६ क ९ क ४ क १ लब्धम् क २ हतानि क ३२ क १८ क ८ क २ जाता लब्धकरण्यः–

चतुर्थोदाहरणेऽप्येता एव–क ३२ क १८ क ८ क २

अपि च—

बाणाग्नय: खदहनाः शशिलोचनानि वस्विन्दवोऽब्धिशशिनो यमलेन्दवश्च ।
खण्डानि तानि करणीशरताडितानि द्वित्रीषुखण्डविहृतानि सखे फलं किम् ॥१८॥

न्यासः—भाज्यः–क १७५ क १५० क १०५ क ९० क ७० क ६०

भाजकः क ५ क ३ क २ रूपाभावे हारो येन निघ्न: फलं स्यादिति ।

प्राग्वद्भागे हृते जातम्–क ३५ क ३०

अथवान्यथोच्यते—

[1]छेदेऽभीष्टकरण्याः क्षयधनताव्यत्ययोऽसकृत्कार्यः ।
भाज्यहारौ संगुणयेद्यावच्छेदे करण्यैका ॥ ३७ ॥

---

१ द्वितीयप्रकारोक्तनियमेन छेदे ( भाजके ) $\sqrt{५}$ ऋणत्वं प्रकल्प्य भाज्यहारौ $(\sqrt{३६}-\sqrt{५})$ अनेन सगुण्य भागफलानयनम् । यथा—भाज्य: $= \sqrt{२५}+\sqrt{६४८}+\sqrt{१८०}+\sqrt{९०}$ ।

भाजकः $= \sqrt{३६}+\sqrt{५}$

$$\because \frac{\text{भाज्य:}}{\text{भाजक}} = (\sqrt{२५}+\sqrt{६४८}+\sqrt{१८०}+\sqrt{९०}) \div \sqrt{३६}+\sqrt{५}$$

$$= \{(\sqrt{२५}+\sqrt{६४८}+\sqrt{१८०}+\sqrt{९०})(\sqrt{३६}-\sqrt{५})\} \div (\sqrt{३६}+\sqrt{५})(\sqrt{३६}-\sqrt{५})$$

$$= \{\sqrt{९००}-\sqrt{३२४०}-\sqrt{९००}-\sqrt{४५०}-\sqrt{१२५}+\sqrt{२३३२८}+\sqrt{६४८०}+\sqrt{३२४०}\} \div (\sqrt{१२९६}+\sqrt{१८०}-\sqrt{१८०}-२५)$$

$$= \{३०-३०+\sqrt{२३३२८}-\sqrt{४५०}+\sqrt{६४८०}-\sqrt{१२५}\} \div (३६-५)$$

विभजेत्तया करण्या भाज्योद्भूताः करण्यश्च ।
लब्धा योगजकरणी चेत्स्याद्विश्लेषणं प्राग्वत् ॥ ३८ ॥

प्रथमोदाहरणे भागार्थं न्यासः—क २५ क ६४८ क १८० क ९०
छेदः क ३६ क ५

छिदेऽभीष्टकरण्या ऋणधनताव्यत्ययोऽसकृत्कार्य इति च्छेदकरण्योः पञ्च-मिताया ऋणत्वं प्रकल्प्य क ३६ क ५ अनया हृते भाज्ये योगे च कृते जातम्—क १७२९८ क ४८०५ छेदके च क ९६१ अनया हृते भाज्ये लब्धो गुणकः क १८ क ५ प्राग्वद्विश्लेषणे जातम्- क ८ क ५ क २

[1]द्वितीयोदाहरणे न्यासः- रू २१ क ७२०
छेद क ३६ क ५

---

$= \{(\sqrt{१२९६ \times १८} - \sqrt{२५ \times १८}) + (\sqrt{१२९६ \times ५} - \sqrt{२५ \times ५})\} \div ३१$

$= \{(३६\sqrt{१८} - ५\sqrt{१८}) + (३६\sqrt{५} - ५\sqrt{५})\} \div \sqrt{९६१}$

$= \{(३६ - ५)\sqrt{१८} + (३६ - ५)\sqrt{५}\} \div \sqrt{९६१}$

$= \{३१\sqrt{१८} + ३१\sqrt{५}\} \div \sqrt{९६१}$

$= \{\sqrt{१७२९८} + \sqrt{४८०५}\} \div \sqrt{९६१}$

$= \dfrac{\sqrt{१७२९८} + \sqrt{४८०५}}{\sqrt{९६१}} = \sqrt{१८} + \sqrt{५}$ = भागफलम् = लब्धि. ।

परन्तु $\sqrt{१८} + \sqrt{५}$ इत्यत्र $\sqrt{१८}$ इय योगजकरणी

∵ खण्डगुणनद्वारा पृथक्करणम् ( विश्लेषण वा ) ।

∵ $\sqrt{१८} = \sqrt{२ \times ९} = ३\sqrt{२} = (२\sqrt{२} + १\sqrt{२}) = \sqrt{८} + \sqrt{२}$

∴ $\sqrt{१८} + \sqrt{५} = \sqrt{८} + \sqrt{५} + \sqrt{२}$ = भजनफलम् ।

1 एव द्वितीयोदाहरणे—

भाज्य = $-२१ + \sqrt{७२०}$, भाजक $\sqrt{३६} + \sqrt{५}$

अत्र भाजके $\sqrt{५}$ इत्यस्य ऋणत्व प्रकल्प्य $\sqrt{३६} - \sqrt{५}$ इत्यनेन भाज्यभाजकयोरुभयोरपि निहतत्वे सति—

$\{(-\sqrt{४४१} + \sqrt{७२०}, (\sqrt{३६} - \sqrt{५})\} - (\sqrt{३६} + \sqrt{५})(\sqrt{३६} - \sqrt{५})$

अत्र च्छेदे पञ्चमितकरण्या ऋणत्वं प्रकल्प्य भाज्ये गुणिते योगे च कृते जातम्- रू १८६ं क ४३२४५ छेदे च क ९६१ अनेन भाज्ये हृते विश्लेषसूत्रेण पृथक्कृते च जातम् क ३६ं क २० क ५

---

$$= \left\{-\sqrt{\text{१५८७६}}+\sqrt{\text{२५९२०}}+\sqrt{\text{२२०५}}-\sqrt{\text{३६००}}\right\} \div \left(\sqrt{\text{१२९६}}+\sqrt{\text{१८०}}-\sqrt{\text{१८०}}-\sqrt{\text{..}}\right)$$

$$= \left\{-\text{१२६}-\text{६०}+\sqrt{\text{२५९२०}}+\sqrt{\text{२२०५}}\right\} - (\text{३६}-\text{५})$$

$$= \left\{-\text{१८६}+\sqrt{\text{५७६}\times\text{९}\times\text{५}}+\sqrt{\text{४९}\times\text{९}\times\text{५}}\right\} \div \text{३१}$$

$$= \left\{-\text{१८६}+(\text{२४}\times\text{३})\sqrt{\text{५}}+(\text{७}\times\text{३})\sqrt{\text{५}}\right\} \div \sqrt{\text{९६१}}$$

$$= \left\{-\text{१८६}+\text{७२}\sqrt{\text{५}}+\text{२१}\sqrt{\text{५}}\right\} \div \sqrt{\text{५६१}}$$

$$= \left\{-\text{१८६}+\text{७२}\sqrt{\text{५}}+\text{२१}\sqrt{\text{५}}\right\} - \sqrt{\text{९६१}}$$

$$= \left\{-\text{१८६}+(\text{७२}+\text{२१})\sqrt{\text{५}}\right\} - \sqrt{\text{९६१}}$$

$$= \left\{-\text{१८६}+\text{९३}\sqrt{\text{५}}\right\} \div \sqrt{\text{९६१}}$$

$$= \left\{-\text{१८६}+\sqrt{\text{४३२४५}}\right\} \div \sqrt{\text{९६१}}$$

$$= \frac{-\text{१८६}+\sqrt{\text{४३२४५}}}{\sqrt{\text{९६१}}}$$

$$= -\sqrt{\text{३६}}+\sqrt{\text{४५}}$$

अत्र $\sqrt{\text{४५}}$ इय योगजकरणी

$$= \sqrt{\text{९}\times\text{५}} = \text{३}\sqrt{\text{५}}$$

$$= \sqrt{\text{२}}\sqrt{\text{५}}+\text{१}\sqrt{\text{५}}$$

$$= \sqrt{\text{२०}}+\sqrt{\text{५}}$$

$\sqrt{\text{९६१}}\,)\; -\text{१८६}+\sqrt{\text{४३२४५}}\;($

$\sqrt{\text{९६१}}\,)\; -\sqrt{\text{३४५९६}}+\sqrt{\text{४३२४५}}\;(-\sqrt{\text{३६}}+\sqrt{\text{४५}}$

$-\sqrt{\text{३४५९६}}$

$\times\sqrt{\text{४३२४५}}$

$\sqrt{\text{४३२४५}}$

$\times$

$$= -\sqrt{\text{३६}}+\sqrt{\text{२०}}+\sqrt{\text{५}}$$

= भागफलम्

एवमन्योदाहरणमपि सुस्पष्टमेव ।

तृतीयोदाहरणे न्यासः– क ४०० क ८००
छेदः क ४ क २

अत्र चतुःकरण्या ऋणत्वं प्रकल्प्य विश्लेषणे जातम्– क ३२ क १८ क ८ क २

चतुर्थे न्यासः– क ३६००
छेदः क १८

यावच्छेदे करण्यैकेति स्वयमेवैकतया हृते भाज्ये हृते लब्धम्– क २०० विश्लेषिते जातम्– क ३२ क १८ क ८ क २

अनन्तरोक्तोदाहरणस्य न्यासः–क १७५ क १५० क १०५ क ९० क ७० क ६०
छेदकः क ५ क ३ क २

अत्र च्छेदकरणीषु द्विकरण्या ऋणत्वं प्रकल्प्य जातम्–क ५ क ३ क २

अनया भाज्ये गुणिते योगे च कृते जातम्–क २१०० क १८०० क १२६० क १०८० छेदके च क ३६ क ६०

अत्र षट्त्रिंशत्करण्या ऋणत्वं प्रकल्प्य जातम्–क ३६ क ६० अनया भाज्ये गुणिते योगे च कृते जातम्–क २०१६० क १७२८० छेदे च जातम्–क ५७६ अनया भाज्येऽस्मिन् क २०१६० क १७२८० हृते लब्धम्–क ३५ क ३० करणीखण्डेषु ययोर्ययोर्योगसंभवोऽप्यस्ति तयोर्योगं कृत्वा गुणनभजनवर्गवर्गमूलानि कार्याणि ॥

इति करणीभागहारः ॥

---

[1]अथ करणीवर्गे सूत्रम् -

धनगतकरणीनां वा क्षयगानां तत्समानरूपाणि ।
स्युर्धनगतानि वर्गे शेषाः स्वमृणोपलक्ष्यास्ताः ॥ ३९ ॥
अन्तरकरणीवर्गे सप्राप्तेऽपि च तयोर्धनक्षययोः ।
व्यस्तं स्वर्णं सुधिया कार्यं वर्गस्तयोस्तुल्यः ॥ ४० ॥

---

१ करणीवर्ग इति । समद्विघात. कृति स्यादिति प्रसिद्धनियमात् करणीवर्गानयनमपि सुगमम् । अथवा प्रकारान्तरेणापि–''स्थाप्योऽन्त्यवर्गः'' इत्यादिरीत्याऽपि वर्गो विधेय, परन्तु करणी-

उदाहरणम्—

वर्गं करण्योर्द्विकरामभित्योस्त्रिषट्द्विकानां च पृथग्वदाशु ।
सप्तद्विपञ्चत्रिकसमितानामङ्केषु रामाक्षिमहीमितानाम् ॥
दन्तस्मृतीभद्विकसंमितानां चेद्वेत्सि विद्वन्करणीविधानम् ॥१९॥

न्यासः— अलघुपूर्वकं न्यस्ताः क २ क ३ । क ६ क ३ क २ । क ७ क ५ क ३ क २ । क ६ क ५ क ३ क २ क १ । क ३२ क १८ क ८ क २

जाता यथाक्रमं वर्गाः रू ५ क २४, रू ११ क ७२ क ४८ क २४, रू १७ क १४० क ८४ क ५६ क ६० क ४० क २४, रू १७ क १२० क ७२ क ४८ क २४ क ६० क ४० क २० क २४ क १२ क ८ ।

पञ्चमोदाहरणे क ३२ क १८ क ८ क २ योगे जातम् क २०० अस्य वर्गः रू २००

उदाहरणम्—

पञ्चत्रिमितकरण्योरन्तरवर्गं वदाशु मे विद्वन् ।
पञ्चत्रिद्विमितानां स्वस्वर्णानामृणाणधनगानाम् ॥ २० ॥

---

विषये स्थाप्योऽन्त्यवर्गस्तथापरेऽङ्काश्चतुर्गुणान्त्यनिघ्ना' स्थाप्या. "वर्गेण वर्गं गुणयेद्भजेच्च" इत्युक्तत्वात् । यथा—

$(\sqrt{२}+\sqrt{३})^२$
$=(\sqrt{२}+\sqrt{३})(\sqrt{२}+\sqrt{३})$
$=५+\sqrt{२४}$

अथवा स्थाप्योऽन्त्यवर्ग इत्यादिनापि वर्ग
$=२+\sqrt{२४}+३=५+\sqrt{२४}$
एवमग्रेऽपि ।

$\sqrt{२}+\sqrt{३}$
$\sqrt{२}+\sqrt{३}$
$\sqrt{४}+\sqrt{६}+\sqrt{६}+\sqrt{९}$
$=२+\sqrt{६}+\sqrt{६}+३$
$=५+\sqrt{६}+\sqrt{६}$

परन्तु $\sqrt{६}+\sqrt{६}$ अत्र ६ अनेन गुणितम्
$\sqrt{३६}+\sqrt{३६}=६+६=\sqrt{१४४}$
$\sqrt{\frac{१४४}{६}}=\sqrt{२४}$
$=५+\sqrt{२४}$

# सारस्वती सुषमा

( त्रैमासिकी )

## अष्टम-वर्ष-विषय-सूची


उत्तरप्रदेशे संस्कृतशिक्षाया. प्रगति.—श्रीरामनरेशमिश्रः, एम० ए०, साहित्याचार्यः। ५५

कला तत्प्रयोजनं च ( पूर्वतोऽनुवृत्तम् )—श्रीद्विजेन्द्रनाथमिश्रः, साहित्याचार्यः। १६८

कामीयम्—श्री अनन्तशास्त्री फडके, पुराणाध्यापकः। २६६

कुलपतिभाषणम्—श्रीत्रिभुवनप्रसादोपाध्यायः, एम० ए०, व्याकरणाचार्य.। २३२

गर्भे गुणदोषसङ्क्रमणविमर्श —श्रीरघुनाथशर्मा, व्याकरणाचार्यः। १७

गौडपादीयं दर्शनम्—श्रीरघुनाथशर्मा, व्याकरणाचार्यः। २३४

चार्वाकदर्शनरहस्यम्—श्री आनन्दझा, न्यायाचार्य.। २५०

जीवनेतिवृत्तम्—

म० म० खिस्तेश्रीनारायणशास्त्रिणाम्—श्रीबटुकनाथशास्त्री खिस्ते, साहित्याचार्यः। २८३

मोकाटेश्रीगणपतिशास्त्रिणाम्—श्रीमुरलीधरमिश्रः, व्याकरणाचार्यः। २८०

दीक्षान्तभाषणम्—श्रीसम्पूर्णानन्दमहोदयः, उत्तरप्रदेशगृहमन्त्री। २८५

नवभारते वर्णाश्रमव्यवस्था आवश्यकी न वा ?—पण्डितराजराजेश्वरशास्त्री द्राविडः। १४३

न्यायनये शब्दार्थसम्बन्धविचारः—श्रीबदरीनाथशुक्लः, एम० ए०, न्यायवेदान्ताचार्यः। २०४

पाश्चात्यसाहित्यसिद्धान्तः—श्रीद्विजेन्द्रनाथमिश्रः, साहित्याचार्यः। २७५

प्राचीनपाठनिर्णयकुञ्जिका—श्रीरामाज्ञापाण्डेयः, व्याकरणाचार्यः। १५६

बार्हस्पत्यम्—श्री अनन्तशास्त्री फडके, पुराणाध्यापकः। ४१

भागवृत्तिसंकलनम्—श्रीयुधिष्ठिरमीमांसकः। १, ८३

भागवृत्तिसंकलनपरिशिष्टम्—श्रीयुधिष्ठिरमीमांसकः। २२७

भारतशतकम् ( खण्डकाव्यम् )—श्रीमहादेवशास्त्री पाण्डेयः, कवितार्किकचक्रवर्ती। १७६

मायाजालम् ( आख्यायिका )—पण्डिता क्षमाराव, मुम्बापुरी। १६५

## अष्टम-वर्ष-विषय-सूची


| | |
|---|---|
| राहुग्रासः—ब्रह्मचारी गिरिजाप्रकाशः, काशी । | १३६ |
| रूपस्वरूपविमर्श·—श्री अवधविहारी त्रिपाठी, ज्यौतिषाचार्य· । | २६२ |
| विद्वद्गोष्ठ्या विशिष्ट· कार्यक्रम ( विवरणम् ) | ५७ |
| वेदान्तावतारः—श्रीशान्तिभिक्षुशास्त्री, शान्तिनिकेतनस्थः । | १०७ |
| शाब्दिकमते शब्दशक्तिस्वरूपम्—श्रीभूपनारायणझा, व्याकरणाचार्यः । | २०६ |
| षष्टितन्त्रम—श्रीमामराजदत्तः कापिलः, एम० ए० । | १३१ |
| संस्कृतभाषाया· क्रमिको ह्रासः—श्री·अजयमित्रशास्त्री, काशी । | १७२ |
| समासवृत्तिविचार —श्रीकृष्णशास्त्री मोकाटे, व्याकरणाचार्यः । | ४६ |
| साक्षिस्वरूपविचार·—श्रीमुरलीधरमिश्र·, व्याकरणाचार्यः । | १२३ |
| हिन्दूधर्मसंहिताविमर्श·—श्रीरघुनाथशर्मा, व्याकरणाचार्यः । | १४७ |


## विविधम्


| | |
|---|---|
| अन्यतमस्य कर्पूरमञ्जरीश्लोकस्य समीक्षा—श्रीशान्तिभिक्षुशास्त्री, शान्तिनिकेतनम् । | ६८ |
| अन्यतमस्य फिट्सूत्रस्य समीक्षा—श्रीशान्तिभिक्षुशास्त्री, शान्तिनिकेतनम् । | ७० |
| कालिदासीयपद्येऽस्थानस्थपदता ?—श्रीरघुनाथशर्मा, काशी । | २२१ |
| दीर्घजिह्वी—श्रीशान्तिभिक्षुशास्त्री, शान्तिनिकेतनम् । | ३१० |
| फिट्सूत्रसमीक्षा—श्रीरामशङ्करभट्टाचार्यः, काशी । | २२३ |
| ब्राह्मणारण्यकोपनिषद —श्रीव्रजवल्लभद्विवेदः, काशी । | ७३ |
| महाभाष्यपाठद्वयविमर्शः—श्रीरामशङ्करभट्टाचार्यः, काशी । | ७२ |
| महाभाष्यपाठविमर्शः—श्रीरामशङ्करभट्टाचार्यः, काशी । | २२२ |
| महीधरीयमनादिदीपविवरणम्—श्रीव्रजवल्लभद्विवेदः, काशी । | ३०३ |
| राजशेखरीयकाव्यमीमांसाया रचनास्थानम्—डा० दशरथशर्मा, दिल्ली । | ३०१ |
| वास्तवचन्द्रश्रृङ्गोन्नतौ स्थलविशेषद्वयविमर्श —श्रीमीठालाल ओझा, काशी । | २१६ |
| विश्वकथासाहित्ये पञ्चतन्त्रस्य स्थानम्—श्रीव्रजवल्लभद्विवेदः, काशी । | ७४ |
| शून्य-निःस्वभाव-निरालम्बशब्दार्थविचार·—श्रीजगन्नाथ उपाध्यायः, काशी । | २१४ |
| सिद्धान्तकौमुदीपाठविमर्शः—श्रीरामशङ्करभट्टाचार्यः, काशी । | २२३ |
| सिद्धान्ततत्त्वविवेकीयभूभास्वरूपविमर्शः—श्रीमीठालाल ओझा, काशी । | ३११ |

## अष्टम-वर्ष-विषय-सूची

### सम्पादकीयम्


अष्टमवर्षप्रवेश — ७६

देवनागरीलिपिप्रतिसंस्कारसम्मेलनम् — २२४

वेधशालानिर्माणे प्रगति — ७७

संस्कृतपरीक्षाणा लोकप्रियता — ८१

संस्कृतविश्वपरिषद् प्रचारकार्यम् — ८१

संस्कृतविश्वविद्यालय. — ३१३

सरस्वतीभवनग्रन्थानां बृहत्सूची — ८०

स्वर्गीया पण्डिता क्षमादेवी 'राव' — ३१६

स्वर्गीया. पण्डितश्रीत्रिभुवनप्रसादोपाध्यायाः — ३१२

हस्तलेखानामुपेक्षा — ३१५


### ग्रन्थाः


काण्वसहिताभाष्यसग्रह. ( ३३-४० अध्याया. ) आनन्दबोधभट्टोपाध्यायप्रणीत' ।
डा० सुभद्रझा व्रजवल्लभद्विवेदाभ्या सपादितः । ९७-१६२

प्रत्यङ्गिरासूक्तम् ( पिप्पलादशाखीयम् ) वासुदेवद्विवेदविरचितव्याख्यानसहितम् ।
डा०सुभद्रझा-व्रजवल्लभद्विवेदाभ्या सपादितम् । २५-३२

बीजगणितावतसः ( गणितज्यौतिषम् ) नारायणपण्डितविरचितः ।
श्रीचन्द्रभानुपाण्डेयेन सपादितः । १-३२

# विनिमयाधिगत-पत्रिकाः

१ आलोचना ( हिन्दी ), दिल्ली ।
२ ईस्ट ऐण्ड वेस्ट, इटली ।
३ एपिग्राफिया इण्डिका, उटकमण्ड ।
४ ऐनल्स आफ दि भण्डारकर ओरियण्टल रिसर्च इस्टीट्यूट, पूना ।
५ क्वार्टर्ली जर्नल आफ दि मिथिक सोसाइटी, बेङ्गलोर ।
६ जर्नल आफ दि अमेरिकन ओरियण्टल सोसाइटी, न्यूहैवेन, कनेक्टिकट ( यू० एस० ए० )
७ जर्नल आफ दि आन्ध्र हिस्टोरिकल रिसर्च सोसाइटी, राजमहेन्द्री ।
८ जर्नल आफ दि ओरियण्टल इंस्टीट्यूट, बड़ौदा ।
९ जर्नल आफ दि ट्रावनकोर यूनिवर्सिटी ओरियण्टल मैन्सक्रिप्ट लाइब्रेरी, त्रिवेन्द्रम् ।
१० जर्नल आफ दि यूनिवर्सिटी आफ बाम्बे, बम्बई ।
११ जर्नल आफ दि रॉयल एशियाटिक सोसाइटी, लन्दन ।
१२ जर्नल आफ दि वेङ्कटेश्वर ओरियण्टल इस्टीट्यूट, तिरुपति ।
१३ जूर्नल द लेकोल फ्रान्सेज एक्स्त्रेम ओरिआँ, हनोई, इण्डोचाइना ।
१४ दि इण्डियन हिस्टोरिकल क्वार्टर्ली, कलकत्ता ।
१५ दि जर्नल आफ ओरियण्टल रिसर्च, मद्रास ।
१६ दि जर्नल आफ दि उत्तरप्रदेश हिस्टोरिकल सोसाइटी, लखनऊ ।
१७ दि जर्नल आफ दि बिहार रिसर्च सोसाइटी, पटना ।
१८ दि फिलासफिकल क्वार्टर्ली, आमलनेर ( ईस्ट खानदेश ) ।
१९ दि विश्वभारती क्वार्टर्ली, शान्तिनिकेतन ।
२० नागरी प्रचारिणी पत्रिका ( हिन्दी ), काशी ।
२१ पूना ओरियण्टलिस्ट , पूना ।
२२ बुलेटिन आनालितिक, पेरिस ।
२३ बुलेटिन आफ दि डेक्कन कालेज रिसर्च इंस्टीट्यूट, पूना ।
२४ ब्रह्मविद्या, अड्यार, मद्रास ।
२५ भारतीयविद्या, बम्बई ।
२६ भारतीय विद्याभवन बुलेटिन, बम्बई ।
२७ वाक्, डेक्कन कालेज, पूना ।
२८ वेदवाणी ( हिन्दी ), बनारस ।
२९ संस्कृतसाकेतः, अयोध्या ।
३० संस्कृतम्, अयोध्या ।
३१ संमेलनपत्रिका ( हिन्दी ), प्रयाग ।
३२ सोसियेते अर्गजयातिक, पेरिस ।